

चौखम्बा

संस्कृत की सभी प्रतियोगी परीक्षा के लिए उपयोगी

# संस्कृत शास्त्र-मञ्जूषा

लेखक-डॉ. उदयशंकर झा

यू.जी.सी. नेट ( संस्कृत कोड-25 एवं 73 ) द्वितीय एवं तृतीय प्रश्नपत्र परीक्षा एवं विभिन्न राज्यस्तरीय यू.जी.सी. नेट समकक्ष परीक्षा ।

विभिन्न संस्कृत विश्वविद्यालय द्वारा आयोजित शिक्षाशास्त्री ( बी.एड. ) प्रवेश परीक्षा ।

राज्यस्तरीय प्राध्यापक पात्रता ( संस्कृत ) परीक्षा एवं अध्यापक चयन परीक्षा ।

आई.ए.एस, पी.सी.एस तथा अन्य प्रशासनिक प्रतियोगी ( संस्कृत ) परीक्षा ।

संस्कृत विषयक शास्त्री, आचार्य, बी.ए, एम.ए, एम.फिल, पी.एचडी प्रवेश परीक्षा ।

धर्मशिक्षक भर्ती परीक्षा एवं अन्य प्रतियोगिता ( संस्कृत ) परीक्षा ।

संस्कृतविषयस्य सर्वासां परीक्षाणां कृते

डा॰ ज्ञानेश कुमार त्रिपाठी

।। श्रीः ।।

चौखम्बा सुरभारती ग्रन्थमाला
536



# संस्कृत शास्त्र-मञ्जूषा

## "संस्कृतविषयस्य सर्वासां परीक्षाणां कृते"

यू.जी.सी. नेट ( संस्कृत कोड-25 एवं 73 ) द्वितीय प्रश्नपत्र परीक्षा एवं विभिन्न राज्यस्तरीय यू.जी.सी. नेट समकक्ष परीक्षा, विभिन्न संस्कृत विश्वविद्यालय द्वारा आयोजित शिक्षाशास्त्री ( बी.एड. ) प्रवेश परीक्षा, राज्यस्तरीय प्राध्यापक पात्रता ( संस्कृत ) परीक्षा एवं अध्यापक चयन परीक्षा, आई.ए.एस, पी.सी.एस तथा अन्य प्रशासनिक प्रतियोगी ( संस्कृत ) परीक्षा संस्कृत विषयक शास्त्री, आचार्य, बी.ए, एम.ए, एम.फिल, पी.एचडी प्रवेश परीक्षा, धर्मशिक्षक भर्ती परीक्षा एवं अन्य प्रतियोगिता ( संस्कृत ) परीक्षा ।

संशोधित संस्करण

लेखक
डॉ. उदयशंकर झा



चौखम्बा सुरभारती प्रकाशन
वाराणसी

**संस्कृत शास्त्र मंजूषा—उदय शंकर झा**

**ISBN : 978-93-83721-86-3**

प्रकाशक :
**चौखम्बा सुरभारती प्रकाशन**
(भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक)
के 37/117 गोपाल मन्दिर लेन, पोस्ट बॉक्स न. 1129
वाराणसी 221001
दूरभाष : (0542) 2335263, 2335264
e-mail : csp_naveen@yahoo.co.in
website : www.chaukhamba.co.in



संस्करण : 2022
₹ 460

वितरक :
**चौखम्बा पब्लिशिंग हाउस**
4697/2 ग्राउण्ड फ्लोर, गली न. 21-ए
अंसारी रोड़, दरियागंज
नई दिल्ली 110002
दूरभाष : (011) 23286537, (मो.) 09811104365
e-mail : chaukhambapublishinghouse@gmail.com

*

अन्य प्राप्तिस्थान :
**चौखम्बा संस्कृत प्रतिष्ठान**
38 यू. ए. बंगलो रोड़, जवाहर नगर
पोस्ट बॉक्स न. 2113
दिल्ली 110007

*

**चौखम्बा विद्याभवन**
चौक (बैंक ऑफ बड़ोदा भवन के पीछे)
पोस्ट बॉक्स न. 1069
वाराणसी 221001

मुद्रक :
ए.के. लिथोग्राफर, दिल्ली,

**डॉ० भगीरथ मिश्र**
प्राचार्य/संकायाध्यक्ष
स्नातकोत्तर दर्शनविभाग
कामेश्वर सिंह दरभंगा संस्कृत विश्व-
विद्यालय, कामेश्वरनगर, दरभंगा-846008
(बिहार)



# प्रशस्तिवाक्

आयुष्मता डॉ० उदयशंकरझाशर्मणा शिक्षाशास्त्रविभागीयवरिष्ठप्राध्यापकेन निर्मितं विभिन्न-प्रतियोगितार्णवसन्तरणनौकायित-'संस्कृतशास्त्रमञ्जूषा'-नामकं ग्रन्थरत्नमशेष-प्रतिभागिच्छात्राणां कृते महदुपकाराय भवितेति दृढो मे विश्वासः। ग्रन्थेऽस्मिन् वेदवेदाङ्गदर्शनभाषाविज्ञानविषयकानेकवस्तुनिष्ठप्रश्नोत्तराणां सन्निवेशः ग्रन्थनिर्मात्रा विहितोऽस्ति।

अतो जगज्जननीं जानकीं जानकीजानिञ्चाभ्यर्थये यद् ग्रन्थलेखकोऽयं दीर्घायुर्भूयादिति।

भगीरथ मिश्रः
(डॉ० भगीरथ मिश्र)

दीपावली
26.10.2011

**डॉ॰ रामचन्द्र झा**
प्राचार्य एवं पूर्व अध्यक्ष/संकायाध्यक्ष
स्नातकोत्तर ज्योतिष विभाग
कामेश्वर सिंह दरभंगा संस्कृत विश्व-
विद्यालय, कामेश्वरनगर, दरभंगा-846008
(बिहार)



# शुभाशंसनम्

व्याकरणभाषाविज्ञानसाहित्यशास्त्रस्य पण्डितेन श्रीमदुदयशंकरशर्मणा प्रणीतः 'संस्कृतशास्त्रमञ्जूषा' ग्रन्थो मया सम्यगवलोकितः।

ग्रन्थेऽस्मिन् लेखकेन वर्तमानपरीक्षाप्रणालीं मनसि निधाय वस्तुनिष्ठप्रश्नानां मार्गदर्शनं कारितम्।

अयं ग्रन्थः विभिन्नासु प्रतियोगिपरीक्षासु नूनमेव लाभकरः स्यादिति लेखकः धन्यवादार्ह इति शम्।

रामचन्द्र झा

(डॉ॰ पं॰ श्रीरामचन्द्र झा)

दीपावली
26.10.2011

**प्रो० विद्येश्वर झा**
प्राचार्य/संकायाध्यक्ष/विभागाध्यक्षश्च
स्नातकोत्तर वेद विभाग
कामेश्वर सिंह दरभंगा संस्कृत विश्व-
विद्यालय, कामेश्वरनगर, दरभंगा-846008
(बिहार)



# शुभाशंसनम्

ॐ सहनाववतु सहनौ भुनक्तु सहवीर्य करवावहै।
तेजस्विनावधीतमस्तु मा विद्विषावहै।।

सुविदितिमेव सर्वेषां शिक्षातल्लजानां यद् शिक्षयैव राष्ट्रस्य सर्वविधविकाशः सेत्स्यति, तत्रापि यदि शिक्षका शिक्षणदक्षा भवेयुस्तदैव च्छात्राः सम्यक्शिक्षां ग्रहीष्यन्ति। मन्ये शिक्षकाणां कोटयः पञ्चधा भवन्ति—1. वञ्चकाः, 2. रञ्जकाः, 3. ग्रन्थपाठकाः, 4. प्रत्येकाविश्लेषकाः, 5. समूहालम्बकाश्च। तेषु वञ्चकाः शिक्षकाः छात्राणां पुरस्तात् विषयं परित्यजन्तो विषयान्तरं कृत्वा समयाकुर्वन्ति। रञ्चकाः शिक्षकाः छात्राणां पुरस्तात् पाठ्यांशं परित्यजन्तः सरसवाक्यैः छात्रान् रञ्जयन्तो घण्टिकां यापयन्ति। ग्रन्थपाठकाः समयानुसारं यथाग्रन्थं छात्रान् बोधयन्ति। प्रत्येकविश्लेषकाः शिक्षकाः पाठ्यांशमादाय छात्रान् सम्यग्बोधयन्ति। समूहालम्बकाः शिक्षकाः ये पाठ्यग्रन्था भवन्ति तेषु ये ये विषयाः प्रतिपादिताः सन्ति तान् सर्वान् मनसि कृत्वा छात्रैः सह तादात्म्यभावेन प्राञ्जलया भाषया सम्यग्रूपेण जिज्ञासून् बोधयन्ति, तादृशाः शिक्षका वस्तुतः शिक्षका भवन्ति। तदर्थमेव कामेश्वरसिंहदरभंगासंस्कृतविश्वविद्यालयस्य शिक्षाशास्त्रविभागीयः सहायक-प्रोफेसर डॉ० उदय शंकर झाः शिक्षणपद्धतौ व्याकरण-साहित्य-दर्शनादिविषयेषु भूरिशः परिश्रम्य विविध-परीक्षासु प्रतियोगितासु छात्रेषु पाटवातिशयाधानाय प्रस्तुतं 'संस्कृतशास्त्रमञ्जूषा' नामकं पुस्तकं लिलेख। प्रार्थयेऽहं वाग्देवीं यदयं लेखकः चिराय जीवतात् छात्राणां हिताय विविध लिख्याच्च।

विद्येश्वर झा

(डॉ० विद्येश्वर झा)
अध्यक्षः
वेदविभाग
कामेश्वर सिंह दरभंगा संस्कृत विश्वविद्यालय
दरभंगा

दीपावली
26.10.2011

**डॉ० बौआनन्द झा**

अध्यक्ष
स्नातकोत्तर दर्शन विभाग
कामेश्वर सिंह दरभंगा संस्कृत विश्व-
विद्यालय, कामेश्वरनगर, दरभंगा-846008
(बिहार)



**आवासः**
प्रोफेसर कॉलोनी, दिग्घी पश्चिम
दरभंगा-846004

# शुभाशंसनम्

वैयाकरणप्रवरेण शिक्षाशास्त्रविभागीयप्राध्यापकेन डॉ० उदयशंकरझाशर्मणा विनिर्मिता 'संस्कृतशास्त्रमञ्जूषा' अन्वर्थनामधेया वेद-वेदाङ्ग-दर्शन-भाषाविज्ञानविषयकवस्तुनिष्ठात्मक-प्रश्नोत्तराणामतिविस्तृतविवेचनपरा दृष्टिपथमायाता। 'नेट' 'वेट' प्रभृतिविभिन्नप्रतियोगितासु प्रतिभागिनां संस्कृतच्छात्राणां वस्तुनिष्ठात्मकप्रश्नोत्तरविधाने सम्भावितं काठिन्यमाकलय्य विद्वद्वरेण डॉ झामहोदयेन तेषां समेषां प्रश्नोत्तरविधाने सौकर्याधानाय 'संस्कृतशास्त्रमञ्जूषा' नाम्नी नितान्तमभिनवा कृतिर्विदुषां समक्षमुपस्थापिता।

आशासे चेयमभिनवा कृतिश्छात्राणां विदुषाञ्च कृते महदुपकरिष्यतीति भूतभावनं श्रीवैद्यनाथमभ्यर्थये यदयं विद्वाँल्लेखको झामहोदयः शुभंयुः शतायुर्भूयादिति।

(डॉ० बौआनन्द झा)

दीपावली
26.10.2011

# प्राक्कथनम्

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रञ्च विद्याह्येताश्चर्तुदश।।

भारतवर्षवाटिकायां संस्कृतशास्त्रवृक्षः प्राचीनकालादेव बहुभिर्विचक्षणैः ग्रन्थकृन्मालाकारैः स्वज्ञानजलेन संसिक्तः सन् पुष्पितः फलितश्च। अस्य संस्कृतशास्त्रवृक्षस्य प्रधानमूलं ऋग्यजुस्सामाथर्वाणः इति चत्वारो वेदाः, उपमूलानि वेदाङ्गानि—शिक्षा, व्याकरणं, निरुक्तं, ज्योतिषं, छन्दः, कल्पश्चेति षडङ्गानि सन्ति। अस्य संस्कृतशास्त्रवृक्षस्य शाखाः भाषाविज्ञानं, नव-दर्शनानि, पुराणेतिहासौ, धर्मशास्त्रं कर्मकाण्डञ्च सन्ति। अस्य पत्राणि कोशाः टीकाग्रन्थाश्च। अस्य फलम् अभ्युदयो निःश्रेयसश्च। इत्थं धर्मार्थकाममोक्षाणां पुरूषार्थचतुष्टयानां संसाधकं साहित्यं संस्कृतशास्त्रमेवास्ति।

साम्प्रतिके परीक्षाप्रधानयुगे एतादृशस्य कस्यचन पुस्तकस्य समुपलब्धिः यू.जी.सी नेट/जे. आर. एफ. संस्कृतवाङ्मयस्य विभिन्नप्रतियोगिपरीक्षासु प्रविविक्षूणां कृतेऽपि महत्त्वमादधाति। अस्मिन् ग्रन्थे ग्रन्थानां ग्रन्थकाराणां तेषां विशिष्टसिद्धान्तानां च परिचयात्मकं विशिष्टविवरणात्मकं तथ्यं स्थाने-स्थाने प्रदत्तमस्ति। इयं खलु 'संस्कृतशास्त्रमञ्जूषा' संस्कृतविश्वविद्यालयीय-संस्कृतच्छात्राणाम् एवं च सामान्यविश्वविद्यालयीयसंस्कृतच्छात्राणां कृतेऽपि लाभकरी एव। किम्बहुना परीक्षायाम् उत्तरलेखने छात्राः यथा सौविध्यम् अनुभवेयुः तदर्थं सर्वं चेष्टितमस्ति।

इयं 'संस्कृतशास्त्रमञ्जूषा' द्वादशाध्याऽत्मिका। तत्र (1) प्रथमाध्याये-वैदिकसाहित्यस्य निरूपणम्, (2) द्वितीयाध्याये-व्याकरणशास्त्रस्य विवेचनम्, (3) तृतीयाध्याये-साहित्यशास्त्रस्य विवेचनम्, (4) चतुर्थाध्याये-ज्योतिषशास्त्रं निरूपितम्, (5) पञ्चमाध्याये-शिक्षाशास्त्रं विवेचितम्, (6) षष्ठाध्याये-निरुक्तस्य प्रतिपादनम्, (7) सप्तमाध्याये-भाषाविज्ञानं प्रतिपादितम्, (8) अष्टमाध्याये-कल्पशास्त्रं विवेचितम्, (9) नवमाध्याये-दर्शनशास्त्रस्य निरूपणम्, (10) दशमाध्याये-पुराणेतिहासौ प्रतिपादितौ, (11) एकादशाध्याये-धर्मशास्त्रकर्मकाण्डे च निरूपिते, (12) द्वादशाध्याये च-सामान्यज्ञानस्य विवेचनानि सन्ति। यदि एतेन ग्रन्थेन छात्राणां मनागपि हितं भविष्यति चेत् तदा मदीयः परिश्रमः सफलो भविष्यति।

कृतज्ञताज्ञापनम्—ग्रन्थस्यास्य सफलतायां येषां विद्वद्वर्याणां साहाय्यं मया लब्धन्तेषु कामेश्वरसिंहदरभंगासंस्कृतविश्वविद्यालयस्य स्नातकोत्तरविभागीया ममाग्रजाः पूज्यचरणा दर्शन-

संकायाध्यक्षाः डॉ० भगीरथमिश्रः महानुभावाः, ज्योतिषसंकायाध्यक्षाः डॉ० रामचन्द्र झा महानुभावाः, वेद-संकायाध्यक्षाः डॉ० विद्येश्वर झा महोदयाः, दर्शनविभागाध्यक्षाः डॉ० बौआनन्द झा महोदयाः प्रामुख्येन स्मर्यन्ते। यतस्तेषामाशीर्वचोभिः ग्रन्थस्यास्य समाप्तिरगात्।

तथा चास्य ग्रन्थस्य निर्माणक्रमे येषामन्येषां धीमतां सुहृदवर्गाणां साहाय्यमवाप्य विषयाणां परिवर्तनं परिवर्द्धनञ्च मया विहितं, तेषु वैदिकप्रवराः डॉ० विनय कुमार मिश्रः, साहित्यशिरोमणयो डॉ० विश्रामतिवारीमहोदयाः, कामेश्वरसिंहदरभंगासंस्कृतविश्वविद्यालयस्य शिक्षाशास्त्र-निदेशकाः डॉ नागेन्द्र कुमार सिंह महोदयाः, शिक्षाशास्त्रप्राध्यापकाः डॉ० घनश्याम मिश्राः, डॉ० नन्दकिशोर चौधरी, डॉ० ऋद्धिनाथझाप्रभृतयः अन्यतमाः सन्ति। अतः एतेषां समेषां कृते कार्तज्ञ्यं समर्पयामि।

एतत्प्रकाशने श्री नवनीतदासगुप्तमहोदयाः चौखम्बा सुरभारती प्रकाशनप्रबन्धकाः भृशं साधुवादार्हाः सन्ति। येषां सत्प्रयासेन सौहार्देन च पुस्तकमिदं प्रकाशितम्।

अन्ते इदमपि निवेदनं यन्मम ज्ञानात् प्रमादात् भ्रमवशात् कम्प्यूटरजन्यदोषाद् वा काश्चन त्रुटयः सञ्जातास्ताः संशोध्य सविद्वद्भिः नीरक्षीरविवेकिभिः शास्त्रावगाहनशेमुषीसम्पन्नैः सूचनीयोऽयं जनः इति भूयो भूयः मया प्रार्थ्यते।

दीपावली
26.10.2011

विनयावनतः
उदयशंकर झा
(डॉ० उदय शंकर झा)
सहायक प्रोफेसर, शिक्षाशास्त्र विभागः
कामेश्वर सिंह दरभंगा संस्कृत विश्वविद्यालय,
दरभंगा
दूरभाषः 09905073233

# विषय-सूची

## Contents

# संस्कृतशास्त्रमञ्जूषा

ॐ

सा नः वसतु जिह्वाग्रे सर्वसौभाग्यदायिनी।
अविद्यानाशिनी देवी सर्वशुक्ला सरस्वती।।1।।
प्रश्नानां वस्तुनिष्ठानां संकलनन्तथोत्तरम्।
छात्राणामुपकाराय प्रमोदाय विपश्चिताम्।।2।।
उदयशंकरस्येयं शास्त्रतत्त्वप्रदायिका।
संस्कृतशास्त्रमञ्जूषा पूर्णा तिष्ठतु सर्वदा।।3।।

# 1
# वैदिकसाहित्यज्ञानम्

## (क) वेदानां परिचयः

संस्कृतसाहित्ये वेदानां स्थानं सर्वोपरि वर्त्तते। अखिलभूमण्डलेऽस्मिन् समुपलब्धेषु विविधभाषागतप्राचीनग्रन्थेषु वेदः सर्वेभ्यः प्राचीनतम इति सर्वैरेव अङ्गीक्रियते। वेदो धर्मनिरूपणे स्वतन्त्रभावेन प्रमाणम्, स्मृत्यादयस्तु तन्मूलकतया। श्रुतिस्मृत्योर्विरोधे श्रुतिरेव गरीयसी। न केवलं धर्ममूलतयैव वेदाः समादृताः, अपितु विश्वस्मिन् सर्वप्राचीनग्रन्थतयाऽपि। प्राचीनानि धर्मसमाज-व्यवहारप्रभृतीनि वस्तुजातानि बोधयितुं श्रुतय एव क्षमन्ते। प्रधानतया वेदो द्विविधः-मन्त्ररूपो ब्राह्मणरूपश्च। तथा च संहिता-ब्राह्मण-आरण्यक-उपनिषद इति वेदस्य चत्वारः विभागाः विद्यन्ते।

तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत।।
(ऋक्-10.90.8)

यस्मादृचो अपातक्षन् यजुर्यस्मादपाकषन्।
सामानि यस्य लोमानि अथर्वाङ्गिरसो मुखम्।।
स्कम्भं तं ब्रूहि कतमः स्विदेव सः।।
(अथर्व. 10.7.20)

"विद्यन्ते धर्मादयः पुरुषार्था यैस्ते वेदाः" इति बह्वृच्प्रातिशाख्ये वेदशब्दस्यार्थ अभिहितः। "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुत्या प्रत्यगात्मसाक्षात्कारस्यैव मोक्षहेतुत्वं समर्थितं, तादृशसाक्षात्कारसाधकानि वेदान्तादीनि शास्त्राण्येव भवितुमर्हन्ति। आध्यात्मिक-मूल्यानि मानवस्य जीवनस्य च महत्त्वपूर्णानि तथ्यानि भवन्ति। येषु येषु शास्त्रपदवाच्येषु प्राधान्येन आध्यात्मविषयाः प्रतिपादिताः सन्ति, तत्र प्रसङ्गोपात्तानां लौकिकानामपि विषयाणां विश्लेषणस्य तात्पर्यं आध्यात्म-विषय एव पर्यवस्यति। सायणाचार्येण भणितं यत् "अपौरुषेयवाक्यं वेदः" "इष्टप्राप्त्यनिष्टपरिहारयोः अलौकिकं साधनं यो वेदयति स वेदः"। वेदपदेन तु—

**1. संहिता, 2. ब्राह्मणम्, 3. आरण्यकम्, 4. उपनिषद्** इति चतुर्णां ग्रन्थानां बोधो भवति। एतेषु चतुर्षु विभागेषु छन्दोबद्धः मन्त्ररूपो ब्राह्मणभागो गद्यात्मको यागादिवर्णनपरकः, आरण्यकभागो छन्दोबद्धमन्त्रयुक्तो गाथारूपो वा विद्यते। उपनिषद्भागे तत्तत्संहितागत-ब्रह्मज्ञानादिविषयाणां वर्णनरूपेण संकलनम्। यथा—

1. ऋक्संहिता, यस्यां संहितायां स्तुतिपरकमन्त्राणां संग्रहः विद्यते।
2. यजुःसंहिता, यस्यां संहितायां याजकीयानां मन्त्राणां संग्रहः विद्यते।
3. सामसंहिता, यस्यां संहितायां गायनपरकमन्त्राणां संग्रहः विद्यते।
4. अथर्वसंहिता, यस्यां संहितायां विविधविघ्नविनाशकाऽऽभिचारिकमन्त्राणां संग्रहः विद्यते।

प्रधानतया वेदो द्विविधः **मन्त्ररूपो ब्राह्मणरूपश्च**। मन्त्रसमुदाय एव संहिताशब्देन व्यवहृतः। ब्राह्मणरूपो वेदभागस्तु संहिताभागस्य व्याख्यारूप एव। ब्राह्मणग्रन्थोऽपि ब्राह्मणम्, आरण्यकम्, उपनिषदश्च, यज्ञस्वरूपप्रतिपादको ब्राह्मणभागः, अरण्ये पठिताः यज्ञस्य आध्यात्मिकं रूपं विवेचयन्तो वेदभागा आरण्यकानि। उपनिषदो ब्रह्मबोधिका मोक्षसाधनीभूता अयमेव भागो वेदानाम् अन्तिमभागतया वेदान्त इत्युच्यते। ब्राह्मणभागो गृहस्थानामुपयोगी, आरण्यकभागो वानप्रस्थमाश्रितानाम्, उपनिषदश्च सन्न्यासिनामुपयुज्यन्त इत्यपि कथयितुं शक्यते। यथा—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।
एवं विदन्ति वेदेन तस्माद् वेदस्य वेदता।।

सेयं वेदस्त्रयीति पदेनापि व्यवह्रियते, या खलु रचना पद्यमयी सा ऋक्, या गद्यमयी सा यजुः, या पुनः समग्रा गानमयी रचना सा सामेति कथ्यते। ऋग्वेदेऽपि अथर्ववेदानामुल्लेखदर्शनात्।

चतस्रः संहिताः सन्ति—ऋग्यजुःसामाथर्वभेदात्। अर्थात् चत्वारो वेदाः सन्ति। इष्टप्राप्त्यनिष्टपरिहारयोः अलौकिकम् उपायं यो ग्रन्थो वेदयति स वेदः। वेदविषये मनुस्मृतौ उक्तमस्ति—वेदोऽखिलो धर्ममूलम्। महाभाष्ये—ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च।

**वेदानाम् उपादेयता शतपथब्राह्मणे ( 11.5.6.1 )—**

यावन्तं ह वै इमां पृथिवीं वित्तेन पूर्णां ददत् लोकं जयति त्रिभिस्तावन्तं जयति भूयांसं च अक्षय्यं च य एवं विद्वान् अहरहः स्वाध्यायमधीते, तस्मात् स्वाध्यायोऽध्येतव्यः।

**वेदज्ञस्य प्रशंसायां मनुस्मृतिकारः मनुस्मृतिग्रन्थे ( 12/102 ) ब्रूते—**

वेदशास्त्रार्थतत्त्वज्ञो यत्र कुत्राश्रमे वसन्।
इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते।।

वेदे मुख्यतया चतुर्दश(14) छन्दांसि प्रयुक्तानि सन्ति। किञ्च सप्त एव प्रमुखानि। तत्र वर्णवृत्तानामेव प्रयोगः, न तु मात्रिकवृत्तानाम्। वेदेषु त्रयः स्वराः प्रयुक्ताः—1. उदात्तः, 2. अनुदात्तः, 3. स्वरितश्चेति।

वेदेषु अष्ट विकृतयः—1. जटापाठः, 2. माला, 3. शिखा, 4. रेखा, 5. ध्वजः, 6. दण्डः, 7. रथः, 8. घनः।

जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः।
अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः।।

**ध्यातव्याः—**

ऋग्वेदस्य दशमे मण्डले संवादसूक्तानि सन्ति—

1. यम-यमी संवादः, 2. पुरुवा-उर्वशीसंवादः, 3. सरमा-पणिसंवादः।

**(ख) वैदिककालस्य देवताः—**

1. द्युलोकस्य देवताः—सूर्यः, वरुणः, मित्रः।
2. अन्तरिक्षस्य देवताः—पर्यन्यः, वायुः, इन्द्रः, मरुतश्च।
3. पृथ्वीलोकस्य देवताः—पृथ्वी, उषा, अग्नि, सोमादयः।

| वेदः | ब्राह्मणग्रन्थाः | आरण्यकग्रन्थाः | उपनिषदः |
|---|---|---|---|
| 1. ऋग्वेदः | ऐतरेयः शांखायनः (कौषीतकी) | ऐतरेयः, शांखायनः | ऐतरेयः, कौषीतकी |
| 2. यजुर्वेदः | शतपथब्राह्मणः, तैत्तिरीयब्राह्मणः | बृहदारण्यकः, तैत्तिरीयारण्यकः, | तैत्तिरीयोपनिषद्, कठोपनिषद् श्वेताश्वतरोपनिषद् |
| 3. सामवेदः | पंचविंशः, षड्विंशः, आर्षेय, दैवत, छान्दोग्य, संहिता, वंशः, जैमिनीय, सामविधान | तवल्कारः,. छान्दोग्य | छान्दोग्य, केन |
| 4. अथर्ववेदः | गोपथब्राह्मण | | |

1. ऐतरेयब्राह्मणः—अत्र चत्वारिंशत्(40) अध्यायाः सन्ति। अत्र मुख्यरूपेण सोमयागवर्णनमस्ति।
2. शांखायनब्राह्मणः—अस्य अपरं नाम कौषीतकी। अत्र 30 त्रिंशत् अध्यायाः सन्ति। अत्र अग्न्याधान-अग्निहोत्र-दर्शपौर्णमासवर्णनमस्ति।
3. शतपथब्राह्मणः—शुक्लयजुर्वेदीयोऽयं ब्राह्मणः। अस्य पाठद्वयं प्राप्नोति।
   1. माध्यन्दिनशाखीये चतुर्दश(14) काण्डाः, शताध्यायाश्च सन्ति।
   2. काण्वशाखीये सप्तदश(17) काण्डाः, 104 अध्यायाः सन्ति।
4. तैत्तिरीयब्राह्मणः—अत्र त्रयः काण्डाः सन्ति। अत्र अग्न्याधान-वाजपेय-सोम-राजसूय-सौत्रामणि-बृहस्पतिसव-वैश्यसव-नक्षत्रेष्टिवर्णनमस्ति।
5. गोपथब्राह्मणः—अथर्ववेदस्य एकमात्रोऽयं ब्राह्मणः। अस्य द्वौ भागौ स्तः-पूर्वभागः उत्तरभागश्च। पूर्वभागे पञ्च प्रपाठका उत्तरभागे च षद् प्रपाठकाः।

**( ग ) वैदिकव्याख्या-पद्धतिः—**

1. सायणाचार्यः—सायणाचार्यस्तु वैदिकसम्प्रदायस्य यथार्थवेत्तासीत्। अद्यापि वेदानामर्थनिर्णये सायणभाष्यमेव प्रमाणरूपेण स्वीक्रियते। सायणाचार्यस्य समयः 1400 शताब्दी वर्तते। सर्वप्रथमं सायणाचार्यः कृष्णयजुर्वेदसंहितायाः भाष्यं रचयामास, तदनन्तरं ऋग्वेदसंहिताभाष्यं; ततः सामवेदसंहितायाः भाष्यं चकार। संहिताभाष्यस्य अन्तिमे चरणेऽनेन महाभागेन अथर्ववेदसंहिताभाष्यं सम्पादितम्।

यज्ञं यजुर्भिरध्वर्युर्निर्मिमीते ततो यजुः।
व्याख्यातं प्रथमं पश्चादृचां व्याख्यानमीरितम्।।
साम्नामृगाश्रितत्वेन सामव्याख्याथ वर्तते।
अनुतिष्ठासु जिज्ञासावशाद् व्याख्याक्रमोऽप्ययम्।।
व्याख्याय वेदत्रितयमामुष्मिकफलप्रदम्।
ऐहिकामुष्मिकफलं चतुर्थं व्याचिकीर्षति।।

अनेन प्रकारेण सायणाचार्यस्तु चतुर्णां वेदानामभिज्ञो विद्वान् आसीत्। अनेन विद्वद्वरेण ऋग्यजुस्सामाथर्वसंहितासु ऐतरेय-तैत्तिरीय-ताण्ड्य-षड्विंश-सामविधान-आर्षेय-देवताध्याय-वंश-शतपथब्राह्मणग्रन्थेषु तैत्तिरीय-ऐतरेयारण्यकयोः भाष्यं कृतम्। अद्यापि वैदिकवाङ्मयस्य दुरूहाणामर्थानां ज्ञानाय सायणभाष्यस्य महती उपयोगिता विद्यते।

2. यास्काचार्यः—यास्कप्रणीते निरुक्ते वैदिकशब्दार्थज्ञानस्य प्रक्रिया वर्णिताऽस्ति। "अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्।" निघण्टोः पञ्चानाम् अध्यायानां द्वादशाध्यायेषु व्याख्यां चकार यास्कः।

3. हलायुधः—सायणपूर्ववर्तिषु आचार्येष्वेकः हलायुधः एव एतादृशः विद्वान् बभूव, यः काण्व-यजुर्वेदसंहितायाः स्वकीयं विशिष्टं भाष्यं चकार। हलायुधस्य कालः 1170-1200 खीष्टाब्दः अस्ति।

4. उव्वटः—उव्वटाचार्यः मम्मटाचार्यस्य भ्राता आसीत्। उव्वटस्य कालः 1018-1063 खीष्टाब्दः अस्ति। अस्य विद्वद्वरस्य चत्वारो ग्रन्थाः समुपलभ्यन्ते—1. ऋक्प्रातिशाख्यटीका, 2. ऋक्सर्वानुक्रमणीभाष्यम्, 3. यजुःप्रातिशाख्यटीका, 4. ईशावास्योपनिषद्भाष्यञ्च।

5. माधवाचार्यः—अनेन विद्वद्वरेण सामवेदसंहितायाः प्रथमं भाष्यं कृतम्। माधवस्य पितुर्नाम नारायणः आसीत्। अस्य समयः षष्ठशतकम् अस्ति।

6. महीधरः—शुक्लयजुर्वेदीयमाध्यन्दिनशाखाध्यायी विद्वानयं काश्यामेव अध्ययनं कृत्वा महत्तरं प्रतिष्ठां लब्ध्वा च काशीनरेशस्य सभापण्डितो बभूव। महीधरस्य रचना "वेददीप" नामिका विद्यते।

7. दयानन्द-सरस्वती—आचार्यवरस्य आर्यसमाजसंस्थापकस्य महर्षेः दयानन्दस्य वेदव्याख्यानं सर्वथा नवीनं समाजोत्कर्षशीलञ्चास्ति। अयं विद्वद्वरः शुक्लयजुर्वेदसंहितायाः भाष्यं, एवं च ऋग्वेद-संहितायाः भाष्यं रचयामास। दयानन्दस्य वेदव्याख्यायाः मूलाधाराः अष्टाध्यायीनिरुक्त-मित्यादयाः ग्रन्थाः सन्ति।

8. अरविन्दः—आधुनिकेषु वेदव्याख्यानकारेषु महर्षेः अरविन्दस्य विचारसरणिः सर्वथा प्रंशसनीया उपादेया चास्ति। एतन्मते वैदिकमन्त्राः सिद्धानां वाणी अस्ति, या अन्तर्जगतः आध्यात्मिकतानां नियामिका अस्ति।

9. प्रो. बिल्सनाचार्यः—प्रो. एच. एच. विल्सन-महोदयः ऋग्वेदस्य प्रथमआंग्ल-अनुवादकः अस्ति। यस्य प्रकाशनं 1850 खीष्टाब्दे अभवत्।

10. प्रो. ओल्डेनवर्ग—वैदिकव्याख्याकारेषु ओल्डेनवर्गस्य विशिष्टं महत्त्वपूर्णं च स्थानं विद्यते। अनेन जर्मनविद्वद्वरेण ऋग्वेदस्योपरि स्वकीयं मार्मिकं विवेचनात्मकञ्च भाष्यं कृतम्, यत् 1909-1912 खीष्टाब्दे वर्लिनिदेशात् प्रकाशितञ्च।

## (घ) वैदिक-वाङ्मयस्य परिचयचक्रम्—



**वेदाङ्गः**

**शिक्षा**
1. पाणिनीय शिक्षा
2. ऋक्लक्षण शिक्षा
3. याज्ञवल्क्य शिक्षा
4. वाशिष्ठी शिक्षा
5. माण्डव्य शिक्षा
6. भरद्वाज शिक्षा
7. अवसान निर्णय शि.
8. नारदीय शिक्षा
9. माण्डुकी शिक्षा
10. शौनकीया प्रा.
11. अथर्ववेद प्रा.
12. पुष्यसूत्र प्रा.
13. वाजसनेयी प्रा.
14. तैत्तिरीय प्रा.
15. माध्यन्दिनी शिक्षा

**कल्पः**

**व्याकरणम्**
1. इन्द्रः
2. चन्द्रः
3. काशकृत्स्नः
4. आपिशलिः
5. पाणिनिः
6. अमरः
7. जैनेन्द्रः

**निरुक्तम्**
निरुक्तम्
(आचार्य यास्कः)

**छन्दः**
छन्द-सूत्रम्
(आचार्यः पिंगलः)

**ज्योतिषम्**
आर्ष ज्योतिप
याजुप ज्योतिप
(आचार्यः लगधः)

**कल्पः**

| श्रौतसूत्रम् | गृह्यसूत्रम् | धर्मसूत्रम् | शुल्वसूत्रम् |
|---|---|---|---|
| 1. आश्वलायनः | 1. आश्वलायनः | 1. वशिष्ठः | 1. कात्यायनः |
| 2. कौषीतकि | 2. शांखायनः | 2. हारीतः | 2. मानवः |
| 3. कात्यायनः | 3. शाम्बव्यः | 3. शंखः | 3. बौधायनः |
| 4. बौधायनः | 4. कात्यायनः | 4. विष्णुः | 4. आपस्तम्वः |
| 5. आपस्तम्बः | 5. कठः | 5. वशिष्ठः | 5. मैत्रायणी |
| 6. भारद्वाजः | 6. आपस्तम्बः | 6. आपस्तम्बः | 6. वराहः |
| 7. कठः | 7. बौधायनः | 7. वौधायनः | 7. वाधूल |
| 8. जैमिनीयः | 8. वैखानसः | 8. हिरण्यकेशी | |
| 9. खादिरः | 9. भारद्वाजः | 9. वैखानसः | |
| 10. द्राह्मायणः | 10. वाधूलः | 10. गौतमः | |
| 11. लाट्यायन | 11. जैमिनीयः | | |
| 12. वाधूलः | 12. गोभिलः | | |
| 13. वैतानः | 13. गौतमः | | |
| 14. कौशिकः | | | |


**(ङ) ऋग्वेदस्य परिचयः (The first of the four Vedas.)—**

ऋच्यते स्तूयते यया सा ऋक्, तादृशीनामृचां समूह एव ऋग्वेदः। ऋग्वेदगतमन्त्रद्रष्टारो ऋषयः—गृत्समदविश्वामित्रवामदेवात्रिभरद्वाजवशिष्ठादयः सन्ति। एते सर्वे ऋषयः ऋषिसूक्तदेवता-सूक्तछन्दःसूक्तार्थसूक्तभेदात् पृथक् पृथक् विवेचितव्याः।

सृष्ट्युत्पत्तिकाले एकस्य एव वेदस्य कालक्रमवशात् विविधाः विभागाः खण्डानि वा अभूवन्। सर्वे जानन्त्येव यत् भगवता कृष्णद्वैपायनेन द्वापरयुगस्य अन्ते मानवबुद्धिसामर्थ्यम्

अध्ययनसौकर्यञ्चाभिलक्ष्य संकलनपूर्वकम् एकस्यैव वेदस्य ऋग्यजुःसामाथर्वरूपेण चत्वारो विभागाः कृता। ऋग्वेद एव ऋक्संहिताशब्देन अभिधीयते। ऋग्वेदे(क) सूक्तः, (ख) मण्डलम्। (क) सूक्तः—1. ऋषिः, 2. देवता, 3. छन्दः, 4. अर्थः। (ख) मण्डलम्—1. मण्डलम्, 2. अनुवाकः। पुनः ब्राह्मणः त्रिधा विभज्यते। 1. ब्राह्मणः—(क) ऐतरेयब्राह्मणः (ख) कौषीतकिब्राह्मणः। 2. आरण्यकम्—(क) ऐतरेय आरण्यकम्, (ख) कौषीतकि आरण्यकम्। 3. उपनिषत्—(क) ऐतरेय (ख) कौषीतकि। अस्मिन् वेदे दश मण्डलानि, पञ्चाशीतिः अनुवाकाः एवं अशीत्यधिकपञ्चशतोत्तरसहस्रं मन्त्राः सन्ति। अस्य वेदस्य ऋत्विक् होता विद्यते।

अत्र मण्डलक्रमः वैज्ञानिकः सुप्रसिद्धः सुप्रचलितश्च वर्तते। अत्र देवानुसारं सूक्तं विभाजनमस्ति। अष्टकक्रमश्च संख्यादृष्ट्या वा समीचीनं प्रतिभाति। अस्मिन् क्रमे समस्त-ऋग्वेदः समानाष्टभागेषु विभक्तः। स च अष्टकनाम्ना ज्ञायते। प्रत्येकस्मिन् अष्टके अष्टाध्यायाः सन्ति। तत्र भिन्नाः भिन्नाः वर्णसंख्या भिन्नाश्च मन्त्रसंख्याः। अतः ऋग्वेदे मण्डलक्रमानुसारेण (10) मण्डलाः, 85 अनुवाकाः, 1028 सूक्ताः, 10552 मन्त्राः सन्ति। अष्टकक्रमानुसारेण च 8 अष्टकाः, 64 अध्यायाः, 2024 वर्गाः, 10552 मन्त्राः सन्ति।

**ऋग्वेदस्य शाखाः—**

1. शाकलशाखा,
2. वाष्कलशाखा,
3. आश्वलायनशाखा,
4. शांखायनशाखा,
5. मण्डूकायनशाखा।

| | | | |
|---|---|---|---|
| ऋग्वेदसम्बद्धाः ब्राह्मणग्रन्थाः— | 1. ऐतरेयः, | 2. कौषीतकी। | |
| ऋग्वेदस्य आरण्यकग्रन्थाः— | 1. ऐतरेयः, | 2. शांखायनः। | |
| ऋग्वेदस्य उपनिषदः— | 1. ऐतरेयः, | 2. कौषीतकी, | 3. मन्त्रः। |

सम्प्रति ऋग्वेदस्य प्रचलिता संहिता शाकलशाखीया एव वर्तते। अस्याः संहितायाः अन्ते ऋक्परिशिष्टनाम्ना संगृहीतानि षट्त्रिंशत् संख्यकानि सूक्तानि सन्ति। एतेषु सूक्तेषु कानिचित् सूक्तानि अतीव प्रख्यातानि सन्ति। यथा—1. श्रीसूक्तम्, 2. रात्रिसूक्तम्, 3. मेधासूक्तम्, 4. शिवसंकल्प-सूक्तञ्च।

ऋग्वेदस्य कतिपय-सूक्तानामर्थगाम्भीर्यमत्यद्भुतं विज्ञानं सृष्टिविज्ञानं वा दृष्ट्वा विद्वांसः साश्चर्याः स्तब्धाश्च भवन्ति।

**1. अग्निसूक्तम् ( ऋक्-1. 1 )—**

अग्निसूक्तेऽस्मिन् स्तूयमानत्वाद् अग्निदेवः। ऋग्वेदस्य प्रथममण्डलस्य प्रथमसूक्तस्य प्रथमः मन्त्रोऽयम् अग्नेः स्तुतिमुपस्थापयति। अग्निर्देवता। विश्वामित्रपुत्रो मधुच्छन्दा ऋषिः। गायत्री छन्दश्च। अत्र भगवान् वेदपुरुष आह—अग्निनामकं देवम् ईले स्तौमि।

अग्निमीळे पुरोहितं, यज्ञस्य देवमृत्विजम्।
होतारं रत्नधातमम्।।
त्वामग्ने पितरमिष्टिभिर्नरस्त्वां भ्रात्राय शम्या तनूरुचम्।
त्वं पुत्रो भवसि यस्तेऽविधत् त्वं सखा सुशेवःपास्यसधृषः।।

**2. इन्द्रसूक्तम् ( ऋक्. 2.12 )—**

"यो जात" इति पञ्चदशमन्त्रात्मकस्य सूक्तस्य ऋषिः गृत्समदः। इन्द्रो देवता। त्रिष्टुप् छन्दः। गृत्समदो ब्रूते, हे जनासः! यः मनस्वान् देवः जायमान एव स्वकीयेन कर्मणा सर्वान् देवान् पर्यभूषत्, यः चलन्तीं पृथिवीम् अदृंहत्, यः इतस्ततश्चलितान् पक्षयुक्तान् पर्वतान् अरम्णात् नियमितवान्, यः अहिं हत्वा सर्पणशीलाः सप्तसिन्धून् अरिणात्, यः अश्मनोः अन्तः अग्निं जजान्, स इन्द्रः, नाहमस्मि।

यो जात एव प्रथमो मनस्वान्, देवो देवान् क्रतुना पर्यभूषत्।
यस्य शुष्माद् रोदसी अभ्यसेतां, नृम्णस्य मह्ना स जनास इन्द्रः।। 1।।
यः पृथिवीं व्यथमानामदृंहद्, यः पर्वतान् प्रकुपिताँ अरम्णात्।
यो अन्तरिक्षं विममे वरीयो, यो द्यामस्तभ्नात् स जनास इन्द्रः।। 2।।

**3. वरुणसूक्तम् ( ऋक्. 1.25 )—**

सूक्तेऽस्मिन् वरुणस्य स्तुतिं कुर्वन् शुनःशेपो ब्रूते—हे वरुण! यथा लोके प्रजाः कदाचित् प्रमादमपि कुर्वन्ति, तथैव तव सम्बन्धि अस्माकं व्यवहारे यः प्रमादः भवति, स क्षम्यताम्। तव कृपाप्राप्त्यर्थं वयं स्तुतिभिः तव मनः प्रमोदयामः।

यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम्। मिनीमसि द्यविद्यवि।। 1।।

**4. उषःसूक्तम् ( ऋक् 3.61 )**

सूक्तस्यास्य उषा देवता, विश्वामित्रो ऋषिः, त्रिष्टुप् छन्दश्च। ऋषिः उषसः स्तुतिं कुर्वन् आह, हे भगवति! त्वमेव वाजिनि, त्वमेव मघोनि, त्वमेव प्रकृष्टज्ञानवती, त्वमेव विश्ववारा, पुराणी, युवती च असि। हे देवि! त्वं मरणधर्मरहिता, सुवर्णमयरथोपेता, असि, एतादृशीं त्वां प्रभूतबलयुक्ताः अश्वाः आवहन्तु।

ऋतस्य बुध्नउषसामिषण्यन्, वृषा महीरोदसी आ विवेश।
मही मित्रस्य वरुणस्य माया, चन्द्रेव भानुं विदधे पुरुत्रा।।

**( च ) यजुर्वेदस्य परिचयः (The Second of the Four Vedas.)—**

यजूंषि गद्यानि। अध्वर्युणा यज्ञे उपयुज्यमाना मन्त्रा एवात्र यजुर्वेदे संकलिताः। कृष्णयजुः शुक्लयजुः इति द्विप्रकारकः यजुर्वेदः, तेषु 1957 मन्त्राः सन्ति। येषु अग्नि चयनम्, उखाभरणम्, चितयः, रूद्रहः, शतरुद्रियम्, सोमसम्पादनविधि. इत्यादीनि विषयवस्तूनि सन्ति। यजुर्वेदे—(क) कृष्णयजुः (ख) शुक्लयजुः।

**( क ) कृष्णयजुः—**

1. तैत्तरीयशाखा (संहिता)—अत्र सप्त काण्डाः, 44 प्रपाठकाः, 631 अनुवाकाश्च सन्ति।

2. मैत्रायणीशाखा(संहिता)—अत्र चत्वारः काण्डाः, 54 प्रपाठकाः, 2144 मन्त्राः सन्ति।,

3. काठकशाखा(संहिता)—अत्र 40 स्थानकाः, 843 अनुवाकाः, 3091 मन्त्राः सन्ति।

4. कपिष्ठलकठसंहिता—अत्र 6 षड् अष्टकाः, 48 अध्यायाः सन्ति।

**(ख) शुक्लयजुः—**

1. माध्यन्दिनशाखा अथवा वाजसनेयिसंहिता—अत्र 40 अध्यायाः, 1975 मन्त्राः सन्ति।

2. काण्वशाखा—अत्र 40 अध्यायाः, 2086 मन्त्राः सन्ति। पुनः ब्राह्मणः त्रिधा विभज्यते।

(क) ब्राह्मणः—1. शतपथब्राह्मणः, 2. तैत्तिरीयब्राह्मणः।

(ख) आरण्यकम्—1. बृहत्, 2. आरण्यकम्।

(ग) उपनिषत्—1. बृहत् आरण्यकोपनिषत्, 2. ईशोपनिषत्।

यजुर्वेदे 40 अध्यायाः सन्ति। 1303 अनुवाकाः 1975 मन्त्राश्च सन्ति। अस्य वेदस्य ऋत्विक् अध्वर्युः विद्यते।

**1. त्रेतायां यजुराख्यः एक एव वेद आसीत्, यथोक्तं मत्स्यपुराणे—**

एकमाध्वर्यवं पूर्वमासीद् द्वैधन्तु तत्पुनः।
सामान्यविपरीतार्थैः कृतं शास्त्राकुलन्त्विदम्।।

**2. शिवसंकल्पसूक्तम् (वाजस. 34)—**

षड्ऋचात्मकस्य सूक्तस्यायं ऋषिः याज्ञवल्क्यः, मनः देवता, त्रिष्टुप् छन्दश्च। सूक्तेऽस्मिन् ऋषिर्वदति, यन्मनः जाग्रतः पुरुषस्य दूरमुद्गच्छति। यथा—

सुसारथिरश्वानिव यन्मनुष्यान्, नेनीयतेऽभीशुभिर्वाजिन इव।
हृत्प्रतिष्ठं यदजिरं जविष्ठं, तन्मे मनः शिवसंकल्पमस्तु।।

**3. प्रजापतिसूक्तम्—**

पंचमन्त्रात्मके सूक्तेऽस्मिन् वर्णितमस्ति यत् ब्रह्माण्डेऽस्मिन् यत्किञ्चिदपि दृश्यते, तत्सर्वं प्रजापतिरेवास्ति। स षोडशावयवलिंगशरीरी प्रजापतिः एव अस्ति। अग्नि-आदित्य-वायु-चन्द्र-शुक्र-ब्रह्म-ओंकारादिरूपैः सः प्रजापतिरेव व्याख्यातः प्रसिद्धश्च।

यस्माज्जातं न पुरा किंच नैव, य आबभूव भुवनानि विश्वा।
प्रजापतिः प्रजया संरराणस्त्रीणि ज्योतींषि स च ते स षोडशी।।

**(छ) सामवेदस्य परिचयः (The Third of the Four Vedas.)—**

यज्ञे चत्वारो ऋत्विजो भवन्ति—होता, अध्वर्युः, उद्गाता, ब्रह्मा। होता—आह्वानकर्ता, स हि यज्ञावसरे प्रक्रान्त-देवतानां प्रशंसायां रचितान् मन्त्रान् उच्चारयन् देवता आह्वयति। उच्चस्वरेण गानकर्ता, स हि स्वरबद्धान् मन्त्रानुच्चैर्गायति, तदपेक्षितो मन्त्रसंग्रहः सामवेदः। सामवेदस्य गानप्रचुरता प्रार्थिता, सामवेदे 1549 मन्त्राः सन्ति। सामवेदगतमन्त्राणां सप्तस्वराः यतस्ते गीयन्ते। पूर्वार्चिकमेव छन्दः, छन्दसी, छन्दसिका चेति त्रिभिरपि नामभिरभिधीयते। उत्तरार्चिकन्तु अनुष्ठाननिर्देशकम्।

सामवेदे—(क) पूर्वार्चिकम्, (ख) उत्तरार्चिकम्। (क) पूर्वार्चिकम्—1. आग्नेयपर्व, 2. ऐन्द्रपर्व, 3. पवमानपर्व, 4. आरण्यकपर्व। (ख) उत्तरार्चिकम्—1. दशरात्रम्, 2. संवत्सरम्, 3. ऐकाहम्। पुनः ब्राह्मणः त्रिधा विभज्यते। (क) ब्राह्मणः—1. ताण्ड्यः, 2. षड्विंशः, 3. सामविधानम्, 4. जैमनीयम्। (ख) आरण्यकम्—1. छान्दोग्यम्, 2. तवक्कारः। (ग) उपनिषत्—1. छान्दोग्यम्, 2. केनोपनिषत्। सामवेदे 1549 मन्त्राः सन्ति। अस्य वेदस्य ऋत्विक् उद्गाता विद्यते।

ऋचा सह सम्बद्धं स्वरप्रधानं गायनमेव सामशब्दस्य व्युत्पत्तिलभ्योऽर्थः भवति। यथोक्तम्—

"तया सह सम्बद्धः अमो नाम स्वरः यत्र वर्तते तत् साम" इति।

सामवेदो द्विधा विभज्यते पूर्वार्चिकम् उत्तरार्चिकम् च।

1. पूर्वार्चिकमेव छन्दः, छन्दसी, छन्दसिका चेति त्रिभिरपि नामभिरभिधीयते। विषयानुसारं पूर्वार्चिकं चतुर्षु भागेषु विभज्यते—

1. आग्नेयपर्व,
2. ऐन्द्रपर्व,
3. पवमानपर्व,
4. आरण्यकपर्व,

"महानाम्नी"आर्चिकश्चास्ति। अत्र षड् 6 अध्यायाः, 650 मन्त्राः सन्ति।

2. उत्तरार्चिकं तु अनुष्ठाननिर्देशकम्। तस्य बहवो विभागाः सन्ति। उत्तरार्चिके 21 अध्यायाः अथवा 9 प्रपाठकाः, 1225 मन्त्राः सन्ति। तेषु प्रमुखाः भेदाः यथा—

1. दशरात्रम्।
2. संवत्सरम्।
3. ऐकाहम्।
4. अहीनम्।
5. सत्रम्।
6. प्रायश्चित्तम्।
7. क्षुद्रम्।

अस्यां संहितायां 1875 ऋचः प्राप्यन्ते। विष्णुपुराणानुसारेण वेदव्यासः कृष्णद्वैपायनः वेदं चतुर्धा विभज्य स्वशिष्याय जैमिनये सामवेदं पाठयामास। सम्प्रति सामवेदसंहितायाः तिस्र एव शाखाः समुपलभ्यन्ते—

1. कौथुमीयशाखा,
2. राणायनीयशाखा,
3. जैमिनीयशाखा,

**सामवेदस्य ब्राह्मणग्रन्थाः—**

पञ्चविंशः, षड्विंशः, सामविधानब्राह्मणः, आर्षेयब्राह्मणः। मन्त्रब्राह्मणः, देवताध्यायब्राह्मणः,

वंशब्राह्मण:, संहितोपनिषद्ब्राह्मण:, जैमिनीयब्राह्मण:, (आर्षेय) जैमिनीयतवल्कारब्राह्मण:, जैमिनीयोपनिषद्ब्राह्मण:।

**सामवेदस्योपनिषद:—छान्दोग्योपनिषद्, केनोपनिषद्।**

**सामवेदस्यारण्यकग्रन्थो नास्ति।**

### (ज) अथर्ववेदस्य परिचय: (The last of four Scriptures Vedas)—

अभिचारक्रियाया: प्राधान्येन प्रतिपादकोऽयं वेद: अथर्वनामकर्षिणा दृष्टत्वात् अथर्ववेद इत्युच्यते। अस्मिन् वेदे 5987 मन्त्रा: विद्यन्ते। अथर्ववेदस्य नव शाखा आसन्, परं सम्प्रति शौनकपिप्पलादसमाख्ये द्वे एव शाखे प्राप्येते। अथर्ववेदे (क) शौनकशाखा, (ख) पिप्पलादशाखा। पुन: ब्राह्मण: त्रिधा विभज्यते। (क) ब्राह्मण:—1. बृहत् आरण्यकोपनिषत्, 2. गोपथब्राह्मणम्। (ख) आरण्यकम्—शून्यम्। (ग) उपनिषत्—1. प्रश्न:, 2. माण्डूक्य:, 3. मण्डूक:। अथर्ववेदे 20 काण्डानि, 731 सूक्तानि, 2987 मन्त्रा: च विद्यन्ते। अस्य वेदस्य ऋत्विक् ब्रह्मा विद्यते।

अथर्ववेदस्य उपलब्धेषु अनेकाभिधानेषु अथर्ववेद-ब्रह्मवेद-अंगिरोवेद-अथर्वांगिरोवेदादीनि नामानि प्रमुखतां भजन्ते। "थर्व" धातु: कौटिल्यार्थक: तथा हिंसावाचक: अस्ति। अत एव "अथर्व"-शब्दस्य अर्थोऽस्ति यत् अकुटिलवृत्त्या अहिंसावृत्त्या च मनस: स्थैर्यप्राप्तकर्ता व्यक्ति:। अथर्वांगिरस्पदस्य व्याख्याकरणे सति प्रतीयते यत् ऋषिद्वयेन दृष्टानां मन्त्राणां समूहरूप: एव अथर्ववेद:। अथर्वदृष्टा: मन्त्रा: शान्तिपुष्टिकर्मयुक्ता: सन्ति, परन्तु अंगिरेदृष्टा: मन्त्रा: आभिचारिका: सन्ति। वेदेऽस्मिन् मारणमोहनोच्चाटनादीनां ज्वरापस्मारादिरोगविनाशकानाञ्च मन्त्राणां संग्रहोऽस्ति। अत्र 20 काण्डानि, 34 प्रपाठका:, 111 अनुवाका:, 731 सूक्तानि, 5987 मन्त्राश्च सन्ति। सम्प्रति अथर्ववेदस्य द्वे एव शाखे समुपलभ्येते—

1. पिप्पलादशाखा,
2. शौनकशाखा।

### (झ) ब्राह्मणम् (Brahmanam)—

तैत्तिरीयसंहितायां, पाणिनीयव्याकरणे, निरुक्ते, शतपथब्राह्मणे, ऐतरेयब्राह्मणे च ब्राह्मणशब्दस्य ग्रन्थस्यार्थे प्रयोग: समुपलभ्यते। यज्ञीयकर्मकाण्डस्य व्याख्याविवरणयो: सम्पादनं ब्राह्मणग्रन्थानां मुख्यो विषय:। यथोक्तं विद्वद्वरेण वाचस्पतिमिश्रेण—

नैरुक्त्यं यस्य मन्त्रस्य विनियोग: प्रयोजनम्।
प्रतिष्ठानं विधिश्चैव ब्राह्मणं तदिहोच्यते।।

वेदस्य शेषभूता: यज्ञयागादिमीमांसका: ब्राह्मणग्रन्था: प्रायेण गद्यात्मका एव भवन्ति। एतेषां ब्राह्मणग्रन्थानां विषया ऋक्-यजु:-सामाथर्वेभ्य: नितरां भिद्यते। ब्राह्मणग्रन्थानां प्रतिपाद्यस्य विधे: दश प्रकारा भवन्ति। यथोक्तम्—

हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधि:।
परक्रिया पुराकल्पो व्यवधारणकल्पना।।
उपमानं दशैते तु विधयो ब्राह्मणस्य तु।।

ऋग्वेदस्य द्वे ब्राह्मणे स्तः—1. ऐतरेयब्राह्मणम्, 2. शांखायनब्राह्मणम्। ब्राह्मणेऽस्मिन् अष्टौ पंजिकाः सन्ति, तासु पंजिकासु पञ्च पञ्च अध्यायाः सन्ति। इदं सम्पूर्णं ब्राह्मणसाहित्यं गद्यात्मकमेवास्ति।

**ब्राह्मणानां प्रतिपाद्यविषयस्य विवरणम्—**

विधिः—यज्ञस्य अनुष्ठानोपदेश एव विधिरित्यभिधीयते। अज्ञातार्थज्ञापको वेदभागो विधिः।

तत्र विधिश्चतुर्विधः—1. उत्पत्तिविधिः, 2. विनियोगविधिः, 3. अधिकारविधिः, 4. प्रयोगविधिश्चेति।

1. **उत्पत्तिविधिः**—तत्र कर्मस्वरूपमात्रबोधको विधिः उत्पत्तिविधि; यथा "अग्निहोत्रं जुहोति" इति।
2. **विनियोगविधिः**—अंगप्रधानसम्बन्धबोधको विधिः विनियोगविधिः। यथा "दध्ना जुहोति" इति। ज्ञातव्यमस्ति यत् मन्त्राणां विनियोगस्य प्रथमावतारो ब्राह्मणग्रन्थेषु समुपलभ्यते। "स नः पवस्व शङ्गवे" इत्यस्य मन्त्रस्य विनियोगः पशूनां रोगनिवृत्तये भवति।
3. **अधिकारविधिः**—कर्मजन्यफलस्वाम्यवबोधको विधिः अधिकारविधिः।
4. **प्रयोगविधिः**—प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः।
5. **नियमविधिः**—नानासाधन-साध्य-क्रियायाम् एकसाधनप्राप्तौ अप्राप्तस्य अपरसाधनस्य प्रापको विधिः नियमविधिः। यथा "यजेत स्वर्गकामः" इत्यादि।
6. **परिसंख्याविधिः**—उभयोः युगपत्प्राप्तौ इतरव्यावृत्तिपरो विधिः परिसंख्याविधिः। यथा "पंच-पंचनखाः भक्ष्याः" इति।
7. **हेतुः**—येन हेतुना कर्मकाण्डविधिः विशेषरूपेण सम्पन्नो भवति, तस्य हेतोः निर्देश एव हेतुः इत्यभिधीयते।
8. **निरुक्तिः**—ब्राह्मणग्रन्थेषु यत्र-तत्र समागतानां विशिष्टानां पदानां निर्वचनमपि कृतमस्ति। निर्वचनमिदं मार्मिकं वैज्ञानिकञ्च भवति।
9. **अर्थवादः**—यज्ञेषु मेध्यपदार्थानां निन्दा एव अर्थवाद इति कथ्यते। यथा "अमेध्या वै माषाः" इति। "वायुर्वै क्षेपिष्ठा देवता" इति।

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भूतो नृयज्ञोऽतिथिपूजनम्।। मनु. 3/70

1. देवताध्यायब्राह्मणम्—ब्राह्मणग्रन्थे त्रयः खण्डाः सन्ति। प्रथमखण्डे देवतानां वर्णनं समुपलभ्यते। प्रथमखण्डस्य प्रथमकण्डिकायां सोमदेवानां नाम्ना निर्देशः अनेन प्रकारेण कृतोऽस्ति—अग्निः, इन्द्रः, प्रजापतिः, सोमः, वरुणः, त्वष्टा, अंगिराः, सरस्वती इत्यादिकाः देवास्ते सन्ति।
2. आर्षेयब्राह्मणम्—ब्राह्मणमिदं सामवेदस्य चतुर्थं ब्राह्मणमस्ति। अस्मिन् ब्राह्मणे त्रयः प्रपाठकाः द्व्यशीतिखण्डाश्च सन्ति।
3. ऐतरेयब्राह्मणम्—ऐतरेयब्राह्मणम् अतीव प्रथितमस्ति ऋग्वेदीयब्राह्मणग्रन्थेषु।
4. शतपथब्राह्मणम्—शुक्लयजुर्वेदस्य माध्यन्दिनकाण्वशाखयोः इदं शतपथब्राह्मणं ब्राह्मणग्रन्थेषु सर्वाधिकमहत्त्वपूर्णं विशालं च अस्ति।

5. तैत्तिरीयब्राह्मणम्—कृष्णयजुर्वेदस्य एकमात्रे समुपलब्धे तैत्तिरीयाख्ये ब्राह्मणेऽस्मिन् त्रयः काण्डाः सन्ति।
6. ताण्ड्यमहाब्राह्मणम्—पंचविंशत्यध्यायात्मकमिदं ब्राह्मणं ताण्ड्यमहाब्राह्मणं पंचविंशब्राह्मणं वा कथ्यते।
7. गोपथब्राह्मणम्—गोपथब्राह्मणं तु अथर्ववेदस्य एकमात्रब्राह्मणग्रन्थोऽस्ति।
8. सामविधानब्राह्मणम्—सामवेदस्योपलब्धेषु ब्राह्मणग्रन्थेषु विषयदृष्ट्या सामविधानब्राह्मणं नितरां भिन्नमस्ति।
9. ब्राह्मणग्रन्थानां वैशिष्ट्यं सामान्यं च दृग्गोचरीभवति। तत्र ब्राह्मणग्रन्थानां मुख्यवैशिष्ट्यं तु यज्ञसम्पादनमेवास्ति। यज्ञस्य सूक्ष्मातिसूक्ष्मविधानमपि ब्राह्मणग्रन्थेषु विस्तारेण समुपलभ्यते।

### (ञ) आरण्यकम् (Aranyakam)—

अरण्याध्ययनादेतद् आरण्यकमितीर्यते।
अरण्ये तदधीयेतेत्येवं वाक्यं प्रचक्षते।।

सायणाचार्यस्य उपर्युक्तवचनानुसारेण अरण्ये पाठ्यत्वेन अस्य ग्रन्थस्य आरण्यकम् इति सार्थकमभिधानं वर्तते। यतः मन्त्राणां मननस्य सर्वश्रेष्ठस्थानम् अरण्यमेव भवति। कृष्णद्वैपायनेन लिखितमस्ति—"आरण्यकञ्च वेदेभ्यः औषधिभ्योऽमृतं यथा" प्राणविद्याप्रधानमन्त्रब्राह्मणात्मकः वेदांश एव आरण्यकमिति संज्ञां लभते। ऐतरेयारण्यके समुल्लिखितमस्ति यत् "प्राण" एव ऋषिरूपः अस्ति, यथा विश्वः मित्रं यस्य विश्वामित्रः। सर्व पाप्मनः त्रायत इति अत्रिः। एतादृशः गृत्समदः, वामदेवः, वशिष्ठः, भरद्वाजः इत्यादयः सर्वे प्राणरूपा एव सन्ति।

1. ऐतरेयारण्यकम्—ऋग्वेदस्य ऐतरेयशाखानुवर्ती, ग्रन्थेऽस्मिन् ऐतरेयारण्यके पञ्चारण्यकानि सन्ति।
2. शांखायनारण्यकम्—पंचदशाध्यायात्मकस्यास्य शांखायनारण्यकस्य प्रथमद्वितीयाध्याययोः महाव्रतस्य वर्णनं विद्यते। तृतीयाध्यायतः षष्ठाध्यायपर्यन्तं कौषीतक्युपनिषद् कथ्यते। सप्तमाध्यायतः अष्टमाध्यायं यावत् संहितोपनिषद् वर्णितास्ति। इत्थं कौषीतक्युपनिषद्, संहितोपनिषद् च इमे द्वे उपनिषदे शांखायनारण्यकस्य एव अंगविशेषौ स्तः। नवमेऽध्याये प्राणविद्यायाः, दशमेऽध्याये आन्तर-अग्निहोत्रस्य विवेचनमुपलभ्यन्ते। एकादशेऽध्याये मृत्योरपसारकस्य विधानं, द्वादशेऽध्याये विल्वफलेन मणिनिर्माणस्य प्रक्रियायाः कालस्वरूपस्य च वर्णनं वर्त्तते। त्रयोदशचतुर्दशाध्याययोः जीवब्रह्मणोः ऐक्यप्राप्तेः जीवनस्य परमलक्ष्यरूपेण विवेचनमस्ति। पञ्चदशेऽध्याये आचार्यवरस्य शांखायनस्य वंशपरम्परायाः वर्णनमस्ति।
3. तैत्तिरीयारण्यकम्—कृष्णयजुर्वेदीये तैत्तिरीयारण्यके दश प्रपाठकाः सन्ति, येऽरण इति नाम्ना ज्ञायन्ते।

### (ट) उपनिषत् (Upanisad)—

उपनिषद् शब्दस्तु वेदान्तशब्देन पराविद्याशब्देन वा अभिधीयते। "वेदान्तो नाम उपनिषत्प्रमाणम्"।

आचार्यवरः शंकरः प्राह—उप शब्दो हि सामीप्यमाह, निशब्दश्च निश्चयार्थः, तस्मादैकात्म्यं निश्चितम्। सा विद्या सहेतुं संसारं सादयतीत्युपनिषदुच्यते। यद्यपि शताधिकाः उपनिषद्ग्रन्थाः वर्तन्ते तथापि उपनिषदां विषये दशसंख्या अतीव महत्त्वपूर्णा अस्ति, यथोक्तम्—

ईश-केन-कठ-प्रश्न-मुण्ड-मण्डूक्य-तित्तिरः ।
ऐतरेयं च छान्दोग्यं बृहदारण्यकं दश।।

**1. ईशावास्योपनिषत्—**

शुक्लयजुर्वेदसंहितायाः चत्वारिंशत्तमोऽध्यायः "ईशावास्यमिदं सर्वम्" इति मन्त्रेण प्रारभ्यते, अतः अध्यायोऽयम् ईशावास्योपनिषत् इत्युच्यते।

**2. प्रश्नोपनिषत्—**

अथर्ववेदस्य पिप्पलादशाखायाः उपनिषदियं प्रश्नानां समष्टिकारणात् प्रश्नोपनिषद् इत्युच्यते।

**3. केनोपनिषत्—**

"केनेषितं पतति प्रेषितं मनः" इति मन्त्रेण प्रारभ्यते इयमुपनिषत्। अस्यामुपनिषदि चत्वारः खण्डाः सन्ति। प्रथमखण्डे अष्टौ मन्त्राः, द्वितीयखण्डे पञ्चमन्त्राः, तृतीयखण्डे द्वादशमन्त्राः तथा चतुर्थे खण्डे नवमन्त्राः समुपलभ्यन्ते। अस्याः उपनिषदः सर्वत्र परमात्मनः शक्तिरनुसन्धेया मुमुक्षुभिः इति सारांशः।

**4. तैत्तिरीयोपनिषत्—**

तैत्तिरीयारण्यकस्य सप्तम-अष्टम-नवमखण्डानां सम्मिलितमभिधानं तैत्तिरीयोपनिषद् इति वर्तते। अस्याम् उपनिषदि तिस्रो वल्लयो भवन्ति—शिक्षावल्ली, भृगुवल्ली, आनन्दवल्ली च।

यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति,
यत् प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व तद्ब्रह्म इति।

**5. कठोपनिषत्—**

कृष्णयजुर्वेदस्य कठशाखासम्बन्धे अस्याम् उपनिषदि द्वौ अध्यायौ स्तः। प्रत्यध्यायं तिस्रः तिस्रो वल्लयः सन्ति। नचिकेतोपाख्यानम् अत्र अतीव प्रसिद्धमस्ति। यमद्वारा बहुधा परीक्षितोऽपि ऐहिकामुष्मिकफलभोगविरागसम्पन्नः शान्तो दान्तः नचिकेता आह—

श्वोभावा मर्त्यस्य यदन्तकैतत्, सर्वेन्द्रियाणां जरयन्ति तेजः।
अपि सर्वं जीवितमल्पमेव, तवैव वाहास्तव नृत्यगीते।।

**6. छान्दोग्योपनिषत्—**

सामवेदस्य ताण्ड्यशाखायाः अष्टमः प्रपाठकः एव छान्दोग्योपनिषत्-शब्देन अभिधीयते। मधुविद्या-पुरुषविद्या-अग्निविद्या-प्राणविद्या-वैश्वानरविद्या-भूमाविद्या-आत्मविद्या-प्रभृतीनां विद्यानां वर्णनम् अस्यामेव उपनिषदि समुपलभ्यते।

### 7. बृहदारण्यकोपनिषत्—

इयं बृहदारण्यकोपनिषत् केवलं तत्त्वज्ञानदृष्ट्या अतीव प्रामाणिकी वर्तते, अपि तु आकारदृष्ट्यापि अतीवविशालास्ति। षडध्यायसमन्वितेऽस्मिन् उपनिषद्ग्रन्थे याज्ञवल्क्यस्य ब्रह्मविषयकं तत्त्वज्ञानमतीव विस्तरेण निरूपितमस्ति।

### 8. ऐतरेयोपनिषत्—

ऐतरेयारण्यकस्य चतुर्थादध्यायात् षष्ठाध्यायपर्यन्तस्य नामैतरेयोपनिषद् वर्तते। अस्यामुपनिषदि त्रय अध्याया: सन्ति।

### 9. मुण्डकोपनिषत्—

इयमुपनिषत् अथर्ववेदीया वर्तते। इयं मुण्डकनिमित्ताय निर्मिताऽस्ति। अस्यामेवोपनिषदि आयाति—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषष्वजाते।
तयोरन्य: पिप्पलं स्वाद्वत्ति अनश्नन् चान्य: अभिचाकशीति।।

माण्डूक्योपनिषद्—इयमुपनिषदतीव लघ्वी वर्तते, परन्तु विषयोऽस्य वैशाल्यं नूनं बिभर्ति। अस्यामुपनिषदि केवलं द्वादशवाक्यानि सन्ति।

### 10. श्वेताश्वतरोपनिषत्—

इयमुपनिषत् कृष्णयजुर्वेदीया वर्तते। अस्यामुपनिषदि षडध्याया: सन्ति। अस्यामुपनिषदि जीवतत्त्वस्य, ब्रह्मतत्त्वस्य, प्रकृतितत्त्वस्य च वर्णनं सविस्तरं समुपलभ्यते। उपनिषद्वाक्यमहाकोशे 181 एकाशीत्युत्तरशतोपनिषदां वाक्यानि संगृहीतानि सन्ति।

### (ठ) वैदिक-स्वरप्रक्रिया—

उदात्तानुदात्तस्वरितानां वैदिकस्वराणां सत्ता, वैदिकभाषाया: महती विशेषताऽस्ति।

अद्यपर्यन्तमुपलब्धेषु सर्वेषु संहिताग्रन्थेषु स्वरचिह्ना: संलग्ना: सन्ति। स्वराणां त्रिविधभेदा: भवन्ति। यथोक्तम्—

उदात्तश्चानुदात्तश्च स्वरितश्च त्रय स्वरा:।
आयाम-विश्रम्भाक्षेपैस्त उच्यन्ते स्वरास्त्रय:।।

### वैदिकस्वर-रेखांकनम्—



## (ड) वेदानां रचनाकालः

ऋग्वेदस्य पुरुषसूक्तस्य अष्टममन्त्रस्यानुसारेण ऋगादीनां चतुर्णामपि वेदानाम् उत्पत्तिः सृष्ट्युत्पत्तिकाले एव सिद्ध्यति। ज्यौतिषगणनानुसारेण सृष्ट्युत्पत्तिकालादारभ्य अद्यावधि 2010 सौरवर्षाणि, तदनुसारेण 1, 95, 58, 035 वर्षाणि व्यतीतानि इति निश्चीयते।

1. मैक्समूलरमहोदयेन ऋग्वेदस्य रचना 1150 ई.पू. समीपे जाता। बुद्धधर्मोदयात् प्रागेव च ब्राह्मणग्रन्था अपि व्यरच्यन्त। बुद्धेन ब्राह्मणग्रन्थेषु विवेचितानामेव यागविधीनां कट्वी आलोचना क्रियते स्म, अपि च उपनिषत्समर्थितं कतिपयतत्त्वजातमात्मसात् क्रियते स्म, अतः बुद्धात् पूर्वतना (500 ई.पू.) एव ब्रह्मणोपनिषद्भागाः सम्भवन्ति। वैदिकसाहित्ये चत्वारि युगानि— छन्दोयुगम्, मन्त्रयुगम्, ब्राह्मणयुगम्, सूत्रयुगञ्च। प्रत्येकयुगविकासाय तेन 200 वर्षस्य कालखण्डः स्वीकृतः। अस्य मान्यता अस्ति यत् शाक्यमुनेः बुद्धात् 600 वर्षपूर्वमेव, अर्थात् 1200 ई०पूर्वमेव छन्दोयुगस्य अस्तित्वम् आसीत्। इत्थम् ऋग्वेदस्य रचनाकालः 1200+2010=3210 वर्षेभ्यः पूर्वमेव भवितुं शक्नोति।
2. डॉ. अविनाशचन्द्रदासमतम्—अयं महानुभावः वेदे निर्दिष्टानि अनेकानि भूगर्भशास्त्रीयतत्त्वानि विशेषतः आर्यावर्त्ततश्चतुर्दिक्षु चतुःसमुद्रीस्थितिमाधारीकृत्य गणनाद्वारा वेदस्य समयं 25 सहस्रसंवत्सरपूर्वं मन्यते। इदमीयं मतं "ऋग्वैदिक इण्डिया" (Rigvedic India) नामके पुस्तके व्यक्ततयाऽनेन प्रतिपादितम्।
3. बालगंगाधर-तिलकमतम्—वैदिककालविषयकः सिद्धान्तः अपि ज्यौतिषशास्त्रमेव अनुसरति। महापुरुषोऽयं स्वीकरोति यत् ऋग्वैदिकमन्त्राणां रचनाकालः 4000 B.C. इत्यारभ्य 6000 B.C. यावत् प्राचीनः भवितुं शक्नोति। तिलकमहोदयेन वैदिककालश्चतुर्धा विभक्तः—
   1. अदितिकालः—6000 ई0 पूर्वतः 4000 पूर्वपर्यन्तम्।
   2. मृगशिरःकालः—4000 ई0 पूर्वतः2500 ई० पूर्वपर्यन्तम्।
   3. कृत्तिकाकालः—2500 ई0 पूर्वतः 1400 ई० पूर्वपर्यन्तम्।
   4. अन्तिमःकालः—1400 ई0 पूर्वतः 500 ई० पूर्वपर्यन्तम्।
4. वेबर-महोदयस्य मतम्—History of India Literature नामकपुस्तके कथितं यद्-वेदाः 1500 B.C.इति मन्यते।
5. जैकोबी महोदयस्य मतम्—अनेन महोदयेन ऋग्वेदस्य मण्डूकसूक्तस्य ऋचाम् अधिकृत्य ज्योतिषगणनानुसारेण वैदिकरचनाकालः 2500 B.C. इति मन्यते।
6. पं. शंकर-बालकृष्ण दीक्षितस्य मतम्—अनेन महोदयेन ज्यौतिषगणनया शतपथब्राह्मणस्य रचनाकालः 3000 B.C. इति स्वीकरोति। शतपथब्राह्मणादपि प्राचीनतरः ऋग्वेदः तस्य मते 3500 B.C. इति भवितुं शक्यते।
7. विन्टरनित्ज महोदयस्य मतम्—वैदिकभाषायाः पारस्परिकतुलनात्मक अध्ययनेन ऋग्वेदस्य रचनाकालः 4500 इत्यारभ्य 6000 इति कालस्य मध्यवर्ती कालखण्डः स्वीकृतः।

8. वेदस्थितज्यौतिषतत्त्वाधारं मतम्—भारते षड् ऋतवो भवन्ति। अमी ऋतवः सूर्यसंक्रमण-निमित्तकाः। इदमपि प्रसिद्धं यत् प्राचीनकालादधुनापर्यन्तममी ऋतवः पश्चात्सर्पन्ति। वेदोक्तज्यौतिषतत्त्वानुसारेण वेदानां 2500 ई०पू० पूर्वकालिकता प्रतीता भवन्ति।

9. शिलालेखस्य समयः—वैदिकरचनाकालः शिलालेखस्य आधारोपरि 2000 ई.पू. सिद्ध्यति। अयं कालनिर्णयः तिलकस्य मतं सन्निकृष्टं करोति।

संस्कृतवाङ्मये वेदानां रक्षणार्थं षट्शास्त्राणि अङ्गभूतानि सन्ति—

शिक्षा व्याकरणं छन्दो निरुक्तं ज्योतिषं तथा।
कल्पश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः।।

"वेद" इति शब्दः "विद् ज्ञाने", विद् सत्तायाम्", "विद्लृ लाभे", "विद् विचारणे" इत्येतेभ्यः चतुर्भ्यो धातुभ्यो निष्पन्नोऽस्ति। प्रधानतया वेदो द्विविधः—मन्त्ररूपः(संहिता) ब्राह्मणरूपश्चेति। पुनः ब्राह्मणः त्रिधा विभज्यते। तद्यथा—ब्राह्मणम्, आरण्यकम्, उपनिषत् चेति। पुनः वेदस्य बहवः विभागाः भवन्ति। वेदस्य अङ्गानि वेदाङ्गानि। अङ्ग्यन्ते ज्ञायन्ते एभिरिति अङ्गानि।

षड् वेदाङ्गानि सन्ति—1. शिक्षा, 2. व्याकरणम्, 3. छन्दः, 4. निरुक्तम्, 5. ज्योतिषम्, 6. कल्पः।

## (ढ) प्रातिशाख्यवेदांगम्—

पदप्रकृतानि प्रातिशाख्यानि, एतदतिरिक्तं प्रातिशाख्यग्रन्थेषु, शिक्षा-व्याकरण-छन्दसां नियमाः विवेचिताः सन्ति। कस्याः शाखायाः नियमविशेषः कः, इति प्रदर्शनम् एव प्रातिशाख्यग्रन्थानां प्रयोजनमस्ति। अर्थात् शिक्षा-व्याकरण-छन्दसां समाहार एव प्रातिशाख्यग्रन्थः। इमे प्रातिशाख्याः संहिताभेदेन शाखाभेदेन वा विभिन्नाः वर्तन्ते।

यथा—ऋग्वेदस्य ऋक्प्रातिशाख्यम्, यजुर्वेदस्य वाजसनेयिप्रातिशाख्यम्, तैत्तिरीयप्रातिशाख्यम्, सामवेदस्य ऋक्तन्त्रम्, पुष्यसूत्रप्रातिशाख्यम् तथा अथर्ववेदस्य शौनकीया प्रातिशाख्यम्, अथर्ववेदप्रातिशाख्यञ्चेति सुप्रसिद्धाः प्रातिशाख्यग्रन्थाः सन्ति।

1. समानाक्षराणि—"अष्टौ समानाक्षराण्यादितः।" अर्थात् वर्णमालायाः आदितः आरम्भ-वर्णसमाम्नायस्य अष्टावक्षराणि समानाक्षरसंज्ञकानि भवन्ति। अर्थात् अ, आ, इ, ई, उ, ऊ, ऋ, ॠ इमानि अष्टाक्षराणि समानाक्षरसंज्ञकानि भवन्ति। अत्र उव्वटेन कथितम्—"समानाक्षरसंस्थाने" अर्थात् समानस्थानीयौ समानवर्णौ दीर्घतः प्राप्नुवन्ति।
2. सन्ध्यक्षराणि—"ततश्चत्वारि सन्ध्यक्षराण्युत्तराणि"। यथोक्तम् आचार्यवरेण उव्वटेन—सामानाक्षरेभ्यः उत्तराणि चत्वारि अक्षराणि सन्ध्यक्षरसंज्ञकानि भवन्ति। अर्थात् ए, ऐ, ओ, औ, एतानि चत्वारि सन्ध्यक्षराण्युच्यन्ते।
3. अघोषाः—"अन्त्याः सन्तः तेषामघोषाः।" अर्थात्, श, ष, स, ᳵक, ᳶप अघोषसंज्ञकाः सन्ति।
4. सोष्माः—"युग्मौ सोष्माणौ" वर्गे वर्गे च द्वितीयचतुर्थौ वर्णौ सोष्माणौ वेदितव्यौ।

5. स्वरभक्तिः—स्वरभक्तिस्तु पूर्ववर्ती रेफेन लकारेण वा सम्बद्धा भवति, यथोक्तं—"स्वरभक्तिः पूर्वभागमक्षरांगम्।" सा स्वरभक्तिः पूर्वं रेफं लकारं वा भजते। सा द्विविधा—दीर्घस्वरभक्तिः, ह्रस्वस्वरभक्तिश्च।

6. यमाः—"स्पर्शाः यमानुनासिकाः स्वान्परेषु स्पर्शेष्वनुनासिकेषु।" इमे यमाः चतुर्विधाः भवन्ति।

1. अघोषाल्पप्राणाः—कँ, चँ, टँ, तँ, पँ। 2. अघोष-महाप्राणाः—खँ, छँ, ठँ, थँ, फँ।

3. सघोषाल्पप्राणाः—गँ, जँ, डँ, दँ, बँ। 4. सघोषमहाप्राणाः—घँ, झँ, ढँ, धँ, भँ।

7. रक्ता—"रक्तसंज्ञोऽनुनासिकः" अर्थात् अनुनासिकवर्णाः रक्तसंज्ञकाः भवन्ति। यथा—ङ्, ञ्, ण्, न्, म् इमे अनुनासिकवर्णाः रक्तसंज्ञकाः सन्ति।

8. संयोगः—द्वयोः व्यञ्जनवर्णयोः सन्निपात एव "संयोग" इत्युच्यते।

9. प्रगृह्यः—सम्बोधनात्मकपदस्य अन्ते विद्यमानस्य ओकारस्य प्रगृह्यसंज्ञा भवति।

10. रेफितः—"ऊष्मारेफी पञ्चमो नामिपूर्वः" अर्थात् स्वरवर्णः।

## 1. वेदाः

(ण) वैदिकसाहित्यस्य वस्तुनिष्ठप्रश्नोत्तराणि—

1. प्रश्नः—कति वेदाः सन्ति, के च ते?
उत्तरम्—चत्वारो वेदाः—1. ऋग्वेदः, 2. यजुर्वेदः, 3. सामवेदः, 4. अथर्ववेदः।

2. प्रश्नः—वेदानां कति संहिताः सन्ति?
उत्तरम्—चत्वारि—ऋग्यजुःसामाथर्वभेदात्।

3. प्रश्नः—वेदस्य का परिभाषा?
उत्तरम्—"मन्त्रब्राह्मणयोर्वेद नामधेयम्"। इष्टप्राप्त्यनिष्टपरिहारयोः अलौकिकम् उपायं यो ग्रन्थो वेदयति स वेदः।

4. प्रश्नः—"वेदत्रयी" इत्यस्य किं तात्पर्यम्?
उत्तरम्—1. ऋग्वेदः, 2. यजुर्वेदः, 3. सामवेदश्च।

5. प्रश्नः—पद्यात्मको वेदः कः?
उत्तरम्— ऋग्वेदः।

6. प्रश्नः—वैदिकसाहित्यं कतिविधं विभज्यते? के च ते?
उत्तरम्—चतुर्विधं विभज्यते, 1. वेदानां संहिताः, 2. ब्राह्मणग्रन्थाः, 3. आरण्यकग्रन्थाः, 4. उपनिषद्ग्रन्थाः।

7. प्रश्नः—वेदे मुख्यतया कति छन्दांसि प्रयुक्तानि सन्ति? तानि कति प्रमुखानि?
उत्तरम्—चतुर्दश(14) छन्दांसि प्रयुक्तानि सन्ति, किञ्च सप्त(7) एव प्रमुखानि। तत्र वर्णवृत्तानामेव प्रयोगः न तु मात्रिकवृत्तानाम्।

| छन्दः | प्रथमपादः | द्वितीयपादः | तृतीयपादः | चतुर्थपादः | पञ्चमपादः | वर्णसंख्या |
|---|---|---|---|---|---|---|
| 1. गायत्री | 8 | 8 | 8 | | | 24 |
| 2. उष्णिक् | 8 | 8 | 12 | | | 28 |
| 3. अनुष्टुप् | 8 | 8 | 8 | 8 | | 32 |
| 4. बृहती | 8 | 8 | 12 | 8 | | 36 |
| 5. पंक्तिः | 8 | 8 | 8 | 8 | 8 | 40 |
| 6. त्रिष्टुप् | 11 | 11 | 11 | 11 | | 44 |
| 7. जगती | 12 | 12 | 12 | 12 | | 48 |

8. प्रश्नः—वेदेषु कति स्वराः? के च ते?
उत्तरम्— त्रयः स्वराः—1. उदात्तः, 2. अनुदात्तः, 3. स्वरितः।

9. प्रश्नः—वेदेषु कति विकृतयः? के च ते?
उत्तरम्—अष्टौ विकृतयः—1. जटा पाठः, 2. माला, 3. शिखा, 4. रेखा, 5. ध्वजः, 6. दण्डः, 7. रथः, 8. घनः।

10. प्रश्नः—वेदानां कियत्यः ऋत्विजः सन्ति?
उत्तरम्—चत्वारः—1. ऋग्वेदः–होता, 2. यजुर्वेदः–अध्वर्युः, 3. सामवेदः–उद्गाता, 4. अथर्ववेदः–ब्रह्मा।

11. प्रश्नः—सर्वेषां वेदानां कियत्यः शाखाः सन्ति?
उत्तरम्—एकत्रिंशदधिक-एकादशशतानि(1131) शाखाः।

12. प्रश्नः—वर्तमानकाले कियत्यः शाखाः उपलब्धाः?
उत्तरम्—(12) द्वादश शाखाः उपलब्धाः।

13. प्रश्नः—वेदः इत्यत्र कः प्रत्ययः?
उत्तरम्— विद् घञ् प्रत्ययः। (विद् ज्ञाने-ज्ञानप्राप्तिः करणम्)

14. प्रश्नः—सम्प्रति कति वेदाः वर्तन्ते?
उत्तरम्—चत्वारो वेदाः।

15. प्रश्नः—प्राचीनतमः वेदः कः?
उत्तरम्— ऋग्वेदः।

16. प्रश्नः—कस्य वेदस्य कः उपवेदः, के च ऋषयः इति निर्दिशत?
उत्तरम्—1. ऋग्वेदस्य आयुर्वेदः (अग्निऋषिः), 2. यजुर्वेदस्य धनुर्वेदः (वायुऋषिः), 3. सामवेदस्य गान्धर्ववेदः (आदित्यऋषिः), 4. अथर्ववेदस्य अर्थवेदः (अंगिराऋषिः)।

17. प्रश्नः—कस्य वेदस्य "ऋत्विक्" कः इति दर्शयत?
उत्तरम्—ऋग्वेदस्य होता, यजुर्वेदस्य अध्वर्युः, सामवेदस्य उद्गाता, अथर्ववेदस्य ब्रह्म।

18. प्रश्नः—"गोपथब्राह्मणम्" इति कस्य वेदस्य ग्रन्थः?
उत्तरम्—अथर्ववेदस्य।

19. प्रश्नः—"प्रातिशाख्यम्" केन रूपेणावगन्तव्यम्?
उत्तरम्—वैदिकव्याकरणरूपेण।

20. प्रश्नः—"संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्" उक्तिरियं कस्यां सूक्तौ विद्यते?
उत्तरम्—संज्ञानसूक्तौ।

21. प्रश्नः—"विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम्" इतीयं सूक्तिः कस्य वेदस्य?
उत्तरम्— ऋग्वेदस्य।

22. प्रश्नः—"शं नः कुरु प्रजाभ्यः" इतीयं सूक्तिः कस्य वेदस्य?
उत्तरम्— यजुर्वेदस्य।

23. प्रश्नः—"सर्वाः आशाः मम मित्रं भवन्तु" इति को वेदो वदति?
उत्तरम्—अथर्ववेदः।

24. प्रश्नः—"माता भूमिः पुत्रोऽहं पृथिव्याः" इति को वेदो वदति?
उत्तरम्— अथर्ववेदः।

25. प्रश्नः—उपनिषदां संख्या प्रसिद्धा का?
उत्तरम्— दश।

26. प्रश्नः—प्रस्थानत्रयं किम्?
उत्तरम्—1. उपनिषद्, 2. गीता, 3. ब्रह्मसूत्राणि।

27. प्रश्नः—आयुर्वेदस्यायं प्रवर्त्तकः—
उत्तरम्—धन्वन्तरिः।

28. प्रश्नः—कौटिल्यार्थशास्त्रमनेन सम्बद्धमस्ति—
उत्तरम्—राजनीत्या।

29. प्रश्नः—"विद्ययाऽमृतमश्नुते" इति केन सह सम्बन्धितः?
उत्तरम्— ईशोपनिषदा।

30. प्रश्नः—"शुल्बसूत्रं" किम्?
उत्तरम्— वेदिकायाः निर्माणकं ग्रन्थम्।

31. प्रश्नः—चतुर्णामपि वेदानां "भाष्यम्" कस्य नाम्ना प्रसिद्धम्?
उत्तरम्— सायणभाष्यम्।

32. प्रश्नः—वेदः शब्दस्य अर्थमभिलक्ष्य सायणाचार्येण किमुक्तम्?
उत्तरम्— अपौरुषेयवाक्यं वेदः।

33. प्रश्नः—"वेदत्रयी" पदेन किं गृहीतः?
उत्तरम्— 1. ऋग्वेदः, 2. यजुर्वेदः, 3. सामवेदश्च।

34. प्रश्नः—उत्कृति-छन्दे प्रतिपदं कति वर्णाः प्राप्यन्ते?
उत्तरम्—(104)

35. प्रश्नः—प्रतिपदं 100 अक्षराणि कुत्र समुपलभ्यन्ते?
उत्तरम्—अभिकृतौ।

36. प्रश्नः—संस्कृतौ प्रतिपदं कति अक्षराणि दृश्यन्ते?
उत्तरम्—96 अक्षराणि।

37. प्रश्नः—विकृतौ प्रतिपदं कति अक्षराणि उपलभ्यन्ते?
उत्तरम्—92 अक्षराणि।
38. प्रश्नः—वैदिकच्छन्देषु "88" अक्षराणि कुत्र भवन्ति?
उत्तरम्—आकृतिः।
39. प्रश्नः—"84" अक्षराणि प्रतिपदं कुत्र भवन्ति?
उत्तरम्—प्रकृतिः।
40. प्रश्नः—प्रतिपदं 52 अक्षराणि कुत्र प्रद्योतयति?
उत्तरम्—अतिजगती।
41. प्रश्नः—"56" अक्षरैः विनियमितः छन्दविशेषः कः?
उत्तरम्— शक्वरी।
42. प्रश्नः—"अतिशक्वरी" इत्यत्र प्रतिपदं कति अक्षराणि भवन्ति?
उत्तरम्— 60 अक्षराणि।
43. प्रश्नः—"64" अक्षरैः नियमितः वैदिकच्छन्दविशेषः कः?
उत्तरम्— अष्टिः।
44. प्रश्नः—"अत्यष्टिः" प्रतिपदं कति अक्षरैः विलसति?
उत्तरम्— 68 अक्षरैः।
45. प्रश्नः—"धृतौ" प्रतिपदं कति अक्षराणि भवन्ति?
उत्तरम्— 72 अक्षराणि।
46. प्रश्नः—"अतिधृतौ" प्रतिपदं काः अक्षरसंख्याः भवन्ति?
उत्तरम्— (76)
47. प्रश्नः—संहितायां विकृतपाठेषु कति प्रकाराः प्राप्यन्ते?
उत्तरम्— (08) अष्टौ।
48. प्रश्नः—नासदीयसूक्तस्य प्रकृतिः कीदृगस्ति?
उत्तरम्— दार्शनिकी।
49. प्रश्नः— "कामस्तदग्रे समवर्तताधि" मन्त्रोऽयं कस्मिन् सूक्ते वर्तते?
उत्तरम्— नासदीयसूक्ते।
50. प्रश्नः—"नासदासीन्नो सदासीत्तदानीम्" इति मन्त्रः कस्मिन् सूक्ते प्राप्यते?
उत्तरम्— नासदीयसूक्ते।
51. प्रश्नः—तिलक-महोदयस्य मते इन्द्रस्य प्रतीकः कः?
उत्तरम्— सूर्यः।
52. प्रश्नः—यास्कमतानुसारेण वृत्रस्य प्रतीकभूतः कः?
उत्तरम्— मेघः।
53. प्रश्नः—"याति देवः प्रवता यात्युद्वता। याति शुभ्राभ्यां यजतो हरिभ्याम्" इति मन्त्रेण सम्बद्धः कः?
उत्तरम्—सविता।

54. प्रश्नः—"दस्रा" इति उपाधिना उपहितः दैवतः कः?
उत्तरम्—अश्विनौ।

55. प्रश्नः—गायत्री-मन्त्रस्य उपास्या देवता का?
उत्तरम्— सविता।

56. प्रश्नः—सोमाद् अधिकं मधुम् ईहते—
उत्तरम्— अश्विन्।

57. प्रश्नः—सूर्यस्य माता का अस्ति?
उत्तरम्— उषा।

58. प्रश्नः—"दिव्यभिषक्" इत्युपाध्युपहितः दैवतः कः?
उत्तरम्— अश्विनौ।

59. प्रश्नः—यास्कमतानुसारेण स्थानभेदेन कतिविधाः देवताः?
उत्तरम्— त्रिविधाः।

60. प्रश्नः—भुज्योः समुद्धर्ता कः?
उत्तरम्— अश्विन्।

61. प्रश्नः—ऋजाप्वाय नेत्रप्रदाता कः?
उत्तरम्— अश्विन्।

62. प्रश्नः—"पवमान" इत्युपाध्युपहितः कः?
उत्तरम्— सोमः।

63. प्रश्नः—"सद्यो जंघामायसीं विश्पलायै" इति मन्त्रांशेन सम्बद्धः कः?
उत्तरम्— अश्विन्।

64. प्रश्नः—"मौञ्जवत्" इति कस्य विशेषणमस्ति?
उत्तरम्— सोमस्य।

65. प्रश्नः—वज्रिन्-विशेषण-विशिष्टः कः?
उत्तरम्— इन्द्रः।

66. प्रश्नः—वृत्रहन्ता कः?
उत्तरम्— इन्द्रः।

67. प्रश्नः—रुद्रस्य निवासस्थानं कुत्र अस्ति?
उत्तरम्— अन्तरिक्षलोके।

68. प्रश्नः—"सोमपा" कस्य विशेषणमस्ति?
उत्तरम्— इन्द्रस्य।

69. प्रश्नः—प्रातः सायंकालयोः सम्बद्धः कः?
उत्तरम्— सविता।

70. प्रश्नः—"अहन्नहिं पर्वते शिश्रियाणं" इति मन्त्रेण सम्बद्धः कः?
उत्तरम्— इन्द्रः।

71. प्रश्नः—"नासत्या" विशेषणेन विशिष्टः कः?
उत्तरम्— अश्विनौ।
72. प्रश्नः—गुहानिरुद्धस्य अत्रेः समुद्धर्ता कः?
उत्तरम्— अश्विन्।
73. प्रश्नः—पुराणी युवती का?
उत्तरम्— उषस्।
74. प्रश्नः—युगलदेवता कः अस्ति?
उत्तरम्— अश्विनौ।
75. प्रश्नः—उषा-देवता-सम्बद्धलोकविशेषः कः?
उत्तरम्— द्युलोकः।
76. प्रश्नः—"विश्ववारा" का अस्ति?
उत्तरम्— उषस्।
77. प्रश्नः—कति वेदाङ्गानि सन्ति?
उत्तरम्—(06) षट्।
78. प्रश्नः—"मन्त्रब्राह्मणयोर्वेद नामधेयम्" कस्येयमुक्तिः?
उत्तरम्— सायणस्य।
79. प्रश्नः—शाबरभाष्यानुसारेण ब्राह्मणग्रन्थानां प्रतिपाद्यविषयाः कतिविधाः?
उत्तरम्—(10) दश।
80. प्रश्नः—ऐतरेयब्राह्मणे कति अध्यायाः विद्यन्ते?
उत्तरम्— (40) चत्वारिंशत्।
81. प्रश्नः—"चरैवेति" इति वाक्यांशेन सम्बद्धः ग्रन्थः कः?
उत्तरम्— ऐतरेयब्राह्मणम्।
82. प्रश्नः—कौषीतकिब्राह्मणे कति अध्यायाः सन्ति?
उत्तरम्—(30) त्रिंशतिः।
83. प्रश्नः—राजसूययागः शतपथब्राह्मणस्य कस्मिन् काण्डे उपलभ्यते?
उत्तरम्— पंचमकाण्डे।
84. प्रश्नः—ताण्ड्यमहाब्राह्मणस्य प्रमुखप्रतिपाद्यविषयः कः?
उत्तरम्— सामः सोमयागश्च।
85. प्रश्नः—वत्समेधातिथेः आख्यायिका कस्मिन् ब्राह्मणे समुपवर्णिताऽस्ति?
उत्तरम्— ताण्ड्यमहाब्राह्मणे।
86. प्रश्नः—षड्विंशब्राह्मणे कति प्रपाठकाः सन्ति?
उत्तरम्—(05) पञ्च।
87. प्रश्नः—सामविधानब्राह्मणे कति प्रकरणानि सन्ति?
उत्तरम्—(03) त्रीणि।

88. प्रश्नः—आर्षेयब्राह्मणे कति प्रपाठकाः सन्ति?
उत्तरम्—(03) त्रयः।
89. प्रश्नः—गोपथब्राह्मणस्य विभागसंख्या अस्ति—
उत्तरम्—(02) द्वे।
90. प्रश्नः—सम्पूर्णे गोपथब्राह्मणे कति प्रपाठकाः सन्ति?
उत्तरम्—(11) एकादश।
91. प्रश्नः—"अरण्याध्ययनादेतद् आरण्यकम्" इति कस्येयमुक्तिः?
उत्तरम्— सायणस्य।
92. प्रश्नः—"सर्वा ऋचः सर्वे वेदाः सर्वे घोषः एकैव व्याहृतिः प्राण एव प्राण" इत्यनेन वाक्येन सम्बद्धः आरण्यकग्रन्थः कः?
उत्तरम्—ऐतरेयारण्यकम्।
93. प्रश्नः—"कश्यपः पश्यको भवति। यत् सर्वं पश्यतीति सौक्ष्म्यात्" वाक्यमिदं केनारण्यकेन सम्बद्धमस्ति?
उत्तरम्— तैत्तिरीयारण्यकेन।
94. प्रश्नः—तवल्कारारण्यके कति अध्यायाः सन्ति?
उत्तरम्—(04) चत्वारः।
95. प्रश्नः—"अथा अर्धो वा एष आत्मनः यत् पत्नी" वाक्यमिदं केनारण्यकेन सम्बद्धमस्ति?
उत्तरम्— तैत्तिरीयारण्यकेन।
96. प्रश्नः—नचिकेतसः पित्रा कृतः यागविशेषः कः?
उत्तरम्—विश्वजित्-यागः।
97. प्रश्नः—पवमानसूक्तस्य देवता कोऽस्ति?
उत्तरम्—सोमः।
98. प्रश्नः—वैदिककालनिर्णये ज्योतिषशास्त्रस्योपयोगः केन कृतः?
उत्तरम्—तिलकेन।
99. प्रश्नः—"जलाष" इति कस्य विशेषणम्?
उत्तरम्—रुद्रस्य।
100. प्रश्नः—को नाम देवः द्युस्थानीयः?
उत्तरम्— सूर्यः।
101. प्रश्नः—हरिश्चन्द्रोपाख्यानं कस्मिन् ब्राह्मणे उपलभ्यते?
उत्तरम्— ऐतरेयब्राह्मणे।
102. प्रश्नः—ब्राह्मणग्रन्थेषु किं निरूपितो भवति?
उत्तरम्—यज्ञानुष्ठानस्य पद्धत्या सह फलप्राप्तिः तद् विधेः निरूपणञ्च।
103. प्रश्नः—वेदानां कौ द्वौ भेदौ?
उत्तरम्— संहिता ब्राह्मणञ्च(वेदो हि मन्त्रब्राह्मणभेदेन द्विविधः।)

104. प्रश्नः—संहिता कां कथ्यते?
उत्तरम्— वेदस्य मन्त्रभागं संहिता कथ्यते।
105. प्रश्नः—आरण्यकब्राह्मणयोर्मध्ये को भेदः?
उत्तरम्— आरण्यके संहितापरकविवेचनमस्ति तथा ब्राह्मणे संहितापरकभाष्यम्।
106. प्रश्नः—ब्राह्मणग्रन्थानां कियती संख्या अस्ति?
उत्तरम्—(13 त्रयोदश)।
107. प्रश्नः—"वेदत्रयी" इत्यस्य संहिता कस्य घटकस्य प्रतीको भवति?
उत्तरम्— 1. ऋग्वेदस्य शरीरम्, 2. यजुर्वेदस्य मनः, 3. सामवेदस्य बुद्धिः।
108. प्रश्नः—अथर्ववेदः कस्य घटकस्य प्रतीकः वर्तते?
उत्तरम्— आत्मायाः।
109. प्रश्नः—संहिताचतुष्टयस्य संकलनकर्ता कः?
उत्तरम्— महर्षिः वेदव्यासः।
110. प्रश्नः—ऋत्विज्-शब्दस्य कोऽर्थः?
उत्तरम्— यज्ञकर्ता (होता)।
111. प्रश्नः—वेदस्य के त्रयो विभागाः?
उत्तरम्—1. संहिता, 2. ब्राह्मणम्, 3. आरण्यकम्।
112. प्रश्नः—उपनिषद् इत्यस्य अपरं नाम किम्?
उत्तरम्—"वेदान्तः।"
113. प्रश्नः—प्रतिपादित-विषयस्य दृष्ट्या वेदस्य के विभागाः?
उत्तरम्— द्वौ; 1. कर्मकाण्डम्, 2. ज्ञानकाण्डम्।
114. प्रश्नः—महाभाष्यानुसारं वेदानां कियत्यः शाखाः सन्ति?
उत्तरम्—1. ऋग्वेदस्य 21 शाखाः, 2. यजुर्वेदस्य 100 शाखाः, 3. सामवेदस्य 1000 शाखाः, 4. अथर्ववेदस्य 09 शाखाः।
115. प्रश्नः—यज्ञः साक्षात् कस्य रूपं वर्तते?
उत्तरम्— विष्णोः।
116. प्रश्नः—"मुक्तिकोपनिषद्" इति आधृत्य उपनिषदानां कियती संख्या?
उत्तरम्—(102)
117. प्रश्नः—"सूत्रग्रन्थः" कति भागेषु विभक्तोऽस्ति?
उत्तरम्— चत्वारः; 1. श्रौतसूत्रम्, 2. गृह्यसूत्रम्, 3. धर्मसूत्रम्, 4. शुल्बसूत्रम्।
118. प्रश्नः—रेखागणितं कुत्र प्राप्नोति?
उत्तरम्—शुल्बसूत्रे।
119. प्रश्नः—को वेदविभाजकः?
उत्तरम्—वेदव्यासः।
120. प्रश्नः—गद्यात्मको वेदः कः?
उत्तरम्—शुक्लयजुर्वेदः।

121. प्रश्नः—को वेदो गद्यपद्यात्मकः?
उत्तरम्— कृष्णयजुर्वेदः।

122. प्रश्नः— यज्ञानुष्ठानेन सम्बद्धो वेदः कः?
उत्तरम्— यजुर्वेदः।

123. प्रश्नः—"मन्त्रब्राह्मणौ" कस्यार्थौ भवतः?
उत्तरम्— वेदस्य।

124. प्रश्नः— कति वेदाङ्गानि, कानि च तानि?
उत्तरम्—(6 षड् वेदाङ्गानि) 1. शिक्षा, 2. कल्पः, 3. व्याकरणम्, 4. निरुक्तम्, 5. छन्दः, 6. ज्योतिषम्।

125. प्रश्नः— वेदाङ्गानां कानि महत्त्वानि?
उत्तरम्— वेदज्ञानस्य प्राप्त्यर्थं वेदाङ्गाध्ययनस्य विशिष्टमहत्त्वमस्ति।

126. प्रश्नः— शिक्षा वेदाङ्गस्य किम् उद्देश्यम्?
उत्तरम्— वैदिक-ऋचाणामुच्चारण-विशेषोद्देश्यम्।

127. प्रश्नः— शिक्षायाः का उपमा प्रदीयते?
उत्तरम्— शिक्षा घ्राणं तु वेदस्य।

128. प्रश्नः— ऋग्वेदेन सम्बन्धित-शिक्षाग्रन्थाः के सन्ति?
उत्तरम्— 1. शौनकीयशिक्षा, 2. वाशिष्ठशिक्षा, 3. पाणिनीयशिक्षा।

129. प्रश्नः— कस्य वैयाकरणस्य शिक्षा सर्वैः वेदैः सम्बद्धा मन्यन्ते?
उत्तरम्— पाणिनेः।

130. प्रश्नः— शुक्लयजुर्वेदस्य कः शिक्षाग्रन्थः प्रसिद्धतमः?
उत्तरम्— याज्ञवल्क्यशिक्षाग्रन्थः।

131. प्रश्नः— कृष्णयजुर्वेदस्य कः शिक्षाग्रन्थः उपलभ्यते?
उत्तरम्— 1. भरद्वाजशिक्षा (संहिताशिक्षा) 2. व्यासशिक्षा।

132. प्रश्नः— सामवेदस्य शिक्षाग्रन्थाः के सन्ति?
उत्तरम्— 1. नासदीयशिक्षा, 2. गौतमीशिक्षा, 3. लोमशशिक्षा।

133. प्रश्नः— अथर्ववेदस्य शिक्षाग्रन्थः कोऽस्ति?
उत्तरम्— माण्डूकी शिक्षा।

134. प्रश्नः— वर्तमानकाले कियन्ति प्रातिशाख्यानि उपलभ्यन्ते?
उत्तरम्— 5 पञ्च, 1. ऋक्, 2. तैत्तिरीय, 3. वाजसनेयि, 4. साम, 5. अथर्वप्रातिशाख्यानि।

135. प्रश्नः— वैदिकसाहित्ये त्रैलोक्यशब्देन के गृह्यन्ते?
उत्तरम्— 1. पृथिवी, 2. अन्तरिक्षः, 3. स्वर्गः।

136. प्रश्नः—"अश्विनौ" इत्यस्य सम्बन्धः केन स्थानेन वर्तते?
उत्तरम्— द्युलोकेन।

137. प्रश्नः— युगल-देवता का ?
उत्तरम्— अश्विनौ।

138. प्रश्नः—महाभाष्ये वेदविषये किमुक्तमस्ति?
उत्तरम्— ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च।
139. प्रश्नः—"ऋतावरी" कस्यै देवतायै प्रयुक्तो भवति?
उत्तरम्— उषस्।
140. प्रश्नः—"दुहिता दिवः" कस्यै देवतायै प्रयुक्तो भवति?
उत्तरम्— उषस्।
141. प्रश्नः—का देवता सूर्यस्य पत्नी तथा माता इति कथ्यते?
उत्तरम्— उषस्।
142. प्रश्नः—षोडशसंस्काराणां वर्णनं कस्मिन् कल्पसूत्रे विद्यते?
उत्तरम्— गृह्यसूत्रे।
143. प्रश्नः—यज्ञवेदी-निर्माणेन सम्बद्धं सूत्रं किम्?
उत्तरम्— शुल्बसूत्रम्।
144. प्रश्नः—कौषीतकिगृह्यसूत्रस्य प्रारम्भिकसंस्कारः कः?
उत्तरम्— विवाहसंस्कारः।

## 2. ऋग्वेदः (The first of the four Vedas).

### (त) ऋग्वेदस्य वस्तुनिष्ठप्रश्नोत्तराणि—

1. प्रश्नः—ऋग्वेदस्य का परिभाषा?
उत्तरम्—स्वरूपं ऋच्यते स्तूयतेऽनया इति ऋक् अर्थात् मन्त्रः।
2. प्रश्नः—तिसृणां संहिता कस्य घटकस्य प्रतीकः?
उत्तरम्— ऋक्-शरीरम्, यजुः-मनस्, साम-बुद्धिः,
3. प्रश्नः—विश्वस्य आदिग्रन्थः ऋग्वेदस्य आद्यक्षरं किम्?
उत्तरम्—"अ"
4. प्रश्नः—"ऋक् संहिता काभ्यां द्वाभ्यां क्रमाभ्यां विभक्तः कृतः स्यात्?
उत्तरम्— मण्डलमेवमष्टकक्रमाभ्याम्।
5. प्रश्नः—मण्डलक्रमानुसारि ऋग्वेदे कति मण्डलानि सन्ति?
उत्तरम्— दश (10)
6. प्रश्नः—प्रत्येकं मण्डलं केषु विभक्तः कृतः स्यात्?
उत्तरम्— सूक्तेषु।
7. प्रश्नः—ऋक्संहिता कति अष्टकेषु विभाजितः?
उत्तरम्— अष्ट (8)
8. प्रश्नः—अष्टकं कतिषु विभाजितः?
उत्तरम्— अध्यायेषु।
9. प्रश्नः—प्रत्येकेषु अष्टकेषु कति अध्यायाः सन्ति?
उत्तरम्— अष्ट (8)।

10. प्रश्नः— अष्टकक्रमैः ऋक्संहितायां कति अध्यायाः सन्ति?
उत्तरम्— (8×8=64) चतुःषष्टिः।
11. प्रश्नः— ऋक्संहितायां कति सूक्तानि सन्ति?
उत्तरम्— (1028) एकसहस्रमष्टाविंशतिः सूक्तानि सन्ति।
12. प्रश्नः— ऋग्वेदस्य ऋत्विक् किं कथ्यते?
उत्तरम्— होता।
13. प्रश्नः— सृष्टि-रचनातः पूर्वस्थितिः कस्मिन् सूक्ते वर्णितः अस्ति?
उत्तरम्— नासदीयसूक्ते।
14. प्रश्नः— सृष्टि-रचना ब्राह्मणादि वर्णानां विवरणं च कस्मिन् सूक्ते प्राप्यते?
उत्तरम्— पुरुषसूक्ते।
15. प्रश्नः— भारतीयदृष्ट्या वेदस्य रचना कदा अभूत्?
उत्तरम्— भारतीय-दृष्टिकोणेन वेदः अपौरुषेयः तथा सृष्टेः पूर्वस्य।
16. प्रश्नः— ज्योतिषस्याधारोपरि वेदकाल-निर्धारणस्य यत्नः केन कृतः?
उत्तरम्— बालगंगाधरतिलकः।
17. प्रश्नः— भद्रसूक्तं(कल्याणसूक्तं) केन कारणेन प्रसिद्धम्?
उत्तरम्— स्वस्तिवाचनेन।
18. प्रश्नः— वेदे वसन्त-सम्पातः केन नक्षत्रेण भवति?
उत्तरम्— मृगशिरानक्षत्रेण।
19. प्रश्नः— वर्तमाने वसन्त-सम्पातः केन नक्षत्रेण भवति?
उत्तरम्— उत्तरभाद्रपदेन।
20. प्रश्नः— खिलभागेन किं तात्पर्यम्?
उत्तरम्— परिशिष्टम्।
21. प्रश्नः— वर्तमाने ऋग्वेदस्य कियत्यः शाखा उपलब्धाः?
उत्तरम्— (2) द्वे।
22. प्रश्नः— महाभाष्ये ऋग्वेदस्य समग्रशाखाः कियत्यः मन्यन्ते?
उत्तरम्— एकविंशतिः (21)।
23. प्रश्नः—"दाहसंस्कारविषये केषु ऋग्वेदीयसूक्तेषु निर्देशः अस्ति?
उत्तरम्— दशममण्डलस्य षोडशे अष्टादशे च सूक्तेषु।
24. प्रश्नः— ऋषयः कस्य रसस्य अत्यधिकगुणगानं कृतं स्यात्?
उत्तरम्— सोमरसस्य।
25. प्रश्नः— सोमः किमस्ति ?
उत्तरम्— सोम-अग्नीति द्वयोः तत्त्वयोः पारस्परिकक्रियया सृष्टिः विद्यमानोऽस्ति।
26. प्रश्नः— वेदे सर्वाधिक-स्तुतिः कस्य देवस्य कृता स्यात्?
उत्तरम्— इन्द्रस्य।

27. प्रश्नः—वेदस्य द्रष्टारः के?
उत्तरम्— ऋषयः।
28. प्रश्नः— ऋग्वेदे कियत्यः देवताः?
उत्तरम्— त्रयस्त्रिंशत् (33)।
29. प्रश्नः— स्वस्तिवाचनार्थं कं ऋग्वेदीयसूक्तं प्रसिद्धम्?
उत्तरम्— भद्रसूक्तम् (कल्याणसूक्तम्)।
30. प्रश्नः— ऋग्वेदस्य प्रथमः मन्त्रः कः?
उत्तरम्— अग्निमीळे पुरोहितम्। यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्।
31. प्रश्नः— यज्ञे सोमस्य का महत्ता?
उत्तरम्— अग्नौ सोमस्याहुति एव यज्ञः, अतएव सोमः आधारभूततत्त्वेषु वर्तते।
32. प्रश्नः— पाश्चात्य-विद्वान् मैक्समूलरः वेदस्य रचनाकालः किं मन्यते?
उत्तरम्— ई०पू० द्वादशशतानि वर्षाणि(1200)।
33. प्रश्नः— मैक्समूलरानुसारेण आर्यस्य उद्गमस्थानम् आसीत्?
उत्तरम्— मध्य एशिया।
34. प्रश्नः— वेदस्य प्रसिद्ध-संवाद-सूक्तानि कानि कानि सन्ति?
उत्तरम्— यम यमीसंवादः, पुरुरवा-उर्वशीसंवादः, सरमा-पणिसंवादः।
35. प्रश्नः— आचार्यसायणस्य वेदस्य कर्तृत्वविषये किं मतमस्ति?
उत्तरम्— वेदः अपौरुषेय इति।
36. प्रश्नः— ऋग्वेदस्य काः शाखाः उपलब्धाः?
उत्तरम्— बाष्कलः एवं शाकलः।
37. प्रश्नः— पाश्चात्यविद्वान्सः ऋग्वेदस्य कानि मण्डलानि अर्वाचीनं मन्यन्ते?
उत्तरम्— प्रथमं एवं दशमं च मण्डलम्।
38. प्रश्नः— वेदोच्चारणेन सम्बद्धः अष्ट-विकृतयः के के सन्ति?
उत्तरम्— 1. जटा, 2. माला, 3. शिखा, 4. रेखा, 5. ध्वजः, 6. दण्डः, 7. रथः, 8. घनः।
39. प्रश्नः— अष्ट-विकृतीनां किं महत्त्वम्?
उत्तरम्— एतेन वैदिकोच्चारणमेव क्रम-सुरक्षितौ भवतः।
40. प्रश्नः— ऋग्वेदस्य प्रथम व अन्तिममण्डलानि अर्वाचीनं स्वीकर्तुं भाषाशास्त्रीयतर्कं किमस्ति?
उत्तरम्— एतेषु मण्डलेषु रेफस्य स्थानोपरि लकारः प्रयुज्यते, यः द्वाभ्यां नवनमण्डलपर्यन्तं नास्ति।
41. प्रश्नः— प्रसिद्धकथनम् एकं सद्विप्रा बहुधा वदन्ति कुतः उद्धृतोऽस्ति?
उत्तरम्— ऋग्वेदात् (1/164/46)
42. प्रश्नः— वेदस्य विभाजनं कस्मिन् युगे भवतिस्म?
उत्तरम्— द्वापरस्य अन्तिम-समये।
43. प्रश्नः— वेदस्य विभाजनकर्ता केन नाम्ना सम्बोधितः?
उत्तरम्— वेदव्यासनाम्ना।

44. प्रश्नः— वर्तमाने वैवस्वतमन्वन्तरस्य अष्टाविंशति-कलियुगाय वेदव्यासः कः?
उत्तरम्— महर्षिपराशरपुत्रः कृष्णद्वैपायनः।
45. प्रश्नः— प्रसिद्ध-ऋषिकाः काः?
उत्तरम्—शची, वाचक्नवी गार्गी, ब्रह्मवादिनीघोषा, ममता, विश्ववारा, अपाला, सूर्या, वाक्।
46. प्रश्नः— ऋग्वेदस्य कस्मिन् सूक्ते द्यूतस्य वर्णनमस्ति?
उत्तरम्— कितवसूक्ते (दशममण्डलस्य पञ्चत्रिंशत् सूक्ते)।
47. प्रश्नः— अक्षैर्मादिव्यः" कस्मिन् सूक्ते उपदिष्टः?
उत्तरम्— कितवसूक्ते।
48. प्रश्नः— "केवलाघो भवति केवलादी" कुत्र कथितमस्ति?
उत्तरम्— ऋग्वेदस्य भिक्षु(दानस्तुति) सूक्ते।
49. प्रश्नः— ऋग्वेदस्य कानि मण्डलानि परिवारमण्डलानि कथ्यन्ते?
उत्तरम्— द्वितीयतः सप्तममण्डलपर्यन्तानि।
50. प्रश्नः— वर्तमाने दृश्यमानान् ध्रुवतारान् वैज्ञानिकः केन नाम्ना ज्ञायते?
उत्तरम्—अल्फा।
51. प्रश्नः— ऋग्वेदीयस्य अष्टममण्डलस्य द्रष्टारौ कौ?
उत्तरम्— कण्व व उशनस् ऋषी।
52. प्रश्नः— ऋग्वेदे प्रथमसूक्तस्य देवता कः?
उत्तरम्— अग्निः।
53. प्रश्नः— ऋग्वेदस्य सम्पूर्णमन्त्रसंख्या का?
उत्तरम्— (10580.25)
54. प्रश्नः— ऋग्वैदिक-बालखिल्यसूक्तानां संख्या का अस्ति?
उत्तरम्— (11) एकादशः।
55. प्रश्नः— ऋग्वेदस्य अष्टकक्रमे कति अष्टकाः विद्यन्ते?
उत्तरम्—(08) अष्टौ।
56. प्रश्नः— ऋग्वेदस्य बालखिल्यसूक्तसम्बद्धः मण्डलः कः?
उत्तरम्— अष्टमः।
57. प्रश्नः— ऋग्वेदस्य अष्टकक्रमे कति अनुवाकाः प्राप्यन्ते?
उत्तरम्—(85) पञ्चाशीतिः।
58. प्रश्नः— सम्पूर्ण ऋग्वेदस्य शब्द-संख्या का?
उत्तरम्—(1, 53, 826)
59. प्रश्नः— सम्पूर्णेषु ऋङ्मन्त्रेषु अक्षराणां संख्या का?
उत्तरम्—(4, 32, 000)
60. प्रश्नः— सम्प्रति ऋग्वेदस्य समुपलब्ध-प्रचलित-शाखा का अस्ति?
उत्तरम्— शाकलशाखा।

61. प्रश्नः— ऋग्वैदिक-शाकलसंहितायाः पदपाठः केन कृतः?
उत्तरम्— शाकलेन।
62. प्रश्नः— कृष्णद्वैपायन-व्यासाद् ऋग्वेदाध्यायी शिष्यः कः?
उत्तरम्—पैलः।
63. प्रश्नः— ऋग्वैदिकसूक्तसंख्या का?
उत्तरम्— (1028) अष्टाविंशत्युपरि सहस्रम्।
64. प्रश्नः— गृह्यसूत्रस्य ऋग्वैदिकशाखा का?
उत्तरम्— 1. शांखायनः, 2. आश्वलायनः।
65. प्रश्नः— माण्डूकायनशाखा-सम्बद्धः वेदविशेषः कः?
उत्तरम्— ऋग्वेदः।
66. प्रश्नः— शांखायनशाखासम्बद्धः वेदविशेषः कः?
उत्तरम्—ऋग्वेदः।
67. प्रश्नः— मैक्समूलर-महोदयेन निर्धारितः ऋग्वैदिककालखण्डः कः?
उत्तरम्— (1000 B.C.-1200 B.C.)
68. प्रश्नः— 4000 B.C. इति ऋग्वैदिक-रचनाकालः केन विदुषा स्वीकृतः?
उत्तरम्— तिलकेन।
69. प्रश्नः— विण्टरनित्समहोदयेन स्वीकृतः ऋग्वैदिकरचनाकालः कः?
उत्तरम्— 4500-6000 B.C.
70. प्रश्नः— 1200-1500 B.C. इति ऋग्वैदिकरचनाकालः केन स्वीकृतः?
उत्तरम्—वेबरमहोदयेन।
71. प्रश्नः— कयोः द्वयोः विदुषोः ऋग्वैदिककालनिर्धारणसामग्री समाना वर्तते?
उत्तरम्— जैकोबी-तिलकयोः।
72. प्रश्नः—कात्यायनप्रणीत-ऋग्वैदिकसर्वानुक्रमण्यनुसारेण "शतर्चिनां" मण्डलः कः?
उत्तरम्— प्रथमः।
73. प्रश्नः—ऋग्वेदे "गार्त्समदं मण्डलम्" इति कस्य मण्डलस्य अभिधानविशेषः वर्तते?
उत्तरम्— द्वितीयस्य।
74. प्रश्नः— ऋग्वैदिक-तृतीयमण्डलस्य ऋषिविशेषः कः?
उत्तरम्—विश्वामित्रः।
75. प्रश्नः—किम् नाम चतुर्थं मण्डलम् तु ऋग्वेदस्य?
उत्तरम्— वामदेवः।
76. प्रश्नः—ऋग्वेदसंहितायां पञ्चमं मण्डलं किम्?
उत्तरम्— आत्रेयः।
77. प्रश्नः—भारद्वाजनाम्ना विश्रुतं ऋग्वैदिकमण्डलं किम्?
उत्तरम्— षष्ठम्।

78. प्रश्नः—किम् नाम सप्तमं मण्डलं ऋग्वेदस्य?
उत्तरम्—वाशिष्ठम्।
79. प्रश्नः—ऋग्वेदस्य अनुक्तगोत्रात्मकं मण्डलं किम्?
उत्तरम्—अष्टमं मण्डलम्।
80. प्रश्नः—ऋग्वेदे पवमानसंज्ञकं मण्डलं किम्?
उत्तरम्—नवमं मण्डलम्।
81. प्रश्नः—किं मण्डलम् अर्वाचीनं प्रक्षिप्तं च मन्यन्ते वैदेशिकाः ऋग्वेदसंहितायाम्?
उत्तरम्—दशमं मण्डलम्।
82. प्रश्नः—ऋग्वैदिक-शाकलसंहितायां गायत्री-छन्देषु निबद्धानां मन्त्राणां संख्या का?
उत्तरम्— (2467)
83. प्रश्नः— ऋग्वैदिकमन्त्रेषु उष्णिक् मन्त्राणां संख्या का?
उत्तरम्—(341)
84. प्रश्नः—अनुष्टुप्-छन्दमया ऋग्वैदिकमन्त्राणां संख्या कति वर्तन्ते?
उत्तरम्—(855)।
85. प्रश्नः—ऋग्वेदे बृहतीछन्दोबद्धमन्त्राणां संख्या का विद्यते?
उत्तरम्—(181)
86. प्रश्नः—ऋग्वेदे पंक्तिसंज्ञकाः मन्त्राः कति सन्ति?
उत्तरम्—(312)
87. प्रश्नः—ऋग्वेदसंहितायां त्रिष्टुप्-संज्ञकाः कति मन्त्राः सन्ति?
उत्तरम्—(4253)
88. प्रश्नः—ऋग्वेदसंहितायां जगती-छन्दसमाश्रिताः कति मन्त्राः विद्यन्ते?
उत्तरम्— (1348)
89. प्रश्नः—अखिले ऋग्वैदिकवाङ्मये एकपदा ऋचः कति प्राप्यन्ते?
उत्तरम्—(06)
90. प्रश्नः—नित्यद्विपदा ऋचः कति विद्यन्ते शाकलसंहितायाम्?
उत्तरम्— (17) सप्तदश।
91. प्रश्नः— "चत्वारि शृंगा त्रयो अस्य पादा" इति मन्त्रस्य सन्दर्भसंख्या काऽस्ति?
उत्तरम्— ऋक्-4.58.3
92. प्रश्नः—पुरुरवा-उर्वशी-संवादसूक्तस्य ऋग्वैदिकक्रमः कः?
उत्तरम्—(10/95)
93. प्रश्नः—यम-यमी-संवादसूक्तस्य ऋग्वैदिकक्रमः कः?
उत्तरम्—(10/10) दशम।
94. प्रश्नः— "ओ चित् सखायं सख्या ववृत्याम्" इति मन्त्रः कस्मिन् सूक्ते समुपलभ्यते?
उत्तरम्—यम-यमी-संवादसूक्ते।

95. प्रश्नः— सरमा-पणि-संवादसूक्तस्य ऋग्वैदिकक्रमः कः?
उत्तरम्— (10/108)
96. प्रश्नः— विश्वामित्र-नदी-संवादसूक्तस्य ऋग्वैदिकक्रमः कः?
उत्तरम्— (3/33)
97. प्रश्नः—"प्रपर्वतानुशती उपस्थाद श्वे" इति मन्त्रः कस्मिन् सूक्ते सम्प्राप्यते?
उत्तरम्— विश्वामित्र-नदी-संवादसूक्ते।
98. प्रश्नः—ऋक्. 1/1/1 इति क्रमेण संकेतितः मन्त्रः कः?
उत्तरम्— अग्निमीळे पुरोहितम्।
99. प्रश्नः—पुरुषसूक्तस्य ऋग्वैदिकक्रमः कः?
उत्तरम्— (10/90)
100. प्रश्नः—तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे इति मन्त्रः कस्मिन् सूक्ते समुपलभ्यते?
उत्तरम्— पुरुषसूक्ते।
101. प्रश्नः— ऋक्. 10/121. इति क्रमेण संकेतितम् सूक्तं किमस्ति?
उत्तरम्— हिरण्यगर्भसूक्तम्।
102. प्रश्नः— श्रद्धासूक्तस्य ऋग्वैदिकक्रमः कः?
उत्तरम्— (10/151)
103. प्रश्नः— ऋग्वैदिकवाक्सूक्तस्य क्रमः कोऽस्ति?
उत्तरम्— (10/125)
104. प्रश्नः—"कस्मै देवाय हविषा विधेम" इति मन्त्रः कस्मिन् सूक्ते वर्तते?
उत्तरम्— हिरण्यगर्भे।
105. प्रश्नः—श्रद्धासूक्तस्य ऋषिका काऽस्ति?
उत्तरम्— श्रद्धाकामायनी।
106. प्रश्नः—"अग्निमीळे पुरोहितम्" इति मन्त्रेण कः प्रारभ्यते?
उत्तरम्— ऋग्वेदः।
107. प्रश्नः—"यज्जाग्रतो दूरमुदैति दैवं" इति मन्त्रेण सम्बद्धः सूक्तविशेषः कः?
उत्तरम्—शिवसंकल्पसूक्तम्।
108. प्रश्नः—"समानी व आकूतिः समाना हृदयानि वः" इति कस्य वेदस्य अन्तिमः मन्त्रः विद्यते?
उत्तरम्— ऋग्वेदस्य।
109. प्रश्नः— पुरुरवा-उर्वशी-संवादसूक्ते कति मन्त्राः सन्ति?
उत्तरम्— (18) अष्टादश।
110. प्रश्नः— विश्वामित्र-नदी-संवादसूक्ते कति मन्त्राः प्राप्यन्ते?
उत्तरम्— (13) त्रयोदश।
111. प्रश्नः— संवादसूक्तेषु कामातुरा नारी का?
उत्तरम्— यमी।

112. प्रश्नः—सरमा-पणि-संवादसूक्ते कति मन्त्राः समुपलभ्यन्ते?
उत्तरम्— (11) एकादश।
113. प्रश्नः—ऐतरेयब्राह्मणसम्बद्धः वेदविशेषः कः?
उत्तरम्—ऋग्वेदः।
114. प्रश्नः—कौषीतकिब्राह्मणस्य नामान्तरमस्ति—
उत्तरम्—शांखायनब्राह्मणम्।
115. प्रश्नः—वाष्कलोपनिषत्सम्बद्ध वेदविशेषः कः?
उत्तरम्— ऋग्वेदः।
116. प्रश्नः—ऋग्वेदेतर उपनिषद् अस्ति—
उत्तरम्— श्वेताश्वतरोपनिषत्।
117. प्रश्नः— ऋग्वेदस्य शिक्षा-वेदांगं किमस्ति?
उत्तरम्— पाणिनीयशिक्षा।
118. प्रश्नः—ऋक् प्रातिशाख्यस्य नामान्तरानि कानि सन्ति?
उत्तरम्— ऋक्लक्षणम्, परिषद्, पार्षदः।
119. प्रश्नः—ऋग्वेदस्य धर्मसूत्रं किमस्ति?
उत्तरम्— वशिष्ठधर्मसूत्रम्।
120. प्रश्नः—ऋग्वैदिक-देवतानाम् उपाधिः अस्ति—
उत्तरम्— असुरः।
121. प्रश्नः—"धृतव्रत"विशेषणेन विशिष्टः कः?
उत्तरम्— वरुणः।
122. प्रश्नः—वैदिकदेवतासु मार्गाध्यक्षः कः?
उत्तरम्— वरुणः।
123. प्रश्नः—"आधृणि" इति उपाधिना उपहितः देवविशेषः कः?
उत्तरम्— (पूषन्) वरुणः।
124. प्रश्नः— आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च" इति मन्त्रेण सम्बद्धः कः?
उत्तरम्—सवित्।
125. प्रश्नः—उरुक्रमः कः?
उत्तरम्— विष्णुः।
126. प्रश्नः— विष्णोः निवासस्थानं कुत्र अस्ति?
उत्तरम्— द्युलोके।
127. प्रश्नः—"उरुगाय" इत्युपाध्युपहितः कः?
उत्तरम्— विष्णुः।
128. प्रश्नः—"देवता"शब्दः कस्मिन् लिंगे प्रयुज्यते?
उत्तरम्—स्त्रीलिंगे।

129. प्रश्नः—"घृतलोमः" कस्याः देवतायाः विशेषणमस्ति?
उत्तरम्— अग्नेः।
130. प्रश्नः—"जातवेदाः" अनेन विशेषणेन विशिष्टः देवः कः?
उत्तरम्— अग्निः।
131. प्रश्नः—"ब्रह्मणस्पतिः" कः अस्ति?
उत्तरम्—बृहस्पतिः।
132. प्रश्नः—"पुरोहित" इत्यभिधानेन अभिहितः कः?
उत्तरम्— अग्निः।
133. प्रश्नः—ऋग्वेदस्य नवम-मण्डलस्य देवता कोऽस्ति?
उत्तरम्— सोमः।
134. प्रश्नः—"दमूनाः" कस्य विशेषणमस्ति?
उत्तरम्— अग्नेः।
135. प्रश्नः—"शतक्रतु"विशेषणेण विशिष्टः कः?
उत्तरम्— इन्द्रः।
136. प्रश्नः— ऋग्वेद-संहितायां स्वातन्त्र्येण रुद्रस्य सूक्तसंख्या का?
उत्तरम्—(03) त्रयः।
137. प्रश्नः—मरुतां पिता कः?
उत्तरम्— रुद्रः।
138. प्रश्नः— ऋग्वेदस्य प्रथममण्डलस्य प्रथमसूक्तस्य देवता काऽस्ति?
उत्तरम्— अग्निः।
139. प्रश्नः—"स नः पितेव सूनवेऽग्ने" इति मन्त्रांशेन सम्बद्धदेवता का?
उत्तरम्— अग्निः।
140. प्रश्नः—"अग्निमीळे पुरोहितम्" इति मन्त्रेण कः प्रारभ्यते?
उत्तरम्— ऋग्वेदः।
141. प्रश्नः—"उत त्वः पश्यन्न ददर्श वाच" अनेन मन्त्रेण सम्बद्धः ऋङ्मण्डलः कः?
उत्तरम्— (10) दश।
142. प्रश्नः—"दुहिता दिवः" का अस्ति?
उत्तरम्— उषस्।
143. प्रश्नः—"सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम्" इति मन्त्रेण सम्बद्धः वेदविशेषः कः?
उत्तरम्— ऋग्वेदः।
144. प्रश्नः—"सुदेवो अद्य प्रपतेदनावृत् परावतं परमां गन्तवा उ" कस्य उक्तिरियम्?
उत्तरम्— पुरुरवसः।
145. प्रश्नः—"न वै स्त्रैणानि सख्यानि सन्ति" इति मन्त्रेण सम्बद्धः सूक्तविशेषः कः?
उत्तरम्— पुरुरवा-उर्वशी।

146. प्रश्नः—विश्वामित्र-नदी-संवादसूक्ते प्राथमिकेषु मन्त्रेषु समुल्लिखितौ नद्यौ के?
उत्तरम्— विपाट्-शुतुद्री।

147. प्रश्नः— "एना वयं पयसा पिन्वमाना अनुयोनिं देवकृतं चरन्तीः" कस्या उक्तिरियम्?
उत्तरम्— नद्योः।

148. प्रश्नः— विश्वामित्र-नदी-संवादसूक्ते विश्वामित्रेण उक्तः तस्य पितुः नाम किम्?
उत्तरम्— कुशिकः।

149. प्रश्नः— "रमध्व मे वचसे सोम्याय ऋतावरीरुप मुहूर्तमेवैः" कस्या उक्तिरियम्?
उत्तरम्— विश्वामित्रस्य।

150. प्रश्नः—"एतद्वचो जरितर्मापि मृष्ठा, आ यत्ते घोपानुत्तरा युगानि" अत्र "ते" पदेन क उद्दिष्टः?
उत्तरम्— विश्वामित्रः।

151. प्रश्नः— "यदङ्गत्वा भरता संतरेयुः गव्यन्ग्राम इषित इन्द्रजूतः" इत्यत्र "त्वा" इति पदेन कः उद्दिष्टः?
उत्तरम्— नद्यौ।

152. प्रश्नः— ऋक्. 3/33/9 इति मन्त्रे नद्योः सम्बोधनम् अस्ति?
उत्तरम्— स्वसारः।

153. प्रश्नः— "गर्भे नु नौ जनिता दम्पती कर्देवस्त्वष्टा सपिता विश्वरूपः" कस्या उक्तिरियम्?
उत्तरम्— यम्याः।

154. प्रश्नः— "उद्व ऊर्मिः शम्या हन्त्वायो योक्त्राणि मुञ्चत्" अस्य वक्ता कः?
उत्तरम्— विश्वामित्रः।

155. प्रश्नः— "किं भ्राता सद्यनाथं भवति, किमु स्वसा यन्निर्ऋतिः निगच्छात्" कस्या उक्तिरियम्?
उत्तरम्— यम्याः।

156. प्रश्नः—यमस्य पिता कः?
उत्तरम्— विवस्वान्।

157. प्रश्नः—"इति त्वा देवा इम आहुरैल यथे मेतद्भवसि मृत्युबन्धुः" इत्यत्र ऐलः कः?
उत्तरम्— पुरुरवा।

158. प्रश्नः— "पुरुरवा-उर्वशी-संवादसूक्ते" उर्वशी का अस्ति?
उत्तरम्— अप्सरा।

159. प्रश्नः— आदर्शप्रेमी इति रूपेण कः वर्णितः अस्ति?
उत्तरम्— पुरुरवा।

160. प्रश्नः— उर्वश्याः उक्तिषु स्त्रीणां हृदयः कीदृग्वर्णितः?
उत्तरम्— सालावृकदृशः।

161. प्रश्नः— सरमा-पाणि-संवादसूक्ते कति मन्त्राः सन्ति?
उत्तरम्— (11) एकादश।

162. प्रश्नः— "सरमा" का अस्ति?
उत्तरम्— देवशुनी।

163. प्रश्नः— "पणयः" कस्य अनुचराः आसन्?
उत्तरम्—वलस्य।
164. प्रश्नः—पणिभिः अभिहितेषु मन्त्रेषु ऋषिः कः?
उत्तरम्— पणिः।
165. प्रश्नः— "स्वसारं त्वा कृणवे मा पुनर्गा, अप ते गवां सुभगे भजाम" मन्त्रेऽस्मिन् "सुभगे" इति सम्बोधनं कस्या कृते अस्ति?
उत्तरम्— सरमायै।
166. प्रश्नः— "घृतस्य स्तोकं सकृदहन आश्ना" कस्या उक्तिरियम्?
उत्तरम्— उर्वश्याः।
167. प्रश्नः— ऋक्प्रातिशाख्ये कति पटलानि सन्ति?
उत्तरम्—(18) अष्टादश।
168. प्रश्नः— ऋक्प्रातिशाख्यस्य प्रथमपटलस्य विषयवस्तुः कः?
उत्तरम्— संज्ञा।
169. प्रश्नः— वाजसनेयि-प्रातिशाख्यस्य प्रणेता कः?
उत्तरम्— कात्यायनः।
170. प्रश्नः— वाजसनेयि-प्रातिशाख्ये कति अध्यायाः सन्ति?
उत्तरम्—(08) अष्टौ।
171. प्रश्नः— श्रौत्रसूत्राणां प्रतिपाद्यविषयः कः?
उत्तरम्— वैदिकयागः।
172. प्रश्नः— वंशीयमण्डलानि कुत्र उपलभ्यन्ते?
उत्तरम्— ऋग्वेदे।
173. प्रश्नः— ऋग्वेदस्य पदपाठकर्ता कः आसीत्?
उत्तरम्— शाकल्यः।
174. प्रश्नः— "मां नो नि कः पुरुषत्रा नमस्ते" कुत्र वर्तते?
उत्तरम्— विश्वामित्रनदीसंवादे।
175. प्रश्नः— ऋग्वेदस्य नवम मण्डलस्य देवता कः?
उत्तरम्— पवमानसोमः।
176. प्रश्नः— शुनःशेपोपाख्यानं कुत्र वर्तते?
उत्तरम्— ऐतरेयब्राह्मणे।
177. प्रश्नः— ऋग्वेदस्य प्रथममण्डलस्य ऋषिः कः?
उत्तरम्— मधुच्छन्दा।
178. प्रश्नः— बालगंगाधर-तिलकानुसारं ऋग्वेदस्य कालः खीस्तपूर्वः—
उत्तरम्— (2500)
179. प्रश्नः— ऋग्वेदस्य ब्राह्मणग्रन्थाः के सन्ति?
उत्तरम्— (2 द्वौ) 1. ऐतरेयः, 2. शाङ्खायनः।

180. प्रश्नः—ऐतरेयब्राह्मणः कति अध्यायेषु, कति पञ्चिकासु, कति कण्डिकाषु विभक्तोऽस्ति?
उत्तरम्— 40 चत्वारिंशत् अध्यायेषु, 8 अष्ट पञ्चिकासु, 285 कण्डिकासु च।

181. प्रश्नः— ऐतरेये मुख्यरूपेण किं विवेचितमस्ति?
उत्तरम्—सोमयागस्य हौत्रकर्मम्।

182. प्रश्नः— शाङ्खायन-ब्राह्मणस्य अपरं नाम किमस्ति?
उत्तरम्— कौषितकिब्राह्मणम्।

183. प्रश्नः— कौषितकिब्राह्मणः कति अध्यायेषु कति कण्डिकासु च विभजितः अस्ति?
उत्तरम्— 30 अध्यायेषु, 226 कण्डिकासु।

184. प्रश्नः— ऋग्वेदेन सम्बद्धः आरण्यकः कोऽस्ति?
उत्तरम्—ऐतरेय-शाङ्खायनश्च।

185. प्रश्नः— शाङ्खायन-आरण्यके कति अध्यायाः सन्ति?
उत्तरम्— 30 त्रिंशतिः अध्यायाः।

186. प्रश्नः—ऋग्वेदे मण्डलानां संख्या का?
उत्तरम्— 10 दश।

187. प्रश्नः— ऋग्वेदस्य उपवेदः कः?
उत्तरम्—आयुर्वेदः।

188. प्रश्नः— ऋग्वेदस्य ऋषिः कः?
उत्तरम्— अग्निदेवः।

189. प्रश्नः— सर्वैः प्राचीनतमः वेदः कोऽस्ति?
उत्तरम्— ऋग्वेदः।

190. प्रश्नः— ऋग्वेदस्य पदपाठः सर्वप्रथमः केन क्रियते?
उत्तरम्— शाकल्य ऋषिणा।

191. प्रश्नः— ब्रह्मं नेति नेति कस्मिन् उपनिषदि कथ्यते?
उत्तरम्— बृहदारण्यक-उपनिषदि।

192. प्रश्नः— ऋग्वेदस्य ऋषिः कोऽस्ति?
उत्तरम्—अग्निः।

193. प्रश्नः— नासदीयसूक्तः कस्य वेदस्य अस्ति?
उत्तरम्— ऋग्वेदस्य।

194. प्रश्नः— महीधरः वेदस्य कोऽस्ति?
उत्तरम्—भाष्यकारः।

195. प्रश्नः— वाजसनेयिसंहितायां कियन्तोऽध्यायाः?
उत्तरम्— चत्वारिंशत् (40)

196. प्रश्नः— ऋग्वेदस्यारण्यके स्तः?
उत्तरम्— 1. ऐतरेयारण्यकं शौखायनं वा, 2. कौषीतकी-आरण्यकञ्च।

197. प्रश्नः—"ऐतरेयोपनिषद्" "कौषीतक्युपनिषच्च" इति द्वयं केन वेदेन सम्बद्धं विद्यते?
उत्तरम्—ऋग्वेदेन।
198. प्रश्नः— ऋग्वेदस्य कियत्यो मुख्याः शाखाः सन्ति?
उत्तरम्— 5 पञ्च।
199. प्रश्नः— "ऋक् प्रातिशाख्यम्" केन वेदेन सम्बद्धम्?
उत्तरम्— ऋग्वेदेन।
200. प्रश्नः— ऋग्वेदस्य मन्त्राणां का संज्ञा?
उत्तरम्— ऋचा।
201. प्रश्नः— "नासत्या" इदं कस्य विशेषणं विद्यते?
उत्तरम्— अश्विनौ।
202. प्रश्नः— सम्पूर्ण-ऋग्वेदे गायत्री-छन्दे निबद्धायाः ऋचायाः का संख्या?
उत्तरम्— 2449 संख्या।
203. प्रश्नः— ऋग्वेदस्य अपरं नाम किम्?
उत्तरम्— दशत्रयी।
204. प्रश्नः— ऋग्वेदे रुद्रेण सम्बद्धानां स्वतन्त्र-सूक्तानां का संख्या?
उत्तरम्— (3) तिस्रः।
205. प्रश्नः— "समानो मन्त्रः समितिः समानी" इति मन्त्रेण सम्बद्ध-मण्डलः कः?
उत्तरम्— (10) दशमः।
206. प्रश्नः— "यम-यमी-संवादसूक्तम्" ऋग्वेदस्य केन मण्डलेन सम्बद्धः?
उत्तरम्— (10) दशमेन।
207. प्रश्नः— यम-यमी-संवादसूक्तेः कः छन्दः?
उत्तरम्— त्रिष्टुप्-छन्दः।
208. प्रश्नः—"नि ते नंसै पीप्यानेव योषा मर्यायेव कन्या शश्वचै ते" अत्र "योषा" एवं "कन्या" इत्यस्य सादृश्यं केन क्रियते?
उत्तरम्— नद्या।
209. प्रश्नः— "बृहन् मित्रस्य वरुणस्य धाम कदु ब्रव आह्नो वीच्या नृन्" कस्येयमुक्तिः?
उत्तरम्— यमस्य।
210. प्रश्नः—"किं भ्राता सद्यनाथं भवाति किमु स्वसा यन्निर्ऋतिनिगच्छात्" इयं कस्याः उक्तिः?
उत्तरम्— यमी इत्यस्य।
211. प्रश्नः— संवाद-सूक्तेषु कामातुरा नारी का?
उत्तरम्— यमी।
212. प्रश्नः— "हये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहे नु" अस्मिन् वाक्ये "जाये" इति सम्बोधनं कस्यै उद्दिष्टोऽस्ति?
उत्तरम्— उर्वश्यै।

213. प्रश्नः—"पुनरस्तं परेहि दुरापना वात इवाहमस्मि" अत्र"अहम्" पदेन का उद्दिष्टाऽस्ति?
उत्तरम्— उर्वशी।
214. प्रश्नः—"ता अञ्जयोऽरुणयो न सस्रुःश्रिये गावो न धेनवोऽनवन्त". इयं कस्याः उक्तिः?
उत्तरम्— उर्वश्याः।
215. प्रश्नः—"पुरुरवो मा पृथा मा प्रपप्तो मा त्वा वृकासो अशिवास उक्षन्" अस्य मन्त्रस्य को ऋषिः?
उत्तरम्— उर्वशी।
216. प्रश्नः— "पणियः" कस्य गाः अपहृतः?
उत्तरम्— वृहस्पतेः।
217. प्रश्नः— "कास्मेहितिः का परितक्म्यासीत् वयं रसाया अतरःपयांसि" इयमुक्तिः कस्याः?
उत्तरम्— पणि-इत्यस्याः।
218. प्रश्नः—आश्वलायन-श्रौत्रेण सम्बद्धः वेदः कः?
उत्तरम्— ऋग्वेदः।
219. प्रश्नः—"पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्" अस्य मन्त्रस्य किं सूक्तम्?
उत्तरम्— पुरुषसूक्तम्।
220. प्रश्नः— "अपांनपात्" विशेषणेन युक्तः का देवता?
उत्तरम्— अग्निः।

## 3. यजुर्वेदः- The second of the four Vedas.

### (थ) यजुर्वेदस्य वस्तुनिष्ठप्रश्नोत्तराणि

1. प्रश्नः—यजुर्वेदस्य ऋत्विक् कः?
उत्तरम्— अध्वर्युः।
2. प्रश्नः—ययजुर्वेदस्य(101) शाखायाः उल्लेखकर्ता-भाष्यकारः कः?
उत्तरम्—चरक-महोदयः।
3. प्रश्नः— पंचविंशब्राह्मणस्य नामान्तरमस्ति—
उत्तरम्— प्रौढब्राह्मणम्।
4. प्रश्नः— त्रिषु भिन्नं ब्राह्मणं किम्?
उत्तरम्— संहितोपनिषद्ब्राह्मणम्।
5. प्रश्नः— जैमिनीयब्राह्मणस्य नामान्तरमस्ति—
उत्तरम्— तवल्कारब्राह्मणम्।
6. प्रश्नः—यजुर्वेदस्य कियत्यः शाखाः श्रूयन्ते?
उत्तरम्— (85)
7. प्रश्नः— यजुर्वेदस्य मुख्यदेवता—
उत्तरम्— वायुः।

8. प्रश्नः—यजुर्वेदस्य मुख्याचार्यः कः?
उत्तरम्— वैशम्पायनः।
9. प्रश्नः— कस्य वेदस्य शुल्बसूत्राणि समुपलभ्यन्ते?
उत्तरम्— यजुर्वेदस्य।
10. प्रश्नः—यजुर्वेदस्य वाजसनेयिशाखायां कति मन्त्राः प्राप्यन्ते?
उत्तरम्— (1975)
11. प्रश्नः—षड्मन्त्रात्मकं शिवसंकल्पसूक्तं वाजसनेयिसंहितायाः कस्मिन् अध्याये प्राप्यते?
उत्तरम्— चतुस्त्रिंशत् (34)।
12. प्रश्नः— "ईशावास्योपनिषद्" वाजसनेयिसंहितायाः कस्मिन् अध्याये विद्यते?
उत्तरम्— (40) चत्वारिंशत्।
13. प्रश्नः—यजुर्वेदस्य वर्ण्य-विषयः कोऽस्ति?
उत्तरम्— यज्ञस्य विधानम्।
14. प्रश्नः—यजुर्वेदस्य प्रमुखः प्रतिपाद्यविषयः कोऽस्ति?
उत्तरम्— यागः।
15. प्रश्नः— शुक्ल-कृष्णभेदात्मकः वेदविशेषः कः?
उत्तरम्— यजुर्वेदः।
16. प्रश्नः— कृष्णद्वैपायनाद् यजुर्वेदाध्यायी शिष्यविशेषः कः?
उत्तरम्— वैशम्पायनः।
17. प्रश्नः— ब्रह्मसम्प्रदाय-आदित्यसम्प्रदाययोः सम्बद्धः वेदविशेषः कः?
उत्तरम्— यजुर्वेदः।
18. प्रश्नः— मैत्रायणी-संहितायां कति मन्त्राः विद्यन्ते?
उत्तरम्— (2144)
19. प्रश्नः—यजुर्वेदीया शिक्षा का?
उत्तरम्— याज्ञवल्क्यशिक्षा, वाशिष्ठीशिक्षा, माण्डव्यशिक्षा।
20. प्रश्नः— कात्यायन-श्रौतसूत्रस्य लेखकः कः?
उत्तरम्— कात्यायनः।
21. प्रश्नः— यजुर्वेदस्य कति गृह्यसूत्राणि?
उत्तरम्— 9 नव।
22. प्रश्नः— "आपस्तम्ब-गृह्यसूत्रम्" केन वेदेन सम्बद्धम्?
उत्तरम्— कृष्णयजुर्वेदेन।
23. प्रश्नः— "आपस्तम्ब-धर्मसूत्रम्" कस्य वेदस्य कया शाखया सम्बन्धितं जायते?
उत्तरम्— कृष्ण-यजुर्वेदस्य तैत्तिरीय-शाखया।
24. प्रश्नः— यजुर्वेदस्य कठशाखया सम्बद्धं किं धर्मसूत्रम्?
उत्तरम्— विष्णुधर्मसूत्रम्।

25. प्रश्नः— "वाजसनेयि-प्रातिशाख्यम्" कया संहितया सम्बद्धम्?
उत्तरम्— वाजसनेयि-संहितया।

26. प्रश्नः— "पुरुरवा-उर्वशी" आख्यानेन सम्बद्धः ब्राह्मणग्रन्थः कः?
उत्तरम्— शतपथब्राह्मणः।

27. प्रश्नः—यजुर्वेदस्य प्रमुखविषयः कः?
उत्तरम्— कर्म।

28. प्रश्नः—यजुर्वेदीयः शिक्षाग्रन्थः कः?
उत्तरम्— भारद्वाजशिक्षा।

29. प्रश्नः— "इषे त्वोर्जे त्वा .... " इति कस्य वेदस्योक्तिः?
उत्तरम्— यजुर्वेदस्य।

30. प्रश्नः— स्वामीदयानन्दः कस्य वेदस्य भाष्यकर्त्ता अस्ति?
उत्तरम्— यजुर्वेदस्य।

31. प्रश्नः— देवेषु भूयिष्ठैः सूक्तैः स्तुतः कः?
उत्तरम्— इन्द्रः।

32. प्रश्नः— यजुर्वेदीयाः श्रौतसूत्राणि कानि?
उत्तरम्— कठश्रौतसूतम्, भारद्वाजश्रौतसूत्रम्, वाधूलश्रौतसूत्रम्।

33. प्रश्नः— यजुर्वेदीयः श्रौतसूत्रग्रन्थाः के?
उत्तरम्— वाराहश्रौतसूत्रम्, मानवश्रौतसूत्रम्, मैत्रीश्रौतसूत्रम्।

34. प्रश्नः— कौषीतकिश्रौतसूत्रस्य नामान्तरमस्ति?
उत्तरम्— शांखायनश्रौतसूत्रम्।

35. प्रश्नः— शांखायनश्रौतसूत्रस्य नामान्तरमस्ति?
उत्तरम्— कौषीतकिश्रौतसूत्रम्।

36. प्रश्नः— वेदपाठस्य विकृतयः कति सन्ति?
उत्तरम्— अष्टौ।

37. प्रश्नः— को वेदः गद्यात्मकः वर्तते?
उत्तरम्— यजुर्वेदः।

38. प्रश्नः—यजुर्वेदे प्रयुक्तः कः शब्दः संसारे त्यागस्य प्रतीको वर्तते?
उत्तरम्— स्वाहा।

39. प्रश्नः— शुक्ल-कृष्णयोः भेदौ कस्मिन् आधारोपरि स्तः?
उत्तरम्— कृष्णे मन्त्रब्राह्मणाश्च उभयोरेव स्तः, शुक्ले शुद्धरूपेण मन्त्रोऽस्ति।

40. प्रश्नः— कृष्ण-यजुर्वेदस्य गृह्यसूत्रं किम्?
उत्तरम्—1. आपस्तम्बः, 2. हिरण्यकेशी, 3. बोधायनः, 4. मानव, 5. काठक, 6. वैखानसः।

41. प्रश्नः— वैदिक राष्ट्रगीतं "आब्रह्मन् ब्राह्मणो ....." कस्मिन् वेदे अस्ति?
उत्तरम्— यजुर्वेदे।

42. प्रश्नः— मनस्तत्त्वस्य विविच्यमानं प्रसिद्ध-यजुर्वेदीयसूक्तं किम्?
उत्तरम्— शिवसङ्कल्पसूक्तम्।

43. प्रश्नः— कर्मकाण्डः मुख्यतः कस्मिन् वेदोपरि आधारितोऽस्ति?
उत्तरम्— यजुर्वेदोपरि।

44. प्रश्नः— माध्यन्दिन-शाखायाः प्रथम-द्वितीय-अध्याययोः कस्य विवेचनमस्ति?
उत्तरम्— सोमयज्ञपितृयज्ञयोः।

45. प्रश्नः— माध्यन्दिन-शाखायाः प्रथमपञ्चत्रिंशत् अध्यायेषु प्रमुखप्रतिपाद्यविषयः किमस्ति?
उत्तरम्— श्रौतकर्मकाण्डः।

46. प्रश्नः— माध्यन्दिन-शाखायां अग्निहोत्रस्य वर्णनं कस्मिन् अध्याये वर्तते?
उत्तरम्— तृतीयाध्याये।

47. प्रश्नः— माध्यन्दिन-शाखायां चतुर्थतः अष्टाध्यायपर्यन्तं कस्य विवेचनमस्ति?
उत्तरम्— सोमयागस्य (विशेषतः अग्निष्टोमयाग।)

48. प्रश्नः— माध्यन्दिन-शाखायां नवम-दशमाध्याययोः विषयः किमस्ति?
उत्तरम्— राजसूय एवं वाजपेय-यागौ।

49. प्रश्नः— माध्यन्दिन-शाखायां अग्निचयनस्य वर्णनं कस्मिन् अध्याये विद्यते?
उत्तरम्— (11-18) एकादशतः अष्टादशाध्यायपर्यन्तम्।

50. प्रश्नः— माध्यन्दिन-शाखायां प्रसिद्धरुद्रसूक्तस्य वर्णनं कस्मिन् अध्याये वर्तते?
उत्तरम्— (16) षोडशेऽध्याये।

51. प्रश्नः— माध्यन्दिन-शाखायां वसोर्धारासम्बद्धाः मन्त्राः कस्मिन् अध्याये विद्यन्ते?
उत्तरम्— (18) अष्टादशाध्याये।

52. प्रश्नः— माध्यन्दिन-शाखायां प्रसिद्ध "अश्वमेध"यज्ञस्य वर्णनं कुत्र वर्तते?
उत्तरम्— (22-25) द्वाविंशतितःपञ्चविंशति अध्यायेषु।

53. प्रश्नः— माध्यन्दिन-शाखायां खिलमन्त्राणां सङ्ग्रहः कस्मिन् अध्याये वर्तते?
उत्तरम्— (26-29) षड्विंशतितः नवविंशत्यध्यायेषु।

54. प्रश्नः— "पुरुषमेधयागस्य" वर्णनं कस्मिन् अध्याये वर्तते?
उत्तरम्— (30) त्रिंशत् अध्याये।

55. प्रश्नः— "पुरुष-सूक्त" इत्यस्य वर्णनं कस्मिन् अध्याये वर्तते?
उत्तरम्— (31) एकत्रिंशति-अध्याये।

56. प्रश्नः— सर्वमेधमंत्रः हिरण्यगर्भसूक्तञ्च कस्मिन् अध्याये सङ्कलितोऽस्ति?
उत्तरम्— 32-33 अध्याये।

57. प्रश्नः— कस्मिन् अध्याये "पितृमेधः" वर्णितोऽस्तिं?
उत्तरम्— (35) पञ्चत्रिंशत् अध्याये।

58. प्रश्नः— शिवसङ्कल्पोपनिषत् कस्मिन् अध्याये विद्यते?
उत्तरम्— (34) चतुस्त्रिंशत् अध्याये।

59. प्रश्नः— प्रवर्ग्यविषयक-मन्त्राः कस्मिन् अध्याये सङ्कलिताः सन्ति?
उत्तरम्— 36-39 अध्याये।
60. प्रश्नः— ईशावास्योपनिषद् कस्मिन् अध्याये वर्णितमस्ति?
उत्तरम्— (40) चत्वरिंशत् अध्याये।
61. प्रश्नः— शवदाहस्य मन्त्रः यजुर्वेदस्य कस्मिन् अध्याये विद्यते?
उत्तरम्— (35) पञ्चत्रिंशत् अध्याये।
62. प्रश्नः—यजुर्वेदस्य ऋषिः कोऽस्ति?
उत्तरम्— वायुदेवः।
63. प्रश्नः— काठकसंहितायां कानि कानि कथानकानि सन्ति?
उत्तरम्—पञ्च, 1. इठिमिका, 2. मध्यमिका, 3. ओरिमिका, 4. याज्यानुवाक्या, 5. अश्वमेधाद्यनुवचनम्।
64. प्रश्नः— कः वेदः अध्वर्युवेदः ?
उत्तरम्— यजुर्वेदः।
65. प्रश्नः— शतपथे कति अध्यायाः सन्ति?
उत्तरम्— 100 अध्यायाः।
66. प्रश्नः— काण्वशास्त्रीय-शतपथे कति काण्डानि, कति अध्यायाः, कति ब्राह्मणानि, कियत्यः कण्डिकाश्च सन्ति?
उत्तरम्— 104 अध्यायाः, 17 काण्डानि, 435 ब्राह्मणाः, 6806 कण्डिकाश्च।
67. प्रश्नः— शतपथस्य शाब्दिकोऽर्थः किमस्ति?
उत्तरम्— शतं पन्थानो यस्य तच्छतपथम्।
68. प्रश्नः— माध्यन्दिनीय-शतपथे कति प्रपाठकाः सन्ति?
उत्तरम्— 68 प्रपाठकाः।
69. प्रश्नः— काण्वशास्त्रीय-शतपथे कति प्रपाठकाः सन्ति?
उत्तरम्— प्रपाठकाभावः।
70. प्रश्नः— यजुर्वेदस्य उपवेदः कोऽस्ति?
उत्तरम्— धनुर्वेदः।
71. प्रश्नः—यजुर्वेदस्य कौ द्वौ भेदौ?
उत्तरम्—1. शुक्लयजुर्वेदः, 2. कृष्णयजुर्वेदः (शुक्लकृष्णयजुर्वेदौ)।
73. प्रश्नः— बृहदारण्यकस्य प्रवक्ता कोऽस्ति?
उत्तरम्— याज्ञवल्क्यः।
74. प्रश्नः— ईशावास्योपनिषत् कस्याः संहितायाः अन्तिमाध्यायः वर्तते?
उत्तरम्— यजुर्वेद-संहितायाः।
75. प्रश्नः— "तन्मे मनः शिवसंकल्पमस्तु" अस्य मन्त्रांशस्य सूक्तं किम्?
उत्तरम्— शिवसंकल्पसूक्तम्।

76. प्रश्नः— वाजसनेयि-संहितायाः सम्बन्धः केन वेदेन विद्यते?
उत्तरम्— यजुर्वेदेन।
77. प्रश्नः— पुरुषमेध-नामक-यज्ञस्य वर्णनं कस्मिन् वेदे वर्तते?
उत्तरम्— यजुर्वेदे।

## (ख) शुक्लयजुर्वेदः

76. प्रश्नः— माध्यन्दिन-शाखा-सम्बद्धः वेदविशेषः कः?
उत्तरम्—शुक्लयजुर्वेदः।
77. प्रश्नः— शुक्लयजुर्वेदस्य काण्वशाखायां कति मन्त्राः विद्यन्ते?
उत्तरम्— (2086)
78. प्रश्नः— "ईशोपनिषद्" कस्मिन् वेदे अस्ति?
उत्तरम्— शुक्लयजुर्वेदे।
79. प्रश्नः— शुक्ल-यजुर्वेदेन सम्बद्धं श्रौतसूत्रं किम्?
उत्तरम्— कात्यायन-श्रौतसूत्रम्।
80. प्रश्नः— शुक्ल-यजुर्वेदस्य किं गृह्यसूत्रम्?
उत्तरम्— पारस्करगृह्यसूत्रम्।
81. प्रश्नः— शुक्ल-यजुर्वेदेन सम्बद्धं किं शुल्बशास्त्रम्?
उत्तरम्— कात्यायन-शुल्बशास्त्रम्।
82. प्रश्नः— शिवसंकल्पसूक्तेन सम्बद्धः वेदः कः?
उत्तरम्— शुक्लयजुर्वेदः।
83. प्रश्नः— शुक्लयजुर्वेदस्य आरण्यकग्रन्थः कः?
उत्तरम्— बृहदारण्यकम्।
84. प्रश्नः— कस्य वेदस्य खण्डविशेषः ईशावास्योपनिषदस्ति?
उत्तरम्— शुक्लयजुर्वेदस्य।
85. प्रश्नः— शुक्लयजुर्वेदस्य ब्राह्मणं किमस्ति?
उत्तरम्— शतपथब्राह्मणम्।
86. प्रश्नः— शुक्लयजुर्वेदस्य कात्यायनश्रौत्रसूत्रस्य नामान्तरं किमस्ति?
उत्तरम्— पारस्करश्रौत्रसूत्रम्।
87. प्रश्नः— शुक्लयजुर्वेदे कति अध्यायाः, कति मन्त्राश्च सन्ति?
उत्तरम्— 40 अध्यायाः, 4061 मन्त्राः।
88. प्रश्नः— तेन त्यक्तेन भुञ्जीथा इति कस्य वेदस्योक्तिः?
उत्तरम्— शुक्लयजुर्वेदस्य।
89. प्रश्नः— शुक्लयजुर्वेदस्य कियत्यः शाखाः वर्तन्ते?
उत्तरम्— 15 पञ्चदश शाखाः।
90. प्रश्नः— शुक्लयजुर्वेदस्य गृह्यसूत्रं किम्?
उत्तरम्— पारस्करः।

91. प्रश्नः—शुक्लयजुर्वेदे "पिनाकधनुष" इति सम्बद्धा देवता का?
उत्तरम्— रुद्रः।
92. प्रश्नः— उव्वटोऽस्ति कस्य भाष्यकारः?
उत्तरम्— शुक्लयजुर्वेदस्य।
93. प्रश्नः— शतपथब्राह्मणं कस्य वेदस्य ब्राह्मणम्?
उत्तरम्— शुक्लयजुर्वेदस्य।
94. प्रश्नः— शुक्लयजुर्वेदस्य शुल्बसूत्रं किमस्ति?
उत्तरम्— कात्यायनशुल्बसूत्रम्।
95. प्रश्नः— शुक्लयजुर्वेदस्य धर्मसूत्रम् अस्ति?
उत्तरम्— हारीतधर्मसूत्रम्।
96. प्रश्नः— शंखधर्मसूत्रेण सम्बद्धः वेदविशेषः कः?
उत्तरम्— शुक्लयजुर्वेदः।
97. प्रश्नः— शुक्लयजुर्वेदस्य कियत्यः शाखाः सन्ति?
उत्तरम्— पञ्चदश शाखाः।
98. प्रश्नः— वाजसनेयी-शाखायाः अपरं नाम किमस्ति?
उत्तरम्— माध्यन्दिनी-शाखा।
99. प्रश्नः— शुक्लयजुर्वेदीय उपनिषदः कति सन्ति?
उत्तरम्— (19 एकोनविंशतिः।)
100. प्रश्नः— बृहदारण्यकं केन वेदेन सम्बन्धितमस्ति?
उत्तरम्— शुक्लयजुर्वेदेन।
101. प्रश्नः— शुक्लयजुर्वेदे कति अनुवाकाः विद्यन्ते?
उत्तरम्— 303 अनुवाकाः।
102. प्रश्नः— शुक्लयजुर्वेदानुसारं "पिनाक" कस्य धनुषः?
उत्तरम्— रुद्रस्य।
103. प्रश्नः— शुक्लयजुर्वेदस्य वाजसनेयिशाखायां कति अध्यायाः विद्यन्ते?
उत्तरम्— चत्वारिंशत् (40)
104. प्रश्नः— शुक्लयजुर्वेदस्य उपलब्धाः शाखाः काः?
उत्तरम्— वाजसनेयी एवं काण्व शाखाः।

### (ग) कृष्णयजुर्वेदः

105. प्रश्नः— कृष्णयजुर्वेदस्य कियत्यः शाखाः समुपलब्धाः सन्ति?
उत्तरम्— चतस्रः, 1. तैत्तिरीयः, 2. मैत्रायणी, 3. काठकः, 4. कठ-कपिष्ठलः।
106. प्रश्नः— कृष्णयजुर्वेदस्य कियत्यः शाखाः सन्ति?
उत्तरम्— षडशीतिशाखाः।
107. प्रश्नः— कृष्णयजुर्वेदीया काठकसंहिता कति स्थानकेषु विभेदिता अस्ति?
उत्तरम्— (5) पञ्च।

108. प्रश्नः— कृष्णयजुर्वेदस्य कति उपनिषदः सन्ति?
उत्तरम्— (32 द्वात्रिंशत्।)
109. प्रश्नः— कृष्णयजुर्वेदस्य आरण्यकं किमस्ति?
उत्तरम्— तैत्तिरीय-आरण्यकम्।
110. प्रश्नः— कृष्णयजुर्वेदेन सम्बन्धितं ब्राह्मणं किम् ?
उत्तरम्— तैत्तिरीयं ब्राह्मणम्।
111. प्रश्नः— कृष्णयजुर्वेदस्य कस्य अन्यब्राह्मणस्य गवेषकः उल्लेखयति?
उत्तरम्— काठक ब्राह्मणस्य।
112. प्रश्नः— कृष्णयजुर्वेदस्य कियत्यः शाखाः वर्तन्ते?
उत्तरम्— 86 षडशीति।
113. प्रश्नः— कृष्णयजुर्वेदे कति मन्त्राः सन्ति?
उत्तरम्—18, 000 मन्त्राः।
114. प्रश्नः— कृष्णयजुर्वेदस्य ब्राह्मणमस्ति?
उत्तरम्— मैत्रायणीब्राह्मणम्।
115. प्रश्नः— कृष्णयजुर्वेदस्य कियत्यः शाखाः समुपलभ्यन्ते?
उत्तरम्— (04) चतुरः।
116. प्रश्नः— तैत्तिरीयशाखया सम्बद्धः वेदविशेषः कः?
उत्तरम्— कृष्णयजुर्वेदः।
117. प्रश्नः— कृष्णयजुर्वेदस्य शाखाः काः सन्ति?
उत्तरम्— तैत्तिरीय-मैत्रायंणी-काठक-कठ-कपिष्ठलशाखाः।
118. प्रश्नः— कृष्णयजुर्वेदस्य कति शुल्बसूत्राणि?
उत्तरम्— (6) षट्।
119. प्रश्नः— "बौधायनशुल्बसूत्रम्" केन वेदेन सम्बद्धं वर्तते?
उत्तरम्— कृष्णयजुर्वेदेन।
120. प्रश्नः— "आपस्तम्बशुल्बसूत्रम्" कस्य वेदस्य विद्यते?
उत्तरम्— कृष्णयजुर्वेदस्य।
121. प्रश्नः— "कपिष्ठलशाखा" केन वेदेन सम्बद्धा?
उत्तरम्— कृष्णयजुर्वेदेन।
122. प्रश्नः— "कठोपनिषद्" इत्यनेन सम्बद्धो वेदः कः?
उत्तरम्— कृष्णयजुर्वेदः।
123. प्रश्नः— कृष्णयजुर्वेदस्य कियत्यः उपनिषदः सन्ति?
उत्तरम्— 1. तैत्तिरीयोपनिषद्, 2. कठोपनिषद्, 3. श्वेताश्वतरोपनिषद्, 4. मैत्रायण्युपनिषद्, 5. महानारायणोपनिषच्चेति।
124. प्रश्नः— कृष्णयजुर्वेदस्य किं प्रातिशाख्यम्?
उत्तरम्— तैत्तिरीयप्रातिशाख्यम्।

125. प्रश्नः— कृष्णयजुर्वेदीयाः श्रौतसूत्रग्रन्थाः के?
उत्तरम्— बौधायनश्रौतसूत्रम्, आपस्तम्बश्रौतसूत्रम्, सत्याषाढ़श्रौतसूत्रम्।
126. प्रश्नः— वैखानसश्रौतसूत्रेण सम्बद्धः वेदविशेष कः?
उत्तरम्— कृष्णयजुर्वेदः।
127. प्रश्नः— कृष्णयजुर्वेदस्य उपनिषद् अस्ति?
उत्तरम्— श्वेताश्वतरोपनिषद्।
128. प्रश्नः— कृष्णयजुर्वेदस्य शुल्बसूत्राणि कानि?
उत्तरम्— मानवशुल्बसूत्रम्, आपस्तम्बशुल्बसूत्रम्, बौधायनशुल्बसूत्रम्।
129. प्रश्नः— मैत्रायणीशुल्बसूत्रेण सम्बद्धः वेदविशेषः कः?
उत्तरम्— कृष्णयजुर्वेदः।
130. प्रश्नः— वाराहशुल्बसूत्रेण सम्बद्धः वेदविशेषः कः?
उत्तरम्— कृष्णयजुर्वेदः।
131. प्रश्नः— कृष्णयजुर्वेदस्य शुल्बसूत्रं किम्?
उत्तरम्— वाधूलशुल्बसूत्रम्।
132. प्रश्नः— कृष्णयजुर्वेदस्य धर्मसूत्राणि कानि?
उत्तरम्— विष्णुधर्मसूत्रम्, वशिष्ठधर्मसूत्रम्, आपस्तम्बधर्मसूत्रम्।
133. प्रश्नः— कृष्णयजुर्वेदीयाः गृह्यसूत्रग्रन्थाः के?
उत्तरम्— कठगृह्यसूत्रम्, बौधायनगृह्यसूत्रम्, आपस्तम्बगृह्यसूत्रम्।
134. प्रश्नः— सत्याषाढ़गृह्यसूत्रेण सम्बद्धः वेदः कः?
उत्तरम्— कृष्णयजुर्वेदः।

## 4. सामवेदः-The third of the four Vedas.

### (द) सामवेदस्य वस्तुनिष्ठप्रश्नोत्तराणि

1. प्रश्नः— सामवेदस्य कियत्यः शाखाः श्रूयन्ते?
उत्तरम्— (1000)
2. प्रश्नः— सम्प्रति सामवेदस्य कियत्यः शाखाः समुपलभ्यन्ते?
उत्तरम्— (03) तिस्रः, 1. राणायनीयः, 2. कौथुमीयः, 3. जैमिनीयः।
3. प्रश्नः— सामवेदस्य कौथुमशाखायां पूर्वार्चिके कति मन्त्राः विद्यन्ते?
उत्तरम्—(650)
4. प्रश्नः— सामवेदस्य कौथुमशाखायाम् उत्तरार्चिके कति मन्त्राः विद्यन्ते?
उत्तरम्— (1225)
5. प्रश्नः— सामवेदस्य उत्तरार्चिके कति प्रपाठकाः विद्यन्ते?
उत्तरम्— (9) नव प्रपाठकाः।
6. प्रश्नः— सामगानस्य कति विभागाः विद्यन्ते?
उत्तरम्— (05) पञ्च।

7. प्रश्नः— राणायनीय-शाखया सम्बद्धः वेदविशेषः कः?
उत्तरम्— सामवेदः।
8. प्रश्नः— सामवेदस्य शाखा काऽस्ति?
उत्तरम्— जैमिनीयशाखा।
9. प्रश्नः— ऋग्वेदस्य कति मन्त्राः सामवेदे समुपलभ्यन्ते?
उत्तरम्— (1504) वा (1800)
10. प्रश्नः— का सामगानपद्धतिः "हुँकारेण" प्रारभ्यते?
उत्तरम्— प्रस्तावः।
11. प्रश्नः— सा सामगानपद्धतिः, या "ॐकारेण" प्रारभ्यते?
उत्तरम्— उद्गीथः।
12. प्रश्नः— सामवैदिक-पूर्वार्चिकस्य पंचमः अध्यायः कः?
उत्तरम्— पवमानपर्वम्।
13. प्रश्नः— सामवेदीयः उपनिषद्ग्रन्थः किमस्ति?
उत्तरम्— केनोपनिषत्।
14. प्रश्नः— छान्दोग्योपनिषत्सम्बद्धवेदविशेषः कः?
उत्तरम्— सामवेदः।
15. प्रश्नः— सामवेदीयः प्रातिशाख्यग्रन्थः कः?
उत्तरम्— पुष्यसूत्रप्रातिशाख्यम्।
16. प्रश्नः— शाकटायनकृतस्य ऋक्तन्त्रस्याधारभूतः वेदः कः?
उत्तरम्— सामवेदः।
17. प्रश्नः— "नारदीयशिक्षा" कस्य वेदस्य शिक्षा-वेदांगमस्ति?
उत्तरम्— सामवेदस्य।
18. प्रश्नः— खादिरश्रौतसूत्रेण सम्बद्धः वेदविशेषः कः?
उत्तरम्— सामवेदः।
19. प्रश्नः— सामवेदसम्बद्धः श्रौतसूत्रविशेषः कः?
उत्तरम्— जैमिनीयश्रौतसूत्रम्।
20. प्रश्नः— आर्षेयश्रौतसूत्रस्य नामान्तरं किमस्ति?
उत्तरम्— मशकश्रौतसूत्रम्।
21. प्रश्नः— खादिरगृह्यसूत्रेण सम्बद्धः वेदः कः?
उत्तरम्— सामवेदः।
22. प्रश्नः— सामवेदीयाः गृह्यसूत्रग्रन्थाः के?
उत्तरम्— गौतमगृह्यसूत्रम्, गोभिलगृह्यसूत्रम्, जैमिनीयगृह्यसूत्रम्।
23. प्रश्नः— गौतमधर्मसूत्रेण सम्बद्धः वेदः कः?
उत्तरम्— सामवेदः।

24. प्रश्नः— वंशब्राह्मणेन सम्बद्धः वेदविशेषः कः?
उत्तरम्— सामवेदः।
25. प्रश्नः— अर्वाचीनतमः ब्राह्मणग्रन्थः कः?
उत्तरम्— गोपथब्राह्मणम्।
26. प्रश्नः— शुनःशेपाख्यानम् कस्मिन् ब्राह्मणे वर्णितम् अस्ति?
उत्तरम्— ऐतरेयब्राह्मणे।
27. प्रश्नः— पुरुरवा-उर्वशी-आख्यानं कस्मिन् ब्राह्मणे वर्णितम् अस्ति?
उत्तरम्— शतपथब्राह्मणे।
28. प्रश्नः— "महाब्राह्मणम्" इत्यनेन विशेषणेन विशिष्टं ब्राह्मणं किम्?
उत्तरम्— ताण्ड्यब्राह्मणम्।
29. प्रश्नः—ऐतरेयाण्यके कति अध्यायाः वर्तन्ते?
उत्तरम्— अष्टादश। (18)
30. प्रश्नः— सामवेदीये वंशब्राह्मणे कति खण्डाः सन्ति?
उत्तरम्— (03) त्रयः।
31. प्रश्नः— "जैमिनीयब्राह्मणं (श्रौतसूत्रम्) केन वेदेन सम्पृक्तम्?
उत्तरम्— सामवेदेन।
32. प्रश्नः— सामवेदस्य प्रमुखः प्रतिपाद्यविषयोऽस्ति?
उत्तरम्— गानम्।
33. प्रश्नः— ताण्ड्यब्राह्मणं कस्य अस्ति?
उत्तरम्— सामवेदस्य।
34. प्रश्नः— नचिकेतसः पितुर्नाम किम्?
उत्तरम्— वाजस्रवा।
35. प्रश्नः— सामवेदः "सहस्रवर्त्मा सामवेदः" कथं कथ्यते?
उत्तरम्— (1000) सहस्रशाखाकारणात्।
36. प्रश्नः— सामवेदः केषु विभाजितः वर्तते?
उत्तरम्— आर्चिकेषु।
37. प्रश्नः— सामवेदे कति आर्चिकाः सन्ति?
उत्तरम्— द्वौ, 1. पूर्वार्चिकः, 2. उत्तरार्चिकः।
38. प्रश्नः— सामवेदस्य स्व-मन्त्राः कति सन्ति?
उत्तरम्— (75) पञ्चसप्ततिः मन्त्राः।
39. प्रश्नः— कौथुमशाखानुसारेण सामवेदे कति मन्त्राः विद्यन्ते?
उत्तरम्— (1875)
40. प्रश्नः— सामवेदे कति छन्दाः प्रस्तुताः सन्ति?
उत्तरम्— द्वौ, 1. गाथा, 2. प्रगाथा।

41. प्रश्नः— सामवेदे कति प्रमुख-स्वराः सङ्गीतस्य आधारः मन्यन्ते?
उत्तरम्— सप्तस्वराः।
42. प्रश्नः— सामवेदीयमन्त्रेषु कानि गानानि भवन्ति?
उत्तरम्— 1. प्रकृतिगानम्, 2. ऊहगानम्, 3. उह्यगानम्।
43. प्रश्नः— प्रकृतगानेषु कानि गानानि भवन्ति?
उत्तरम्— 1. ग्रामगेयगानम्, 2. आरण्यकगानम्।
44. प्रश्नः— ग्रामगेयगानेषु कति पर्वाणि भवन्ति?
उत्तरम्— त्रीणि, 1. आग्नेयम्, 2. ऐन्द्रम्, 3. पवमानम्।
45. प्रश्नः— आरण्यकगानेषु कति पर्वाणि भवन्ति?
उत्तरम्— पञ्च, 1. अर्क, 2. द्वन्द्व, 3. व्रतम्, 4. शुक्रिय, 5. महानाम्नी।
46. प्रश्नः— "सामवेदादिदं गीतं सञ्जग्राह पितामहः" इत्यादयः संगीताचार्यः कः?
उत्तरम्— शार्ङ्गदेवः।
47. प्रश्नः— "सङ्गीतरत्नाकरः" इत्यस्य ग्रन्थस्य कः रचनाकारः?
उत्तरम्— शार्ङ्गदेवः।
48. प्रश्नः— सामवेदे प्रयुक्त-प्रगाथा-छन्दं कयो द्वयोः छन्दयोः मिश्रणं वर्तते?
उत्तरम्— गायत्री-जगती इत्यनयोः।
49. प्रश्नः— सामवेदे ऋग्वेदस्य केभ्यः मण्डलेभ्यः मन्त्रः सङ्गृहीतः अस्ति?
उत्तरम्— अष्टम-नवम-मण्डलाभ्याम्।
50. प्रश्नः— सामवेदस्य जैमिनीय-शाखायाः अध्ययनं कुत्र भवति?
उत्तरम्— केरलराज्ये।
51. प्रश्नः— भारते कस्याः सामवेदीयशाखायाः अतिप्रसिद्धिः अस्ति?
उत्तरम्— कौथुमीशाखायाः।
52. प्रश्नः— कौथुमीशाखायाः उच्चारणस्य के द्वे पद्धती स्तः?
उत्तरम्— 1. नागरपद्धतिः, 2. मद्रपद्धति।
53. प्रश्नः— सामवेदस्य कति ब्राह्मणानि सन्ति?
उत्तरम्— (9 नव) 1. प्रौढ़(ताण्ड्य/महाब्राह्मण) 2. षड्विंशः, 3. सामविधान, 4. आर्षेय, 5. देवताध्यायः, 6. छान्दोग्योपनिषद् ब्राह्मणः, 7. संहितोपनिषद् ब्राह्मणः, 8. वंशब्राह्मणः, 9. जैमिनीयब्राह्मणः।
54. प्रश्नः— तवल्कारः(जैमिनीयोपनिषद् ब्राह्मणः) केन वेदेन सम्बद्धः अस्ति?
उत्तरम्— सामवेदेन।
55. प्रश्नः— आरण्यकानां मुख्यविषयः किमस्ति?
उत्तरम्— आध्यात्मिकं चिन्तनम्।
56. प्रश्नः— सामवेदीमहावाक्यं "तत्त्वमसि" इत्यस्य निरूपणं कस्याम् उपनिषदि वर्तते?
उत्तरम्—छान्दोग्योपनिषदि।

57. प्रश्नः— सामवेदस्य उपवेदः कोऽस्ति?

उत्तरम्— गन्धर्ववेदः।

58. प्रश्नः—यज्ञानुष्ठानस्य अवसरोपरि ऋषयः कं वेदं गायन्ति?

उत्तरम्— सामवेदम्।

59. प्रश्नः— सामवेदे कति ब्राह्मणग्रन्थाः सन्ति?

उत्तरम्— नव ब्राह्मणग्रन्थाः।

60. प्रश्नः— सामवेदस्य ऋषिः कोऽस्ति?

उत्तरम्— सूर्यः।

61. प्रश्नः— सामवेदस्य गृह्यसूत्रं किमस्ति?

उत्तरम्— 1. गोभिलः, 2. खादिरः।

62. प्रश्नः— सामवेदे स्व-मन्त्राः कति सन्ति?

उत्तरम्— 75 मन्त्राः।

63. प्रश्नः— "अग्न आयाहि वीतय" इति कस्य वेदस्योक्तिः?

उत्तरम्— सामवेदस्य।

64. प्रश्नः— को गीत्यात्मको वेदः?

उत्तरम्— सामवेदः।

65. प्रश्नः— "केनोपनिषत्" कस्य वेदस्य कया शाखया सम्बद्धा अस्ति?

उत्तरम्— सामवेदस्य जैमिनीयशाखया।

66. प्रश्नः— सामवेदेन सम्बद्धं किं प्रातिशाख्यम्?

उत्तरम्— सामप्रातिशाख्यम्।

67. प्रश्नः— सामवेदेन सम्बद्धानि कियन्ति गृह्यसूत्राणि?

उत्तरम्— (3) त्रीणि।

68. प्रश्नः— "गोभिलगृह्यसूत्रम्" सामवेदस्य कया शाखया सम्बद्धम्?

उत्तरम्— कौथुम-शाखया।

69. प्रश्नः— "गौतमधर्मसूत्रम्" कस्य वेदस्य कया शाखया सम्बद्धम् ?

उत्तरम्— सामवेदस्य राणायणीयशाखया।

70. प्रश्नः— "हुँ" इत्यतः प्रारम्भः सामगानपद्धतेः किं नाम?

उत्तरम्— प्रस्तावः।

72. प्रश्नः— "ॐ" इत्यतः प्रारम्भः सामगानपद्धतेः किं नाम?

उत्तरम्— उद्गीथः।

73. प्रश्नः— सामवेदस्य ऋत्विक् कः?

उत्तरम्— उद्गाता।

## 5. अथर्ववेदः-The last of four Scriptures(Vedas)

### (ध) अथर्ववेदस्य वस्तुनिष्ठप्रश्नोत्तराणि

1. प्रश्नः— ब्रह्मा कस्य वेदविशेषस्य ऋत्विगस्ति?
   उत्तरम्—अथर्ववेदस्य।
2. प्रश्नः— "ब्रह्मवेद" इत्यभिधानेन अभिहितः वेदः कः?
   उत्तरम्—अथर्ववेदः।
3. प्रश्नः— "भैषज्यवेदः" इति कस्य नामान्तरः विद्यते?
   उत्तरम्— अथर्ववेदस्य।
4. प्रश्नः— चारणवैद्यशाखा-सम्बद्धः वेदविशेषः कः?
   उत्तरम्— अथर्ववेदः।
5. प्रश्नः— अंगिरोवेदः इति कस्योपाधिः वर्तते?
   उत्तरम्— अथर्ववेदस्य।
6. प्रश्नः— सम्प्रति अथर्ववेदस्य कियत्यः शाखाः उपलभ्यन्ते?
   उत्तरम्— (09) नवशाखाः।
7. प्रश्नः— अथर्ववेदस्य काण्डसंख्या काऽस्ति?
   उत्तरम्— (20) विंशतिः।
8. प्रश्नः— अथर्ववेदस्य सम्पूर्णसूक्तसंख्या काऽस्ति?
   उत्तरम्— (731) वा (730) वा (760)
9. प्रश्नः— अथर्ववेदस्य समग्रमन्त्रसंख्या काऽस्ति?
   उत्तरम्— (5987)
10. प्रश्नः— "सर्पवेदः" कस्योपवेदः वर्तते?
    उत्तरम्— अथर्ववेदस्य।
11. प्रश्नः— अथर्ववेदस्य बृहत्तमः काण्डविशेषः के?
    उत्तरम्— (20) विंशतिः।
12. प्रश्नः— अथर्ववेदस्य ब्राह्मणम् अस्ति?
    उत्तरम्— गोपथब्राह्मणम्।
13. प्रश्नः— कस्य वेदस्य किमपि आरण्यकम् नास्त्येव?
    उत्तरम्—अथर्ववेदस्य।
14. प्रश्नः— "माण्डूकी-शिक्षया सम्बद्धः वेदविशेषः कः?
    उत्तरम्— अथर्ववेदः।
15. प्रश्नः— अथर्ववेदीयः प्रातिशाख्यग्रन्थः कः?
    उत्तरम्— शौनकीयप्रातिशाख्यम्।
16. प्रश्नः— किं नाम अथर्ववेदीयं श्रौतसूत्रम्?
    उत्तरम्— वैतानश्रौतसूत्रम्।

17. प्रश्नः— कौशिकगृह्यसूत्रेण सम्बद्धः वेदविशेषः कः?
उत्तरम्— अथर्ववेदः।

18. प्रश्नः— कस्य वेदस्य धर्मसूत्रग्रन्थः नास्त्येव?
उत्तरम्— अथर्ववेदस्य।

19. प्रश्नः— भैषज्यसूक्तानि कुत्र वर्तन्ते?
उत्तरम्— अथर्ववेदे।

20. प्रश्नः— शौनकशाखा केन वेदेन सम्पृक्ता?
उत्तरम्— अथर्ववेदेन।

21. प्रश्नः— गोपथब्राह्मणं कं वेदमवलम्बते?
उत्तरम्— अथर्ववेदम्।

22. प्रश्नः— गोपथः कतिभागेषु विभेदितोऽस्ति?
उत्तरम्— द्वयोः, 1. पूर्वगोपथः, 2. उत्तरगोपथः।

23. प्रश्नः— वरुणदेवस्य स्थानं किम्?
उत्तरम्— द्युस्थानम्।

24. प्रश्नः— भूमिसूक्तं कं वेदं विषयीकरोति?
उत्तरम्— अथर्ववेदम्।

25. प्रश्नः— को नाम देवः वृत्रहा इत्युच्यते?
उत्तरम्— इन्द्रः।

26. प्रश्नः— पृथिवीसूक्तं कस्य वेदस्य अस्ति?
उत्तरम्— अथर्ववेदस्य।

27. प्रश्नः— मैत्रेयी शिक्षामवाप-?
उत्तरम्— याज्ञवल्क्यात्।

28. प्रश्नः— अथर्ववेदः काभिः संज्ञाभिः अभिहितोऽस्ति?
उत्तरम्— 1. अथर्वाङ्गिरोवेदः, 2. ब्रह्मवेदः, 3. भिषग्वेदः, 4. क्षत्रवेदः।

29. प्रश्नः— अथर्ववेदस्य शाखायाः कानि नामानि?
उत्तरम्— 1. पैप्पलादः, 2. तौदः, 3. मौदः, 4. शौनकः, 5. जाजलः, 6. जलदः, 7. ब्रह्मवदः, 8. देवदर्शः, 9. चारणवैद्यः।

30. प्रश्नः— वर्तमाने काः-काः शाखाः समुपलभ्यन्ते?
उत्तरम्— 1. पैप्पलादशाखा, 2. शौनकशाखा।

31. प्रश्नः— अथर्ववेदः केषु विभाजितः?
उत्तरम्— काण्डेषु।

32. प्रश्नः— अथर्ववेदे समग्रतया कति काण्डानि सन्ति?
उत्तरम्— (20) विंशति काण्डानि।

33. प्रश्नः— अथर्ववेदस्य विंशति-काण्डाणां अधिकांश-सूक्तानि केन सम्बन्धितानि सन्ति?
उत्तरम्— इन्द्रेण।

34. प्रश्नः— अथर्ववेदस्य प्रतिपाद्यः विषयः किमस्ति?
उत्तरम्— ब्रह्मविषयकदार्शनिकसिद्धान्त-राजनीति-प्रायश्चित्त-भैषज्यकर्म-शान्तिकर्म-पौष्टिककर्म-सौमनस्य कर्म-आयुष्यकर्म-अभिचारकर्म।

35. प्रश्नः— कृषिकर्मणः विवेचनं कस्मिन् वेदे अस्ति?
उत्तरम्— अथर्ववेदे।

36. प्रश्नः— अथर्ववेदस्य तृतीयकाण्डस्य सप्तदशसूक्तं केन नाम्ना विख्यातम्?
उत्तरम्— कृषि-सूक्तमिति नाम्ना।

37. प्रश्नः— अथर्ववेदे समग्रतया कति प्रपाठकाः सन्ति?
उत्तरम्— (36) षट्त्रिंशत् प्रपाठकाः।

38. प्रश्नः— अथर्ववेदे आहत्य कति मन्त्राः सन्ति?
उत्तरम्— 5, 987 मन्त्राः।

39. प्रश्नः— कानि अथर्ववेदीयकाण्डानि विवाहेन सम्बन्धितानि सन्ति?
उत्तरम्— (14) चतुर्दशतमं काण्डम्।

40. प्रश्नः— कस्मिन् काण्डे दुःस्वप्ननाशार्थ-प्रार्थना वर्तते?
उत्तरम्— (16) षोडशतमे काण्डे।

41. प्रश्नः— अध्यात्मविषयक-काण्डानि कानि सन्ति?
उत्तरम्— 13, 15, 19 तमानि काण्डानि।

42. प्रश्नः— कस्मिन् काण्डे चत्वारि मन्त्राणां सूक्तानि सन्ति?
उत्तरम्— प्रथमकाण्डे।

43. प्रश्नः— पञ्चानां मन्त्राणां समाहार-सूक्तानि कस्मिन् काण्डे सन्ति?
उत्तरम्— द्वितीय-काण्डे।

44. प्रश्नः— तृतीयकाण्डे प्रत्येक-सूक्तेषु कति मन्त्राः सन्ति?
उत्तरम्— षड्-मन्त्राः।

45. प्रश्नः— चतुर्थ-काण्डस्य सूक्तेषु कति-कति मन्त्राः सन्ति?
उत्तरम्— सप्त वा अष्ट मन्त्राः।

46. प्रश्नः— कस्मिन् काण्डे अष्ट वा तदधिकाः मन्त्राः सन्ति?
उत्तरम्— पञ्चम-काण्डे।

47. प्रश्नः— षष्ठे काण्डे कति सूक्तानि सन्ति?
उत्तरम्— 118 सूक्तानि।

48. प्रश्नः— सप्तम-काण्डे कति सूक्तानि सन्ति?
उत्तरम्— 118 सूक्तानि।

49. प्रश्नः— अथर्ववेदे संसारस्योत्पत्तिः केन कथ्यते?
उत्तरम्— जलेन(अथर्ववेद-4/2/6/8)।

50. प्रश्नः— भैषज्यसूक्तेषु कानि कानि चिकित्साप्रणाल्यायाः वर्णनमस्ति?
उत्तरम्— 1. जल-चिकित्सा, 2. सूर्यकिरण-चिकित्सा, 3. मानसिक-चिकित्सा।

51. प्रश्नः— आयुर्वेदस्य मूलं कस्मिन् वेदे दृश्यते?
उत्तरम्— अथर्ववेदे।
52. प्रश्नः— अथर्ववेदस्य ऋत्विजं किं कथ्यते?
उत्तरम्— ब्रह्मा।
53. प्रश्नः— भैषज्य-सूक्तेषु दन्तपीड़ाया: कारणं किं मन्यते?
उत्तरम्— कृमिम्।
54. प्रश्नः— ब्रह्मण: यज्ञे किं कार्यं भवति?
उत्तरम्— सम्पूर्ण-व्यवस्थाया: निरीक्षणम्।
55. प्रश्नः— "मा भ्राता भ्रातरं द्विक्षन्" इति मन्त्रः कुतः उद्धृतः?
उत्तरम्— अथर्ववेदात् (3/30/3)
56. प्रश्नः— अथर्ववेदस्य विशिष्टसूक्तानि कानि?
उत्तरम्—1. गृहमहिमासूक्तम्, 2. दीर्घायुष्यसूक्तम्, 3. संज्ञानसूक्तम्, 4. पृथ्वीसूक्तम्।
57. प्रश्नः— अथर्ववेदस्य प्रथममन्त्रं किमस्ति?
उत्तरम्— शं नो देवीरभीष्टये आपो भवन्तु पीतये। शं योरभिस्रवन्तु नः।
58. प्रश्नः— त्रिष्टुप्-छन्दसि कति अक्षराणि सन्ति?
उत्तरम्—(44) चतुश्चत्वारिंशत्।
59. प्रश्नः— अथर्ववेदेन सम्बद्धाः उपनिषदः कियत्यः सन्ति?
उत्तरम्— (31) एकत्रिंशत्।
60. प्रश्नः— अथर्ववेदे केषां प्रकाराणां औषधीनां वर्णनं विद्यते?
उत्तरम्— जन्म-मरणम्, उच्चाटनम्, मोहनादि मन्त्राणां औषधीनां वर्णनम्।
61. प्रश्नः— अथर्ववेदस्य उपवेदः कः?
उत्तरम्— अर्थशास्त्रम्।
62. प्रश्नः— आरण्यकग्रन्थानां मुख्यविषयः किमस्ति?
उत्तरम्—आध्यात्मिक-चिन्तनम्।
63. प्रश्नः— "सत्यमेव जयते" इति कस्मिन् उपनिषदि अस्ति?
उत्तरम्— मुण्डकोपनिषदि।
64. प्रश्नः— अथर्ववेदस्य गृह्यसूत्रं किमस्ति?
उत्तरम्—कौशिकगृह्यसूत्रम्।
65. प्रश्नः— "शंनोदेवीरभीष्टये... " इति कस्य वेदस्योक्तिः?
उत्तरम्— अथर्ववेदस्य।
66. प्रश्नः— पैप्पलादसंहिता कस्य वेदस्य अंस्ति?
उत्तरम्— अथर्ववेदस्य।
67. प्रश्नः— "अथर्ववेदस्य शौनक-शाखया सम्बद्धा उपनिषत् का अस्ति?
उत्तरम्— मुण्डकोपनिषत्।

68. प्रश्नः— "प्रश्नोपनिषद्" कस्य वेदस्य कया शाखया सम्बद्धा विद्यते?
    उत्तरम्— अथर्ववेदस्य पिप्पलाद-शाखया।
69. प्रश्नः— "माण्डूक्योपनिषत्" केन वेदेन सम्बद्धा?
    उत्तरम्— अथर्ववेदेन।
70. प्रश्नः— ओंकारस्य रहस्यवर्णनं कस्यामुपनिषदि वर्तते?
    उत्तरम्— मण्डूक्योपनिषदि।
71. प्रश्नः— उपनिषदोऽपरं नाम किम्?
    उत्तरम्— ब्रह्मविद्या।
72. प्रश्नः— अथर्ववेदेन सम्बद्धं प्रातिशाख्यं किम्?
    उत्तरम्— अथर्वप्रातिशाख्यम्।
73. प्रश्नः— यज्ञस्य पूर्ण-संस्काराय को वेदः आवश्यकः?
    उत्तरम्— अथर्ववेदः।



# 2

# व्याकरणशास्त्रम्

# The Science of Grammar

## (क) व्याकरणस्य महत्त्वम्—

परस्पर-मानवविचाराणाम् अभिव्यक्तिं शुद्धां, परिष्कृतां, परिमार्जितां च कर्तुं भाषाविशेषस्य व्याकरणम् आवश्यकम्। षट्सु वेदाङ्गेषु प्रधानं व्याकरणं, न केवलं वेदमन्त्रेषु विद्यमानानां अर्थावबोधनं करोति; परं तु तेषां रक्षणमपि करोति। संस्कृतभाषायाः व्याकरणस्य च अध्ययनाध्यापनस्य परम्परा अतिप्राचीना वर्तते। व्याकरणशिक्षायाः ज्ञानं विना छात्राः शुद्धरूपेण भाषाज्ञानं न प्राप्तुं शक्नुवन्ति। व्याकरणेन भाषाव्यवस्थिता क्रियते। भाषा व्यवस्थितकरणाय व्याकरणस्य विश्लेषणम् आवश्यकं भवति। डॉ॰ स्वीटमहोदयेन "व्याकरणं भाषायाः विश्लेषणम्" इति उक्तम्। तदनुसारं व्याकरणेन एव भाषारचनाज्ञानं भवति। व्याकरणशिक्षणाभावे रचनायाः अनुवादस्य च शिक्षा अपूर्णा। शब्दरचनायाः वाक्यरचनायाश्च आधारः व्याकरणमेव अस्ति। उद्यानवनस्य मनुष्यपशुपक्ष्यादिभ्यः कण्टकाकीर्णं तन्त्रीकवचं यथा रक्षकं भवति तथा भाषायाः रक्षकमस्ति व्याकरणम्। भाषायाः साधुत्वासाधुत्वज्ञानम् अनेन ज्ञायते।

## मुखं व्याकरणं स्मृतम्—

वेदपुरुषस्य मुखं भवति व्याकरणम्। "व्याक्रियन्ते शब्दाः अनेन इति व्याकरणम्" इति व्युत्पत्त्यनुसारेण संस्कृतवाङ्मये प्रयुक्तानां शब्दानां शुद्ध्यशुद्ध्योः विचारः व्याकरणेनैव क्रियते। ऋग्वेदकालत एव व्याकरणशास्त्रस्य निर्देशः समुपलभ्यते, किन्तु व्याकरणस्य उत्पत्तिकथा तु तैत्तिरीयसंहितायां वर्णिताऽस्ति। महर्षेः यास्कस्य निरुक्तग्रन्थे तु व्याकरणस्य अनेकेषां पारिभाषिकशब्दानां प्रयोगः समुपलभ्यते। व्याकरणस्य लब्धप्रतिष्ठाचार्यः पाणिनिः स्वकीयेऽष्टाध्यायीनामके ग्रन्थे स्वपूर्ववर्तीनां अनेकेषां वैयाकरणानां नामनिर्देशं चकार। पाणिनिः शब्दानुशासनग्रन्थद्वारा लौकिकसंस्कृतभाषां व्यवस्थापयामास। इत्थं शब्दानुशासनम् अष्टाध्यायी वा व्याकरणवेदांगस्य प्रतिनिधिग्रन्थः अस्ति। अस्य पाणिनिव्याकरणस्य सम्प्रदायद्वयञ्च उपलभ्यते, प्राचीनव्याकरणं नव्यव्याकरणञ्च। पूर्वाचार्याणामयं ज्ञाननिक्षेपः सम्प्रति भारतीयानां किमुत बुद्धिजीविनां मानवमात्राणाममूल्यो निधिः। एतेनैव भारतीया गौरवधुरं सगर्वमुद्वहन्ति। आधुनिकाः विद्वांसः प्रधानरूपेण व्याकरणशास्त्रप्रवर्तकान् अष्टावेव मन्यन्ते।

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्राः जयन्त्यष्टौ च शाब्दिकाः।।

किमिति चेत्-मुखं विना भोजन-व्यापारः नास्ति। भोजनं विना शरीरं नास्ति। शरीरं विना प्राणरक्षणं न भवति। ऋग्वेदे व्याकरणस्य प्रशंसा एवमस्ति—

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश।।

व्याकरणस्य इच्छापूर्तिकारणत्वाद् वृषभेति नाम्ना सम्बोधनमस्ति। अस्य चत्वारि शृङ्गाणि भवन्ति। तानि—(1) नाम, (2) आख्यातः (क्रिया) (3) उपसर्गः, (4) निपातः। त्रयः पादाः—वर्तमान-भूत-भविष्यत्कालाः। एते त्रयः कालाः विद्यन्ते। द्वे शीर्षे—सुप्, तिङ्। अस्य सप्त हस्ताः—प्रथमादयः सप्तविभक्तयः सन्ति। त्रिधा बद्धः—व्याकरणरूपो वृषभः उरः, कण्ठः, शिरः, इति स्थानेषु बद्ध इति। अयं महान् देवो, यः मनुष्येषु प्रविष्टो विद्यते। भगवान् पतञ्जलिः व्याकरणस्य प्रयोजनानि प्रत्यपादयत्। तेषु (1) रक्षा, (2) ऊहः, (3) आगमः, (4) लघुः, (5) असंदेहः, (6) अपभाषणम्, (7) दुष्टः शब्दः, (8) अविद्वांसः (9) विभक्तिं कुर्वन्ति, (10) नामकरणमिति। (11) यदधीतम्, (12) यस्तु प्रयुंक्ते, (13) यो वा इमाम्, चत्वारि इत्यादि महाभाष्योदाहरणानि अपि व्याकरणमध्ययनानां प्रयोजनानि सन्ति।

छन्दः पादौ तु वेदस्य, हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।।
शिक्षा घ्राणन्तु वेदस्य, मुखं व्याकरणं स्मृतम्।
तस्मात्सांगमधीत्यैव ब्रह्मलोके महीयते।।

इति पाणिनीयशिक्षाकारस्य वचनेन सिद्ध्यति यत् "मुखं व्याकरणं स्मृतम्" अत्र तु सूचयति यत् व्याकरणम् अन्यवेदांगैः अतुलनीयम् अस्ति। किंच श्वासप्रश्वासस्य गतिशीलने सति समस्त-लोकजीवनधारणे समर्था भवन्ति। व्याकरणशास्त्राणां विधिवत् ज्ञानं, वेदांगस्वरूपस्य रक्षां करोति एवं च स्वर्गे लोके च कामधुक् भवति इति वचनमपि चरितार्थं भवति। समुचितज्ञानाभावे तु—

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति, यथेन्द्रशत्रुः स्वरतोपराधात्।।

एतेन स्पष्टो भवति यत्—स्वरवर्णापराधपरिहाराय शिक्षाग्रन्थः अपेक्षितो वर्त्तते।

(ख) व्याकरणस्य निर्वचनानि (निश्चितवचनानि निर्वचनानि)—

(1) "व्याक्रियन्ते व्युत्पाद्यन्ते प्रकृति-प्रत्यय-विभाग-द्वारा निष्पाद्यन्ते शब्दाः अनेनेति व्याकरणम्", वि आङ् इत्युपसर्गपूर्वक कृञ् धातोः "करणाधिकरणयोश्च" इति सूत्रेण ल्युटि प्रत्ययेन सिद्ध्यति व्याकरणमितीदं पदं भवति।

(2) व्याक्रियन्ते-पृथक्क्रियन्ते साधुशब्दाः, असाधुशब्देभ्यः प्रकृतिप्रत्ययादिज्ञानमहिम्नाऽनेनेति व्याकरणम्।

(3) व्याक्रियन्ते व्युत्पाद्यन्ते शब्दाः अनेनेति व्याकरणम्।

(4) व्याक्रियन्ते-परिज्ञायन्ते शब्दाः अनेनेति व्याकरणम्।

(5) शब्दानुशासनं व्याकरणम्।

(6) लक्ष्यलक्षणं व्याकरणम्।

(7) प्रकृतिप्रत्ययविभागपूर्वकशब्दव्युत्पत्त्याधायकं शास्त्रं व्याकरणम्।

(8) भाषायाः व्यावहारिकविश्लेषणमेव व्याकरणम्।

(9) आङ्ग्लभाषायां Grammar इति पदं Grammatike techne इति ग्रीक्भाषापदात् निष्पन्नम्। अस्यार्थः भवति—the art of letters.

(10) व्याकरणं केवलं संरचनायाः व्याकरणमस्ति।

(11) व्याकरणं नाम शब्दसाधुत्वव्यवस्थापकं शास्त्रम्।

(12) Grammar is a set of rules and regulations which controls and teaches us the correct use of the language.

(13) प्रथमो हि विद्वांसो वैयाकरणाः।

(14) शब्दज्ञानजनकं व्याकरणम्।

(15) अनुशिष्यन्तेऽपशब्देभ्यः पृथक् कृत्य कथ्यन्ते साधुशब्दानुशासनम्।

(16) व्याकरणन्तु वेदानां वेदः।

(17) व्याकरणज्ञाने सर्ववेदपारायणजं पुण्यमिति।

(18) शब्दसाधुत्वबोधकः सूत्रात्मको लक्ष्यलक्षणात्मको वा ग्रन्थविशेषः व्याकरणम्।

(19) एकः शब्दः सम्यक् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग्भवति।

(20) प्रयोगशरणं व्याकरणम्। नावैयाकरणाय निर्ब्रूयात्।

(21) शब्दब्रह्मणि निष्णातः परब्रह्माधिगच्छति।

**(ग) व्याकरणस्य परम्पराक्रमः—**

ब्रह्मा संस्कृतव्याकरणस्य आदि ज्ञाता अस्तीति मन्यते। ब्रह्मा वृहस्पतये प्रोवाच, वृहस्पतिरिन्द्रायेन्द्रो भारद्वाजाय , भारद्वाजः ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यः इति ऋक्तन्त्रे 1/4 उद्धृतः। अक्षरसमाम्नायः शिक्षावेदांगस्य मौलिकप्रमुखः अंगः वर्त्तते। एतेन स्पष्टं भवति यत् शिक्षावेदांगस्य आदिप्रवर्त्तकः सृष्टिकर्ता ब्रह्मा अस्ति। द्वितीयप्रवक्ता अंगिरः पुत्रो बृहस्पतिः देवानां पुरोहितः आस्ति। तृतीयप्रवक्ता देवराजः इन्द्रः, चतुर्थो भारद्वाजः, पंचमः, ऋषयः, षष्ठ ब्राह्मणः वर्तन्ते। इन्द्रेण व्याकरणं सम्यग् परिमार्जितं च कर्तुं पदानां प्रकृति-प्रत्ययादीनां विभाजनं कृतम्। इत्थं अनेके वैयाकरणाः आसन् तेषु प्रमुखाः सन्ति—

| | |
|---|---|
| (1) ब्रह्मा | प्रथमः वैयाकरणः |
| (2) बृहस्पतिः | द्वितीयः वैयाकरणः |

| | |
|---|---|
| (3) इन्द्रः | तृतीयः वैयाकरणः (ऐन्द्रव्याकरणम्) |
| (4) भारद्वाजः | चतुर्थः वैयाकरणः (भारद्वाजव्याकरणम्) |
| (5) भागुरिः | भागुरि–व्याकरणम् |
| (6) काशकृत्स्नः | काशकृत्स्नव्याकरणम् |
| (7) वैयाघ्रपदः (काशिकायाम्) | वैयाघ्रपदव्याकरणम् |
| (8) माध्यन्दिनिः (काशिकायाम्) | माध्यन्दिनि–व्याकरणम् |
| (9) शौनकः (चरकसंहितायामुल्लिखितः) | शौनकी–व्याकरणम् |
| (10) गौतमः (भाष्यकारेणोल्लिखितः) | गौतम–व्याकरणम् |
| (11) व्याडिः (भाष्यकारेणोल्लिखितः) | व्याडि–व्याकरणम् |
| (12) कश्यपः (पाणिनि–अष्टाध्याय्याः) | कश्यप–व्याकरणम् |
| (13) वशिष्ठः | वशिष्ठ–व्याकरणम् |
| (14) अत्रिः | अत्रेः व्याकरणम् |
| (15) गालवः(पाणिनि–अष्टाध्याय्याः) | गालवीय–व्याकरणम् |
| (16) आपिशलिः | आपिशलि–व्याकरणम् |
| (17) चाक्रवर्मणः(कश्यपस्य पुत्रः) | चाक्रवर्मणस्य व्याकरणम् |
| (18) शाकटायनः | शाकटायन–व्याकरणम् |
| (19) शाकल्यः | शाकल्य–व्याकरणम् |
| (20) सेनकः | सेनक–व्याकरणम् |
| (21) स्फोटायनः(स्फोटसिद्धान्तस्य प्रवर्तकः) | स्फोटायन–व्याकरणम् |
| (22) गार्ग्यः | गार्ग्यस्य व्याकरणम् |
| (23) पाणिनिः | अष्टाध्यायी |
| (24) कात्यायनः(वार्तिककारः) | पाणिनीयव्याकरणोपरि वार्तिकरचना |
| (25) पतञ्जलिः | महाभाष्यम् |
| (26) भट्टोजिदीक्षितः | सिद्धान्तकौमुदी, प्रौढ़मनोरमा इत्यादि |
| (27) आचार्यवरदराजः | लघुसिद्धान्तकौमुदी, मध्यसिद्धान्तकौमुदी, |
| (28) नागेशभट्टः | लघुशब्देन्दुशेखरः, परिभाषेन्दुशेखरः |
| (29) कौण्डभट्टः | वैयाकरणभूषणसारः |
| (30) भर्तृहरिः | वाक्यपदीयम्, |

**(घ) व्याकरणशिक्षणस्य पाठ्यक्रमः—**

| | |
|---|---|
| (1) वर्णमाला | उच्चारणस्थानम्, शुद्धोच्चारणम्, वर्णानां वर्गीकरणम्, |
| (2) सन्धिः | स्वर–व्यञ्जन–विसर्गादयः। |
| (3) नामशब्दाः | संज्ञा, सर्वनाम, विशेषणादयः, |
| (4) लिङ्गम् | 1. पुंल्लिङ्ग, 2. स्त्रीलिङ्गः, 3. नपुंसकलिङ्गश्च। |
| (5) वचनम् | एकवचनं, द्विवचनम्, बहुवचनञ्च। |

| | |
|---|---|
| (6) कारकः | कर्ता कर्म च करणं सम्प्रदानं तथैव च, अपादानाधिकरणमित्याहुः कारकाणि षट्। |
| (7) धातुपाठः | प्रथमं भ्वादिगणः, पश्चात् अन्यगणधातूनां पाठः, क्रमिक-परस्मै-आत्मने-उभयपदी-पञ्चलकार-अन्यलकाराणां ज्ञानम्। |
| (8) समासः | (1) अव्ययीभावः, (2) तत्पुरुषः, (3) बहुव्रीहिः, (4) द्वन्द्वः। |
| (9) प्रत्ययः | (1) कृदन्तः, (2) तद्धितः, (3) स्त्रीप्रत्ययाः। |
| (10) उपसर्गः | द्वाविंशति उपसर्गाः। यः शब्दांशः शब्दानां धातूनां वा पूर्वं पूर्वं प्रयुक्तं भवति। |
| (11) वाक्यरचना | कर्तृवाच्य, कर्मवाच्य, भाववाच्य, विभक्तिप्रयोगादि कार्यम्। |

**(ङ) संस्कृतव्याकरणस्य विशेषता**

यदा वैदिकसंस्कृतस्य समाप्तिः लौकिकसंस्कृतस्य च प्रादुर्भावोऽभवत्, तदा संस्कृतभाषायाः क्षेत्रे महती अव्यवस्था प्रसरति स्म। ततः विद्वान्सः एकस्य नूतनस्य व्याकरणस्य आवश्यकताम् अनुभवन्ति स्म। एतस्मिन्नेव काले पाणिनेः प्रादुर्भावः अभवत्। पाणिनिः अष्टाध्यायीनामकं ग्रन्थं रचयित्वा व्याकरणाभावं पूरितवान्। अष्टाध्यायी एकः अद्भुतः ग्रन्थः अस्ति। अस्मिन् ग्रन्थे एतावत् सूक्ष्मं विश्लेषणं कृतवान्, तथा च सूक्ष्मातिसूक्ष्मनियमानां प्रतिपादनं तावन्मौलिकतया कृतवान् यद् भारतवर्षमेव न अपितु विश्वस्य विदुषः पाणिनिप्रतिभायां आश्चर्यो भवति। अष्टाध्यायी व्याकरणस्य मुकुटायमानो ग्रन्थोऽस्ति। अयं ग्रन्थः न केवलं व्याकरणनियमानां संकल्पमात्रोऽपितु भाषाविज्ञानोपरि व्याकरणोपरि च सर्वोत्कृष्टा मौलिकी रचना अस्ति। अस्य ग्रन्थस्य रचना सूत्रप्रणाल्या अभूत्। पाणिनिना एकमपि पदं व्यर्थं न प्रयुक्तम्। अधुनापि विद्वज्जनाः सूत्रप्रणालीं समादरन्ति। उक्तञ्च—

अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः

त्रिमुनिव्याकरणम्—पाणिनिमहर्षेः अष्टाध्यायी, कात्यायनस्य वार्तिकं, पतञ्जलिमुनेः भाष्यं च त्रिमुनिव्याकरणमिति प्रसिद्धम्। अतएव—

मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च।
वैयाकरणसिद्धान्तकौमुदीयं विरच्यते।।

इति भट्टोजिदीक्षितेन वैयाकरणसिद्धान्तकौमुदीप्रारम्भे मङ्गलाचरणं विहितम्।

व्याकरणशास्त्रस्य विभागः—अत्र द्वौ भागौ स्तः। 1. पाणिनिमहर्षेः प्राचीनाः। 2. अर्वाचीनाः।

व्याकरणस्य विभागाः—1. वैदिकमात्रम् (प्रातिशाख्यादि) 2. लौकिकमात्रम् (कातन्त्रादि) 3. वैदिकलौकिकोभयविधम् (आपिशल-पाणिनीयादि)।

**(क) पञ्चाङ्गव्याकरणम्**—सूत्रपाठः, धातुपाठः, गणपाठः, लिङ्गानुशासनं, शिक्षा च इति पञ्च अङ्गानि पाणिनिना ग्रथितानि इति हेतोः पाणिनीयव्याकरणस्य पञ्चाङ्गव्याकरणमिति प्रसिद्धिः।
**(ख) गण-धातवः**—पाणिनिः "गणान्" रचयित्वा संस्कृतव्याकरणं रक्षितवान्। अनेकान् शब्दान् एकेन नियमविशेषानुसारेण एकसमूहे एकत्रितं कृतवान् तेषां संचालनञ्च एकेन नियमेन यथा भवतु, तथाऽकरोत्।

गणपाठं कृत्वा पाणिनिः भौगोलिक-सामाजिक-राजनीतिकादीन् शब्दान् एकस्मिन् सूत्रे अस्थापयत्। गणपाठानां क्षेत्रम् अतिविस्तृतम्। गणानां रचनायाः आधारः ध्वनिरस्ति। धातूनां वर्गीकरणं गणानां रूपे अस्ति। एषाम् आधारोऽपि ध्वनिः एव। तस्मात् उद्गिरतस्य अर्थस्य पुनः पुनः अवलोकनं कृत्वा पाणिनिः गणान् अरचयत्। पाणिनिना सकला धातवः दशसु गणेषु विभक्ताः—1. भ्वादिगणः, 2. अदादिगणः, 3. जुहोत्यादिगणः, 4. दिवादिगणः, 5. स्वादिगणः, 6. तुदादिगणः, 7. रुधादिगणः, 8. तनादिगणः, 9. क्र्यादिगणः, 10. चुरादिगणश्च।

"अष्टाध्याय्याः" अनुसारं संस्कृते 1944 धातवः सन्ति, ये एषु दशसु गणेषु विभक्ताः सन्ति। स्वकीयस्य कृते आत्मनेपदीधातवः परेषां कृते च परस्मैपदीधातवः, उभयो कृते उभयपदी धातवः प्रयुक्ताः। संस्कृते 170 धातवः भ्वादयः सन्ति। भ्वादिधातुनां ज्ञानेन एव छात्राः संस्कृतवाक्यानि सरलतया लिखितुं शक्नुवन्ति।

**(ग) प्रकार्याणि**—1. शब्दरचना, 2. भाषारचना, 3. भाषाविश्लेषणम्, 4. नियमनिर्धारणम्, 5. साधुशब्दनिरूपणम्, 6. शुद्धप्रयोगः।

**(घ) ध्वनिविचारः**—संस्कृतसाहित्ये ध्वनिविचारो महान् विस्तृतः परिलक्ष्यते। व्याकरण-शास्त्रे ध्वनेरुत्पत्तिः सम्प्रतिपादिता वर्तते। नित्या वाक् (शब्दो वा) परा, पश्यन्ती, मध्यमा, वैखरी इति चतुर्विधध्वन्यात्मिका भवति। सिद्धान्तशैवानां मतम्—

परावाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा।। इति

**(1) परा**—तन्त्रशास्त्रञ्चाश्रित्य मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या विन्दुरूपिणी परा वागुच्यते।

**(2) पश्यन्ती**—नाभिपर्यन्तमागच्छता तेन वायुनाभिव्यक्ता मनोगोचरीभूता पश्यन्ती वागुच्यते।

**(3) मध्यमा**—ततो हृदयपर्यन्तमागच्छता तेन वायुनाभिव्यक्ता तत्तदर्थवाचकशब्दस्फोटरूपा श्रोत्रग्रहणायोगत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या मध्यमा वागुच्यते। अत्र अर्थविभागो जायते।

**(4) वैखरी**—तत आस्यपर्यन्तमागच्छता तेन वायुनोर्ध्वमाक्रमता च मूर्धानमाहत्य तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयोग्या व्यवहारोपयुक्ता च वैखरी वागुच्यते।

स च शब्दः ध्वनिः, वर्णश्चेति द्विविधः। ध्वनिः मृदङ्गादिजन्यः, वर्णः कण्ठादिसंयोगात् जायते। वर्णरूपा वैखरी वाक् पदवाक्यरूपेण कथ्यते।

**(च) वर्णविचारः**

ध्वनीनां विश्लेषणं वर्गीकरणं चात्र भवति। वर्ण्यते अभिव्यज्यते वा लघूत्तमो ध्वनिः येन सः वर्णः। न क्षरः अक्षरः यस्मात् तदक्षरम्। भाषा कापि वा भवतु परं तस्या भाषायाः कृते एका वर्णमाला आवश्यकी, वर्णमालाः तु बह्व्यः सन्ति, परं सर्वासां वर्णमालानामपेक्षया संस्कृतभाषायाः कृते या वर्णमालाऽस्ति सा उत्कृष्टतरास्ति। अत्र वर्णमालायाः यः क्रमः अस्ति सः नितान्तं वैज्ञानिकः अस्ति। संस्कृतवर्णमालायाः वैज्ञानिकं रूपं प्राचीनभारतीयानां वैशिष्ट्यमस्ति। आशुतोषः भगवान् शिवः वेदवाङ्मयेभ्यः स्वसम्बन्धिनीं विद्यां देवीं वाचं दाक्षीपुत्राय भगवते पाणिनये ददौ,

नन्द-नृपति-समये पाटलिपुत्रे वर्ष-नामकगुरुणा विद्याध्ययनस्य कामनया पाणिनिः समुपस्थितो बभूव। विद्याकामः पाणिनिः सनकादिसिद्धैः सह भगवतः शंकरस्याराधनां कृतवान्, याभिः आराधनाभिः लोककल्याणकारी शिवः चतुर्दशसूत्रात्मकं वर्णसमाम्नायम् अपौरुषेयरूपम् पाणिनये प्रदत्तवान्। नन्दिकेश्वरकृतकाशिकायाः द्वौ श्लोकौ अस्याः वार्तायाः सम्पादकौ स्तः। यथा-1-

नृत्तावसाने नटराजराजो ननाद ढक्कां नव पंच वारम्।
उद्धर्त्तुकामः सनकादिसिद्धानेतद् विमर्शे शिवसूत्रजालम्।।

"अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दशम्, धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये।"

**अथ वर्णसमाम्नायः**—1. अइउण् 2. ऋलृक् 3. एओङ् 4. ऐऔच् 5. हयवरट् 6. लण् 7. ञमङणनम् 8. झभञ् 9. घढधष् 10. जबगडदश् 11 खफछठथचटतव् 12. कपय् 13. शषसर् 14. हल् इति माहेश्वराणि सूत्राणि। सः अयम् अक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चक्रतारकवत् प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः सर्ववेदपुण्यफलप्राप्तिश्चास्य ज्ञाने भवति मातापितरौ चास्य स्वर्गे लोके महीयेते। आदौ तावत् वर्णानां संख्या, प्रकाराः, अच्, हल् इत्यादीनां वर्गीकरणस्य ज्ञानमावश्यकं वर्त्तते।

प्रत्याह्रियन्ते सङ्क्षिप्यन्ते वर्णाः यत्र सः प्रत्याहारः। प्रत्याहाराणां संख्या 42 मन्यन्ते।

**प्रत्याहाराणामकारादिक्रमेण परिसङ्ख्या—**

| | | | | | |
|---|---|---|---|---|---|
| 1. अक् | 8. इक् | 15. खय् | 22. झय् | 29. मय् | 36. वल् |
| 2. अच् | 9. इच् | 16. खर् | 23. झर् | 30. यञ् | 37. वश् |
| 3. अट् | 10. इण् | 17. ङम् | 24. झल् | 31. यण् | 38. शर् |
| 4. अण् | 11. उक् | 18. चय् | 25. झश् | 32. यम् | 39. शल् |
| 5. अम् | 12. एङ् | 19. चर् | 26. झष् | 33. यय् | 40. हल् |
| 6. अल् | 13. एच् | 20. छव् | 27. बश् | 34. यर् | 41. हश् |
| 7. अश् | 14. ऐच् | 21. जश् | 28. भष् | 35. रल् | 42. ञम् |

माहेश्वरमतानुसारं संस्कृत-वर्णमालायां विद्यमानानामक्षराणां संख्या एवमस्ति। कति वर्णाः सन्तीति प्रश्नं समाधातुमाह पाणिनीयशिक्षायाम्—

त्रिषष्टिश्चतुष्षष्टिर्वा वर्णाः शम्भुमते मताः।
प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयंभुवा।।

प्रकृत्यनुकूले मातृभाषा-स्वरूपे, देववाण्यां च शम्भुमतानुसारेण त्रिषष्टिश्चतुःषष्टिर्वा वर्णानां संख्याः प्रतिपादिताः। ह्रस्व-दीर्घ-प्लुतभेदैः स्वराणामेकविंशतिः संख्या मन्यन्ते। ककारात् मकार-पर्यन्तं स्पर्शसंज्ञक-वर्णानां संख्या पंचविंशतिः मन्यन्ते। य व र लाः अन्तस्थाः, शषसहा ऊष्माणः, संज्ञकाश्चाष्टौ संख्याकाः। लोके कुं खुं गुं घुं यमाः, अनुस्वारः, विसर्गः जिह्वामूलीयः, उपध्मानीयः, दुःपृष्टवर्णः, प्लुतलृकार इति+21+25+8+ 4+4+1+63 एवं+दीर्घ लृ+64 वर्णाः संस्कृतवर्णमालायां सन्ति। अर्थात् व्यवहाररूपे तु स्वरा "स्वयं राजन्ते इति स्वराः" अ आ इ ई उ ऊ ए ऐ ओ औ ऋ ॠ लृ इति त्रयोदशवर्णाः सन्ति।

## अचामष्टादशभेदविवरणम्

| अ इ उ ऋ लृ | अ इ उ ऋ ए ऐ ओ औ | अ इ उ ऋ लृ ए ओ ऐ औ |
|---|---|---|
| ह्रस्वभेदाः | दीर्घभेदाः | प्लुतभेदाः |
| 1. उदात्तानुनासिकः | 7. उदात्तानुनासिकः | 13. उदात्तानुनासिकः |
| 2. उदात्ताननुनासिकः | 8. उदात्ताननुनासिकः | 14. उदात्ताननुनासिकः |
| 3. अनुदात्तानुनासिकः | 9. अनुदात्तानुनासिकः | 15. अनुदात्तानुनासिकः |
| 4. अनुदात्ताननुनासिकः | 10. अनुदात्ताननुनासिकः | 16. अनुदात्ताननुनासिकः |
| 5. स्वरितानुनासिकः | 11. स्वरितानुनासिकः | 17. स्वरितानुनासिकः |
| 6. स्वरिताननुनासिकः | 12. स्वरिताननुनासिकः | 18. स्वरिताननुनासिकः |

## मुखगत-स्थान-बोधकचक्रम्—

| कण्ठः | तालु | ओष्ठ | मूर्धा | दन्ताः | कण्ठतालू | कण्ठोष्ठम् | दन्तोष्ठम् | जिह्वामूलम् |
|---|---|---|---|---|---|---|---|---|
| अ | इ | उ | ऋ | लृ | ए | ओ | व् | ᳵक |
| क् | च् | प् | ट् | त् | ऐ | औ | | ᳵख |
| ख् | छ् | फ् | ठ् | थ् | – | – | – | – |
| ग् | ज् | ब् | ड् | द् | – | – | – | – |
| घ् | झ् | भ् | ढ् | ध् | – | – | – | – |
| ङ् | ञ् | म् | ण् | न् | – | – | – | – |
| ह् | य् | ᳶप | र् | ल् | – | – | – | – |
| : विसर्ग | श् | ᳶफ | ष् | स् | – | – | – | – |

## आभ्यन्तरबाह्यप्रयत्नज्ञानार्थकं चक्रम्—

| आभ्यन्तरप्रयत्नाः | स्पृष्टाः | | | ईषत्स्पृष्टाः | ईषद्विवृताः | | विवृताः | संवृताः |
|---|---|---|---|---|---|---|---|---|
| संज्ञा | स्पर्शाः | | | अन्तःस्थाः | ऊष्माणः | | स्वराः | |
| वर्णाः | क ख<br>च छ<br>ट ठ<br>त थ<br>प फ | ग घ<br>ज झ<br>ड ढ<br>द ध<br>ब भ | ङ<br>ञ<br>ण<br>न<br>म | य<br>र<br>ल<br>व | श<br>ष<br>स | ह | अ इ उ<br>ऋ लृ<br>ए ओ<br>ऐ औ | ह्रस्वोऽकार प्रयोगः |
| बाह्यप्रयत्नाः | अल्पमहाप्राणाः<br>विवाराः<br>श्वासाः<br>अघोषाः | अल्पप्राणाः<br>संवाराः<br>नादाः<br>घोषाः | म. प्रा.<br>संवाराः<br>नादाः<br>घोषाः | अल्पप्राणाः<br>संवाराः<br>नादाः<br>घोषाः | महाप्राणाः<br>विवारा<br>श्वासाः<br>अघोषाः | महा.<br>संव<br>नाद.<br>घो. | उदात्तानुदात्तस्वरिताः | |

**व्यंजनानि**—कवर्ग, चवर्ग टवर्ग तवर्ग पवर्गरूपाणि येषां वर्णानामुच्चारणार्थं जिह्वा मुखस्य केवलं एकं भागं स्पृशति एवं च वायुः क्षणं विरम्य झटिति बहिर्भवति ते वर्णाः स्पर्शाः। स्पर्शानां

संख्या: पंचविंशतिः सन्ति। भाष्यंकारः व्यंजनस्य तुलना नटभार्यावत् कृतं स्यात्। तद् यथा नटानां स्त्रियो रंगगताः पृच्छति कस्य यूयमिति तं तं तवेत्याहुः। एवं व्यंजनान्यपि यस्य यस्याः च कार्यमुच्यते तं तं भजन्ते। "परेण स्वरेण व्यंज्यते इति व्यंजनम्"। यस्योच्चारणं विना स्वरेण न भवति तद् व्यंजनम्। अर्थात् ह य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स इति त्रयस्त्रिंशत् वर्णाः व्यंजनानि सन्ति। उच्चारण-वैविध्यात् व्यंजनानां त्रयो हि भागाः सन्ति। 1. स्पर्श 2. अन्तःस्थ 3. ऊष्मः अयोगवाहाः, अनुस्वारः, विसर्गः, यमाः।

(च) शब्दविचारः—अत्र पदानां विश्लेषणं, विभक्तिप्रत्ययानामध्ययनं, सन्धिसमासादीनाम् अनुशीलनं, लिङ्गज्ञानं च क्रियते।

(छ) वाक्यविचारः—अस्मिन् विभागे वाक्येषु विद्यमानानां शब्दानां विचारः, तेषां क्रमः कारकाणां प्रयोगः, वाक्यानां रचना करणीया, विरामचिह्नानाम् अध्ययनं च विधीयते।

(ज) अर्थविचारः—संस्कृतशब्दानाम् अर्थः प्रत्ययोपसर्गादियोजनेन परिवर्तनं प्राप्नोति। वाक्यपदीये संयोगविप्रयोगसाहचर्यादिविशेषस्मृतिकारणैः शब्दानाम् अर्थप्रतीतिः जायते इत्युक्तम्। वेदे स्वरभेदेऽपि अर्थभेदः भवतीति वचनं तु अरुणो मासकृत्, यथेन्द्रशत्रुः इत्यादि उदाहरणस्थलेषु स्पष्टमेव।

(झ) लिङ्गविचारः—संस्कृते संज्ञाशब्दानां लिंग-निर्धारणं प्रत्ययस्याधारेण भवति। संस्कृते लिङ्गं त्रिविधं भवति—1. पुंल्लिङ्गः, 2. स्त्रीलिङ्गः, 3. नपुंसकलिङ्गश्च। संस्कृते अभ्यासेन एव अस्य ज्ञानं भवति।

**(छ) व्याकरणस्य प्रयोजनानि—**

(व्याकरणस्य स्वरूपं, महत्त्वम्, फलं उपयोगश्च)

1. **यो वेद वेदवदनं सदनं हि सम्यग् ब्राह्म्याः स वेदमपि वेद किमन्यशास्त्रम्।**
   **यस्मादतः प्रथममेतदधीत्य विद्वान् शास्त्रान्तरस्य भवति श्रवणेऽधिकारी।।**

वस्तुतः व्याकरणज्ञानाभावे वेद-वेदान्त-स्मृतिपुराणेतिहास-काव्यादिशास्त्रान्तरेषु प्रवेशाधिकारिणः न भवन्ति, इति भास्कराचार्येण भणितम्।

**2. रक्षोहागमलघ्वसंदेहाः प्रयोजनम्**—रक्षा इति-व्याकरणाध्ययनावगतवर्णलोपागमवर्ण-विकारो गृहीतप्रकृतिप्रत्ययविभागो वेदान् पालयिष्यतीत्येतदर्थमध्येयं व्याकरणम्।

**ऊह इति**- प्रकृतिवद्विकृतिः कर्त्तव्येति मीमांसकसिद्धान्तात् प्रकृतियागे पठितस्य अग्नये त्वा जुष्टं निर्वपामीति मन्त्रस्थाग्निपदस्य सौर्यं चरूं निर्वपेत् ब्रह्मवर्चसकाम इति सौर्ये चरौ विकृतियागे सूर्यसम्बन्धिनिर्वाप- प्रकाशनाऽसमर्थत्वात्तदपहाय तत्स्थाने सूर्यायेत्यूहार्थमध्येयं व्याकरणम्।

**आगम इति**-ब्राह्मणेन निष्कारण इत्यादिश्रुत्या व्याकरणस्य पदपदार्थावगमद्वारा वाक्यार्थावग-मोपयोगित्वात्तदनध्ययनप्रयुक्तस्य वेदार्थाऽज्ञानप्रयुक्तस्य च प्रत्यवायस्य परिहारार्थमध्येयं व्याकरणम्। **लघ्विति**-शब्दानामानन्त्यात् प्रक्रियारूपलघुभूतोपायज्ञानार्थमध्येयं व्याकरणम्।

**असन्देह इति**-स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेत्यत्र कर्मधारयो बहुव्रीहिर्वेति सन्देहप्रागभावपरिपालनार्थमध्येयं व्याकरणम्। आनुषङ्गिकानि प्रयोजनानि तेऽसुरा हेलयो हेलय

इति कुर्वन्तः पराबभूवुस्तस्माद् ब्राह्मणेन म्लेच्छितवै, नापभाषितवै, म्लेच्छो ह वा एषा यदपशब्दः। म्लेच्छा माभूमेत्यध्येयं व्याकरणम्। अत्र पदद्विवचने कर्त्तव्ये वाक्यद्विर्वचनं लत्वञ्च कृतमसुरैः। एवञ्च शास्त्रबोधितविपरीतोच्चारणेन निन्द्या माभूमेत्यध्येयं व्याकरणम्। एवं च 1. दुष्टः शब्दः, 2. यदधीतम्, 3. यस्तु प्रयुंक्ते, 4. अविद्वांसः 5. विभक्तिं कुर्वन्ति, 6. यो वा इमाम्, चत्वारि इत्यादि महाभाष्योदाहरणानि अपि व्याकरणमध्ययनानां प्रयोजनानि सन्ति।

3. "पाणिनीये महाभाष्ये पदसाधुत्वलक्षणं सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन" इति पराशरपुराणे कथितः।

4. यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम्, स्वजनः (सम्बन्धि) श्वजनो (कुत्ता) माभूत् सकलः (सम्पूर्णः) शकलः (खण्डः) सकृत् (एकवार) शकृत् (विष्ठा)।

5. "व्याकरणज्ञाने सर्ववेदपारायणजं पुण्यमिति" अतः व्याकरणं वेदानां वेदः इति नागेशेनोक्तम्।

6. वाक्यपदीयकारभर्तृहरिः ब्रह्मकाण्डे व्याकरणाध्ययनं उत्तमतपः मन्यते—"आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः, प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः"।। व्याकरणं स्मृतिः एवंच परब्रह्मप्राप्तस्य साधनं स्वीक्रियते वाक्यपदीयकारः—"यदेकं प्रक्रियाभेदैर्बुधा प्रविभजन्ते, तद्व्याकरणमागम्य परं ब्रह्माधिगम्यते"।

7. सम्यग् शब्दप्रयोगे लाभः—

व्याघ्री यथा हरेत् पुत्रान् दंष्ट्राभ्यां न च पीडयेत्।
भीता पतनभेदाभ्यां तद्वद्वर्णान् प्रयोजयेत्।।
एवं वर्णा प्रयोक्तव्या नाव्यक्ता न च पीडिताः।
सम्यग् वर्णप्रयोगेन ब्रह्मलोके महीयते।।

मानवविचाराणाम् अभिव्यक्तिं शुद्धां, परिष्कृतां, परिमार्जितां च कर्तुं भाषाविश्लेषणाय व्याकरणम् आवश्यकम्। व्याकरणं वेदपुरुषस्य मुखमिति, येन प्रकारेण शरीरे मुखस्य स्थानं प्रधानं भवति तेनैव प्रकारेण वेदाङ्गेषु व्याकरणस्य स्थानं प्रधानं विद्यते। रक्षा-ऊह-आगम-लघुः-असंदेहः इति पञ्च प्रयोजनानि व्याकरणस्य वररुचिना वर्णितानि। व्याकरणविद्यायां दर्शनशास्त्रस्योपयोगाः अत्यधिकाः सन्ति। मनोरमायां प्रौढानां मनो रमयतीत्यर्थिकायाम् किं प्रौढत्वम्? "सकलदर्शनार्थज्ञानपूर्वकमहाभाष्यगूढार्थज्ञानवत्त्वम् प्रौढत्वम्" महाभाष्यविचारसमये सकलदर्शनार्थस्य तत्र तत्र ध्वननात्। अयमाशयः "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म "ब्रह्मैवेदं सर्वम् "आत्मैवेदं सर्वम्" इत्यादिभिः श्रुतिभिः जगत्कारणस्य सत्यत्वमेकत्वं ब्रह्मत्वम् आत्मत्वञ्च यथा प्रतिपाद्यते तथा "वागेवार्थं पश्यति वागेवार्थं ब्रवीति वागेवार्थं निहितं सन्तनोति। "ओमित्येतदक्षरमिदं सर्वम्" ओमिति ब्रह्म" इत्यादिभिः शब्द-स्वरूपतापि प्रतिपाद्यत इति शब्दब्रह्मैव जगत्कारणम्। शब्दब्रह्मप्राप्त्युपायत्वं च वाक्यपदीये भणितं भर्तृहरिमहोदयाः—"तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः, तस्य प्रवृत्तितत्त्वज्ञो ब्रह्मामृतमश्नुते।" इति कारिकया शब्दसंस्कारद्वारा व्याकरणस्यावगम्यते। शब्दसंस्कारस्य सिद्धत्वं सिद्ध्युपायत्वात्।

**व्याकरणम्**

1. संज्ञा, 2. सन्धिः, 3. अव्ययः, 4. सुबन्तः, 5. तिङन्तः, 6. कारकः, 7. प्रत्ययः, 8. समासः।

### (ज) संज्ञा/परिभाषाविवेचनम्

स्वरूपनिर्वचनं लक्षणकथनं वा परिभाषा इत्युच्यते। प्रसंगप्राप्तप्रमुखपरिभाषाणां संज्ञानां च संक्षिप्तं विवरणमत्र प्रस्तूयते—

1. संहिता—"परः सन्निकर्षः संहिता" वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात्।
2. गुणः—"अदेङ् गुणः" अत् एङ् च गुणसंज्ञः स्यात्। अ, ए, ओ इत्येताः गुणसंज्ञकाः भवन्ति।
3. वृद्धिः—"वृद्धिरादैच्" आदैच्च वृद्धिसंज्ञः स्यात्।
4. प्रातिपदिकम्—"अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा अर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात्।
5. नदी—"यू स्त्र्याख्यौ नदी" ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः।
6. घि—"शेषो घ्यसखि" शेष इति स्पष्टार्थम्। अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घि-संज्ञम्।
7. उपधा—"अलोन्त्यात्पूर्व उपधा" अन्त्यादयः पूर्वो वर्ण उपधासंज्ञः स्यात्।
8. अपृक्तं—"अपृक्तम् एकाल् प्रत्ययः" एकाल् प्रत्ययो यः सोऽपृक्तसंज्ञं स्यात्।
9. गतिः—"गतिश्च" प्रादयः क्रियायोगे गतिसंज्ञाः स्युः।
10. पदम्—"सुप्तिङन्तं पदम्" सुबन्तं तिङन्तं च पदसंज्ञं स्यात्।
11. विभाषा—"न वेति विभाषा"
12. सवर्णं—"तुल्यास्यप्रयत्नं सवर्णम्" "ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात्।"
13. टि—"अचोऽन्त्यादि टि" अचां मध्ये योऽन्त्यः, स आदिर्यस्य तत् टिसंज्ञं स्यात्।
14. प्रगृह्यम्—"ईदूदेद्द्विवचनं प्रगृह्यम्" ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात्।
15. सर्वनामस्थानम्—"शि सर्वनामस्थानम्" शि इत्येतद् उक्तसंज्ञं स्यात्।
16. निष्ठा—"क्तक्तवतू निष्ठा" एतौ निष्ठासंज्ञौ स्तः।

### (झ) सन्धिविचारः

सम् उपसर्गात् धाधातोः किप्रत्ययात् निष्पद्यते सन्धिशब्दः। शब्दोऽयं पुंसि लिङ्गे प्रयुज्यते।

संहितैकपदे नित्या नित्या धातूपसर्गयोः।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते।।

एकस्मिन् पदे सन्धिकार्यं नित्यं भवति। धातूपसर्गयोरपि सन्धिकार्यं नित्यं भवति। समासे सन्धिकार्यं नित्यं भवति। वाक्येऽस्मिन् सन्धिकार्यं विवक्षाधीना भवति।

कति सन्धयः, के च ते? पञ्च सन्धयः भवन्ति—

1. अच्सन्धिः, 2. हल्सन्धिः, 3. विसर्गसन्धिः, 4. स्वादिसन्धिः, 5. प्रकृतिभावसन्धिः।

1. अच्सन्धिः—

(क) यणसंन्धिः > (यण्=य् व् र् ल्)

इको यणचि-6.1.74 इकः स्थाने यण् स्यादचि संहितायां विषये। अत्र इकः (षष्ठ्यन्त), यण् (प्रथमान्त), अचि (सप्तम्यन्त) अर्थात् इ, ई, उ, ऊ, ऋ, ॠ, ऌ इत्येतेषां वर्णानामनन्तरं यदि असवर्णस्वरा वर्तन्ते तर्हि क्रमशः—"इ-ई" इत्यनयोः स्थाने यकारः, उ-ऊ इत्यनयोः स्थाने वकारः, ऋ-ॠ इत्यनयोः स्थाने रकारः (रेफः), ऌकारस्य स्थाने लकारश्च आदेशो भवति।

यथा—इ-य=इति+आदिः=इत्यादिः, प्रति+एक=प्रत्येकः, यदि+एवं=यद्येवं, इति+आह=इत्याह, इति+अयं+इत्ययं, मति+आ=मत्या, सुधी+उपास्यः=सुध्युपास्यः, प्रति+अगात्=प्रत्यगात् इत्यादयः।

उ-व—सु+आगतम्—स्वागतम्, मधु+अरि—मध्वरिः, अनु+अयः—अन्वयः, अनु+आदेशः=अन्वादेशः, गुरु+आज्ञा=गुर्वाज्ञा, पठतु+आ=पठत्वा, इत्यादयः।

ऋ-र—धातृ+अंशः=धांत्रंशः, धातृ+ए+धो, मातृ+आ+मा, हर्तृ+ई+र्ही, मातृए मो, कोष्टृ+आ+क्रोष्ट्रा, इत्यादयः।

ऌ-ल+ऌ+आकृतिः=लाकृतिः, ऌ+आकारः=लाकारः।

| इक् (स्थाने) | असवर्ण अच् | यण् (विकारः) | सन्धिविच्छेदः | सन्धिः (सिद्धरूपम्) |
|---|---|---|---|---|
| इ+ | अ= | य् | यदि+अत्र(यद्+य्+अत्र) | =यद्यत्र |
| ई+ | अ= | य् | नदी+अम्बुः(नद्+य्+अम्बु) | =नद्यम्बुः |
| ई+ | उ= | य् | सुधी+उपास्यः(सुध्+य्+उपास्यः) | =सुध्युपास्यः |
| उ+ | अ= | व् | मधु+अरिः(मध्+व्+अरि) | =मध्वरिः |
| ऊ+ | आ= | व् | वधू+आगमनम्(वध्+व्+आगम्नम् | =वध्वागमनम् |
| ऋ+ | इ= | र् | पितृ+इच्छा(पित्+र्+इच्छा) | =पित्रिच्छा |
| ऌ+ | आ= | ल् | घस्ऌ+आदेशः(घस्+ल्+आदेशः) | =घस्लादेशः |

(ख) जश्त्व—

"झलां जश् झशि(8.4.53) झशि(झश्) परे झलां जशः स्युः" यथा—दुघ+धम्=दुग्धम्, एतत्+दर्शनम्=एतद्दर्शनम्, दघ्+धः=दग्धः, युध्+धः=युद्धः, शुध्+धिः=शुद्धिः, लभ्+धः=लब्धः, क्षुभ्+धः=क्षुब्धः।

(ग) अयादि-सन्धिः—एचोऽयवायावः (6.1.78) एचः क्रमाद् अय् अव् आय् आव् एते स्युरचि। अर्थात् ए ऐ ओ औ इत्येतेभ्यः वर्णेभ्यः स्वरे परे एकारस्य स्थाने अय्, ऐकारस्य स्थाने आय्, ओकारस्य स्थाने अव्, औकारस्य स्थाने आव् च आदेशाः भवन्ति। यथा—

1. ए-अय्; हरे+ए =हरये, जे+अ=जयः, ए+अ=अयः, कवे+ए=कवये, मते+ए=मतये, ने+अनम्=नयनम्, चे+अ=चयः, शे+इतः=शयितः,।
2. ओ-अव; विष्णो+ए=विष्णवे, गो+एषणा=गवेषणा, भो+अति=भवति, गुरो+ए=गुरवे, भो+अनम्=भवनम्, पो+अनम्=पवनम्, गुरो+अः=गुरवः, भानो+ए=भानवे,

3. ऐ-आय्; नै+अकः=नायकः, गै+अकः=गायकः, दै+अकः=दायकः,

4. औ-आव्; पौ+अकः=पावकः, भौ+अकः=भावकः।

| एच् (स्थाने) | अच् (परे) | आदेश (विकारः) | सन्धिविच्छेदः | सन्धिः (सिद्धरूपम्) |
|---|---|---|---|---|
| ए+ | ए | अय् | हरे+ए(हर्+अय्+ए) | =हरये |
| ऐ+ | आ | आय् | नै+अकः(न्+आय्+अकः) | =नायकः |
| ओ+ | अ | अव् | विष्णो+ए(विष्ण्+अव्+ए) | =विष्णवे |
| औ+ | अ | आव् | पौ+अकः(प्+आव्+अकः) | =पावकः |

**(घ) सवर्णदीर्घ—"अकः सवर्णे दीर्घः" 6.1.10** अकः सवर्णेऽचि परे पूर्वपरयोर्दीर्घ एकादेशः स्यात्। अत्र अकः (पञ्चमी) अ इ उ ऋ लृ तः सवर्णेऽचि परे (सप्तम्यन्ते) अ आ+अ आ=आ, इ ई+इ ई=ई, उ ऊ+उ ऊ=ऊ, ऋ ॠ+ऋ ॠ=ॠ, पूर्वपरयोः मिलनेन दीर्घः (प्रथमान्तः) भवति।

"अ आ इत्येतयोः अनन्तरं यदि अ आ इत्येतौ वर्णौ स्तः तर्हि आकारः, इ ई इत्येतयोः अनन्तरं यदि इ ई इत्येतौ वर्णौ स्तः तर्हि ईकारः, उ ऊ इत्येतयोः अनन्तरं यदि उ, ऊ इत्येतौ वर्णौ स्तः तर्हि ऊकारः, ऋ इत्यनन्तरं ऋ लृ इत्येतौ वर्णौ स्तः तर्हि ॠकारः पूर्वपरयोः स्थाने दीर्घः एकादेशत्वेन भवति। दीर्घरूपाभावे लृकारस्य प्रयोगः न भवति। सवर्णसंज्ञा—तुल्यास्यप्रयत्नं सवर्णम्-ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात्।

**(1) अ आ+अ आ**=कार्य+आलयः=कार्यालयः, विद्या+आलयः=विद्यालयः, राम+अयनम्=रामायनम्, महा+अनुभावः=महानुभावः, त्रिपुर+अरि=त्रिपुरारिः, शश+अंकः=शशांकः, सुर+अरि=सुरारिः, विद्या+अर्थी=विद्यार्थी।

**(2) इ ई+इ ई**=अधि+ईश्वरः=अधीश्वरः, नदी+ईशः=नदीशः, श्री+ईशः=श्रीशः, मही+ईशः=महीशः, कवि+इन्द्रः=कवीन्द्रः, इति+इव=इतीव, मुनि+इन्द्रः=मुनीन्द्रः, गिरि+ईशः=गिरीशः, पृथ्वी+ईश्वरः=पृथ्वीश्वरः, श्री+ईशः=श्रीशः, नदी+ईशः=नदीशः।

**(3) उ ऊ+उ ऊ=ऊ** भानु+उदयः=भानूदयः, गुरु+उपदेशः=गुरूपदेशः, वधू+उत्साहः=वधूत्साहः, चमू+ऊर्जः=चमूर्जः, साधु+ऊचुः=साधूचुः।

**(4) ऋ ॠ+ऋ ॠ=ॠ** पितृ+ऋषिः=पितृषिः, पितृ+ऋणम्=पितृणम्, होतृ+ऋकारः=होतृकारः, होतृ+ॠकारः+होतृकारः।

**(ङ) गुण-सन्धिः—**

**अदेङ्गुणः**, अत् एङ् च गुणसंज्ञं स्यात्। ए ओ, अर् अल्। **आद्गुणः (6.1.84)** अवर्णादचि परे पूर्वपरयोरेको गुण आदेशः स्यात्। आत् (पञ्चम्यन्त), गुणः (प्रथमान्त) "अ आ इत्येतयोः वर्णयोः अनन्तरं यदि इ ई इत्येतौ वर्णौ स्तः, तर्हि पूर्वपरयोः स्थाने एकारः, उ ऊ इत्येतौ वर्णौ स्तः तर्हि ओकारः, ऋ ॠ इत्येतौ वर्णौ स्तः, तर्हि अर्, लृकारः अस्ति तर्हि अल् आदेशत्वेन च भवति।

**अ आ-इ ई=ए** देव+इन्द्रः=देवेन्द्रः, उप+इन्द्रः=उपेन्द्रः, गण+ईशः=गणेशः, परम+ईश्वरः=परमेश्वरः, रमा+ईशः=रमेशः, तथा+इति=तथेति।

अ आ–उ ऊ=ओ सूर्य+उदयः=सूर्योदयः, छात्र+उपस्थितिः=छात्रोपस्थितिः, नव+ऊढा=नवोढा, दया+ऊनः=दयोनः, गंगा+ऊर्मिः=गंगोर्मिः।

अ आ–ऋ ॠ=अर् ब्रह्म+ऋषिः=ब्रह्मर्षिः, महा+ऋषिः=महर्षिः।

अ आ–ऌ तव+ऌकारः=तवल्कारः।

| अ/आ+इ/ई | अ/आ+उ/ऊ | अ/आ+ऋ/ॠ | अ/आ+ऌ |
|---|---|---|---|
| ए | ओ | अर् | अल् |
| उप+इन्द्रः=उपेन्द्रः, सुर+ईशः=सुरेशः, | जल+उत्पत्तिः= जलोत्पत्तिः, जल+ऊर्मिः= जलोर्मिः | देव+ऋषि=देवर्षि, महा+ऋषि=महर्षि | महा+ऌकारः= महल्कारः, मम+ ऌकारः=ममल्कारः |

**( च ) वृद्धि-सन्धिः—**

वृद्धिरादैच् (1.1.1) आदैच्च वृद्धिसंज्ञः स्यात्। एवं च वृद्धिरेचि (6.1.88) आदेचि परे वृद्धिरेकादेशः स्यात्। अ आ इत्येतयोः वर्णयोः अनन्तरं यदि ए, ऐ इत्येतौ वर्णौ स्तः, तर्हि पूर्वपरयोः स्थाने ऐकारः, यदि ओ औ इत्येतौ स्तः तर्हि औकारः च पूर्वपरयोः स्थाने एकादेशत्वेन भवति। अ आ इत्येताभ्यां वर्णाभ्याम् ऋकारे ॠकारे च परे आर्, ऌकारे परे च आल् आदेशो भवति।

अ आ–ए ऐ=ऐ अद्य+एव=अद्यैव, मत+ऐक्यम्=मतैक्यम्, सदा+एव=सदैव, यथा+एव=यथैव, एक+एकम्=एकैकम्, तव+ऐश्वर्यम्=तवैश्वर्यम्।

अ आ–ओ औ=औ तिल+ओदनम्=तिलौदनम्, दिव+ओकसः=दिवौकसः, महा+औषधिः= महौषधिः, महा+औदार्यम्=महौदार्यम्,

| अ/आ+ए/ऐ | अ/आ+ओ/औ | अ/आ+ऋ/ॠ | अ/आ+ऌ |
|---|---|---|---|
| ऐ | औ | आर् | आल् |
| कृष्ण+एकत्वम्= कृष्णैकत्वम्, तथा+एव=तथैव, सदा+एव=सदैव | गंगा+ओघ=गङ्गौघः, दिव्य+औषधम्= दिव्यौषधम्, मम+ औषधम्=ममौषधम् | उप+ऋच्छति= उपार्च्छति, | उप+ऌकारीयति= उपाल्कारीयति |

**( छ ) पूर्वरूपः**—"एङः पदान्तादति (6.1.109) पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात्।" यथा—यज्ञे+अग्नि=यज्ञेऽग्नि, वृक्षे+अस्मिन्=वृक्षेऽस्मिन्, गो+अग्रम्=गोऽग्रम्, हरे+अव= हरेऽव, विष्णो+अव=विष्णोऽव।

**( ज ) पररूपः**—"एङि पररूपम् (6.1.94) आदुपसर्गात् एङादौ धातौ परे पररूपमेकादेशः स्यात्।" यथा—प्र+ऐषयति=प्रेषयति, प्र+एजते=प्रेजते, उप+ओषधि=उपोषधि।

**( झ ) द्वित्व**—"अचो रहाभ्यां द्वे (8.4.46) अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः"। यथा—हरि+अनुभव=हर्य्यनुभवः, कर्म-कर्म्म, सर्वं सर्व्वम्।

**2. प्रकृतिभावसन्धिः—**

**1. प्लुतप्रगृह्या अचि नित्यम्**—प्लुताः प्रगृह्याश्च वक्ष्यन्ते ते अचि परे नित्यं प्रकृत्याः स्युः। यथा–एहि कृष्ण3+अत्र गौश्चरति=एहि कृष्ण3 इत्यत्र प्लुताकारात् अकारे परे न सवर्णदीर्घः।

**2. ऋत्यकः**—ऋति परे अकः प्रकृतिभावः स्यात्। अ, इ, ऋ, लृ वर्णानां पश्चात् ह्रस्वः ऋकारः अस्ति चेत् तर्हि विकल्पेन ह्रस्वः सन्ध्यभावश्च भवति पदान्ते। यथा—ब्रह्म+ऋषिः= ब्रह्मऋषिः, सप्त+ऋषीणां=सप्त ऋषीणाम्।

**3. प्रगृह्य, प्रकृतिभावः**—"ईदूदेद्द्विवचनं प्रगृह्यम् (1.1.11) ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात्।" ईकारान्तम् ऊकारान्तञ्च द्विवचनं प्रगृह्यसंज्ञकं भवति। अतः सन्धिकार्यं नैव भवति। प्रकृतिभावो भवति। यथा–हरी+एतौ=हरी एतौ, विष्णू+इमौ=विष्णू इमौ, गङ्गे+अमू=गङ्गे अमू, पचेते+इमौ=पचेते इमौ, मुनी+इमौ=मुनी इमौ, साधू+अत्र=साधू अत्र, बालिके+एते=बालिके एते।

**4. अदसो मात्**—अदस्शब्दावयवमकारात् परस्य ईकारस्य, ऊकारस्य च प्रगृह्यसंज्ञा स्यात्। यथा–अमी+ईशाः=अमी ईशाः, रामकृष्णावमू+आसाते=रामकृष्णावमू आसाते।

**5. ओत्**—ओदन्तो निपातः प्रगृह्यः स्यात्। ओकारान्तस्य निपातस्यापि प्रगृह्यसंज्ञा भवति। अतः अत्रापि प्रकृतिभावो भवति। यथा–अहो+ईशाः=अहो ईशा।

**3. हल्सन्धिः—**

**(क) श्चुत्वसन्धिः→श्चुः—श्, च्, छ्, ज्, झ्, ञ्**

**"स्तोः श्चुना श्चुः" (8/4/40)** सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः। अर्थात् "सकारस्य शकारचवर्गाभ्यां योगे शकारः, तवर्गस्य शकारचवर्गाभ्यां योगे क्रमात् चवर्गः आदेशो भवति। (त् इत्यस्य च्, द् इत्यस्य ज्, न् इत्यस्य ञ्, स् इत्यस्य श् भवति।

1. स–श→रामस्+शेते=रामश्शेते, रामस्+चिनोति=रामश्चिनोति,

2. तवर्ग–चवर्ग→उत्+चारणम्=उच्चारणम्, तत्+छवि=तच्छविः, एतद्+जलम्=एतज्जलम्, उत्+ज्वलः=उज्ज्वलः, सत्+चरित्रः=सच्चरित्रः,

**(ख) ष्टुना ष्टुः**—स्तोः ष्टुना योगे ष्टुः स्यात्।

1. स–श→रामस्+षष्ठः=रामष्षष्ठः, रामस्+टीकते=रामष्टीकते,

2. तवर्ग–टवर्ग→तद्+टीका=तट्टीका, षष्+थः=षष्ठः, उद्+डीन=उड्डीन

दुष्+तः=दुष्टः, विष्+नु=विष्णु, पेष्+ता=पेष्टा,

| | | | |
|---|---|---|---|
| स–श | शिशुस्+शेते | शिशु+श्+शेते | =शिशुश्शेते |
| स्–श् | मनस्+चञ्चलम् | मन+श्+चञ्चलम् | =मनश्चञ्चलम् |
| स्–श् | रामस्+छात्रः | राम+श्+छात्रः | =रामश्छात्रः |
| त्–च् | भगवत्+शक्ति | भगव+च्+शक्तिः | =भगवच्शक्तिः |
| त्–च् | सत्+चित् | स+च्+चित् | =सच्चित् |

| | | | |
|---|---|---|---|
| द् ज्<br>न्-ञ् | सुहृद्+जगाम<br>हे गुणिन्+जानातु | सुहृ+ज्+जगाम<br>हे गुणि+ञ्+जानातु | =सुहृज्जगाम<br>=हे गुणिञ्जानातु |
| न्-ञ्<br>न्-ञ् | यज्+न<br>याच्+ना | यज्+ञ्+अः<br>याच्+ञ्+आ | =यज्ञः<br>=याच्ञा |

**(ग) जश्त्व—**

"झलां जशोऽन्ते (8.2.39) पदान्ते झलां जशः स्युः। यथा—वाक्+ईशः=वागीशः, दिक्+अन्तः=दिगन्तः, दिक्+गजः=दिग्गजः, षट्+एव=षडेव, सुप्+अन्तः=सुबन्तः, सत्+आचारः= सदाचारः, दिक्+भ्रमः=दिग्भ्रमः, जगत्+ईशः=जगदीशः, अच्+अन्तः=अजन्तः, षट्+आननः= षडाननः, चित्+आनन्दः=चिदानन्दः।

(घ) अनुनासिक "यरोऽनुनासिकेऽनुनासिको वा (8.4.45) यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात्" यथा—एतद्+मुरारी=एतन्मुरारी, दिक्+नाग=दिङ्नाग, षट्+मुखः=षण्मुखः, तत्+मात्रम्=तन्मात्रम्, उत्+मुखः=उन्मुखः, जगत्+नाथ=जगन्नाथ, जगत्+मिथ्या=जगन्मिथ्या, वाक्+ मयम्=वाङ्मयम्, तत्+न=तन्नः, सद्+मतिः=सन्मतिः।

(ङ) परसवर्णः—"तोर्लि (8.4.60) तवर्गस्य लकारे परे परसवर्णः स्यात्।" यथा—तत्+ लीनः=तल्लीनः, उद्+लेखः=उल्लेखः, पद्+लवः=पल्लवः, तत्+लयः=तल्लयः, आदि।

(च) पूर्वसवर्णः–1. "उदः स्थास्तम्भोः पूर्वस्य (8.4.61) उदः परयोः स्थास्तम्भोः पूर्वसवर्णः स्यात्" यथा—उद्+स्थानम्=उत्थानम्, उद्+स्तम्भनम्=उत्तम्भनम्।

2. "झयो होन्यतरस्याम् (8.4.62) झयः परस्य हस्य पूर्वसवर्णो वा स्यात्।" यथा—वाक्+ हरिः=वाग्घरिः, तत्+हितम्=तद्धितम्, उत्+हरणम्=उद्धरणम्, अज्+हीनम्=अज्झीनम्, तद्+हानि= तद्धानिः, त्रिष्टुब्+हसति=त्रिष्टुब्भसति, मधुलिड्+हसति=मधुलिड्ढसति।

(छ). चर्त्व सन्धि+"खरि च (8.4.55) खरि परे झलां चरः स्युः। झल् वर्णानां स्थाने चर् (च, ट, त, क, प, श, स, ष) वर्णाः भवन्ति चेत् झलामनन्तरं खर् प्रत्याहारवर्णाः स्युः।

उदाहरणार्थ—उद्+थानम्=उत्थानम्, तद्+परम्=तत्परम्, उद्+थापकः=उत्थापकः, सद्+कारः= सत्कारः, दिग्+पालः=दिक्पालः, तज्+शिवः=तच्छिवः, उद्+पन्नः=उत्पन्नः।

(ज) छत्व "शश्छोऽटि (8.4.63) पदान्ताज्झयः परस्य शस्य छो वा स्यादटि परे।" यथा— तद्+शिवः=तच्छिवः, सत्+शीलः=सच्छीलः।

(झ) अनुस्वारः–1. "मोऽनुस्वारः (8.3.23) मान्तस्य पदस्यानुस्वारः स्यात् हलि।" यथा— हरिम्+वन्दे=हरिं वन्दे, कार्यम्+कुरु=कार्यं कुरु, गृहम्+गच्छति=गृहं गच्छति, ईश्वरम्+भजति= ईश्वरं भजति, सम्+सारः=संसारः, पाठम्+पठ=पाठं पठ।

2. "नश्चापदान्तस्य झलि (8.3.24) नस्य मस्य चापदान्तस्य झल्यनुस्वारः"। यथा— रम्+स्यते=रंस्यते, आक्रम्+स्यते=आक्रंस्यते, दन्+शनम्=दंशनम्, यशान्+सि=यशांसि, नम्+स्यति= नंस्यति।

(ञ) परसवर्णः—1. "अनुस्वारस्य ययि परसवर्णः (8.4.58)" अनुस्वारस्य ययि परे परसवर्णः स्यात्। यथा—शम्+तः=शान्तः, शम्+कितः=शंकितः, अं+कितः=अङ्कितः, कुं+ठितः= कुण्ठितः, गुं+फितः=गुम्फितः, अं+चितः=अञ्चितः, कं+टकम्=कण्टकम्।

(2) "वा पदान्तस्य (8.4.59) पदान्तस्य अनुस्वारस्य ययि परे वा परसवर्णः। पदान्तानुस्वारानन्तरं यय् प्रत्याहारः भवति चेत् परसवर्णः भवति। यथा–त्वं+करोषि=त्वङ्करोषि, अहम्+पचामि=अहम्पचामि, यं+लोकम्=यंल्लोकम्।

(ट) रुत्व—"समः सुटि (8.3.5) समो रुः स्यात्सुटि।" यथा—सम्+कारः=संस्कार, सम्+ कृत=संस्कृत, सम्+कर्ता=संस्कर्ता, सम्+कृति=संस्कृति।

**4. विसर्गसन्धिः**

1. सत्व—(क) "विसर्जनीयस्य सः (8.3.34) खरि विसर्जनीयस्य सः स्यात्।" विसर्गस्य स्थाने सकारादेशः स्यात् खरि परे। स्यात्। यथा—विष्णुः+त्राता=विष्णुस्त्राता, रामः+तिष्ठति= रामस्तिष्ठति, बालः+चलति=बालश्चलति, जनाः+तिष्ठन्ति=जनास्तिष्ठन्ति।

(ख) "वा शरि (8.3.36) शरि परे विसर्जनीयस्य विसर्जनीय एव वा स्यात्। यथा—

श् ष्—रामः+चलति=रामश्चलति, रामः+टीकते=रामष्टीकते।

स्—रामः+त्रायते=रामस्त्रायते; बालः+तिष्ठति=बालस्तिष्ठति, हरिः+शेते=हरिश्शेते, हरिः+त्राता= हरिस्त्राता; पूर्णः+चन्द्रः=पूर्णश्चन्द्रः।

श् ष् स्—मुनिः+शेते=मुनिश्शेते; रामः+षष्ठः=रामष्षष्ठः; निः+सारः=निस्सारः; कृष्णः+सर्पः= कृष्णस्सर्पः (विकल्प से)।

र्—मुनिः+आगतः=मुनिरागतः।

2. "इदुदुपधस्य चाऽप्रत्ययस्य (8.3.41) इकारोकारोपधस्याऽऽप्रत्ययस्य विसर्गस्य षः स्यात्कुप्वोः। यथा—आविः+कृतम्=आविष्कृतम्, दुः+कृतम्=दुष्कृतम्, निः+प्रत्यूहम्=निष्प्रत्यूहम्, निः+क्रान्तः=निष्क्रान्तः।

3. कानाम्रेडिते (8.3.12) कान्नकारस्य रुः स्यादाम्रडिते परे। यथा—कान्+कान्=कांस्कान्।

4. उत्व. (क) "अतो रोरप्लुतादप्लुते (6.1.111) अप्लुतादतः परस्य रोः उः स्यादप्लुतेऽति" यथा—शिवस् (र्)+अर्च्यः=शिवोऽर्च्यः, बालस्(र्)+अयम्=बालोऽयम्, सः+अपि=सोऽपि, बालकः+अवदत्=बालकोऽवदत्।

5. (क) "खरवसानयोर्विसर्जनीयः (8.3.15) खरि अवसाने च परे रेफस्य विसर्जनीयः स्यात्पदान्ते।" (ख) "शर्परे विसर्जनीयः (8.3.35) शर्परे खरि विसर्जनीयस्य विसर्जनीयः, न त्वन्यत्।" उदाहरणार्थ—

(क) पयस्+सु=पयःसु, निस्–निः, पयस्–पयः, बहुशस्–बहुशः, बाल+सुपः=बालः,

(ख) निर्+निः, प्रातर्=प्रातः, अन्तर्=अन्तः, पुनर्=पुनः, पितृ–पितर्=पितः, मातृ–मातर्= मातः।

**5. स्वादिसन्धि-**

1. रुत्व-"ससजुषो रुः" (8.2.66) पदान्तस्य सस्य सजुष् शब्दस्य च रुः स्यात्। यथा— हरिस्+अवदत्=हरिरवदत्, वधूस्+एषा=वधूरेषा, शिशुस्+आगच्छति=शिशुरागच्छति, पितुस्+ इच्छा= पितुरिच्छा, भ्रातुर्+कन्या=भ्रातुःकन्या।

2. उत्व–

1. "अतो रोरप्लुतादप्लुते" (6.1.113) अप्लुताद् ह्रस्वात् अकारात् परस्य रेफस्य उकारः स्यात् अप्लुते अकारे परे। यथा—शिवस्(र्)+अर्च्यः=शिवोऽर्च्यः, सः+अपि=सोऽपि, बालस् (र्) अयम्=बालोऽयम्, बालकः+अवदत्=बालकोऽवदत्, रामः+अस्ति=रामोऽस्ति।
2. "हशि च (6.1.14) अप्लुतादतः परस्य रोः उः स्याद्धशि।" यथा—कः+अयम्=कोऽयम्; रामः+गच्छति=रामो गच्छति; सः+अपि=सोऽपि; शिवस्+वन्द्यः=शिवो वन्द्यः; नूतनः+ घटः=नूतनो घटः; मनः+रथः=मनोरथः; रावणः+हतः=रावणो हतः; मनः+भावः=मनोभावः; कः+गच्छति=को गच्छति, देवः+हसतिं=देवो हसति, रामः+वदति=रामो वदति।
3. "भोभगोअघोअपूर्वस्य योऽशि" (8.3.17) भोस्, भगोस्, अघोस् अकारपूर्वस्य च रेफस्य स्थाने यकारादेशो भवति अश् परे। एवं "हलि सर्वेषाम्" भोस्, भघोस्, अघोस्, अकारपूर्वस्य च यकारस्य लोपः स्यात् हल् प्रत्याहारे परे। यथा—भोस्+देवाः=भो देवाः, भोस्+लक्ष्मि=भो लक्ष्मि, भगोस्+नमस्ते=भगो नमस्ते, देवास्+हसन्ति=देवा हसन्ति, देवास्+नम्या=देवा नम्याः, अघोस्+याहि=अघो याहि।
4. (क) "रषाभ्यां नो णः समानपदे (8.4.1) एकपदस्थाभ्यां रेफषकाराभ्यां परस्य नस्य णः स्यात्।" (ख) "अट्कुप्वाङ्नुम्व्यवायेऽपि (8.4.2) अट् कवर्ग पवर्ग आङ्नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः स्यात्समानपदे।" (ग) "इण् कोः (8.3.57) इत्यधिकृत्य" (घ) आदेशप्रत्यययोः (8.3.59) कीर्+नः=कीर्णः, पूर्+नः=पूर्णः, रामेण, रामाणाम्, रामेषु, भवन्ति।
5. "रो रि" रेफस्य रेफे परे लोपः स्यात्। "ढ्रलोपे पूर्वस्य दीर्घोऽणः" ढकारस्य रेफस्य च लोपे सति ढकारे रेफे च परे पूर्वस्य अणो दीर्घः स्यात्। यथा—पुनर्+रमते=पुना रमते, हरिर्+रम्यः=हरी रम्यः, शम्भुर्+राजते=शम्भू राजते, अन्तर्+राष्ट्रियः=अन्ताराष्ट्रियः, निः+रवः= नीरवः, दुः+राजः= दूराजः, निः+रोगः=नीरोगः, प्रातः+रम्यम्=प्रातारम्यम्।
6. "एतत्तदोः सुलोपोऽकोरनञ्समासे हलि" अककारयोः एतत्तदोः यः सु तस्य लोपः स्यात् हलि परे न तु नञ् समासे। यथा—एषः+विष्णुः=एष विष्णुः, सः+शम्भुः=स शम्भुः, सः+लिखति=स लिखति, एषः+सखा=स सखा।

**(ञ) उपसर्ग/अव्यय-विवेचनम्**

"न व्येति इति अव्ययम्" "स्वरादिनिपातमव्ययम्" अर्थात् येषां पदानां लिङ्ग-संख्यानिमित्तको रूपभेदो नास्ति तानि "अव्ययानि" इत्युच्यन्ते। यथोक्तम्—

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्।।

अव्ययस्य भेदः—चत्वारो भेदाः—1. उपसर्गः, 2. क्रियाविशेषणम्, 3. समुच्चयबोधकम्, 4. मनोविकारसूचकम्।

1. उपसर्गः—यः क्रिया, संज्ञा तथा विशेषणशब्दानां प्रारम्भे योज्यते सः उपसर्गः।

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते।
प्रहाराहार-संहार-विहार-परिहारवत् ।।
धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्तते।
विशिनष्टि तमेवार्थमुपसर्गगतिस्त्रिधा।।

1. प्रहारः=प्र+हृ+घञ्+सु (आघातः)
2. आहारः=आ+हृ+घञ्+सु (भक्षणम्)
3. विहारः=वि+हृ+घञ्+सु (भ्रमणम्)
4. संहारः=सम् हृ+घञ्+सु (विनाशः, उपसंहारः)
5. परिहारः=परि+हृ+घञ्+सु (निराकरणम्)

संस्कृते उपसर्गाः 22 द्वाविंशतिः सन्ति—प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आ (आङ्), नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप। यथा—प्र+भू=प्रभवति, उद्+गम्=उद्गच्छति इत्यादयः।

2. क्रियाविशेषणम्—यः अव्ययशब्दः क्रियायाः विशेषतां प्रकटयति सः क्रियाविशेषण-अव्ययः। क्रियाविशेषणशब्दाः सर्वनामः, संख्यावाचकविशेषणं, तद्धितः तथा च कृदन्तः शब्दैः रचयन्ति।

क्रियाविशेषणस्य पञ्चभेदाः—

1. मूल अव्ययः, यथा—विना, वृथा, पृथक्, अन्तरः, उच्चैः, नीचैः, ह्य, श्व, दिवा, रात्रौ, अद्य इत्यादयः।
2. सङ्ख्यावाचकोद्भव अव्ययः, यथा—एकधा, द्विधा, त्रिधा, चतुर्धा, पञ्चधा इत्यादयः।
3. सर्वनामोद्भव अव्ययः, यथा—यदा, तदा, कदा, कदाचित्, इदानीम्, किम्, तथा इत्यादयः।
4. तद्धितोद्भव अव्ययः, यथा—पुत्रवत्, रामवत्, भस्मसात्, कृष्णवत्, आत्मसात् इत्यादयः।
5. कृदुद्भव अव्ययः, यथा—गत्वा, पठित्वा, भवितुम्, भुक्त्वा, ज्ञात्वा, परित्यज्य, श्रोतुम् इत्यादयः।
6. समुच्चयबोधक अव्ययः—येन समुदायस्य बोधो भवति। यथा—च, वा, तु, चेत्, किन्तु इत्यादयः।
7. मनोविकारसूचक अव्ययः—येन अव्ययेन मनस्य विभिन्न-विकारस्य व्यक्तो भवन्ति। यथा—हा, धिक्, हन्त, बत, आः, हुम्, हा, हा-हा इत्यादयः।

## (ट) सुबन्तविवेचनम्—

"अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" (1.2.45) धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वाऽर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात्। इति पाणिनिसूत्रानुसारं "प्रातिपदिकं" तद्भवति, यत् अर्थवत्, अधातुः अप्रत्ययः भवेत्।

संस्कृतभाषायां केवलं प्रातिपदिकं (सुप् तिङ् सहितं) प्रयोक्तव्यम्। "अपदं न प्रयुञ्जीत"। तादृशेन प्रातिपदिकेन साकं सुप् प्रत्ययस्य तिङ्प्रत्ययस्य वा योगेन पदत्वं साध्यते। सुप्प्रत्ययानां द्वारा शब्दरूपाणि, तिङ्प्रत्ययानां द्वारा धातुरूपाणि सञ्जायन्ते। "सुप्तिङन्तं पदम्" इति सूत्रेण सुबन्तं तिङन्तं च पदसंज्ञात्वं प्राप्नोति। सुप् अन्ते यस्य तत् सुबन्तम्। "स्वौजसमौट्छष्टा-भ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्-ङ्योस्सुप्" इति पाणिनीयसूत्रानुसारं "सु" तः आरम्भ "सुप्" पर्यन्तं विद्यमाना 21 प्रत्ययाः सुप्प्रत्ययत्वेन गृह्यन्ते।

| विभक्तिः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | सु (स्=ः) | औ | जस्(अस्) |
| द्वितीया | अम् | औट् (औ) | शस् (अस्) |
| तृतीया | टा (आ) | भ्याम् | भिस्(भिः) |
| चतुर्थी | ङे | भ्याम् | भ्यस्(भ्यः) |
| पञ्चमी | ङसि(अस्) | भ्याम् | भ्यस्(भ्यः) |
| षष्ठी | ङस् (अस्) | ओस्(ओः) | आम् |
| सप्तमी | ङि (इ) | ओस्(ओः) | सुप्(सु) |

1. अजन्तपुंलिङ्गशब्दाः—अकारान्ताः, इकारान्ताः, उकारान्ताः, ऋकारान्ताः, ऐकारान्ताः, ओकारान्ताः, औकारान्ताः च।
2. अजन्तस्त्रीलिङ्गशब्दाः—आकारान्ताः, इकारान्ताः, ईकारान्ताः, उकारान्ताः, ऊकारान्ताः, ऋकारान्ताः, ऐकारान्ताः, ओकारान्ताः, औकारान्ताः च।
3. अजन्तनपुंसकलिङ्गशब्दाः—अकारान्ताः, इकारान्ताः, उकारान्ताः, ऋकारान्ताः, एकारान्ताः, ऐकारान्ताः, ओकारान्ताः, औकारान्ताः च।
4. हलन्तपुंलिङ्गशब्दाः—चकारान्ताः, जकारान्ताः, तकारान्ताः, दकारान्ताः, नकारान्ताः, शकारान्ताः, षकारान्ताः, सकारान्ताः, हकारान्ताः च।
5. हलन्तस्त्रीलिङ्गशब्दाः—चकारान्ताः, जकारान्ताः, तकारान्ताः, दकारान्ताः, धकारान्ताः, नकारान्ताः, पकारान्ताः, भकारान्ताः, रेफान्ताः, वकारान्ताः, शकारान्ताः, षकारान्त.ः, सकारान्ताः, हकारान्ता च भवन्ति।
6. हलन्तनपुंसकलिङ्गशब्दाः—चकारान्ताः, जकारान्ताः, तकारान्ताः, दकारान्ताः, नकारान्ताः, रेफान्ताः, शकारान्ताः, षकारान्ताः, सकारान्ताः, हकारान्ता च भवन्ति।

अजन्तपुंल्लिङ्गशब्दरूपम्—

| 1. अकारान्त "राम" शब्दः, विभक्ति एकवचन, द्विवचन, बहुवचन, | 2. इकारान्त "हरि" शब्दः, विभक्ति एकवचन, द्विवचन, बहुवचन, | 3. ऋकारान्त "पितृ" शब्दः, विभक्ति एकवचन, द्विवचन, बहुवचन, |
|---|---|---|
| प्रथमा–रामः रामौ रामाः<br>हे राम हे रामौ हे रामाः | प्रथमा–हरिः हरी हरयः<br>हे हरे हे हरी हे हरयः | प्रथमा–पिता पितरौ पितरः<br>हे पितः हे पितरौ हे पितरः |
| द्वितीया–रामम् रामौ रामान् | द्वितीया–हरिम् हरी हरीन् | द्वितीया–पितरम् पितरौ पितॄन् |
| तृतीया–रामेण रामाभ्याम् रामैः | तृतीया–हरिणा हरिभ्याम् हरिभिः | तृतीया–पित्रा पितृभ्याम् पितृभिः |
| चतुर्थी–रामाय रामाभ्याम् रामेभ्यः | चतुर्थी–हरये हरिभ्याम् हरिभ्यः | चतुर्थी–पित्रे पितृभ्याम् पितृभ्यः |
| पञ्चमी–रामात् रामाभ्याम् रामेभ्यः | पञ्चमी–हरेः हरिभ्याम् हरिभ्यः | पञ्चमी–पितुः पितृभ्याम् पितृभ्यः |
| षष्ठी–रामस्य रामयोः रामाणाम् | षष्ठी–हरेः हर्योः हरिणाम् | षष्ठी–पितुः पित्रोः पितृणाम् |
| सप्तमी–रामे रामयोः रामेषु | सप्तमी–हरौ हर्योः हरिषु | सप्तमी–पितरि पित्रोः पितृषु |

अजन्तस्त्रीलिङ्गशब्दरूपम्—

| 4. आकारान्त "रमा" शब्दः, विभक्ति एकवचन, द्विवचन, बहुवचन, | 5. इकारान्त "मति" शब्दः, विभक्ति एकवचन, द्विवचन, बहुवचन, | 6. ईकारान्त "नदी" शब्दः, विभक्ति एकवचन, द्विवचन, बहुवचन, |
|---|---|---|
| प्रथमा–रमा रमे रमाः<br>हे रमे हे रमे हे रमाः | प्रथमा–मतिः मती मतयः<br>हे मते हे मती हे मतयः | प्रथमा– नदी नद्यौ नद्यः<br>हे नदि हे नद्यौ हे नद्यः |
| द्वितीया–रमाम् रमे रमाः | द्वितीया–मतिम् मती मतीः | द्वितीया–नदीम् नद्यौ नदीः |
| तृतीया–रमया रमाभ्याम् रमाभिः | तृतीया–मत्या मतिभ्याम् मतिभिः | तृतीया–नद्याः नदीभ्याम् नदीभिः |
| चतुर्थी–रमायै रमाभ्याम् रमाभ्यः | चतुर्थी–मत्यै, मतये मतिभ्याम् मतिभ्यः | चतुर्थी–नद्यै नदीभ्याम् नदीभ्यः |
| पञ्चमी–रमायाः रमाभ्याम् रमाभ्यः | पञ्चमी–मत्याः, मतेः मतिभ्याम् मतिभ्यः | पञ्चमी–नद्याः नदीभ्याम् नदीभ्यः |
| षष्ठी–रमायाः रमयोः रमाणाम् | षष्ठी– मत्याः, मतेः मत्योः मतिनाम् | षष्ठी–नद्याः नद्योः नदीनाम् |
| सप्तमी–रमायाम् रमयोः रमासु | सप्तमी–मत्याम्, मतौ मत्योः मतिषु | सप्तमी–नद्याम् नद्योः नदीषु |

## अजन्तनपुंसकलिङ्गशब्दरूपम्—

| 7. अकारान्त "ज्ञान" शब्दः, विभक्ति एकवचन, द्विवचन, बहुवचन, | 8. हलन्तपुंल्लिङ्ग "तत्" शब्दः, विभक्ति एकवचन, द्विवचन, बहुवचन, | 9. हलन्तपुंल्लिङ्ग "युष्मद्" शब्दः, विभक्ति एकवचन, द्विवचन, बहुवचन, |
|---|---|---|
| प्रथमा–ज्ञानम् ज्ञाने ज्ञानानि हे ज्ञान हे ज्ञाने हे ज्ञानानि | प्रथमा– सः तौ ते | प्रथमा–त्वम् युवाम् यूयम् |
| द्वितीया–ज्ञानम् ज्ञाने ज्ञानानि | द्वितीया–तम् तौ तान् | द्वितीया–त्वाम्, त्वा युवाम् युष्मान् |
| तृतीया–ज्ञानेन ज्ञानाभ्याम् ज्ञानैः | तृतीया–तेन ताभ्याम् तैः | तृतीया–त्वया युवाभ्याम् युष्माभिः |
| चतुर्थी– ज्ञानाय ज्ञानाभ्याम् ज्ञानेभ्यः | चतुर्थी–तस्मै ताभ्याम् तेभ्यः | चतुर्थी–तुभ्यम्, ते युवाभ्याम् युष्मभ्यम् |
| पञ्चमी–ज्ञानात् ज्ञानाभ्याम् ज्ञानेभ्यः | पञ्चमी–तस्मात् ताभ्याम् तेभ्यः | पञ्चमी–त्वत् युवाभ्याम् युष्मत् |
| षष्ठी–ज्ञानस्य ज्ञानयोः ज्ञानानाम् | षष्ठी– तस्य तयोः तेषाम् | षष्ठी–तव, ते युवयोः युष्माकम् |
| सप्तमी–ज्ञाने ज्ञानयोः ज्ञानेषु | सप्तमी–तस्मिन् तयोः तेषु | सप्तमी–त्वयि युवयोः युष्मासु |

## हलन्तपुंल्लिङ्ग–स्त्री–नपुंसकलिङ्गशब्दरूपाणि—

| 10. हलन्तपुंल्लिङ्ग "इदम्" शब्दः, विभक्ति एकवचन, द्विवचन, बहुवचन, | 11. हलन्तस्त्रीळिङ्ग "इदम्" शब्दः विभक्ति एकवचन, द्विवचन, बहुवचन, | 12. हलन्तनपुंसक "इदम्" शब्दः, विभक्ति एकवचन, द्विवचन, बहुवचन, |
|---|---|---|
| प्रथमा– अयम् इमौ इमे | प्रथमा– इयम् इमे इमाः | प्रथमा– इदम् इमे इमानि |
| द्वितीया–इमम् इमौ इमान् | द्वितीया–इमाम्, एनाम् इमे, एने इमाः, एनाः | द्वितीया–इदम्, एनत् इमे, एने इमानि, एनानि |
| तृतीया–अनेन आभ्याम् एभिः | तृतीया–अनया, एनया आभ्याम् आभिः | तृतीया–अनेन, एनेन आभ्याम् एभिः |
| चतुर्थी–अस्मै आभ्याम् एभ्यः | चतुर्थी–अस्यै आभ्या-् आभ्यः | चतुर्थी– अस्मै आभ्याम् एभ्यः |
| पञ्चमी–अस्मात् आभ्याम् एभ्यः | पञ्चमी–अस्याः आभ्याम् आभ्यः | पञ्चमी– अस्मात् आभ्याम् एभ्यः |
| षष्ठी–अस्य अनयोः एषाम् | षष्ठी–अस्याः अनयोः, एनयोः आसाम् | षष्ठी– अस्य अनयोः एषाम् |
| सप्तमी–अस्मिन् अनयोः एषु | सप्तमी–अस्याम् अनयोः, एनयोः आसु | सप्तमी– अस्मिन् अनयोः एषु |

हलन्तपुंल्लिङ्ग-स्त्री-नपुंसकलिङ्गशब्दरूपाणि—

| 13. हलन्तपुंल्लिङ्ग "अस्मद्" शब्दः, विभक्ति एकवचन, द्विवचन, बहुवचन | 14. हलन्तस्त्रीळिङ्ग "किम्" शब्दः, विभक्ति एकवचन, द्विवचन, बहुवचन | 15. हलन्तनपुंसकळिङ्ग "किम्" शब्द विभक्ति एकवचन, द्विवचन, बहुवचन |
|---|---|---|
| प्रथमा- अहम् आवाम् वयम् | प्रथमा- का के काः | प्रथमा- किम् के कानि |
| द्वितीया-माम्, मा आवाम्, नौ अस्मान्, नः | द्वितीया-काम् के काः | द्वितीया-किम् के कानि |
| तृतीया-मया आवाभ्याम् अस्माभिः | तृतीया- कया काभ्याम् काभिः | तृतीया-केन काभ्याम् कैः |
| चतुर्थी-मह्यम् आवाभ्याम् अस्मभ्यम्, | चतुर्थी-कस्मै काभ्याम् काभ्यः | चतुर्थी-कस्मै काभ्याम् केभ्यः |
| पञ्चमी-मत् आवाभ्याम् अस्मत् | पञ्चमी-कस्याः काभ्याम् काभ्यः | पञ्चमी-कस्मात् काभ्याम् केभ्यः |
| षष्ठी-मम आवयोः अस्माकम् | षष्ठी-कस्याः कयोः कासाम् | षष्ठी-कस्य कयोः केषम् |
| सप्तमी-मयि आवयोः अस्मासु | सप्तमी-कस्याम् कयोः कासु | सप्तमी-कस्मिन् कयोः केषु |

## (ठ) तिङन्तविवेचनम् (धातुप्रकरणम्)—

प्रत्येकस्मिन् वाक्ये या काऽपि क्रिया भवत्येव। क्रियापदानि द्विविधानि—1. तिङन्तानि, 2. कृदन्तानि च। तिङ् अन्ते येषां तानि तिङन्तानि। पाणिनिमतानुसारं 18 अष्टादश तिङ् प्रत्ययाः भवन्ति

धातवः त्रिविधाः भवन्ति—1. परस्मैपदिनः, 2. आत्मनेपदिनः, 3. उभयपदिनः च। प्रथमपुरुषः, मध्यमपुरुषः, उत्तमपुरुषः इति क्रमेण पुरुषाः त्रयः। पुनश्च तत्र एकवचनं, द्विवचनं, बहुवचनं चेति त्रीणि वचनानि भवन्ति।

**1. परस्मैपदिनः प्रत्ययाः**

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमपुरुषः | सः-तिप्(ति) पठति | तौ-तस्(तः) पठतः | ते-झि(अन्ति) पठन्ति |
| मध्यमपुरुषः | त्वम्—सिप्(सि) पठसि | युवाम्—थस्(थः) पठथः | यूयम्—थ पठथ |
| उत्तमपुरुष | अहम्-मिप्(मि) पठामि | आवाम्-वस्(वः) पठावः | वयम्-मस्(मः) पठामः |

**2. आत्मनेपदिनः प्रत्ययाः**

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमपुरुषः | त (वर्धते) | आताम् (वर्धेते) | झ(वर्धन्ते) |
| मध्यमपुरुषः | थास्(वर्धसे) | आथाम्(वर्धेथे) | ध्वम्(वर्धध्वे) |
| उत्तमपुरुष | इट् (वर्धे) | वहि(वर्धावहे) | महिङ्(वर्धामहे) |

एतेषाम् आरम्भे "ल" अस्ति इति कारणात् "लकारः" इत्युच्यते। पाणिनि उक्ताः दशलकाराः इत्थं भवन्ति। वर्तमान-भूत-भविष्यरूपेण त्रयः कालाः भवन्ति।

| क्र. सं | लकारः | अर्थः | सूत्रम् | उदाहरणम् |
|---|---|---|---|---|
| 1. | लट् | वर्तमानम् | वर्तमाने लट् | भवति |
| 2. | लिट् | अनद्यतनपरोक्षभूतम् | परोक्षे लिट् | बभूव |
| 3. | लुट् | अनद्यतनभविष्यत् | अनद्यतने लुट् | भविता |
| 4. | लृट् | सामान्यभविष्यत् | लृट् शेषे च | भविष्यति |
| 5. | लोट् | विधि-आशीर्वाद-आदेशालयः | "लोट् च, आशिषि लिङ्लोटौ' | भवतु |
| 6. | लङ् | अनद्यतनभूतम् | अनद्यतने लङ् | अभवत् |
| 7. | लुङ् | अद्यतनभूतार्थे | लुङ् | अभूत् |
| 8. | विधिलिङ् | विधि-निमन्त्रणसत्कारादयः | "विधिनिमन्त्रणा- | भवेत् |
| 9. | आशीर्लिङ् | आशीर्वाद | आशिषि लिङ्लोटौ | भूयात् |
| 10. | लृङ् | हेतुहेतुमद्भावभविष्यत् | "लिङ्निमित्ते लृङ् क्रियातिपत्तौ" | अभविष्यत् |

धातुषु दश गणाः भवन्ति।

भ्वाद्यदादी जुहोत्यादिदिवादिः स्वादिरेव च।
तुदादिश्च रुधादिश्च तनक्र्यादिचुरादयः।।

धातुरूपम्—परस्मैपदिनः प्रत्ययाः—

| लकार | पुरुष | एकवचन द्विवचन बहुवचन | लकार, पुरुष | एकवचन द्विवचन बहुवचन |
|---|---|---|---|---|
| लट् | प्रथमपुरुष<br>मध्यमपुरुष<br>उत्तमपुरुष | भवति भवतः भवन्ति<br>भवसि भवथः भवथ<br>भवामि भवावः भवामः | लिट्-प्रथमपुरुष<br>मध्यमपुरुष<br>उत्तमपुरुष | बभूव बभूवतुः बभूवुः<br>बभूविथ बभूवथुः बभूव<br>बभूव बभूविव बभूविम |
| लुट् | प्रथमपुरुष<br>मध्यमपुरुष<br>उत्तमपुरुष | भविता भवितारौ भवितारः<br>भवितासि भवितास्थः भवितास्थ<br>भवितास्मि भवितास्व भवितास्म | लृट् प्रथमपुरुष<br>मध्यमपुरुष<br>उत्तमपुरुष | भविष्यति भविष्यतः भविष्यन्ति<br>भविष्यसि भविष्यथः भविष्यथ<br>भविष्यामि भविष्यावः भविष्यामः |
| लोट् | प्रथमपुरुष<br>मध्यमपुरुष<br>उत्तमपुरुष | भवतु भवताम् भवन्तु<br>भव भवतम् भवत<br>भवानि भवावः भवामः | लङ्-प्रथमपुरुष<br>मध्यमपुरुष<br>उत्तमपुरुष | अभवत् अभवताम् अभवन्<br>अभवः अभवतम् अभवत<br>अभवम् अभवाव अभवाम |

क्रमशः ...

| | | | | |
|---|---|---|---|---|
| विधि लिङ् | प्रथमपुरुष<br>मध्यमपुरुष<br>उत्तमपुरुष | भवेत् भवेताम् भवेयुः<br>भवेः भवेतम् भवेत<br>भवेयम् भवेव भवेम | आ.लि. प्रथमपुरुष<br>मध्यमपुरुष<br>उत्तमपुरुष | भूयात् भूयास्ताम् भूयासुः<br>भूयाः भूयास्तम् भूयास्त<br>भूयासम् भूयास्व भूयास्म |
| लुङ् | प्रथमपुरुष<br>मध्यमपुरुष<br>उत्तमपुरुष | अभूत् अभूताम् अभूवन्<br>अभूः अभूतम् अभूत<br>अभूवम् अभूव अभूम | लृङ् प्रथमपुरुष<br>मध्यमपुरुष<br>उत्तमपुरुष | अभविष्यत् अभविष्यताम् अभविष्यन्<br>अभविष्यः अभविष्यतम् अभविष्यत<br>अभविष्यम् अभविष्याव अभविष्याम |

**धातुरूपम्-आत्मनेपदिनः प्रत्ययाः**

| लकार | पुरुष | एकवचन द्विवचन बहुवचन | लकार | पुरुष | एकवचन द्विवचन बहुवचन |
|---|---|---|---|---|---|
| लट् | प्रथमपुरुष<br>मध्यमपुरुष<br>उत्तमपुरुष | भाषते भाषेते भाषन्ते<br>भाषसे भाषेथे भाषध्वे<br>भाषे भाषावहे भाषामहे | लिट् | प्रथमपुरुष<br>मध्यमपुरुष<br>उत्तमपुरुष | बभाषे बभाषते बभाषिरे<br>बभाषिषे बभाषथे बभाषिध्वे<br>बभाषे बभाषिवहे बभाषिमहे |
| लुट् | प्रथमपुरुष<br>मध्यमपुरुष<br>उत्तमपुरुष | भाषिता भाषितारौ भाषितारः<br>भाषितासे भाषितासाथे भाषिताध्वे<br>भाषिताहे भाषितास्वहे भाषितास्महे | लृट् | प्रथमपुरुष<br>मध्यमपुरुष<br>उत्तमपुरुष | भाषिष्यते भाषिष्येते भाषिष्यन्ते<br>भाषिष्यसे भाषिष्येथे भाषिष्यध्वे<br>भाषिष्ये भाषिष्यावहे भाषिष्यामहे |
| लोट् | प्रथमपुरुष<br>मध्यमपुरुष<br>उत्तमपुरुष | भाषताम् भाषेताम् भाषन्ताम्<br>भाषस्व भाषेथाम् भाषध्वम्<br>भाषै भाषावहै भाषामहै | लङ् | प्रथमपुरुष<br>मध्यमपुरुष<br>उत्तमपुरुष | अभाषत अभाषेताम् अभाषन्त<br>अभाषथाः अभाषेथाम् अभाषध्वम्<br>अभाषे अभाषावहि अभाषामहि |
| विधि लिङ् | प्रथमपुरुष<br>मध्यमपुरुष<br>उत्तमपुरुष | भाषेत भाषेयाताम् भाषेरन्<br>भाषेथाः भाषेयाथाम् भाषेध्वम्<br>भाषेय भाषेवहि भाषेमहि | आ. लिङ् | प्रथमपुरुष<br>मध्यमपुरुष<br>उत्तमपुरुष | भाषिषीष्ट भाषिषीयास्ताम् भाषिषीरन्<br>भाषिषीष्ठाः भाषिषीयास्थाम् भाषिषीध्वम्<br>भाषिषीय भाषिषीवहि भाषिषीमहि |

क्रमशः ..............

| | | | | | |
|---|---|---|---|---|---|
| लुङ् | प्रथमपुरुष | अभाषिष्ट अभाषिषाताम् अभाषिषत | लृङ् | प्रथमपुरुष | अभाषिष्यत् अभाषिष्येताम् अभाषिष्यन्त |
| | मध्यमपुरुष | अभाषिष्ठाः अभाषिषाथाम् अभाषिध्वम् | | मध्यमपुरुष | अभाविष्यथाः अभाविष्ये अभाषिष्यध्वम् |
| | उत्तमपुरुष | अभाषिषि अभाषिष्वहि अभाषिष्महि | | उत्तमपुरुष | अभाषिष्ये अभाषिष्यावहि अभाषिष्यामहि |

**(ङ) कारकम्—विभक्तिविवेचनम्—**

**कर्ता कर्म च करणं सम्प्रदानं तथैव च।**
**अपादानाधिकरणमित्येवं कारकाणि षट्॥**

1. कर्ता—"स्वतन्त्रः कर्ता" क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात्।
2. कर्म—"कर्तुरीप्सिततमं कर्म" कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात्।
3. करणम्—"साधकतमं करणम्" क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात्।
4. सम्प्रदानम्—"कर्मणा यमभिप्रैति स सम्प्रदानम्" दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञं स्यात्।
5. अपादान्—"ध्रुवमपायेऽपादानम्" अपायो विश्लेषः, तस्मिन्साध्ये यद् ध्रुवमवधिभूतं कारकं तदपादानं स्यात्।
6. अधिकरणम्—"आधारोऽधिकरणम्" कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणम्।

**1. प्रथमाविभक्तिः**—"प्रातिपदिकार्थ-लिङ्ग-परिमाण-वचनमात्रे प्रथमा" नियतोपस्थितिकः प्रातिपदिकार्थः। मात्रशब्दस्य प्रत्येकं योगः। प्रातिपदिकार्थमात्रे (उच्चैः, नीचैः, कृष्णः, श्रीः, ज्ञानम्) लिङ्गमात्रे (तटः, तटी, तटम्) परिमाणमात्रे (द्रोणो व्रीहिः) संख्यामात्रे(एकः, द्वौ, बहवः) च प्रथमा स्यात्। एवं च सम्बोधने प्रथमा स्यात्।

सु (स्=ः) औ जस्(अस्)

**2. द्वितीयाविभक्तिः**—(क) "कर्मणि द्वितीया" अनुक्ते कर्मणि द्वितीया स्यात्। यथा—हरिः सेव्यते। (ख) "अकथितं च" अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्। यथा—गां दोग्धि पयः। इत्यादि (ग) "उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु। द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते॥ इति वार्तिकेण उभयतः, सर्वतः, धिक्, उपर्युपरि, अधोऽधः, अध्यधि, त्रयः आम्रेडितान्ताः इति पदानां योगेऽपि द्वितीया भवति। (घ) "अभितःपरितःसमयानिकषाहा-प्रतियोगेऽपि" इति वार्तिकेण अभितः, परितः, समया, निकषा, हा इति पदानां योगेऽपि द्वितीया स्यात्। (ङ) "अन्तराऽन्तरेण युक्ते" इति सूत्रेण अन्तरा, अन्तरेण योगे द्वितीया विभक्तिः स्यात्।

अम् औट् (औ) शस् (अस्)

**3. तृतीयाविभक्तिः**—(क) "कर्तृकरणयोस्तृतीया" इति सूत्रेण अनभिहिते कर्तरि करणे च तृतीयाविभक्तिः स्यात्। यथा—रामेण बाणेन हतो बाली। (ख) "सहयुक्तेऽप्रधाने" इति सूत्रेण सह, साकं, समं, सार्धम् इत्यादि सहार्थकपदानां योगे तृतीयाविभक्तिः स्यात्। यथा—पुत्रेण सहागतः

पिता। (ग) "येनाङ्गविकारः" इति सूत्रेण येन विकृतेन अंगेन अखिलशरीरस्य विकृतिः उक्ता, तेन अंगवाचकशब्देन सह तृतीयाविभक्तिः स्यात्। यथा—अक्ष्णा काणः।

टा (आ) भ्याम् भिस्(भिः)

4. चतुर्थीविभक्तिः—(क) "चतुर्थी सम्प्रदाने" इति सूत्रेण सम्प्रदानसंज्ञकेषु पदेषु चतुर्थीविभक्तेः प्रयोगः भवति। यथा—विप्राय गां ददाति। (ख) "रुच्यर्थानां प्रीयमाणः" इति सूत्रेण रुच्यर्थकधातुभिर्योगे प्रीयमाणस्य सम्प्रदानसंज्ञा भवति। (ग) "नमः स्वस्ति-स्वाहा-स्वधाऽलं-वषड्योगाच्च" इति वार्तिकेण नमः, स्वस्ति, स्वाहा, स्वधा, अलं, वषट् इत्यादिभिर्योगे चतुर्थीविभक्तिः स्यात्। यथा—हरये नमः, प्रजाभ्यः स्वस्ति, अग्नये स्वाहा इत्यादि।

ङे भ्याम् भ्यस् (भ्यः)

5. पंचमी विभक्तिः—(क) "अपादाने पंचमी" इति सूत्रेण अपादानसंज्ञकेषु पदेषु पंचमीविभक्तिः स्यात्। यथा—ग्रामाद् आयाति। (ख) "भीत्रार्थानां भयहेतुः" इति सूत्रेण भी, त्रै इत्यादिभिर्धातुभिर्योगे पंचमी विभक्तिः स्यात्। यथा—चौराद् बिभेति। (ग) "पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्" इति सूत्रेण पृथक्, विना, नाना इत्यादिभिर्योगे तृतीया, पंचमी, द्वितीया स्यात्। यथा—पृथक् रामेण रामात् रामं वा।

ङसि (अस्) भ्याम् भ्यस् (भ्यः)

6. षष्ठी-विभक्तिः—(क) "षष्ठी शेषे" इति सूत्रेण कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः सम्बन्धः शेषस्तत्र षष्ठी स्यात्। यथा—मातुः स्मरति। (ख) "कर्तृकर्मणोः कृतिः" इति सूत्रेण अनुक्तकर्तायां कर्मणि च षष्ठी स्यात्। यथा—कृष्णस्य कृतिः। (ग) "षष्ठी हेतुप्रयोगे" अनेन सूत्रेणापि हेतु-शब्देन हेतुप्रयोगे षष्ठी स्यात्। यथा—अन्नस्य हेतोः वसति।

ङस् (अस्) ओस् (ओः) आम्

7. सप्तमी-विभक्तिः—(क) "सप्तम्यधिकरणे च" इति सूत्रेण अधिकरणे सप्तमी स्यात्। यथा—कटे आस्ते, स्थाल्यां पचति। (ख) "निमित्तात्कर्मयोगे" इति वार्तिकेण निमित्तेषु क्रियाफलवाचकेषु च शब्देषु सप्तमी स्यात्। यथा—

चर्मणि द्वीपिनं हन्ति, दन्तयोर्हन्ति कुञ्जरम्।
केशेषु चमरीं हन्ति, सीम्नि पुष्कलको हतः।।

ङि (इ) ओस् (ओः) सुप् (सु)

**(ढ) प्रत्ययविवेचनम्—Suffix**

**1. कृदन्त (Agentives)**

"प्रतीयते अर्थविशेषो बोध्यते येन सः प्रत्ययः"। प्रत्ययाः सामान्यतः द्विधा भवन्ति। धातोः विधीयमानः प्रत्ययः कृदन्तः इत्युच्यते। कृदन्तरूपाणि कदाचित् क्रियार्थम् असमापिकाक्रियार्थं वा बोधयन्ति। कृदन्तेभ्यः सुप् प्रत्ययाः भवन्ति। क्वचिदव्ययत्वेन च व्यवहारः भवति कृदन्तानाम्।

कृत्यप्रत्ययाः सप्त भवन्ति। ते यथा—1. तव्यत्, 2. तव्य, 3. अनीयर्, 4. केलिमर्, 5. यत्,

6. क्यप्, 7. ण्यत् इत्येतेषां कृत्यप्रत्ययत्वेन व्यवहारः। एते कर्मवाच्ये भाववाच्ये च उपयुज्यते, न तु कर्तरि। उक्तञ्च सूत्रम्—"तयोरेव कृत्यक्तखलर्थाः" यथा—मया गन्तव्यम्, त्वया कर्तव्यम्, भवता करणीयम् इत्यादि।

**1. निरन्तरतासूचकवर्तमानकालिकविशेषणम्–( शतृ, शानच् )**

(क) शतृ (अत्) परस्मैपदी—भवत (पुं०) भवन्ति (स्त्री०) भवत (नपुं०)।

(ख) शानच् (आन्) आत्मनेपदी–कम्पमाणः (पुं०), कम्पमाना, (स्त्री०) कम्पमानम् (नपुं०)।

**2. पूर्णताबोधकभूतकालिकविशेषणम्–( क्त, क्तवतु )**

(क) क्त (त) कर्मवाच्ये भाववाच्ये च—कृतः(पुं०), कृता(स्त्री०), कृतम् (नपुं०)।

(ख) क्तवतु (तव) कर्तृवाच्ये—गतवान् (पुं०), गतवती (स्त्री०), गतवत् (नपुं०)।

**3. योग्यताबोधकभविष्यत्कालिकविशेषणम् ( कृत्य )**

| प्रत्ययः | धातुः | रूपम ( पुं० स्त्री० नपुं० ) | अर्थः |
|---|---|---|---|
| 1. तव्यत्, | भू | भवितव्यः, भवितव्या, भवितव्यम् | भवितुं योग्य |
| 2. तव्य, | गम्<br>पठ् | गन्तव्यः, गन्तव्या, गन्तव्यम्<br>पठितव्यः, पठितव्या, पठितव्यम् | गन्तुं योग्यं<br>पठितुं योग्यं |
| 3. अनीयर्, | दृश्, कृ,<br>पच्, गम्, | दर्शनीयः, करणीयः, पचनीयः, गमनीयः,<br>दर्शनीया, करणीया, पचनीया, गमनीया,<br>दर्शनीयम्, करणीयम्, पचनीयम्, गमनीयम्, | कर्तुं योग्यं |
| 4. केलिमर्, (एलिम) | पच् | पचेलिमः, पचेलिमा, पचेलिमम्, | |
| 5. यत्, (य) | गम् | गम्यः, गम्या, गम्यम्, | |
| 6. क्यप्, (य) | शिक्ष् | शिष्यः, शिष्या, शिष्यम्, | |
| 7. ण्यत् (य) | क्रि | कार्यः, कार्या, कार्यम्, | |

**4. कर्तृवाचकविशेषणम्–कृत् प्रत्ययः कर्तृवाच्ये—**

| प्रत्ययः | धातुः | रूपम् ( पुं० स्त्री० नपुं० ) | अर्थः |
|---|---|---|---|
| ण्वुल्( अक) | | कारकः कारिका कारकम् | |
| तृच्(इ) | | दातृ दात्री दातृ | |
| ण्वुन् (अक) | | नर्तकः नर्तकी+ | |
| णिनि (इन्) | | उपकारी उपकारिणी + | |
| क (अ) | | जलदः जलदा जलदम् | |
| अण् (अ) | | कुम्भ+कृ+अण्=कुम्भकारः, | |

क्रमशः ..............

| | | |
|---|---|---|
| ट (अ) | वने+चर+अ=वनेचर:, | |
| ड (अ) | सरस्+जन्+अ=सरोजम् | |
| क्विप् | धर्म+विद्+क्विप्=मर्मविद्, | |
| (सर्वापहारलोप) | धर्मविद्, शास्त्रविद् | |

**5. अन्यकृदन्तविशेषणम्-**

| | | |
|---|---|---|
| क | तुमुन्, तुम् | गम्+तुम्=गन्तुम्, पठ्+तुम्=पठितुम्, |
| ख | क्त्वा, ल्यप् | गम्+क्त्वा=गत्वा, आ+गम्+ल्यप्=आगत्य, |
| ग | ल्युट्(अन्) | भ्+अन्=भवनम्, हसनम्, श्रवणम्, पठनम् |
| घ | घञ् | भू+अ=भावः, पच्+अ=पाकः, पठ्+अ=पाठः<br>विग्रहे तु पठनम्=पाठः, पतनम्=पातः, भवनम्=भावः |

| धातु | क्तवतु | क्त्वा | तुमुन् | तव्य | अनीयर् | शतृ | शानच् |
|---|---|---|---|---|---|---|---|
| पठ् | पठितवान् | पठित्वा | पठितुम् | पठितव्यः | पठनीयः | पठन् | + + |
| गम् | गतवान् | गत्वा | गन्तुम् | गन्तव्यः | गमनीयः | गच्छन् | + + |
| अधिइ | अधीतवान् | अधीत्य | अध्येतुम् | अध्येतव्यः | अध्ययनीयः | + + | अधीयानः |
| कथ् | कथितवान् | कथयित्वा | कथयितुम् | कथयितव्यः | कथनीयः | कथयन् | + + |

**2. तद्धितप्रत्यय—**

"तेभ्यः अर्थेभ्यः हिता उपयोगिनः प्रत्ययाः तद्धिताः"। "ये प्रत्ययाः संज्ञा, सर्वनाम, विशेषण, अव्ययादि शब्दानां परे तिष्ठन्ति एवं च भिन्नार्थबोधको भवन्ति ते तद्धिताः"।

1. **संज्ञा**—पृथिवी इति संज्ञाशब्दे अण् या अम् (अ)" पार्थिवः, (पृथिव्यां भवः जातः विकारः ईश्वरः अयं पार्थिवः।) शिव+अण्=शैवः।
2. **सर्वनाम**—1. मम अयम्=मदीयः, (अस्मद्+छ+ईय) 2. मम अयम्=मामकः (अस्मद्+अण्) 3. मम अयम् मामकीनः (अस्मद्+खञ्+ईन्) मम सम्बन्धिनः।
3. **विशेषण**—1. अनयोः अयम् अतिशयेन प्रियः=प्रिय+तरप् (तर) प्रियतरः।
   2. प्रिय इयसुन् (ईयस्) प्रेयान्।
4. **अव्ययम्**—1. श्वः भवः श्वस्+त्य(त्यप्)=श्वस्त्यः, 2. श्वस्+तन (ट्यु, तुट्)=श्वस्तनः, 3. श्वस्+तिक्(उय्, तुट्)=शौवस्तिकः।
5. **तस्यापत्यम्(अपत्यार्थे प्रयुक्तप्रत्ययः)** (अण्, इञ्, ठक्, ण्य, यञ्, ष्यन्, फक्)।
   1. अण् (अ) पुत्रस्यापत्यम्=पौत्रः, रघोः अपत्यम्=राघवः, दुहिता अपत्यम्=दौहित्रः। 2. इक् (इ) दशरथस्यापत्यम्=दाशरथिः, दक्षस्यापत्यम्=दाक्षिः। 3. ठक् (एय्) गंगायाः अपत्यम्=गांगेयः, राधायाः अपत्यम्=राधेयः, कुन्त्याः अपत्यम्=कौन्तेयः। 4. ण्य, यञ् ष्यन्(य) दितेः अपत्यम्=दैत्यः, गर्गस्यापत्यम्=गार्ग्यः, चिते अपत्यम्=चैत्यः। 5. फक् (आयन्) नडस्यापत्यम्=नाडायनः, गर्गस्यापत्यम्=गार्ग्यायनः।

**6. सा अस्य देवता ( अण् अ )**

1. अण् (अ) शिव देवता अस्य शैवः, शक्तिः देवता अस्य शाक्तः।

**7. "तद् अधीते तद् वेद" ( अण्अ ), ठक् ( इक् ), पुन् ( अक् )**

1. अण्( अ) व्याकरणमधीते वेद वा वैयाकरणः, वैद्यकमधीते वेद वा वैद्यः, निरुक्तमधीते वेद वा नैरुक्तः, छन्दमधीते वेद वा छान्दसः, ज्योतिषमधीते वेद वा ज्यौतिषः। 2. ठक् (इक्) न्यायमधीते वेद वा नैयायिकः, वार्तिकः, ऐतिहासिकः, पौराणिकः, साहित्यिकः, वैदिकः, याज्ञिकः, तार्किकः, आलंकारिकः, मासिकः, दार्शनिकः। 3. पुन्( अक्) क्रममधीते वेद वा क्रमकः, पदकः, शिक्षकः, मीमांसकः।

**8. तत्र जातः, तत्र+भवः,-छ ( ईय ) त्यक् ( त्य ) यत् ( य ) घ ( इय )**

1. छ (ईय) शालायां जातः भवः वा शालीयः (शाला+ईय) मालीयः, भारतीयः, पूर्वीयः, उत्तरीयः। 2. त्यक्(त्य) दक्षिणस्यां जातः भवः वा दाक्षिणात्यः। (दक्षिण+त्य) 3. यत्( य) दिवि भवः जातः वा दिव्यः, प्राच्यः, उदीच्यः, ग्राम्यः, ग्रामीणः, आपः, अन्त्यः, वन्यः, अवाच्यः। 4. घ (इय) राष्ट्रे भवः जातः वा राष्ट्रियः आदि।

**9. तेन प्रोक्तम्-अण्( अ ) छ( ईय )**

1. अण्( अ) ऋषिणा प्रोक्तम् आर्षम्, माणवकः, पातञ्जलम्। 2. छ(ईय) वाल्मीकिना प्रोक्तं वाल्मीकीयम्, पाणिनीयम्।

**10. तस्य इदम् -छ ( ईय ) खञ् ( ईन् )**

1. छ(ईय) तस्य अयं तदीयः, तदीया, तदीयम्। अस्य अयं यदीयः, यदीया, यदीयम्। मम अयं मदीयः, अण्(अ) मामकः। 2. खञ्(ईन) मामकीनः, भवतः अयं (ठक्-क) भावत्कः, भवतः अयं (ईय) भवदीयः।

**11. तद् अस्य अस्ति अथवा तद् अस्मिन् अस्ति। (मतुप्( मत् वत्) इन् विनि( विन्) ग्मिनि (ग्मिन्)**

1. मतुप्( मत् वत्) गौ अस्ति अस्य गोमानं, गोमती। श्रीमान्, श्रीमती। वलवान्, वलवती। बुद्धिमान्, बुद्धिमती। गुणवान्, गुणवती, रूपवान्, रूपवती। 2. इन्त्वलइन्त्वलिनः, वली, वलिनी, वलि। गुणी, गुणिनी, गुणि। 3. विनि( विन्) तपः अस्ति अस्य अस्मिन् वा तपस्विन्, -तपस्वी, तपस्विनी, तपस्वि। 4. ग्मिनि( ग्मिन्) वाक् अस्ति अस्य अस्मिन् वा वाग्ग्यी, वाच ग्मिन् वाग्ग्मिन् (वाग्ग्मी पंडितः)

**12. तद् अस्य पण्यम्—**

1. ठक् (इक्) लावणिकः(लवणविक्रेता) मौदनिकः (मोदी) तद् अस्य प्रहरणम्-

1. ठक्(इक्) आसिकः, चाक्रिकः, धानुष्कः, 2. ईकक्(ईक्) शाक्तीकः, याष्टीकः, व्राजिकः, 3. इन् शुली, त्रिशुली, चक्री, वज्री, मुसली।

**13. अतिशयवाचकप्रत्ययः-(तरप्, तमप्, ईयसुन्, इष्ठन्)**

1. तरप्- तौलनिकः अनयोः अयं लघुः लघु तरप् लघुतर, 2. ईयसुन्-लघु ईयसुन् लघीयान्।

3. तमप्-आत्यनिकः , एषां अयं लघु लघुतमः, (लघु तमप्) 4. इष्ठन्-लघिष्ठः (लघु इष्ठन्)

| शब्दः | तर | तम | ईयस | इष्ठ |
|---|---|---|---|---|
| दुर | दूरतरः | दूरतमः | दवीयान् | दविष्ठः |
| शीघ्र | क्षिप्रतरः | क्षिप्रतमः | क्षिप्रवान् | क्षेपिष्ठः |
| लघु | ह्रस्वतरः | ह्रस्वतमः | ह्रस्वयान् | ह्रस्विष्ठः |

**3. स्त्रीप्रत्ययाः—**

स्त्रीत्वविवक्षायां प्रत्ययानां योजनं द्विप्रकारेण मन्यते। 1. मूलस्त्रीलिङ्गशब्दाः, 2. स्त्रीप्रत्ययान्तशब्दाः।

**1. मूलस्त्रीलिङ्गशब्दाः—**यथा-रमा, लता, माला, मति, कृति, धेनु, वधू, नी, मातृ, स्वसृ, आपद्, शरत्, प्रतिपद, उवस्, आशिष्, कुंकुम, वाच, गिर, दिश आदि।

**2. स्त्रीप्रत्ययान्तशब्दाः—**यद्यपि स्त्रीप्रत्ययाः-टाप्, डाप्, चाप्, -ङीप्, ङीष्, ङीन् इति षट्। मुख्यतः स्त्रीप्रत्ययाः त्रयः सन्ति। यथा—1. टाप्(आ) 2. ङीप्(ई) 3. ङीष्(ई)

1. टाप् (आ) चाप्(आ) "अजाद्यतष्टाप्" इति सूत्रेण अजादिगणपठितानां शब्दानां तथा अकारान्तशब्दानां स्त्रीत्वविवक्षायां टाप् प्रत्ययो भवति।

1. अज्+टाप् (आ)=अजा,
2. एक+टाप् (आ)=एका,
3. श्वेत+टाप् (आ)=श्वेता
4. वत्स+टाप्(आ)=वत्सा,
5. मूषक+टाप्(आ)=मूसिका,
6. पाचक+टाप्(आ)=पाचिका,
7. निपुण+टाप्(आ)=निपुणा,
8. वैश्य+टाप् (आ)=वैश्या,
9. चटक+टाप्(आ)=चटिका,
10. शूद्र+टाप् (आ)=शूद्रा,
11. चतुर+टाप् (आ)=चतुरा,
12. कोकिल+टाप्(आ)=कोकिला
13. सूर्य+चाप्(आ)=सूर्या,

2. (क) ङीप् (ई) "ऋन्नेभ्यो ङीप्" ऋकारान्तात् तथा नकारान्तात् पुंलिङ्गशब्दात् स्त्रीत्वे ङीप् प्रत्ययो भवति।

| ऋकारान्तात् शब्दाः | नकारान्तात् शब्दाः |
|---|---|
| 1. गन्तृ+ङीप् (ई)=गन्त्री | 1. मायाविन्+ङीप् (ई)=मायाविनी |
| 2. कर्तृ+ङीप् (ई)=कर्त्री | 2. मालिन्+ङीप् (ई)=मालिनी |
| 3. हन्तृ+ङीप् (ई)=हन्त्री | 3. तेजस्विन्+ङीप् (ई)=तेजस्विनी |
| 4. शिक्षयितृ+ङीप्(ई)=शिक्षयित्री | 4. गुणिन्+ङीप् (ई)=गुणिनी, |
| 5. दातृ+ङीप् (ई)=दात्री | 5. दण्डिन्+ङीप् (ई)=दण्डिनी |
| 6. जनयितृ+ङीप्(ई)=जनयित्री | 6. मनोहारिन्+ङीप्(ई)=मनोहारिणी, |

क्रमशः ..............

| ऋकारान्तात् शब्दाः | नकारान्तात् शब्दाः |
|---|---|
| 7. धातृ+ङीप् (ई)=धात्री | 7. यशस्विन्+ङीप् (ई)=यशस्विनी |
| 8. भोक्तृ+ङीप् (ई)=भोक्त्री | 8. मानिन्+ङीप् (ई)=मानिनी |
| 9. प्रसवितृ+ङीप् (ई)=प्रसवित्री | 9. मनस्विन्+ङीप् (ई)=मनस्विनी |

(ख) "टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः" इति सूत्रेण टकारान्तात्, ठक्, अण्, अञ्, द्वयसच्, मात्रच्, तयप्, ठक्, ठञ्, कञ् तथा क्वरप् प्रत्ययान्तेभ्यः शब्देभ्यो ङीप् प्रत्ययो भवति।

| | |
|---|---|
| 1. नदट्+ङीप्(ई)=नदी, | 2. चोरट्+ङीप्(ई)=चोरी |
| 3. देवट्+ङीप्(ई)=देवी | 4. सुपर्ण+ङीप्(ई)=सौपर्णेयी |

(ग) "वयसी प्रथमे" अनेन सूत्रेण वयसवाचिशब्देभ्यो स्त्रीत्वे ङीप् प्रत्ययो भवति।

| | |
|---|---|
| 1. कुमार्+ङीप्(ई)=कुमारी | 2. किशोर+ङीप्(ई)=किशोरी |
| 3. वधूट्+ङीप्(ई)=वधूटी | 4. नर्+ङीप्(ई)=नारी |

3. ङीष् (ई) (क) "षिद्गौरादिभ्यश्च" इति सूत्रेण "ष"कार इत् प्रत्ययानां शब्दानां तथा गौरादिगणे पठितानां शब्दानां स्त्रीत्वे ङीष् प्रत्ययो भवति।

| | |
|---|---|
| 1. नर्तक+ङीष्(ई)=नर्तकी, | 2. गौर+ङीष्(ई)=गौरी |
| 3. रजक+ङीष्(ई)=रजकी | 4. सुन्दर+ङीष्(ई)=सुन्दरी |

(ख) "पुंयोगादाख्यायाम्" इति सूत्रेण पुंलिङ्गशब्दाः, ये पुरुषद्योतकशब्दाः तेषां स्त्रीत्वे ङीष् प्रत्ययो भवति।

| | |
|---|---|
| 1. गोपः+ङीष्(ई)=गोपी | 2. शूद्रः+ङीष्(ई)=शूद्री |

(ग) जातिवाचकपुंलिङ्गशब्दानां स्त्रीत्वे ङीष् प्रत्ययो भवति।

| | |
|---|---|
| 1. ब्राह्मण+ङीष्(ई)=ब्राह्मणी | 2. मानुष+ङीष्(ई)=मानुषी |
| 3. सिंह+ङीष्(ई)=सिंही | 4. व्याघ्रः+ङीष्(ई)=व्याघ्री |

(घ) "वोतो गुणवचनात्" इति सूत्रेण उकारान्तगुणवाचीशब्दानां स्त्रीत्वविवक्षायां ङीष् प्रत्ययो भवति।

| | |
|---|---|
| 1. मृदु+ङीष्(ई)=मृद्वी, मृदुः | 2. पटु+ङीष्(ई)=पट्वी, पटुः |
| 3. साधु+ङीष्(ई)=साध्वी, साधुः | 4. गुरु+ङीष्(ई)=गुर्वी गुरुः |
| 5. बहु+ङीष्(ई)=बह्वी बहुः, | 6. रात्रि+ङीष्(ई)=रात्री रात्रिः, |

## (ण) समासविवेचनम्-

समसनं समासः। अनेकस्य पदस्य एकपदीभवनं समास इत्यर्थः। सम् उपसर्गात् अस् धातोः घञ् प्रत्ययात् समासः निष्पद्यते। समासः सुबन्तानां भवति, न तु तिङन्तानाम्। समासः युगपद् द्वयोः द्वयोः सुबन्तयोः भवति। द्वन्द्वे तु युगपत् बहूनामपि।

अत्र "समर्श:" पद:समर्थाश्रिते लाक्षणिकः। सामर्थ्यस्य द्वौ प्रकारौ स्तः।

1. एकार्थीभावः—स्वार्थपर्यवसायिनां पदानां विशिष्टैकार्थोपस्थितिजनकत्वम् एकार्थीभावत्वम्।

2. व्यपेक्षाभावः—स्वार्थपर्यवसायिनां पदानाम् आकाङ्क्षादिवशाद्यः परस्परसम्बन्धः सा व्यपेक्षा।

3. समासविग्रहः—"वृत्त्यर्थावबोधकं वाक्यं विग्रहः"। विग्रहस्य द्वौ प्रकारौ स्तः—

1. लौकिक विग्रहः—यः विग्रहः लोके व्यवहारयोग्यो भवति, यथा—राज्ञः पुरुषः राजपुरुषः।

2. अलौकिक विग्रहः—लोके अव्यवहृतः, साधनिकायै उपयोगी इति अलौकिकः विग्रहः। यथा—राजन् ङस् पुरुष सु इति अलौकिकविग्रहः।

समासः पञ्चधा—

केवलश्चाव्ययीभावो द्वन्द्वस्तत्पुरुषस्तथा।
बहुव्रीहिश्च विज्ञेयः समासः पञ्चधा बुधैः।।

1. केवलसमासः—(Only Compound)
2. अव्ययीभावसमासः—(Adverbial Compound)
3. तत्पुरुषसमासः—(Determinative Compound)
    3.1 कर्मधारयसमासः—(Appositional Compound)
    3.2 द्विगुसमासः—(Numeral Compound)
4. बहुव्रीहिसमासः—(Attributive Compound)
5. द्वन्द्वसमासः—(Copulative Compound)

समासस्य कथा—राजाभोजेन एकः कविः संक्षेपे समासस्य प्रकारेण सह स्वजीवन-व्यथां अपि श्रावयत्। यथा—

द्वन्द्वो द्विगुरपि चाहं, मद्गेहे नित्यमव्ययीभावः।
तत्पुरुष कर्मधारय, येनाहं स्यां बहुव्रीहिः।।
चकारबहुलो द्वन्द्वः, स चासौ कर्मधारयः।
यस्य तेषां बहुव्रीहिः, शेषस्तत्पुरुषो मतः।।




क्रमशः ..........

↓

तत्पुरुषभेदः कर्मधारयः।
(तत्पुरुषः समानाधिकरणः कर्मधारयः)
(कृष्णः सर्पः कृष्णसर्पः)
|
कर्मधारयभेदो द्विगुः।
(कर्मधारयसमासे यदा पूर्वपदं संख्यावाचकं स्यात् तर्हि द्विगुसमासः कथ्यते।)
(पञ्चानां तन्त्राणां समाहारः इति पञ्चतन्त्रम्, पञ्चभिः गोभिः क्रीतः इति पञ्चगुः।)

1. **केवलसमासः**—विशेषसंज्ञाविनिर्मुक्तः केवलसमासः। यत्र समासस्तु भवति किन्तु शास्त्रे तस्य काऽपि संज्ञा नास्ति। स केवलसमासः भवति। अस्य प्रचीननाम सुप्सुपा समासः यथा—पूर्वं भूतः इति भूतपूर्वः, पूर्वम् उक्तः इति पूर्वोक्तः।

2. **अव्ययीभावसमासः**—प्रायेण पूर्वपदार्थप्रधानोऽव्ययीभावः। समासेऽस्मिन् पूर्वपदं प्रायः अव्ययं भवति उत्तरपदञ्चानव्ययः। किन्तु समासे कृते समस्तपदं अव्ययः भवति। अनव्ययं अव्ययं भवति इति अव्ययीभावः। अस्मिन् समासे प्रायः पूर्वपदार्थस्य प्रधानता भवति। यथा—हरौ इति अधिहरि। अत्र अधिपूर्वपदमस्ति तद् अधिकरणस्य द्योतकमस्ति। एवमेव "अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावाऽत्ययाऽसम्प्रतिशब्दप्रादुर्भावपश्चाद्यथाऽनुपूर्व्य-यौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु"।।2.1.6।।" इति सूत्रेण—यथाशक्तिः, उपगंगम्, सुमद्रम्, दुर्भिक्षम्, निर्मक्षिकम्, अतिकष्टम्, इतिहरि, अनुग्रहं, अनुदानम्, प्रतिदिनम्, सचक्रम्, सशिवम्, समक्षम्, सतृणम्, साग्नि, उपराजम्, पञ्चगङ्गम् इत्यादयः।

3. **तत्पुरुषसमासः**—प्रायेण उत्तरपदार्थप्रधानः तत्पुरुषः। तत्पुरुषभेदः कर्मधारयः। "तत्पुरुषः समानाधिकरणः कर्मधारयः।" यदा तत्पुरुषसमासे समस्यमानेषु पदेषु समानविभक्तिः स्यात्तर्हि तस्य नाम कर्मधारयः भवति। यथा—महाराजः, कृष्णसर्पः। कर्मधारयभेदो द्विगुः। कर्मधारयसमासे यदा पूर्वपदं संख्यावाचकं स्यात् तर्हि द्विगुसमासः कथ्यते। यथा—त्रिफला, त्रिलोकी, पञ्चगवम्। द्वितीयान्तात् सप्तम्यन्तपर्यन्तं यस्य-यस्य विभक्त्यन्तस्य उत्तरपदेन समासः क्रियते। स तत्पुरुषः तया एव विभक्त्या व्यवह्रियते। द्वितीया—कृष्णं श्रितः कृष्णश्रितः, तृतीया—नखैः भिन्नः=नखभिन्नः, चतुर्थी—भूताय बलि=भूतबलिः, पञ्चमी—चोरात् भयम्=चोरभयम्, षष्ठी—राज्ञः पुरुषः=राजपुरुषः, सप्तमी—दाने वीरः=दानवीरः, कर्मधारयः—कृष्णः सर्पः=कृष्णसर्पः, नवम् अन्नम्=नवान्नम्, द्विगुः—पञ्चानां तन्त्राणां समाहारः इति पञ्चतन्त्रम्, पञ्चभिः गोभिः क्रीतः इति पञ्चगुः।

4. **बहुव्रीहिसमासः**—प्रायेण अन्यपदार्थप्रधानो बहुव्रीहिः। यत्र समस्यमानेभ्यः पदेभ्यः भिन्नमेव पदार्थस्य प्राधान्यं स्यात् तत्र बहुव्रीहिः भवति। यथा पीतम् अम्बरं यस्य सः पीताम्बरः, दशाननः, चक्रपाणिः, चित्रगुः, श्वेतम् अम्बरं यस्या सा श्वेताम्बरा।

5. **द्वन्द्वसमासः**—प्रायेण उभयपदार्थप्रधानो द्वन्द्वः। "च" इत्यस्यार्थे "चार्थे द्वन्द्व" इति सूत्रेण द्वन्द्वसमासः विधीयते। यथा—हरिहरौ—हरिश्च हरश्च, पाणी च पादौ च पाणिपादौ इति। अत्र उभयोः प्राधान्यमस्ति।

| समासिकपदम् | लौकिकविग्रहः | अलौकिकविग्रहः | समासनिर्देशः |
|---|---|---|---|
| भूतपूर्वः | पूर्वं भूतः | पूर्व अम् भूत सु | केवलसमासः |
| वागर्थाविव | वागर्थौ इव | वागर्थ औ इव | केवलसमासः |
| पूर्वोक्तः | पूर्वम् उक्तः | पूर्व अम् उक्त सु | केवलसमासः |
| अधिहरि | हरौ अधि | हरि ङि अधि | अव्ययीभावसमासः |
| उपराजम् | राज्ञः समीपम् | राजन् ङस् उप | अव्ययीभावसमासः |
| सुमद्रम् | मद्राणां समृद्धिः | मद्र आम् सु | अव्ययीभावसमासः |
| दुर्यवनम् | यवनानां व्यृद्धिः | यवन आम् दुर | अव्ययीभावसमासः |
| निर्मक्षिकम् | मक्षिकाणामभावः | मक्षिका आम् निर् | अव्ययीभावसमासः |
| अतिहितम् | हिमस्यात्ययः | हिम ङसि अति | अव्ययीभावसमासः |
| अतिनिद्रम् | निद्रा सम्प्रति न युज्यते | निद्रा सु अति | अव्ययीभावसमासः |
| इति-हरि | हरिशब्दस्य प्रकाशः | हरि ङस् इति | अव्ययीभावसमासः |
| अनुविष्णु | विष्णोः पश्चात् | विष्णु ङसि अनु | अव्ययीभावसमासः |
| अनुरूपम् | रूपस्य योग्यम् | रूप ङस् अनु | अव्ययीभावसमासः |
| प्रत्यर्थम् | अर्थं अर्थं प्रति | अर्थ अम् प्रति | अव्ययीभावसमासः |
| यथाशक्तिः | शक्तिमतिक्रम्य | शक्ति अम् यथा | अव्ययीभावसमासः |
| सहरिः | हरेः सादृश्यम् | हरि ङस् सह (स) | अव्ययीभावसमासः |
| पञ्चगङ्गम् | पञ्चानां गङ्गानां समाहारः | पञ्चन् आम् गङ्गा आम् | अव्ययीभावसमासः |
| कृष्णश्रितः | कृष्णं श्रितः | कृष्ण अम् श्रित सु | द्वितीया तत्पुरुषसमासः |
| नखभिन्नः | नखैर्भिन्नः | नख् भिस् भिन्न सु | तृतीया तत्पुरुषसमासः |
| भूतबलिः | भूतेभ्यो बलिः | भूत भ्यस् वलि सु | चतुर्थी तत्पुरुषसमासः |
| चोरभयम् | चोराद्भयम् | चोर ङसि भय सु | पञ्चमी तत्पुरुषसमासः |
| राजपुरुषः | राज्ञः पुरुषः | राजन् ङस् पुरुष सु | षष्ठी तत्पुरुषसमासः |
| अक्षशौण्डः | अक्षेषु शौण्डः | अक्ष सुप् शौण्ड सु | सप्तमी तत्पुरुषसमासः |
| घनश्यामः | घन इव श्यामः | घन सु श्याम सु | कर्मधारयसमासः |
| त्रिलोकी | त्रयाणां लोकानां समाहारः | त्रि ङस् लोक ङस् | द्विगुसमासः |
| उरीकृत्य | उरी कृत्वा | उरी कृ क्त्वा | गतितत्पुरुपसमासः |
| प्राचार्यः | प्रगतः आचार्यः | प्रगत सु आचार्य सु | प्रादितत्पुरुषसमासः |
| कुम्भकारः | कुम्भं करोति | कुम्भ अम् कार सु | उपपदतत्पुरुषसमासः |
| पीताम्बरः | पीतम् अम्बरम् यस्य सः | पीत सु अम्बर सु | बहुव्रीहिसमासः |
| पाणिपादम् | पाणी च पादौ च | पाणि औ पाद औ | द्वन्द्वसमासः |

## (B) व्याकरणम्

(1. व्याकरणस्य परिचयः, 2. संज्ञा/परिभाषा/आगमः/आदेशादिः, 3. सन्धिः, 4. सुबन्तम्, 5. तिङन्तम्, 6. कारकम्, 7. प्रत्ययः, 8. समासः,)

### (त) व्याकरणस्य परिचयात्मकानि वस्तुनिष्ठप्रश्नोत्तराणि—

1. प्रश्नः—"अष्टाध्यायी" इत्यस्य ग्रन्थस्य कः रचनाकारः?
   उत्तरम्— पाणिनिः।
2. प्रश्नः—पाणिनि-प्रणीते शब्दानुशासने(अष्टाध्यायीग्रन्थे) कति अध्यायाः समुपलभ्यन्ते?
   उत्तरम्— (8) अष्टौ अध्यायाः।
3. प्रश्नः—पाणिनि-अष्टाध्याय्याः प्रति अध्याये कति पादाः सन्ति?
   उत्तरम्— (04) चत्वारः।
4. प्रश्नः—"सिद्धान्तकौमुदी" इत्यस्य ग्रन्थस्य कः रचनाकारः?
   उत्तरम्— भट्टोजिदीक्षितः।
5. प्रश्नः—व्याकरणशिक्षणस्य मुख्यो विधिः कः?
   उत्तरम्— आगमनविधिः।
6. प्रश्नः—"प्रक्रियाकौमुदी" इत्यस्य रचनाकारः कः?
   उत्तरम्— रामचन्द्रः।
7. प्रश्नः—वेदपुरुषस्य मुखात्मकं वेदांगं किम्?
   उत्तरम्— व्याकरणम्।
8. प्रश्नः—व्याकरणवेदांगस्य कति सम्प्रदायाः श्रूयन्ते?
   उत्तरम्— (08) अष्टौ।
9. प्रश्नः—सम्प्रति व्याकरणवेदांगस्य प्रतिनिधिग्रन्थः कोऽस्ति?
   उत्तरम्— शब्दानुशासनम्।
10. प्रश्नः—"लिङ्गानुशासनम्" इति ग्रन्थं कः लिखितवान्?
    उत्तरम्— व्याडिः।
11. प्रश्नः—शब्दानुशासने कस्य उल्लेखः नास्ति?
    उत्तरम्— वेदीनिर्माणविधेः।
12. प्रश्नः—"वाक्यपदीयम्" कस्य "आचार्यस्य" कृतिः?
    उत्तरम्— भर्तृहरेः।
13. प्रश्नः—पतञ्जलिप्रणीतः ग्रन्थः कः?
    उत्तरम्— महाभाष्यम्।
14. प्रश्नः—अष्टाध्याय्याः प्रथमसूत्रं किमस्ति?
    उत्तरम्— वृद्धिरादैच्।
15. प्रश्नः— वियोगात्मका भाषा का?
    उत्तरम्— हिन्दी।

16. प्रश्नः—भाषाविनिमयस्य साधनं किमस्ति?
उत्तरम्— विचारः।
17. प्रश्नः—भाषाणां वर्गीकरणस्य क आधारः स्वीकृतः?
उत्तरम्— आकृतिः।
18. प्रश्नः—भारतीयार्यभाषासु प्रचीनतमा का?
उत्तरम्—वैदिक-संस्कृतभाषा।
19. प्रश्नः—पाणिनिमहोदयस्य जन्मस्थलं वर्तमाने काले केन नाम्ना प्रसिद्धम्?
उत्तरम्— लाहौरनाम्ना।
20. प्रश्नः—"एकः शब्दः सत्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति" कस्येदं कथनम्?
उत्तरम्— महाभाष्यकारस्य पतञ्जलेः।
21. प्रश्नः—पतञ्जलिः कस्य अवतारः मन्यते?
उत्तरम्— शेषनागस्य।
22. प्रश्नः—व्याकरणस्य व्युत्पत्तिजन्यः अर्थः किमस्ति?
उत्तरम्— व्याक्रियन्ते व्युत्पाद्यन्ते शब्दाः अनेनेति व्याकरणम्।
(वि+आङ् कृ+ल्युट्=व्याकरणम्).
23. प्रश्नः— कति व्याकरणानि वेदाङ्गे परिगणितानि सन्ति?
उत्तरम्—नव, 1. ऐन्द्रं, 2. चान्द्रं, 3. काशकृत्स्नं, 4. कौमारं, 5. शाकटायनं, 6. सारस्वतं, 7. आपिशलं, 8. शाकलं, 9. पाणिनीयम्।
24. प्रश्नः—वेदाङ्गरूपेण सर्वाधिक-सङ्ग्राह्य-व्याकरणं किमस्ति?
उत्तरम्— पाणिनिव्याकरणम्।
25. प्रश्नः—मुनित्रये केषां समावेशो भवतिं?
उत्तरम्—1. पाणिनेः, 2. कात्यायनस्य, 3. पतञ्जलेश्च।
26. प्रश्नः—कः वार्तिककारः?
उत्तरम्— कात्यायनः।
27. प्रश्नः—"सिद्धान्तकौमुदी" इत्यस्य लेखकः कः?
उत्तरम्— भट्टोजिदीक्षितः।
28. प्रश्नः—भट्टोजिदीक्षित-कृत-प्रौढ़मनोरमायाः खण्डनं केन कृतम्?
उत्तरम्—पण्डितराजजगन्नाथेन।
29. प्रश्नः—"मनोरमाकुचमर्दनम्" इत्यस्य लेखकः कः?
उत्तरम्— पण्डितराजो जगन्नाथः।
30. प्रश्नः—वरदराजस्य कानि रचनाकार्याणि?
उत्तरम्— 1. लघुसिद्धान्तकौमुदी, 2. मध्यसिद्धान्तकौमुदी, 3. सारसिद्धान्तकौमुदी च।
31. प्रश्नः—पाणिनि अष्टाध्यायीग्रन्थे कति सूत्राणि सन्ति?
उत्तरम्— (3978 सूत्राणि।)

32. प्रश्नः—धातवः कतिषु गणेषु विभक्ताः सन्ति?
उत्तरम्— दशसु गणेषु।
33. प्रश्नः—धातुगणानां नामावली का?
उत्तरम्— 1. भ्वादिः, 2. अदादिः, 3. जुहोत्यादिः, 4. दिवादिः, 5. स्वादिः, 6. तुदादिः, 7. रुधादिः, 8. तनादिः, 9. क्र्यादिः, 10. चुरादिः।
34. प्रश्नः—शब्देन्दुशेखर इत्यस्य कः रचनाकारः?
उत्तरम्—नागेशभट्टः।
35. प्रश्नः—कस्मिन् गणे अल्पधातवः वर्तन्ते?
उत्तरम्— तनादिगणे।
36. प्रश्नः—कति धातवः सन्ति?
उत्तरम्— (1970)
37. प्रश्नः—कति माहेश्वराणि सूत्राणि?
उत्तरम्—(14) चतुर्दश सूत्राणि।
38. प्रश्नः—कानि माहेश्वराणि सूत्राणि?
उत्तरम्—1. अइउण्, 2. ऋलृक्, 3. एओङ्, 4. ऐऔच्, 5. हयवरट्, 6. लण्, 7. ञमङणनम्, 8. झभञ्, 9. घढधष्, 10. जबगडदश्, 11. खफछठथचटतव्, 12. कपय्, 13. शसषर्, 14. हल्।
39. प्रश्नः—माहेश्वरसूत्रस्य उत्पत्तिः कस्मात् अभूत्?
उत्तरम्— शिवस्य डमरुतः।
40. प्रश्नः—माहेश्वरसूत्रे कति मूलस्वरवर्णाः वर्तन्ते?
उत्तरम्—पञ्च, (अ, इ, उ, ऋ, लृ)
41. प्रश्नः—भर्तृहरिमहोदयस्य वाक्यपदीये कति काण्डानि सन्ति?
उत्तरम्—त्रीणि, 1. ब्रह्मकाण्डम्, 2. वाक्यकाण्डम्, 3. पदकाण्डम्।
42. प्रश्नः—कैयटः महाभाष्योपरि का व्याख्या विहिता?
उत्तरम्— "प्रदीप" नाम्नी व्याख्या।
43. प्रश्नः—जयादित्य एवं वामन नामनी वैयाकरणाभ्यां सूत्रानुक्रमाभ्यां अष्टाध्याय्यां किं वृत्तिग्रन्थं अलिखताम्?
उत्तरम्—काशिका-वृत्तिग्रन्थम्।
44. प्रश्नः—काशिकायाः प्रथमतः पञ्चमाध्यायान् कः अलिखत्?
उत्तरम्— जयादित्यः।
45. प्रश्नः—काशिकायाः अन्तस्य "अध्यायत्रयस्य" लेखकः कः?
उत्तरम्— वामनः।
46. प्रश्नः—काशिकायां कति अध्यायाः सन्ति?
उत्तरम्—(8) 5+3=8 अष्टाध्यायाः।

47. प्रश्नः—"न्यास" नाम्ना प्रख्यात-काशिकाव्याख्यानग्रन्थस्य मूलं अभिधानं किमस्ति?
उत्तरम्— काशिकाविवरणपञ्जिका।
48. प्रश्नः—काशिकाविवरणपञ्जिकायाः लेखकः कः?
उत्तरम्— जिनेन्द्रबुद्धिः।
49. प्रश्नः—काशिकोपरि "पदमञ्जरी" व्याख्यायाः लेखकः कः?
उत्तरम्— हरदत्तः।
50. प्रश्नः—वैयाकरणभूषण-वैयाकरणभूषणसारयोश्च प्रणेता कोऽस्ति?
उत्तरम्— कौण्डभट्टः।
51. प्रश्नः—परिभाषेन्दुशेखरस्य स्रष्टा कोऽस्ति?
उत्तरम्— नागेशभट्टः।
52. प्रश्नः—परिभाषेन्दुशेखरस्य विषयः किमस्ति?
उत्तरम्—पाणिनीयव्याकरणस्य परिभाषायाः विवेचनम्।
53. प्रश्नः—नागेशभट्टस्य भट्टोजिदीक्षितकृत प्रौढ़मनोरमोपरि लिखितव्याख्याग्रन्थस्य किं नाम अस्ति?
उत्तरम्— शब्देन्दुशेखरः।
54. प्रश्नः—महाभाष्यप्रत्याख्यानसंग्रहस्य लेखकः कोऽस्ति?
उत्तरम्— नागेशभट्टः।
55. प्रश्नः—वैयाकरणसिद्धान्तमञ्जूषा-लघुमञ्जूषा-परमलघुमञ्जूषाणां रचनाकारः.कः?
उत्तरम्— नागेशभट्टः।
56. प्रश्नः—व्याकरणस्य प्रक्रिया-परम्परायाः पर्यायभूत-आचार्य-भट्टोजिदीक्षितस्य सूत्रानुक्रमाणां पाणिनीयव्याकरणस्य व्याख्यानग्रन्थः कः?
उत्तरम्— शब्दकौस्तुभः।
57. प्रश्नः—व्याकरणस्य दार्शनिकसन्दर्भोपरि भट्टोजिदीक्षितस्य विमर्शात्मकग्रन्थः कः?
उत्तरम्— व्याकरणमतोन्मज्जनम्।
58. प्रश्नः—कातन्त्र-व्याकरणस्य आचार्यः कः?
उत्तरम्— शिववर्मा।
59. प्रश्नः—कातन्त्र-व्याकरणे कति अध्यायाः कति सूत्राणि च वर्तन्ते?
उत्तरम्— चत्वारः अध्यायाः, 1400 सूत्राणि च।
60. प्रश्नः—प्रौढ़मनोरमा इत्यस्य लेखकः कः?
उत्तरम्— भट्टोजिदीक्षितः।
61. प्रश्नः—क्षपणक (सिद्धसेन दिवाकरस्य) व्याकरणं किमस्ति?
उत्तरम्— शब्दानुशासनम्।
62. प्रश्नः—जैनेन्द्रव्याकरणस्य आचार्यः कः?
उत्तरम्— देवनन्दी।

63. प्रश्नः—"विश्रान्तविद्याधर" व्याकरणस्य प्रवर्तकः कः?
उत्तरम्— वामनः।
64. प्रश्नः—"सरस्वतीकण्ठाभरणम्" व्याकरणे कति अध्यायाः कति सूत्राणि च सन्ति?
उत्तरम्— अष्टौ अध्यायाः, 6421 सूत्राणि च।
65. प्रश्नः—"सरस्वतीकण्ठाभरणस्य प्रचोदकः कः अस्ति?
उत्तरम्— भोजदेवः।
66. प्रश्नः—जैनशाकटायन-व्याकरणग्रन्थस्य रचनाकारः कः?
उत्तरम्— पाल्यकीर्तिः।
67. प्रश्नः—पाल्यकीर्ति इत्यस्य अपरं नाम किमस्ति?
उत्तरम्— शाकटायनः।
68. प्रंश्नः—जैनशाकटायने कति अध्यायाः सूत्राणि च सन्ति?
उत्तरम्— अष्टौ अध्यायाः, 3200 सूत्राणि च।
69. प्रश्नः—शिवस्वामी द्वारा प्रवृत्तं व्याकरणं किम्?
उत्तरम्— शिवशब्दानुशासनम्।
70. प्रश्नः—सिद्धान्तकौमुदी इत्यस्य तत्त्वबोधिनी-व्याख्यायाः लेखकः कः?
उत्तरम्— ज्ञानेन्द्रसरस्वती।
71. प्रश्नः—सिद्धान्तकौमुदी इत्यस्य बालमनोरमाव्याख्यायाः सर्जनकर्ता आचार्यः कः?
उत्तरम्— वासुदेवदीक्षितः।
72. प्रश्नः—पाणिनिमहोदयस्य अष्टके वा अष्टाध्याय्यां प्रत्येकम् अध्याये कति पादाः (उपविभागाः) वर्तन्ते?
उत्तरम्— चत्वारः पादाः।
73. प्रश्नः—अष्टाध्याय्याः प्रथमाध्यायस्य विषयः किमस्ति?
उत्तरम्— शास्त्रोपयोगी संज्ञा-परिभाषायाः सङ्कलनम्।
74. प्रश्नः—कस्मिन् अध्याये समास-कारकस्य च विवेचना अस्ति?
उत्तरम्— द्वितीयाध्याये।
75. प्रश्नः—तृतीयाध्यायस्य विषयवस्तूनि किं सन्ति?
उत्तरम्— कृत्यप्रत्ययाः कृत् प्रत्ययाश्च।
76. प्रश्नः—तद्धितानां विमर्शः कस्मिन् अध्याये अस्ति?
उत्तरम्— चतुर्थ-पञ्चमाध्याययोः।
77. प्रश्नः—षष्ठाध्याये कस्य विमर्शः वर्तते?
उत्तरम्— तिङन्त, सन्धि-स्वरनियमानाम्।
78. प्रश्नः—अङ्गाधिकार-नाम्ना कस्य अध्यायस्य प्रसिद्धिः अस्ति?
उत्तरम्— सप्तमाध्यायस्य।
79. प्रश्नः—अङ्गाधिकारस्य विषयः किमस्ति?
उत्तरम्— सुबन्ताः तिङन्ताश्च।

80. प्रश्नः—अष्टमाध्याये विवेच्यविषयाः के सन्ति?
उत्तरम्— द्वित्वविधानं, स्वर-वैदिकी प्रक्रिया, सन्धिः षत्वणत्वविधानं च।

81. प्रश्नः—कात्यायनस्य अपरं नाम किम्?
उत्तरम्— वररुचिः।

82. प्रश्नः—पाणिनिमहोदयस्य महाकाव्यं किम्?
उत्तरम्—जाम्बवतीविजयम्।

83. प्रश्नः—कात्यायनस्य महाकाव्यं किम्?
उत्तरम्— स्वर्गारोहणम्।

84. प्रश्नः—कात्यायनस्य अन्यानि कानि रचनाकार्याणि?
उत्तरम्—1. कात्यायनस्मृतिः, 2. उभयसारिकाभाणः (रूपकः) 3. भ्राजश्लोकाः।

85. प्रश्नः—पाणिनीयव्याकरणस्य प्रक्रिया-परम्परायाः आद्यग्रन्थः कः?
उत्तरम्— रूपावतारः।

86. प्रश्नः— रूपावतारस्य रचनाकारः कः?
उत्तरम्— धर्मकीर्तिः।

87. प्रश्नः—प्रक्रियाकौमुदी कस्य रचना वर्तते?
उत्तरम्— रामभद्राचार्यस्य।

88. प्रश्नः—सिद्धान्तकौमुदीग्रन्थे कति प्रकरणानि सन्ति?
उत्तरम्— (14) चतुर्दशप्रकरणानि।

89. प्रश्नः—सिद्धान्तकौमुदी इत्यस्य प्रथमप्रकरणं किम्?
उत्तरम्— संज्ञाप्रकरणम्।

90. प्रश्नः—परिभाषाप्रकरणस्य क्रमः किमस्ति?
उत्तरम्— द्वितीयः।

91. प्रश्नः—सन्धिप्रकरणस्य क्रमः किम्?
उत्तरम्— तृतीयः।

92. प्रश्नः—सुबन्तं कस्मिन् प्रकरणे अस्ति?
उत्तरम्— चतुर्थप्रकरणे।

93. प्रश्नः—अव्ययः कस्मिन् प्रकरणे अस्ति?
उत्तरम्—पञ्चमे।

94. प्रश्नः—षष्ठप्रकरणस्य विषयः किमस्ति?
उत्तरम्— स्त्रीप्रत्ययः।

95. प्रश्नः—सप्तमप्रकरणे किं वर्णितमस्ति?
उत्तरम्— कारकम्।

96. प्रश्नः—समासप्रकरणस्य क्रमः किम्?
उत्तरम्— अष्टमः।

97. प्रश्नः—नवमप्रकरणे किं वर्णितमस्ति?
उत्तरम्— तद्धितः।
98. प्रश्नः—तिङन्तप्रकरणस्य क्रमः किमस्ति?
उतरम्— दशमः।
99. प्रश्नः—ण्यन्तादिप्रक्रिया कस्मिन् प्रकरणे अस्ति?
उत्तरम्—एकादशप्रकरणे।
100. प्रश्नः—कृदन्तः कस्मिन् प्रकरणे अस्ति?
उत्तरम्— द्वादशप्रकरणे।
101. प्रश्नः—त्रयोदश-प्रकरणे किमस्ति?
उत्तरम्— वैदिकप्रकरणम्।
102. प्रश्नः—सिद्धान्तकौमुदी इत्यस्य अन्तिमं प्रकरणं किम्?
उत्तरम्— स्वरप्रकरणम्।
103. प्रश्नः— "मनोरमामण्डन" व्याकरणग्रन्थस्य लेखकः कः?
उत्तरम्— भानुजिदीक्षितः।
104. प्रश्नः— व्याकरण-वाङ्मयस्य बृहत्तमो ग्रन्थः कः?
उत्तरम्— "व्याकरणसिद्धान्तसुधानिधिः।"
105. प्रश्नः—"व्याकरणसिद्धान्तसुधानिधि" इत्यस्य लेखकः कः?
उत्तरम्— विश्वेश्वरपाण्डेयः।
106. प्रश्नः—अष्टाध्याय्याः परिणामः कति श्लोकानां विद्यते?
उत्तरम्— सहस्त्रम्।
107. प्रश्नः—अष्टाध्याय्यां कति पादाः सन्ति?
उत्तरम्— (8×4=32) द्वात्रिंशतिः पादाः।
108. प्रश्नः—महाभाष्यकारः पाणिनीयव्याकरणस्य कति सूत्राणां व्याख्या अकुर्वत्?
उत्तरम्— (1710 सूत्राणाम्)
109. प्रश्नः—महाभाष्ये कति अध्यायाः सन्ति?
उत्तरम्— अष्टौ अध्यायाः।
110. प्रश्नः—महाभाष्ये अध्यायाः केषु विभाजितोऽस्ति?
उत्तरम्—आह्निकेषु।
111. प्रश्नः—आह्निकेन किं तात्पर्यम्, (का परिभाषा)?
उत्तरम्— एकः अह (दिवसः) पर्यन्तं पठितुं योग्यः आह्निकः।
112. प्रश्नः—महाभाष्ये कति आह्निकानि सन्ति?
उत्तरम्— (85) पञ्चाशीति आह्निकानि।
113. प्रंश्नः—महाभाष्ये कति प्रत्याहारसूत्राणां व्याख्यानं अभवन्?
उत्तरम्—अष्टसूत्राणाम्।

114. प्रश्नः—माहेश्वरसूत्रेषु कस्य व्यञ्जनवर्णस्य द्विवारं प्रयोगः भवति?
उत्तरम्— हकारस्य।
115. प्रश्नः—कस्य माहेश्वरसूत्रस्य अकार उच्चारणार्थमात्रं न भूत्वा इत्संज्ञकः अस्ति?
उत्तरम्—"लण्" सूत्रस्य।
116. प्रश्नः—लण् सूत्रे अकार इत्संज्ञक-स्वीकरणस्य प्रयोजनं किम्?
उत्तरम्— "र" प्रत्याहारस्य निर्माणम्।
117. प्रश्नः— "र" प्रत्याहारे के वर्णाः आगच्छन्ति?
उत्तरम्— रकार एवं लकारवर्णाः। (र, ल)
118. प्रश्नः— माहेश्वरसूत्रैः कति प्रत्याहाराः रचयन्ति?
उत्तरम्— (42) द्विचत्वारिंशत्।
119. प्रश्नः—सर्वेषां स्वर-व्यञ्जनप्रत्याहाराणां बोधकप्रत्याहारः कोऽस्ति?
उत्तरम्— अल् प्रत्याहारः।
120. प्रश्नः—अच् प्रत्याहारेण कस्य अभिधानं भवति?
उत्तरम्— समस्तस्वराणाम्।
121. प्रश्नः— समस्तव्यञ्जनवर्णानां कस्मिन् प्रत्याहारे ग्रहणं भवति?
उत्तरम्— हल् प्रत्याहारे।
122. प्रश्नः—पञ्चाङ्गव्याकरणं किमस्ति?
उत्तरम्—1. सूत्रपाठ, 2. गणपाठ, 3. धातुपाठ, 4. उणादिपाठ, 5. लिङ्गानुशासनम्।
123. प्रश्नः—पाणिनिमहोदयस्य गुरुः कः आसीत्?
उत्तरम्— आचार्य उपवर्षः।
124. प्रश्नः—सूत्राणि कति प्रकारकाणि भवन्ति? कानि च तानि?
उत्तरम्— षट्, 1. संज्ञा, 2. परिभाषा, 3. विधि, 4. नियम, 5. अतिदेश, 6. अधिकार।
125. प्रश्नः— पण्डितप्रवरभट्टोजिदीक्षितस्य पदशास्त्रीयग्रन्थाः के सन्ति?
उत्तरम्—1. सिद्धान्तकौमुदी, 2. प्रौढ़मनोरमा, 3. शब्दकौस्तुभ, 4. वैयाकरणभूषणकारिका।
126. प्रश्नः— भट्टोजिदीक्षितस्य धर्मशास्त्रीयग्रन्थाः के सन्ति?
उत्तरम्—1. त्रिस्थलीसेतु, 2. तिथिनिर्णयः, 3. प्रवरनिर्णयः, 4. चतुर्विंशतिमतव्याख्या।
127. प्रश्नः—सूत्रस्य किं लक्षणम्?
उत्तरम्—"अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्। अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः।।"
128. प्रश्नः—वार्तिकस्य किं लक्षणम्?
उत्तरम्—"उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते। तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा विचक्षणाः।।"
129. प्रश्नः—भाष्यस्य किं लक्षणम्?
उत्तरम्—"सूत्रार्थो वर्ण्यते यत्र वर्णैः सूत्रानुसारिभिः। स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः।।"
130. प्रश्नः—व्याख्यानस्य कति अङ्गानि भवन्ति?
उत्तरम्—(6 षट्) 1. पदच्छेदः, 2. पदार्थोक्तिः, 3. विग्रहः, 4. वाक्ययोजना, 5. आक्षेपः, 6. समाधानम्।

131. प्रश्नः—प्रातिपदिकः कं कथयति?
उत्तरम्—धातु एवं प्रत्ययेन सह समस्तसार्थकशब्दाः, समास एवं तद्धितानां प्रातिपदिकसंज्ञा भवति।

132. प्रश्नः—"गोनर्दीय" इति कस्य नाम अस्ति?
उत्तरम्— महाभाष्यकारपतञ्जलेः।

133. प्रश्नः—व्याकरणमते कति प्रमाणानि कानि च तानि?
उत्तरम्— 5 पञ्च, 1. प्रत्यक्षः, 2. अनुमानः, 3. शब्दः, 3. अभ्यासः, 5. अदृष्टः।

134. प्रश्नः—व्याकरणमते वाण्याः काः?
उत्तरम्—तिस्रः, 1. पश्यन्ती, 2. मध्यमा, 3. वैखरी।

135. प्रश्नः—स्फोटवादः कस्य प्रतिपाद्यः वर्तते?
उत्तरम्—व्याकरणस्य।

136. प्रश्नः—"शब्दरत्न" इत्यस्य लेखकः कः?
उत्तरम्— हरिदीक्षितः।

137. प्रश्नः—अष्टाध्यायीवृत्तिः इत्यस्य लेखकः कः?
उत्तरम्— वररुचिः।

137. प्रश्नः—अष्टाध्यायीभाष्यवृत्तिः इत्यस्य लेखकः कः?
उत्तरम्— दयानन्दसरस्वती।

138. प्रश्नः—"रूपमाला" इत्यस्य लेखकः कः?
उत्तरम्— विमलसरस्वती।

139. प्रश्नः—प्रक्रियासर्वस्वम् इति ग्रन्थस्य लेखकः कः?
उत्तरम्— नारायणभट्टः।

140. प्रश्नः—महाभाष्यदीपिका इत्यस्य लेखकः कः?
उत्तरम्— भर्तृहरिः।

141. प्रश्नः—कियन्ति मुख्यानि व्याकरणानि?
उत्तरम्— (8/9) अष्टौ नव वा।

142. प्रश्नः—पाणिनिः कस्य क्षेत्रस्य वास्तव्यः?
उत्तरम्— पाकिस्तान-स्थित-लाहौरस्य।

143. प्रश्नः—दाक्षीपुत्रः कः?
उत्तरम्— पणिनिः।

144. प्रश्नः—गोणिका-पुत्ररूपेण को ज्ञायते?
उत्तरम्— पतञ्जलिः।

145. प्रश्नः—"अथ शब्दानुशासनम्" कस्य ग्रन्थस्य प्रारम्भिकवाक्यम्?
उत्तरम्— महाभाष्यस्य।

146. प्रश्नः—नागेशभट्टस्य पितुर्नाम किम्?
उत्तरम्— शिवभट्टः।

147. प्रश्नः—नागेशभट्टस्य मातुर्नाम किम्?
उत्तरम्— सतीदेवी।

148. प्रश्नः—नागेशः कस्याश्रित आसीत्?
उत्तरम्— शृङ्गवेर-पुराधीश-रामसिंहस्य।

149. प्रश्नः—नागेशस्य जन्मसमयः कः?
उत्तरम्— 1720 ई0 वर्षम्।

150. प्रश्नः—परमलघुमञ्जूषायां कियन्ति प्रकरणानि सन्ति?
उत्तरम्— चतुर्दश-प्रकरणानि।

151. प्रश्नः—स्फोटस्य कति भेदाः सन्ति?
उत्तरम्— (8) अष्टौ।

152. प्रश्नः—स्फोटशब्दस्य का व्युत्पत्तिः?
उत्तरम्— स्फुटति-विकसति-अभिव्यक्तीभवत्यर्थो यस्मादिति स्फोटः।

153. प्रश्नः—वैयाकरणाऽनुसारेण शक्तिः कीदृशी?
उत्तरम्— पदपदार्थयोः सम्बन्धान्तरमेव शक्तिः, वाच्यवाचकभावापरपर्याया।

154. प्रश्नः—वैयाकरणैः पदपदार्थयोः कीदृशः सम्बन्धः स्वीक्रियते?
उत्तरम्— "तादात्म्यसम्बन्धः।"

155. प्रश्नः—वैयाकरणमते पदं कीदृशम्?
उत्तरम्— स्फोटात्मकम्।

156. प्रश्नः—किन्नाम साधुत्वम्?
उत्तरम्— व्याकरणाऽन्वाख्येयत्वं पुण्यजनकताऽवच्छेदकधर्मत्वं वा।

157. प्रश्नः—मञ्जूषाकाराऽनुसारेण वृत्तिः कतिविधा, का च सा?
उत्तरम्— त्रिविधा-1. शक्तिः, 2. लक्षणा, 3. व्यञ्जनारूपा।

158. प्रश्नः—विशेषार्थ-निर्णायकाः संयोगादयः कियन्तः सन्ति?
उत्तरम्— (14) चतुर्दश।

159. प्रश्नः—लक्षणा कतिविधा?
उत्तरम्— द्विविधा।

160. प्रश्नः—नागेशमते शक्तिः कतिविधा?
उत्तरम्— (2) द्विविधा।

161. प्रश्नः—कतिविधा वागस्ति, सा च का?
उत्तरम्— चतुर्विधा, 1. परा, 2. पश्यन्ति, 3. मध्यमा, 4. वैखरीरूपा।

162. प्रश्नः—नागेशेन कतिविधो ध्वनिः स्वीक्रियते?
उत्तरम्— द्विविधः।

163. प्रश्नः—शाब्दबोधे कियन्ति सहकारि-कारणानि, कानि च तानि?
उत्तरम्— चत्वारि, 1. आकाङ्क्षा, 2. योग्यता, 3. आसत्ति, 4. तात्पर्यम् च।

164. प्रश्नः—का नाम आकाङ्क्षा?
उत्तरम्— वाक्यसमयग्राहिका आकाङ्क्षा।

165. प्रश्नः—योग्यतायाः किं स्वरूपम्?
उत्तरम्— परस्पराऽन्वयप्रयोजकधर्मवत्त्वरूपम्।

166. प्रश्नः—आसत्तेः किं स्वरूपम्?
उत्तरम्— प्रकृतान्वयबोधाननुकूलपदाव्यवधानम्।

167. प्रश्नः—किं नाम तात्पर्यम्?
उत्तरम्—एतद् वाक्यं पदं वा एतदर्थबोधायोच्चारणीयमितीश्वरेच्छा तात्पर्यम्।

168. प्रश्नः—को नाम धात्वर्थः?
उत्तरम्— फलानुकूलो यत्नसहितो व्यापारो धात्वर्थः।

169. प्रश्नः—नागेशमते का नाम क्रिया?
उत्तरम्— सर्वकारकाऽन्वयितावच्छेदकधर्मवती क्रिया।

170. प्रश्नः—प्रयोगसङ्ग्रहस्य रचयिता कः?
उत्तरम्— वररुचिः।

171. प्रश्नः—"प्रयोगमुखम्" केन विरचितम्?
उत्तरम्— धर्मकीर्तिना।

172. प्रश्नः—"प्रयोगमुखम्" कस्य विवरणं विद्यते?
उत्तरम्— प्रयोगसङ्ग्रहस्य।

173. प्रश्नः—प्रयोगमुखे कति पटला विराजन्ते?
उत्तरम्— (5) पञ्च।

174. प्रश्नः—समासशक्ति-दीपिकायां कारिकायाः रचनाकारः कः?
उत्तरम्— दीनबन्धुझामहोदयः।

175. प्रश्नः—समासशक्ति-दीपिकाऽन्तर्गते कियन्तः कारिका?
उत्तरम्— (27) सप्तविंशतिः।

176. प्रश्नः—कौमुदी-मूलार्थ-विद्योतिन्याः प्रणेता कः?
उत्तरम्— पं० दीनबन्धुझा।

177. प्रश्नः—न्यायसिद्धान्तमुक्तावली कस्याः व्याख्या?
उत्तरम्— कारिकावल्याः।

178. प्रश्नः—कारिकावल्याः प्रणेता कोऽस्ति?
उत्तरम्— विश्वनाथपञ्चाननभट्टाचार्यः।

179. प्रश्नः—का नाम व्युत्पत्तिः?
उत्तरम्— कार्यकारणभावज्ञानम्।

180. प्रश्नः—पाणिनेः मातुर्नाम किम्?
उत्तरम्— दाक्षी।

181. प्रश्नः—पतञ्जलेः मातुर्नाम किम्?
उत्तरम्— गोणिका।
182. प्रश्नः—पतञ्जलेर्महाभाष्यं कियत्सु आह्निकेषु विभक्तम्?
उत्तरम्— (85) पञ्चाशीत्याह्निकेषु।
183. प्रश्नः—महाभाष्यस्य प्रथमाह्निकं केन नाम्ना ज्ञायते?
उत्तरम्— "पस्पशाह्निकम्" इति नाम्ना।
184. प्रश्नः— महाभाष्यस्य द्वितीयाह्निकं किम्?
उत्तरम्— प्रत्याहाराह्निकम्।
185. प्रश्नः—षड्विधात्मकं व्याख्यानं किम्?
उत्तरम्— पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना।
आक्षेपश्च समाधानं व्याख्यानं षड्विधं मतम्।।
186. प्रश्नः—को नाम आचार्यः?
उत्तरम्—"आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि।
स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते।।
187. प्रश्नः—किं नाम अक्षरम्?
उत्तरम्— न क्षीयते न क्षरतीति वाऽक्षरम्। अर्थमश्नुते व्याप्नोतीत्यक्षरं पदं वाक्यं वा।
188. प्रश्नः—का नाम संज्ञा, संज्ञिनश्च के?
उत्तरम्— अनाकृतिः संज्ञा, आकृतिमन्तः संज्ञिनः। व्याकरणे पूर्वोच्चारितः संज्ञी, परोच्चारिता च संज्ञा कथ्यते।
189. प्रश्नः—को नाम आख्यातः?
उत्तरम्— नियमपूर्वक-अध्यापनं नाम आख्यातः।
190. प्रश्नः—को नाम विप्रतिषेधः?
उत्तरम्— तुल्यबल-विरोधे नियमयोर्बलाबलविचारः।
191. प्रश्नः—पाणिनेरनुसारेण गुरुः कतिविधः, कश्च सः?
उत्तरम्— चतुर्विधः, 1. आचार्यः, 2. प्रवक्ता, 3. श्रोत्रियः, 4. अध्यापकश्च।
192. प्रश्नः—किं नाम अर्थवत्त्वम्?
उत्तरम्—एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वम्-अर्थवत्त्वम्।
193. प्रश्नः—को वाग्वज्रो यजमानं हिनस्ति?
उत्तरम्— मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो, न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति, यथेन्द्रशत्रुः स्वरतोऽपराधात्।।
194. प्रश्नः—वेदस्य उपाङ्गानि कानि सन्ति?
उत्तरम्— पुराण-न्याय-मीमांसा-धर्मशास्त्राणि।
195. प्रश्नः—ओङ्कारे-अकाराद्यास्त्रयो वर्णाः केषां वाचकाः, अन्त्यो ध्वनिश्च किं कथ्यते?
उत्तरम्— अकाराद्यास्त्रयो वर्णा ब्रह्मविष्णुमहेश्वराः।
अन्त्ये प्रती...

196. प्रश्नः—को नाम मोक्षः?
उत्तरम्— आत्यन्तिकदु:खध्वंसो मोक्षः।
197. प्रश्नः—वैयाकरणभूषणसारस्य को निर्माता?
उत्तरम्— कौण्डभट्टः।
198. प्रश्नः—वैयाकरणभूषणसारे कियन्ति प्रकरणानि?
उत्तरम्— (14) चतुर्दश।
199. प्रश्नः—कौण्डभट्टस्य पितुर्नाम किम्?
उत्तरम्— रङ्गोजिभट्टः।
200. प्रश्नः—कौण्डभट्टस्य पितृव्यस्य किं नाम विद्यते?
उत्तरम्— श्रीमद्भट्टोजिदीक्षितः।
201. प्रश्नः—पुंस्त्वं किम्?
उत्तरम्— सत्त्वरजस्तमोगुणानामाधिक्यं पुंस्त्वम्।
202. प्रश्नः—किं नाम स्त्रीत्वम्?
उत्तरम्— सत्त्वरजस्तमोगुणानामपचयः स्त्रीत्वम्।
203. प्रश्नः—किन्नाम नपुंसकत्वम्?
उत्तरम्— सत्त्वरजस्तमोगुणानां साम्यावस्था नपुंसकत्वम्।
204. प्रश्नः—कात्यायन-रचितानां वार्तिकानां कियत्यः संख्याः सन्ति?
उत्तरम्— (1500) पञ्चदशशतानि।
205. प्रश्नः—महाभाष्य-प्रदीपस्य रचयिता कोऽस्ति?
उत्तरम्— कैयटः।
206. प्रश्नः—महाभाष्य-प्रदीपे "उद्योत"टीकायाः रचनाकारः कः?
उत्तरम्— नागेशः।
207. प्रश्नः—वाक्यपदीये कियन्ति खण्डानि, कानि च तानि?
उत्तरम्— (3) त्रीणि, 1. ब्रह्मकाण्डम्, 2. पदकाण्डम्, 3. वाक्यकाण्डञ्च।
208. प्रश्नः—कौमार-रचितं किं व्याकरणम्?
उत्तरम्— कातन्त्र-व्याकरणम्।
209. प्रश्नः—वोपदेव-रचितं किं व्याकरणम्?
उत्तरम्— मुग्धबोध-व्याकरणम्।
210. प्रश्नः—सारस्वत-व्याकरणस्य को लेखकः?
उत्तरम्— अनुभूति-स्वरूपाचार्यः।
211. प्रश्नः—वररुचिकृतं किं व्याकरणम्?
उत्तरम्— प्राकृतप्रकाशः।
212. प्रश्नः—"शब्दानुशासनम्" कस्य व्याकरणम्?
उत्तरम्— हेमचन्द्रस्य।

213. प्रश्नः—संस्कृते कति पुरुषाः भवन्ति, के च ते?
उत्तरम्— त्रयो पुरुषाः, 1. प्रथमपुरुष, 2. मध्यमपुरुष, 3. उत्तमपुरुष।

214. प्रश्नः—संस्कृते कति लिङ्गानि?
उत्तरम्— (3) त्रीणि।

215. प्रश्नः—अनुनासिकवर्णानां का संख्या?
उत्तरम्— (5) पञ्च।

**( थ ) संज्ञा/परिभाषा/आगम/आदेशादिविषयकानि वस्तुनिष्ठप्रश्नोत्तराणि—**

1. प्रश्नः—कति माहेश्वरसूत्राणि सन्ति?
उत्तरम्— चतुर्दश।

2. प्रश्नः—माहेश्वराणि इत्यत्र कः प्रत्ययः?
उत्तरम्— अण् प्रत्ययः।

3. प्रश्नः—किमर्थानि माहेश्वरसूत्राणि?
उत्तरम्— प्रत्याहारसंज्ञार्थानि।

4. प्रश्नः—माहेश्वरसूत्रेषु अन्त्या भवन्ति—
उत्तरम्— इत्संज्ञकाः।

5. प्रश्नः—"आदिरन्त्येन सहेता" अनेन सूत्रेण विधीयते—
उत्तरम्— प्रत्याहारसंज्ञा।

6. प्रश्नः—कति प्रत्याहाराः सन्ति?
उत्तरम्— त्रिचत्वारिंशत्।

7. प्रश्नः—केषां वर्णानाम् उदात्त-अनुदात्त-स्वरितसंज्ञाः भवन्ति—
उत्तरम्— स्वरवर्णानाम्(अचाम्)।

8. प्रश्नः—अ, इ, उ, ऋवर्णानां प्रत्येकस्य भेदाः भवन्ति—
उत्तरम्— अष्टादश।

9. प्रश्नः—ए, ऐ, ओ, औवर्णानां प्रत्येकस्य भेदाः भवन्ति—
उत्तरम्— द्वादश।

10. प्रश्नः—"तुल्यास्यप्रयत्नं सवर्णम्" अनेन सूत्रेण विधीयते—
उत्तरम्— सवर्णसंज्ञा।

11. प्रश्नः—अ-कवर्ग-हकार-विसर्गवर्णानाम् उच्चारणस्थानमस्ति—
उत्तरम्— कण्ठः।

12. प्रश्नः—इ-चवर्ग यशवर्णानाम् उच्चारणस्थानमस्ति—
उत्तरम्— तालु।

13. प्रश्नः—ऋ-टवर्गरष वर्णानाम् उच्चारणस्थानमस्ति—
उत्तरम्— मूर्धा।

14. प्रश्नः—लृ-तवर्गः लसवर्णानाम् उच्चारणस्थानमस्ति—
उत्तरम्— दन्तः।

15. प्रश्नः—उ-पवर्गः उपध्मानीय वर्णानाम् उच्चारणस्थानमस्ति—
उत्तरम्— ओष्ठः।
16. प्रश्नः—ओ-औवर्णानाम् उच्चारणस्थानमस्ति—
उत्तरम्— कण्ठौष्ठ्यम्।
17. प्रश्नः—एकारः ऐकारः वर्णानाम् उच्चारणस्थानमस्ति—
उत्तरम्— कण्ठतालुः।
18. प्रश्नः—ञ म ङ ण न वर्णानां विशेषस्थानम् अस्ति—
उत्तरम्— नासिका।
19. प्रश्नः—प्रयत्नः कतिविधः भवति?
उत्तरम्— द्विविधः।
20. प्रश्नः—आभ्यन्तरप्रयत्नः कतिविधः के च ते?
उत्तरम्— चतुर्विधः, स्पृष्टः, ईषत्स्पृष्टः, विवृतः, संवृतश्च।
21. प्रश्नः—बाह्यप्रयत्नः कतिविधः के च ते?
उत्तरम्—एकादश, विवारः, संवारः, श्वासः, नादः, घोषः, अघोषः, अल्पप्राणः, महाप्राणः, उदात्तः, अनुदात्तः, स्वरितश्च।
22. प्रश्नः—स्पर्शाः वर्णाः के सन्ति?
उत्तरम्— कवर्गतः पवर्गपर्यन्तम्।
23. प्रश्नः—अन्तःस्थाः वर्णाः सन्ति—
उत्तरम्— य, र, ल, व।
24. प्रश्नः—ऊष्मवर्णाः सन्ति—
उत्तरम्— श, ष, स, ह।
25. प्रश्नः—वर्गस्य प्रथम-तृतीय-पञ्चमवर्णानाम् अन्तःस्थानाञ्च बाह्यप्रयत्नः अस्ति—
उत्तरम्—अल्पप्राणः।
26. प्रश्नः—वर्गस्य द्वितीयचतुर्थवर्णानाम् ऊष्माणाञ्च बाह्यप्रयत्नः अस्ति—
उत्तरम्— महाप्राणः।
27. प्रश्नः—वृद्धिसंज्ञाविधायकं सूत्रम्—
उत्तरम्— वृद्धिरादैच्।
28. प्रश्नः—आ, ऐ, औ एते वर्णाः सन्ति—
उत्तरम्— वृद्धिसंज्ञकाः।
29. प्रश्नः—गुणसंज्ञा केन सूत्रेण विधीयते?
उत्तरम्— अदेङ्गुणः।
30. प्रश्नः—गुणसंज्ञकाः वर्णाः सन्ति—
उत्तरम्—अ, ए, ओ।
31. प्रश्नः—प्रादीनां क्रियायोगे भवति—
उत्तरम्—उपसर्गसंज्ञा।

32. प्रश्नः—कति उपसर्गाः?
उत्तरम्—द्वाविंशतिः।
33. प्रश्नः—"अवसान" संज्ञा केन सूत्रेण भवति?
उत्तरम्— विरामोऽवसानम्।
34. प्रश्नः—"संहिता"संज्ञा केन सूत्रेण भवति?
उत्तरम्—परः सन्निकर्षः संहिता।
35. प्रश्नः—"पद"संज्ञा केन सूत्रेण भवति?
उत्तरम्— सुप्तिङन्तं पदम्।
36. प्रश्नः—संयोगसंज्ञाविधायकं सूत्रम्—
उत्तरम्—हलोऽनन्तराः संयोगः।
37. प्रश्नः—ह्रस्वस्य स्वरवर्णस्य भवति—
उत्तरम्— लघुसंज्ञा।
38. प्रश्नः—संयोगे परे ह्रस्वस्वरस्य एवं दीर्घस्वरस्य संज्ञा भवति—
उत्तरम्— गुरुसंज्ञा।
39. प्रश्नः—नदीसंज्ञाविधायकं सूत्रं किमस्ति?
उत्तरम्—ङिति ह्रस्वश्च।
40. प्रश्नः—"मति ङे मत्यै" अत्र "मति" इत्यस्य नदी-संज्ञा केन सूत्रेण भवति?
उत्तरम्—"ङिति ह्रस्वश्च"।
41. प्रश्नः—"यू स्त्र्याख्यौ नदी" इति सूत्रे "यू" इत्यनेन कयोः वर्णद्वयोः बोधो भवति?
उत्तरम्— ई, ऊ।
42. प्रश्नः—"घि"संज्ञा केन सूत्रेण भवति?
उत्तरम्—"शेषो घ्यसखि"।
43. प्रश्नः—ङित् विभक्तौ केन सूत्रेण "घि"संज्ञकं गुणो विधीयते?
उत्तरम्—घेर्ङिति।
44. प्रश्नः—"घि"संज्ञकेन विहित"ङि"विभक्तिः केन सूत्रेण औकारो भवति?
उत्तरम्— अच्च घेः इति सूत्रेण।
45. प्रश्नः—"शेषो घ्यसखि" इति सूत्रे "शेष"शब्दः कया संज्ञया सम्बद्धः?
उत्तरम्— नदी-संज्ञया।
46. प्रश्नः—प्रातिपदिकसंज्ञाविधायकं सूत्रं किम्?
उत्तरम्—अर्थवदधातुरप्रत्ययः प्रातिपदिकम्।
47. प्रश्नः—शब्दानुशासने प्रातिपदिकसंज्ञाविधायकानि कति सूत्राणि सन्ति?
उत्तरम्—(02) द्वौ।
48. प्रश्नः—"कृत्तद्धितसमासाश्च" इति सूत्रेण का संज्ञा विधीयते?
उत्तरम्— प्रातिपदिकसंज्ञा।

49. प्रश्नः—"दाशरथिः" अत्र कस्मिन् अर्थे प्रातिपदिकसंज्ञा भवति?
उत्तरम्— तद्धितान्तार्थे।
50. प्रश्नः—"कारकः" अत्र कीदृशः प्रातिपदिकसंज्ञा भवति?
उत्तरम्— कृदन्तार्थे।
51. प्रश्नः—"पीताम्बरः" अत्र कस्मिन् अर्थे प्रातिपदिकसंज्ञा भवति?
उत्तरम्— समासान्तार्थे।
52. प्रश्नः—"डित्थ" इत्यस्य प्रातिपदिकसंज्ञा केन सूत्रेण भवति?
उत्तरम्—अर्थवदधातुरप्रत्ययः प्रातिपदिकम्।
53. प्रश्नः—केन सूत्रेण "उपधा" विधीयते?
उत्तरम्—अलोऽन्त्यात्पूर्व उपधा।
54. प्रश्नः—"अपृक्त"संज्ञाविधायकं सूत्रं किम्?
उत्तरम्— अपृक्त एकाल् प्रत्ययः।
55. प्रश्नः—"लता सु लता स् लता" अत्र "स्" इत्यस्य लोपः कया संज्ञया सम्बद्धोऽस्ति?
उत्तरम्— अपृक्त-संज्ञया।
56. प्रश्नः—गतिसंज्ञा केन सूत्रेण भवति?
उत्तरम्— गतिश्च।
57. प्रश्नः—"आदर" "अनादर" अर्थयोः कयोः गतिसंज्ञा भवतः?
उत्तरम्— सत्, असत् इत्यनयोः।
58. प्रश्नः—"गतिश्च" अस्मिन् सूत्रे विधेय"गति"संज्ञायाः किमुद्देश्यम्?
उत्तरम्— प्रादयः।
59. प्रश्नः—"च्वि" प्रत्ययान्तस्य का संज्ञा भवति?
उत्तरम्— गति-संज्ञा।
60. प्रश्नः—"आदरानादरयोः सदसती" इति सूत्रेण कस्याः संज्ञायाः विधानं भवति?
उत्तरम्— गतिसंज्ञायाः।
61. प्रश्नः—"अलम्" इत्यस्य कस्मिन् अर्थे, केन सूत्रेण च "गति"संज्ञा भवति?
उत्तरम्— भूषणार्थे, "भूषणेऽलम्" इति सूत्रेण।
62. प्रश्नः—"अन्तर" इत्यस्य कस्मिन् अर्थे, केन सूत्रेण च "गति"संज्ञा भवति?
उत्तरम्— अपरिग्रह-अर्थे, "अन्तरपरिग्रहे" इति सूत्रेण।
63. प्रश्नः—"अस्तम्" अस्य अव्ययस्य गति-संज्ञा केन सूत्रेण भवति?
उत्तरम्— "अस्तं च" इति सूत्रेण।
64. प्रश्नः—"अच्छगत्यर्थवदेषु" इति सूत्रेण कस्याः संज्ञायाः विधानं भवति?
उत्तरम्— गति-संज्ञयाः।
65. प्रश्नः—"विभाषा कृञि" सूत्रस्य कया संज्ञया सह सम्बन्धः वर्तते?
उत्तरम्— गति-संज्ञया।

66. प्रश्नः—"कृञ्" धातुना युक्ते सति कयोः द्वयोः "गति"संज्ञा भवति?
उत्तरम्— उपाजे, अन्वाजे।
67. प्रश्नः—"कृञ्" इत्यनेन युक्तः "उरसि" "मनसि" इत्यस्य च कस्मिन् अर्थे गतिसंज्ञा भवति?
उत्तरम्— अन्तर्द्धि-इत्यर्थे।
68. प्रश्नः—"अनत्याधान उरसिमनसि" अस्य सूत्रस्य किमुदाहरणम्?
उत्तरम्— उरसिकृत्य।
69. प्रश्नः—"अग्निचित्" अत्र टि किमस्ति?
उत्तरम्— इत्।
70. प्रश्नः—"निष्ठा" संज्ञा केन सूत्रेण भवति?
उत्तरम्—क्तक्तवतू निष्ठा।
71. प्रश्नः—"कृ णिच् क्त कारितम्" अत्र "णि" इत्यस्य लोपः केन सूत्रेण भवति?
उत्तरम्— निष्ठायां सेटि।
72. प्रश्नः—"प्र-क्षि क्त प्रक्षीणः" अत्र केन सूत्रेण धातोः दीर्घो भवति?
उत्तरम्— निष्ठायामण्यदर्थे।
73. प्रश्नः—"छिद् क्त छिन्तः" अत्र केन सूत्रेण नत्वो भवति?
उत्तरम्— रदाभ्यां निष्ठातो नः पूर्वस्य च दः।
74. प्रश्नः—केन सूत्रेण सम्प्रसारणसंज्ञा विधीयते?
उत्तरम्—इग्यणः सम्प्रसारणम्।
75. प्रश्नः—"विभाषा" संज्ञा केन सूत्रेण भवति?
उत्तरम्—न वेति विभाषा।
76. प्रश्नः—किम् नाम सवर्णसंज्ञा?
उत्तरम्— तुल्यास्यप्रयत्नं सवर्णम्।
77. प्रश्नः—"टि" संज्ञाविधायकं सूत्रं किम्?
उत्तरम्—अचोऽन्त्यादि टि।
78. प्रश्नः—"प्रगृह्य" संज्ञा केन सूत्रेण भवति?
उत्तरम्— ईदूदेद् द्विवचनं प्रगृह्यम्।
79. प्रश्नः—"शिशू" इत्यस्य "प्रगृह्यसंज्ञा" केन सूत्रेण भवति?
उत्तरम्— ईदूदेद् द्विवचनं प्रगृह्यम्।
80. प्रश्नः—"अमी अत्र" अस्मिन् पदे "अमी" इत्यस्य "प्रगृह्यसंज्ञा" केन सूत्रेण भवति?
उत्तरम्— "अदसो मात्" इति सूत्रेण।
81. प्रश्नः—"शि सर्वनामस्थानम्" इति सूत्रस्य "शि" इत्यस्य काभ्यां द्वाभ्यां विभक्तिभ्यां सम्बन्धः?
उत्तरम्— जस्, शस्।
82. प्रश्नः—"समासेषु" प्रथमानिर्दिष्टस्य का संज्ञा?
उत्तरम्—उपसर्जनसंज्ञा।

83. प्रश्नः—"विभाषा कृञि" इति सूत्रेण का संज्ञा?
उत्तरम्— गतिसंज्ञा।
84. प्रश्नः—"मुनि" इति पदस्य का संज्ञा?
उत्तरम्— घिसंज्ञा।
85. प्रश्नः—"उपधा" संज्ञा केन सूत्रेण भवति?
उत्तरम्— अलोऽन्त्यात् पूर्व उपधा।
86. प्रश्नः—पाणिनीयव्यवस्थायां "उपधा" का विद्यते?
उत्तरम्— संज्ञा।
87. प्रश्नः—सुबन्त-तिङन्तयोः का संज्ञा?
उत्तरम्— पदसंज्ञा।
88. प्रश्नः—सम्प्रसारणेन "य्" "व्" इत्यनयोः के भवतः?
उत्तरम्— इ, उ, भवतः।
89. प्रश्नः—"पतत् ङीप् पतन्ती" अत्र केन सूत्रेण "नुम्" इत्यस्यागमः भवति?
उत्तरम्— शप्श्यनोर्नित्यम्।
90. प्रश्नः—"द्विगोः" सूत्रे कस्मात् सूत्रात् "ङीप्" इत्यस्य अनुवर्तनं भवति?
उत्तरम्— ऋन्नेभ्यो ङीप्।
91. प्रश्नः—"नदी" संज्ञा केन सूत्रेण भवति?
उत्तरम्—यू स्त्र्याख्यौ नदी।
92. प्रश्नः—समासशास्त्रे उपसर्जनं नाम किम्?
उत्तरम्—प्रथमानिर्दिष्टम्।
93. प्रश्नः—सप्तर्षयः इत्यत्र समासविधायकं सूत्रं किम्?
उत्तरम्—दिक्संख्ये संज्ञायाम्।
94. प्रश्नः—स्वादिपञ्चवचनानां का संज्ञा?
उत्तरम्— सर्वनामस्थानम्।
95. प्रश्नः—संख्या कं कथ्यते?
उत्तरम्— बहुगणवतुडति संख्या।
96. प्रश्नः—तरप् एवं तमप् इत्यस्य का संज्ञा भवति?
उत्तरम्— तरप्तमपौ घः इति घ संज्ञा।
97. प्रश्नः—सम्बुद्धिसंज्ञा कां कथ्यते?
उत्तरम्—सम्बोधने प्रथमा एकवचनं सम्बुद्धिसंज्ञकं भवति।
98. प्रश्नः—द्वित्वस्य द्वितीयरूपं किं कथ्यते?
उत्तरम्— आम्रेडितम्।
99. प्रश्नः—अभ्यासं किं कथ्यते?
उत्तरम्—द्वित्वस्य प्रथमरूपम्।

100. प्रश्नः—"प" एवं "फ" इत्यस्य पूर्व-अर्द्धविसर्ग-तुल्य-ध्वनिं किं कथ्यते?
उत्तरम्— उपध्मानीयम्।
101. प्रश्नः—अपृक्त इति कं कथ्यते?
उत्तरम्— एकवर्णात्मकं प्रत्ययम्।
102. प्रश्नः—घुसंज्ञा कान् धातून् भवति?
उत्तरम्—षड् धातून्, 1. डुदाञ्, 2. दाण्, 3. दो, 4. देङ्, 5. दुधाञ्, 6. धेट्।
103. प्रश्नः—"घु" संज्ञाविधायकं सूत्रं किमस्ति?
उत्तरम्— दाधाघ्वदाप्।
104. प्रश्नः—भट्टोजिदीक्षितः प्रातिपदिकार्थस्य का व्याख्या करोति?
उत्तरम्—नियतोपस्थितिकः प्रातिपदिकार्थः।
105. प्रश्नः—व्याडिमहोदयः प्रातिपदिकार्थं कस्मिन् स्वीकरोति?
उत्तरम्— व्यक्तौ।
106. प्रश्नः—वाजप्यायनः प्रातिपदिकार्थं कस्मिन् स्वीकरोति?
उत्तरम्— जातौ(जात्याम्)।
107. प्रश्नः—पतञ्जलिः प्रातिपदिकार्थं केषु स्वीकरोति?
उत्तरम्— 1. स्वार्थे, 2. द्रव्ये, 3. लिङ्गे, 4. संख्यां, 5. कारके।
108. प्रश्नः—कैयटः प्रातिपदिकार्थं केषु स्वीकरोति?
उत्तरम्—1. स्वार्थे, 2. द्रव्ये, 3. लिङ्गे, 4. संख्याम्।
109. प्रश्नः—लुक्, लुप् एवं श्लु इति किमस्ति?
उत्तरम्—एते अदर्शनं लोपस्य वा कारकसंज्ञा भवति।
110. प्रश्नः—उपसर्गाणां गति-संज्ञा कदा भवति?
उत्तरम्—क्रियायोगे उपसर्गस्य गतिसंज्ञा भवति। (उपसर्गाः क्रियायोगे।)
111. प्रश्नः—अन्वादेशं कं कथ्यते?
उत्तरम्—यस्मिन् कार्ये यस्य ग्रहणं अभूत् तस्य पुनः अन्यकार्येषु उपयोगकरणं अन्वादेशो भवति।
112. प्रश्नः—आबन्तं कं कथ्यते?
उत्तरम्—टाप्, डाप्, चाप् एते त्रयं स्त्रीप्रत्ययं "आप्" इति कथ्यते, तस्यान्तं पदं आबन्तमिति कथ्यते।
113. प्रश्नः—संस्कृतवर्णमालायां कति मूलस्वराः भवन्ति?
उत्तरम्—पञ्च अ, इ, उ, ऋ, लृ।
114. प्रश्नः—ध्वनि-परिवर्तनस्य सर्वप्रमुखकारणं किम्?
उत्तरम्— प्रयत्नलाघवम्।
115. प्रश्नः—सूत्रं किमुच्यते?
उत्तरम्— अल्पाक्षरत्वे सति बह्वर्थबोधकत्वं सूत्रत्वम्।

116. प्रश्नः—धातुसंज्ञकाः के भवन्ति?
उत्तरम्— क्रियावाचिनो भ्वादयः।
117. प्रश्नः—सर्वनामसंज्ञकाः के शब्दाः सन्ति?
उत्तरम्— (35) पञ्चत्रिंशत्, सर्वादयः।
118. प्रश्नः—अव्ययसंज्ञकाः के भवन्ति?
उत्तरम्— स्वरादयो निपाताश्च।
119. प्रश्नः—किं नाम अव्ययम्?
उत्तरम्— सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्।।
120. प्रश्नः—"श्री" शब्दस्य षष्ठी-विभक्ति-बहुवचने का संज्ञा विकल्पेन भवति?
उत्तरम्— नदी-संज्ञा।
121. प्रश्नः—भूपतिशब्दस्य "घि" संज्ञाविधायकं सूत्रं किम्?
उत्तरम्— पतिः समास एव।
122. प्रश्नः—समासे पतिशब्दस्य का संज्ञा भवति?
उत्तरम्— घिसंज्ञा।
123. प्रश्नः—"भवत+छन्=भवदीयः अत्र भवत् शब्दस्य केन सूत्रेण पदसंज्ञा भवति?
उत्तरम्— सिचि च।
124. प्रश्नः—स्वप्+क्त=सुप्तः अत्र स्वप् धातोः किं कार्यं भवति?
उत्तरम्— सम्प्रसारणम्।
125. प्रश्नः—पाणिनेः मते "वधू" शब्दस्य का संज्ञा?
उत्तरम्— नदी-संज्ञा।
126. प्रश्नः—उप+भुज्+तुमुन्=उपभोक्तुम् अत्र धातोः कं अंशं गुणः अभूत्?
उत्तरम्— उपधा।
127. प्रश्नः—"रम् घञ् रामः" अत्र धातोः अकारस्य का संज्ञा?
उत्तरम्— उपधा-संज्ञा।
128. प्रश्नः—पठ्+घञ्=पाठः अत्र धातोः का विधिः प्रयुक्तः?
उत्तरम्— वृद्धिः।
129. प्रश्नः—"राजन्+सु (स्)=राज्ञि "स्" इत्यस्य लोपः कथं भवति?
उत्तरम्— अयं अपृक्तः अस्ति।
130. प्रश्नः—"कारके" इदं कीदृशं सूत्रम्?
उत्तरम्— अधिकारसूत्रम्।
131. प्रश्नः—कृदन्तस्य का संज्ञा भवति?
उत्तरम्— प्रातिपदिकसंज्ञा।
132. प्रश्नः—"मुनि" शब्दस्य का संज्ञा?
उत्तरम्— घि-संज्ञा।

52. प्रश्नः—प्रगतः आचार्यः प्राचार्यः, शेभनः राजा सुराजा, दुष्टः जनः दुर्जनः अत्र कः समासः?
उत्तरम्— गति-कर्मधारयः।
53. प्रश्नः—कुम्भं करोतीति कुम्भकारः, गां ददातीति गोदः अत्र कः समासः?
उत्तरम्— उपपदसमासः।
54. प्रश्नः—रामश्च कृष्णश्च रामकृष्णौ, गावश्च अश्वश्च गवाश्वम् अत्र कः समासः?
उत्तरम्— समाहारद्वन्द्वः।
55. प्रश्नः—मुष्टिभ्यां मुष्टिभ्यां इदं युद्ध प्रवृत्तम् इति मुष्टामुष्टि अत्र कः समासः?
उत्तरम्— कर्मव्यतिहारबहुव्रीहिः।
56. प्रश्नः—पीतम् अम्बरम् यस्य सा पीताम्बरः, शोभनो गन्धो यस्य सः सुगन्धिः, अत्र कः समासः?
उत्तरम्— बहुव्रीहिः।
57. प्रश्नः—त्रयाणाम् भुवनानां समाहारः इति त्रिभुवनम् इति कः समासः?
उत्तरम्— समाहारद्विगुः।
58. प्रश्नः—"दक्षिणपूर्वा" अत्र विग्रहवाक्यं दर्शय?
उत्तरम्— दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं सा।
59. प्रश्नः—"गजसिंहम्" अस्य विग्रहवाक्यं दर्शय?
उत्तरम्— गजाश्च सिंहाश्च एषां समाहारः।
60. प्रश्नः—"कापुरुषः-किंराजा-कदन्नम् इति कस्य समासस्य उदाहरणानि?
उत्तरम्— प्रादिसमासस्य।
61. प्रश्नः—"मृदः पिण्ड इव मतिः यस्य सः" इति विग्रहवाक्यस्य समस्तं पदं किम्?
उत्तरम्— मृत्पिण्डमतिः।
62. प्रश्नः—"कुपुरुषः" अत्र कः समासः?
उत्तरम्— गतिसमासः।
63. प्रश्नः—कुम्भकारः कः समासः?
उत्तरम्— उपपदसमासः।
64. प्रश्नः—अहश्च रात्रिश्च इति विग्रहवाक्यस्य समस्तं पदं किम्?
उत्तरम्— अहोरात्रः।
65. प्रश्नः—"न अलङ्कृतं शरीरं यस्य सः" अत्र समस्तं पदं किं स्यात्?
उत्तरम्— अनलङ्कृतशरीरम्।
66. प्रश्नः—कुलस्यापत्यं पुमान् इत्यस्य समस्तपदं किं स्यात्?
उत्तरम्— कुलीनः।
67. प्रश्नः—गर्गस्य युवापत्यं पुमान् इत्यस्य समस्तपदं किं स्यात्?
उत्तरम्— गार्ग्यायणः।
68. प्रश्नः—"मातापितरौ" इत्यस्य विग्रहवाक्यं किम्?
उत्तरम्— माता च पिता च मातापितरौ।

69. प्रश्नः—द्वौ च दश च इत्यस्य समस्तपदं किं स्यात्?
उत्तरम्— द्वादश।
70. प्रश्नः—त्रयोदश अत्र कः समासः?
उत्तरम्— द्वन्द्वः।
71. प्रश्नः—द्वन्द्वतत्पुरुषयोः किं भवति?
उत्तरम्— परवल्लिङ्गम्।
72. प्रश्नः—पञ्चषु कपालेषु संस्कृतः इत्यत्र समस्तपदं किम्?
उत्तरम्— पञ्चकपालः।
73. प्रश्नः—"पुत्रेण सह आगतः पिता" इत्यत्र समस्तपदं किम्?
उत्तरम्— सपुत्रः।
74. प्रश्नः—" . "शेषाद् विभाषा" अनेन किं विधीयते?
उत्तरम्— कप्।
75. प्रश्नः—संज्ञा च परिभाषा च तयोः समाहारः इति समस्तपदं किम्?
उत्तरम्— संज्ञापरिभाषम्।
76. प्रश्नः—ईश्वरं गुरुं च भजस्व अत्र चकारस्य कोऽर्थः?
उत्तरम्— समुच्चयः।
77. प्रश्नः—भिक्षामट गां चानय अत्र चकारस्य कोऽर्थः?
उत्तरम्— अन्वाचयः।
78. प्रश्नः—शिवकेशवौ अत्र शिवशब्दस्य पूर्वनिपातं केन सूत्रेण भवति?
उत्तरम्— अल्पाच्तरम्।
79. प्रश्नः—पाणी च पादौ च तेषां समाहारः अत्र समस्तपदं किम्?
उत्तरम्— पाणिपादम्।
80. प्रश्नः—श्वश्रूश्च श्वसुरश्च इति समस्तपदं किम्?
उत्तरम्— श्वसुरौ।
81. प्रश्नः—भ्रातरो अत्र कः समासः?
उत्तरम्— एकशेषः।
82. प्रश्नः—विशेषसंज्ञाविनिर्मुक्तः कः समासः?
उत्तरम्— केवलसमासः।
83. प्रश्नः—समानाधिकरणतत्पुरुषः किमस्ति?
उत्तरम्— द्विगुः।
84. प्रश्नः—"सप्तर्षयः" इत्यत्र कः समासः?
उत्तरम्— समानाधिकरणतत्पुरुषः।
85. प्रश्नः—एकशेषेतरसमाहारात्मकः समासः कः?

86. प्रश्नः—"नीलोत्पलम्" इति पदस्यालौकिकविग्रहः कः?
उत्तरम्— नील सु उत्पल सु।
87. प्रश्नः—"अनुरूपम्" इत्यस्य पदस्य विग्रहः कः ?
उत्तरम्— रूपस्य योग्यम्।
88. प्रश्नः—"जीविकापन्नः" इत्यस्य कः विग्रहः?
उत्तरम्— जीविकाम् आपन्नः।
89. प्रश्नः—"छायावृक्षाः" "शाकपार्थिवः" अत्र कः समासः स्यात्?
उत्तरम्— मध्यमपदलोपी कर्मधारयः।
90. प्रश्नः—सर्वदः, धनदः, दुर्जनः—एतेषां समासः कः?
उत्तरम्— उपपदसमासः।
91. प्रश्नः—"राजपुरुषः" "जटाबद्धः", "शोकापन्नः," "शैलराजः" एतेषु कः समासः?
उत्तरम्— तत्पुरुषः।
92. प्रश्नः—महाराजः, राजर्षिः, परमानन्दः—इत्येतानि कस्य समासस्य पदानि?
उत्तरम्— कर्मधारयस्य।
93. प्रश्नः—अक्षमः, अनृणः, अब्राह्मणः, अघोषितः एतेषां कः समासः?
उत्तरम्— नञ् तत्पुरुषः।
94. प्रश्नः— खलसज्जनानां, कुन्देन्दुतुषाराः अनयोः समासः कः?
उत्तरम्— इतरेतरद्वन्द्वः।
95. प्रश्नः—अनुरूपं, यथाशक्ति, सचक्रं, उपागमम्, उपनदि, अधिकूलम्—अत्र कः समासः?
उत्तरम्— अव्ययीभावः।
96. प्रश्नः—पीताम्बरः, चित्रगुः, हस्तिपादः, यशोधनः, लम्बोदरः, दुर्बुद्धिः, सुशीला, चन्द्रमुखी, दशाननः, महात्मा, प्राप्तधनः—एतेषां समासनाम किम्?
उत्तरम्— बहुव्रीहिः।
97. प्रश्नः—"देवानां प्रियः" "दास्याः पुत्रः" "अग्रेसरः" कस्य समासस्योदाहरणानि?
उत्तरम्— अलुक्समासस्य।
98. प्रश्नः—पञ्चपात्रं, त्रिलोकी, त्रिभुवनम्, त्रिनेत्रम्, त्रिरात्रम्, एतेषां कः समासः?
उत्तरम्— द्विगुः।
99. प्रश्नः— विद्याधनम्, वचनामृतम्, मुखचन्द्रः, एतेषु कः समासः?
उत्तरम्— उपमानपूर्वपदकर्मधारयः।
100. प्रश्नः—कापुरुषः, किंराजा, कदन्नम् इत्यादिषु कः समासः?
उत्तरम्— प्रादिसमासः।
101. प्रश्नः—"युधिष्ठिरः" इत्यत्र कः समासः?
उत्तरम्— अलुक्समासः।
102. प्रश्नः—"शोकानलः" अत्र कः समासः?
उत्तरम्— उपमानोत्तरपदः।

103. प्रश्नः—विशेषसंज्ञाविनिर्मुक्तः समासः कः?
उत्तरम्— केवलः।

104. प्रश्नः—"तस्य रूपेण मोहितः" एकपदीकरणं कथम्?
उत्तरम्— तद्रूपमोहितः।

105. प्रश्नः—"चौरकर्म, चौराद्भीतिः इत्यनयोः समासौ कौ?
उत्तरम्— षष्ठीतत्पुरुषः-पञ्चमीतत्पुरुषः।

106. प्रश्नः—"सालवृक्षः" अत्र कः समासः?
उत्तरम्— विशेषणपूर्वपदः।

107. प्रश्नः—"खड्गपाणिः" अत्र कः समासः?
उत्तरम्— व्यधिकरणबहुव्रीहिः।

108. प्रश्नः—"वागर्थाविव" इति कस्य उदाहरणमस्ति?
उत्तरम्— द्वन्द्वस्य।

109. प्रश्नः—"तत्पुरुषः" इत्यस्य पदस्य विग्रहवाक्यं किम्?
उत्तरम्— सः पुरुषः तत्पुरुषः।

110. प्रश्नः—"पीतवस्त्रम्" इत्यत्र कः समासः?
उत्तरम्— कर्मधारयः।

111. प्रश्नः—व्यतिहारलक्षणबहुव्रीहिः कः?
उत्तरम्— केशाकेशि।

112. प्रश्नः—"पितरौ" इत्यस्य विग्रहवाक्यं किम्?
उत्तरम्— माता च पिता च।

113. प्रश्नः—कर्मधारयसमासः कतिविधः?
उत्तरम्— नवविधः।

114. प्रश्नः—व्यधिकरणतत्पुरुषसमासः कतिविधः?
उत्तरम्— सप्तविधः।

115. प्रश्नः—"श्यामोज्ज्वलवपुः" इति कस्योदाहरणमस्ति?
उत्तरम्— बहुपदबहुव्रीहेः।

116. प्रश्नः—"मुखचन्द्रः" इत्यत्र कीदृशः कर्मधारय?
उत्तरम्— अवधारणपूर्वपदकर्मधारयः।

117. प्रश्नः—"शिवौ" इत्यत्र कः समासः?
उत्तरम्— एकशेषः।

118. प्रश्नः—"नृसिंहः" इति कस्योदाहरणं स्यात्?
उत्तरम्— उपमानोत्तरपदकर्मधारयस्य।

119. प्रश्नः—"निश्शङ्कम्" इत्यत्र कः समासः?
उत्तरम्—क्रियाविशेषणबहुव्रीहिः।

120. प्रश्नः—"फलवृक्षाः, छायावृक्षाः, पुष्पलताः एषां समासं निर्दिशत?
उत्तरम्— मध्यमपदलोपितत्पुरुषः।

121. प्रश्नः—अतयः, अपुत्रः, अपापः, एषां समासस्य नामास्ति?
उत्तरम्— नञ्बहुव्रीहिः।

122. प्रश्नः—"शताब्दी" इति शब्दे समासः?
उत्तरम्— द्विगुः।

123. प्रश्नः—"प्राचार्यः" इत्यस्मिन् शब्दे कः समासः?
उत्तरम्— प्रादिसमासः।

124. प्रश्नः—"मधुपः" इत्यस्य कः विग्रहः?
उत्तरम्— मधूनि पिबतीति।

125. प्रश्नः—"खड्गहस्ता" (देवी) इत्यत्र विग्रहः?
उत्तरम्— खड्ग हस्ते यस्याः सा।

126. प्रश्नः—"मृगलोचना" इत्यस्य विग्रहः कः?
उत्तरम्— मृगस्य लोचने इव लोचने यस्याः सा।

127. प्रश्नः—"आत्मनेपदम्" इत्यत्र कः समासः?
उत्तरम्— अलुक्समासः।

128. प्रश्नः—नवानां रात्रीणां समाहारः?
उत्तरम्— नवरात्रम्।

129. प्रश्नः—"आत्मनि इति" इत्यस्य समस्तपदं किम्?
उत्तरम्— अध्यात्मम्।

130. प्रश्नः—"हरिहरौ" इत्यत्र कः समासः?
उत्तरम्— द्वन्द्वः।

131. प्रश्नः—सुबन्तस्य केन सह समासो भवति?
उत्तरम्— सुबन्तेन सह।

132. प्रश्नः—पदानां मेलनस्य प्रक्रियां किं कथ्यते?
उत्तरम्— समसनम्।

133. प्रश्नः— कुपुरुषः अत्र कः समासः?
उत्तरम्— कर्मधारयसमासः।

134. प्रश्नः—"चतुर्युगम्" अत्र कः समासः?
उत्तरम्— द्विगुसमासः।

TOTAL- 1071



# 3

# छन्दस् ( साहित्यम् )

## ( क ) छन्दःविवेचनम्—

वेदाः छन्दोबद्धाः भवन्ति। वैदिकमन्त्राणामुच्चारणज्ञानाय छन्दोज्ञानम् आवश्यकमस्ति। यथोक्तम् आचार्यकात्यायनेन—"यो ह वा अविदितार्षेयच्छन्दो दैवतब्राह्मणेन मन्त्रेण याजयति वा अध्यापयति वा स्थाणुं वर्च्छति गर्त्ये वा पात्यते प्रमीयते वा पापीयान् भवति" इति।

ऋग्वेदसामवेदयोः सर्वे मन्त्राः छन्दोबद्धाः सन्ति। यजुर्वेदस्य गद्यात्मकाः पद्यात्मकाश्च सर्वे मन्त्राः छन्दोबद्धाः एव सन्ति। छन्दोवेदाङ्गस्य प्रतिनिधिभूतो ग्रन्थस्तु पिंगलाचार्यकृतं "छन्दःसूत्रम्" वर्तते।

**प्रथम-द्वितीय-तृतीयसप्तकाणां छन्दसामक्षरविवरणम्—**

| | | | |
|---|---|---|---|
| 1. | गायत्री | 24 | अक्षराणि |
| 2. | उष्णिक् | 28 | अक्षराणि |
| 3. | अनुष्टुप् | 32 | अक्षराणि |
| 4. | बृहती | 36 | अक्षराणि |
| 5. | पंक्तिः | 40 | अक्षराणि |
| 6. | त्रिष्टुप् | 44 | अक्षराणि |
| 7. | जगती | 48 | अक्षराणि |
| 8. | अतिजगती | 52 | अक्षराणि |
| 9. | शक्वरी | 56 | अक्षराणि |
| 10. | अतिशक्वरी | 60 | अक्षराणि |
| 11. | अष्टिः | 64 | अक्षराणि |
| 12. | अत्यष्टिः | 68 | अक्षराणि |
| 13. | धृतिः | 72 | अक्षराणि |

| | | | |
|---|---|---|---|
| 14. | अतिधृतिः | 76 | अक्षराणि |
| 15. | कृतिः | 80 | अक्षराणि |
| 16. | प्रकृतिः | 84 | अक्षराणि |
| 17. | आकृतिः | 88 | अक्षराणि |
| 18. | विकृतिः | 92 | अक्षराणि |
| 19. | संस्कृतिः | 96 | अक्षराणि |
| 20. | अभिकृतिः | 100 | अक्षराणि |
| 21. | उत्कृतिः | 104 | अक्षराणि |

छन्दः द्विविधं भवति—1. वार्णिकछन्दः, 2. मात्रिकछन्दश्च।

**1. वार्णिकछन्दः**—यस्मिन् छन्दे पादस्थानां वर्णानां संख्या गण्यते तत् वर्णछन्दः। अर्थात् स्वराः स्वरव्यञ्जनाश्च छन्दसि वर्णनाम्ना व्यवह्रियन्ते। यथा—उपेन्द्रवज्रा, वसन्ततिलका, वंशस्थादयः।

**2. मात्रिकछन्दः**—यस्मिन् छन्दसि पादस्थवर्णानां मात्राः गण्यन्ते तत् मात्रिकछन्दः। अर्थात् वर्णोच्चारणकाल एव मात्रा, सा च लघुगुरुभेदात् द्विधा। यथा—आर्या।

**(क) लघुः**—ह्रस्वं लघुसंज्ञं स्यात्। अर्थात् ह्रस्वस्वरः लघुः तथा च ह्रस्वस्वरयुक्तः व्यञ्जनोऽपि लघुः। एकमात्रिकं भवति लघुवर्णः। लघुस्वराः—अ, इ, उ, ऋ, लृ।

**(ख) गुरुः**—दीर्घस्वरस्य गुरुसंज्ञा भवति; ते च—आ, ई, ऊ, ॠ, ए, ऐ, ओ, औ तथा च दीर्घस्वरयुक्तस्य व्यञ्जनस्यापि गुरुसंज्ञा भवति। गुरुवर्णः द्विमात्रिकं भवति। अन्यत् च—

**संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसम्मिश्रम्।**
**विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन।।**

**(क) गुरुः**—संयुक्ताद्यं गुरुसंज्ञं भवति अर्थात् संयुक्तवर्णात् पूर्ववर्णः गुरुः मन्यते; यथा—यक्षः (क् +ष=क्ष); अत्र यकारः गुरुः।

**(ख) दीर्घम्**—दीर्घस्वराणाम् तथा च दीर्घस्वरयुक्तानां व्यञ्जनानाम्, यथा—आ, ई, ऊ, ॠ, ए, ऐ, ओ, औ, दा, ता, नी, भू, रे इत्यादयः।

**(ग) सानुस्वार**—अनुस्वारयुक्तः वर्णोऽपि गुरुसंज्ञः भवतिं। यथा—वंशः, सायं, प्रियं, इत्यादयः।

**(घ) विसर्गसम्मिश्रम्**—विसर्गयुक्तः( :) वर्णः गुरुसंज्ञः भवति। यथा—पतिः, रामः, लेखकः। अत्र तिः, मः, कः गुरुवर्णाः।

**(ङ) पदान्तवर्णस्तु** विकल्पेन लघुः गुरुर्वा भवति। छन्दःलक्षणे लघुवर्णस्य कृते "ल" प्रयुज्यते चिह्नञ्च। तथा गुरुवर्णस्य कृते "ग" "ऽ" प्रयुज्यते।

वर्णानामथवा मात्राणां समूहः "गण" उच्यते। त्रयाणां वर्णानां समूहः गणः कथ्यते। अष्टौ गणाः सन्ति, ते च "यमाताराजभानसलगाः"–य=यगण, मा=मगण, ता=तगण, र=रगण, ज=जगण, भा=भगण, न=नगण, स=सगण, ल=लघु, गाः=गुरुः।

वर्णानां मात्राज्ञानम्—"यमाताराजभानसलगाः" "सूत्रस्थं" गणबोधकम् आदिवर्णं स्वीकृत्य अग्रस्थयोः द्वयोः वर्णयोः मात्रा गण्यते; यथा—

| गण | वर्णाः | मात्राः | विवेचनम् |
|---|---|---|---|
| य=यगण | यमाता | ।ऽऽ | आदिलघुर्यः—अत्र आदिवर्णः लघु शेषौ गुरू स यगणः |
| म=मगण | मातारा | ऽऽऽ | मस्त्रिगुरुः—यत्र=त्रयः गुरुवर्णाः स मगणः |
| ता=तगण | ताराज | ऽऽ। | अन्तलघुस्तः—यत्र अन्त्यलघुः भवति स तगणः |
| रा=रगण | राजभा | ऽ।ऽ | रलमध्यः—यत्र मध्यलघुवर्णः स रगणः |
| ज=जगण | जभान | ।ऽ। | जो गुरुमध्यगतो—यत्र मध्यवर्णःगुरुः शेषौ लघू स जगणः |
| भा=भगण | भानस | ऽ।। | भादिगुरुः—यत्र आदि वर्णः गुरुः शेषौ लघू स भगणः |
| न=नगण | नसल | ।।। | त्रिलघुश्च नकारो-यत्र त्रयः लघुवर्णाः स नगणः |
| स=सगण | सलगाः | ।।ऽ | सोऽन्तगुरुः—यत्र अन्त्यवर्णः गुरुः शेषौ लघू स सगणः |

लघुवर्णस्य एकमात्रा दीर्घस्य च द्वे मात्रे।

| वर्णः | चिह्नम् | मात्रा | वर्णः | चिह्नम् | मात्रा |
|---|---|---|---|---|---|
| लघुः | । | 1(एक) | गुरुः | ऽ | 2 द्वौ |

**छन्दःलक्षणे संख्यानां कृते प्रयुक्ताः पारिभाषिकशब्दाः—**

1. (एकः) –चन्द्रमा, पृथ्वी। (चन्द्रः एक एव, पृथ्वी च)
2. (द्वौ) –पक्षः, नेत्रम्। (शुक्लपक्षः, कृष्णपक्षः, द्वौ पक्षौ तथैव नेत्रम्)
3. (त्रयः) –गुणः, रामः, अग्निः।
4. (चत्वारः) वेदाः, वर्णाः, युगाः, आश्रमाः।
5. (पञ्च) –शर–इन्द्रिय–भूत–तत्त्वानि।
6. (षट्) –शास्त्र–रस–ऋतवः।
7. (सप्त) –अश्व–मुनि–लोक–स्वराः।
8. (अष्टौ) वसु, याम–सिद्धिः भोगिनः।
9. (नव) –अङ्क–ग्रह–द्रव्य–निधयः।
10. (दश) –दिक्–अवताराः।
11. (एकादश) रुद्राः।
12. (द्वादश) –सूर्य–मासाः।

**महत्त्वपूर्णानि छन्दःलक्षणानि उदाहरणानि च—**

1. आर्या— यस्याः प्रथमे पादे, द्वादश मात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या।।

यस्य छन्दसः प्रथमे=12 मात्राः, द्वितीये पादे=18 मात्राः, तृतीये पादे=12 मात्राः, चतुर्थके पादे च=15 मात्राः सन्ति तद् आर्या छन्दः। इदं मात्रिकच्छन्दः। यथा—

1. ऽ ऽ ऽ ऽ ऽ ऽ=12 दानं भोगो नाशः

2. ऽऽ।।ऽ।ऽ।।ऽ।ऽऽऽ=18 तिस्रः गतयो भवन्ति वित्तस्य

3. ऽ।।ऽ।।ऽ ऽ=12 यो न ददाति न भुङ्क्ते

4. ऽ।।ऽऽ।ऽ।। ऽ=15 तस्य तृतीया गतिर्भवति।।

**2. वसन्ततिलका**—उक्ता वसन्ततिलका तभजाजगौ गः। चतुर्दशवर्णात्मकमिदं छन्दः। यत्र क्रमशः तगण-भगण-जगण-जगण उभौ गुरू तद् वसन्ततिलकाछन्दः। यथा—तगण भगण जगण जगण गुरु (ऽऽ।ऽ।।।ऽ।।ऽ।ऽ ऽ) पापान्निवारयति योजयते हिताय, तगण भगण जगण जगण गुरु (ऽऽ ऽ।।। ऽ।। ऽ। ऽऽ) गुह्यं निगूहति गुणान् प्रकटीकरोति। तगण भगण जगण जगण गुरु(ऽऽ।ऽ।।।ऽ।।ऽ।ऽऽ) आपद्गतं च न जहाति ददाति काले, तगण भगण जगण जगण गुरु(ऽऽ।ऽ।।।ऽ।।ऽ।ऽऽ) सन्मित्रलक्षणमिदं निगदन्ति सन्तः।।

**3. शिखरिणी**—रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणी। रसैः=षड्, रुद्रैकादश(11) 6+11= 17 वर्णात्मकमिदं छन्दः-यमन सभलागः=यगण, मगण, नगण, सगण, भगण, लघु, गुरुः। (।ऽऽ ऽऽऽ।।।।।।।ऽ।ऽ) यथा—

यदालोके सूक्ष्मं व्रजति सहजा तद् विपुलता,
यदर्थे विच्छिन्नं भवति कृतसन्धानमिव तत्।
प्रकृत्या यद् वक्रं तदपि समरेखं नयनयो-
र्न मे दूरे किञ्चित् क्षणमपि न पार्श्वे रथजवात्।।

**4. वंशस्थः**—जतौ तु वंशस्थमुदीरितं जरौ। वर्णाः-12, जगण, तगण, जगण, रगण (।ऽ। ऽऽ।।ऽ।ऽ।ऽ)

विचिन्तयन्ती यमनन्यमानसा,
तपोधनं वेत्सि न मामुपस्थितम्।
स्मरिष्यति त्वां न स बोधितोऽपि सन्,
कथां प्रमत्तः प्रथमं कृतामिव।।

**5. मालिनी**—ननमयययुतेयं मालिनी भोगिलोकैः। भोगी-8, लोकाः-7(8+7=15) वर्णाः-15, नगण, नगण, मगण, यगण, यगण( ।।।।।। ऽऽऽ।ऽऽ।ऽऽ)

सरसिजमनुविद्धं शैवलेनापि रम्यं,
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी,
किमिव हि मधुराणां मण्डनं नाकृतीनाम्।।

**6. इन्द्रवज्रा**—स्यादिन्द्रवज्रा यदि तौ जगौ गः। वर्णाः-11(एकादश) तगण, तगण, जगण, गुरु, गुरु (ऽऽ।ऽऽ।।ऽ।ऽऽ)

अर्थो हि कन्या परकीय एव
तामद्य सम्प्रेष्य परिग्रहीतुः।

जातो ममायं विशदः प्रकामं,
प्रत्यर्पितन्यास इवान्तरात्मा।।

7. उपेन्द्रवज्रा—उपेन्द्रवज्रा जतजास्ततो गौ। वर्णाः–11, (एकादश) जगण, तगण, जगण, गुरुः, गुरुः( । ऽ । ऽ ऽ । । ऽ । ऽऽ)

त्वमेव माता च पिता त्वमेव
त्वमेव बन्धुश्च सखा त्वमेव।
त्वमेव विद्या द्रविडं त्वमेव
त्वमेव सर्वं मम देव देव।।

8. स्त्रग्धरा—म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्त्रग्धरा कीर्तितेयम्। वर्णाः–21 मगण, रगण, भगण, नगण, यगण, यगण, यगण (ऽऽऽ ऽ । ऽ ऽ । । । । । । ऽऽ । ऽऽ । ऽऽ)

या सृष्टिः स्त्रष्टुराद्या, वहति विधिहुतं या हविर्या च होत्री,
ये द्वे कालं विधत्तः श्रुतिविषयगुणा, या स्थिता व्याप्य विश्वम्।
यामाहुः सर्वबीजप्रकृतिरिति यया प्रणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रसन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः।।

9. शार्दूलविक्रीडितम्—सूर्याश्वैर्मसजास्ततः सगुरवः शार्दूलविक्रीडितम्। सूर्याः–12, अश्वाः–7 (12+7=19 वर्णाः) वर्णाः–19, मगण, सगण, जगण, सगण, तगण, तगण, गुरुः (ऽऽऽ । । ऽ । ऽ । । । ऽ ऽऽ । ऽऽ । ऽ)

पातुं न प्रथमं व्यवस्यति जलं युस्माष्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।

10. मन्दाक्रान्ता—मन्दाक्रान्ता जलधिषडगैम्भौं नतौ ताद् गुरु चेत्। जलधिः–4, षड्=(छः), अगैः=पर्वत, अभ्भौ=सप्त(7) (4+6+7=17) वर्णाः–17, मगण, भगण, नगण, तगण, तगण, गुरुः, गुरुः(ऽऽऽ ऽ । । । । । ऽऽ । ऽऽ । ऽऽ)

कश्चित् कान्ता विरहगुरुणा स्वाधिकारात् प्रमत्तः
शापेनास्तं-गमितमहिमा वर्षभोग्येण भर्तुः।
यक्षश्चक्रे जनकतनया स्नानपुण्योदकेषु,
स्निग्धच्छाया तरुषु वसतिं रामगिर्याश्रमेषु।।

11. द्रुतविलम्बितम्—द्रुतविलम्बितमाह नभौ भरौ। वर्णाः–12, नगण, भगण, भगण, रगण ( । । । ऽ । । ऽ । । ऽ । ऽ)

द्रुतगतिः पुरुषो धनभाजनम्, भवति मन्दगतिश्च सुखोचितः।
द्रुतविलम्बित खेलगतिर्नृपः, सकलराज्यसुखं प्रियमश्नुते।।

12. वियोगिनी—विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी। विषमे=प्रथमे तृतीये च चरणे, ससजाः=सगण, सगण, जगण, गुरुः=1=10 वर्णाः। समे=द्वितीये चतुर्थे च चरणे, सभरालः–सगण, भगण, रगण, लघु गुरु=11 वर्णाः।

सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः।।

13. स्रग्विणी—कीर्तितैषा चतूरेफिका स्रग्विणी। चतूरेफिका=4 रगण (रगण, रगण, रगण, रगण=12 वर्णाः। (ऽ।ऽ ऽ।ऽ ऽ।ऽ ऽ।ऽ)

सर्वदा प्राप्नुवन्त्यात्मघोषा बलिं,
राजहंसाश्च जीवन्त्यहो! शैवलैः।
बालिशस्साधु सम्पत्तिमास्वादते,
हा बुभुक्षाऽर्बितो हिण्डते पण्डितः।।

14. अनुष्टुप्—

श्लोके षष्ठं गुरू ज्ञेयं सर्वत्र लघु पञ्चमम्।
द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः।।

अनुष्टुप्छन्दसि प्रत्येकस्मिन् पादे अष्टौ (8) वर्णाः भवन्ति। प्रत्येकपादे षष्ठः वर्णः गुरुः, पञ्चमश्च ह्रस्वो भवति; द्वितीये, चतुर्थके च पादे सप्तमः वर्णः ह्रस्वो भवति, प्रथमे तृतीये च सप्तमः दीर्घो भवति।

(।ऽऽ) धर्मक्षेत्रे कुरुक्षेत्रे (।ऽ।) समवेता युयुत्सवः।
(।ऽऽ) मामकाः पाण्डवाश्चैव (।ऽ।) किमकुर्वत सञ्जय।।

(ख) काव्यस्यार्थः—

मानवः चेतनासम्पन्नः संवेदनशीलप्राणी चास्ति। तस्य मनः शरीरमाधृत्य, दुःखेन, सुखेन, प्रेम्णा, दयया, क्रोधेन, आशया च चलायमानं भवति, तथा—प्रकृत्या प्रतिक्षणं परिवर्तनेन सौम्यं, मनोरमं, विविधरूपैश्च भावं गृह्णाति। काव्येन मानवस्य भावात्मकविकासो भवति। काव्यमस्माकं भावानाम् उत्सर्जनमस्ति। काव्यमिति शब्दोऽयं कविशब्दे क्रमधातोः औणादिके, इन् प्रत्यये कृते बाहुलकात् मकारस्य वकारादेशे रेफस्य लोपे सति कविरिति शब्दः निष्पद्यते। "कवेरिदं कर्म भावो वा काव्यम्"।

काव्यं परिभाषयन् विश्वनाथ-कविराजः स्वकीये ग्रन्थे साहित्यदर्पणे वक्ति—"वाक्यं रसात्मकं काव्यम्"। अर्थात् रस एव काव्यस्य आत्मा अस्ति। रसेन विना काव्यस्य काव्यत्वं नैव सिद्ध्यति। रसाभावे तु शब्दार्थमयं वाक्यं केवलं वाक्यमात्रमेव भवति, किन्तु यदा वाक्यं रसात्मकं भवति तदा अत्र काव्यत्वं तु भवत्येव। "रसात्मकम्" इत्येतस्य अभिप्रायोऽस्ति यत् "रस एव आत्मा साररूपतया जीवनधायको यस्य"।

1. आचार्यविश्वनाथः—"वाक्यं रसात्मकं काव्यम्"।
2. मम्मटः-"तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि"।
3. आनन्दवर्धनाचार्यः—"काव्यस्यात्मा ध्वनिः"

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।।

4. भामहः (काव्यालङ्कारः)—"शब्दार्थौ सहितौ काव्यम्"।
5. अग्निपुराणम्—"इष्टार्थव्यवच्छिन्ना पदावली। काव्यं स्फुरदलङ्कारं गुणवद्दोषवर्जितम्।।"
6. रुद्रटः (काव्यालङ्कारः)—"शब्दार्थौ काव्यम्"।
7. कुन्तकः—"शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि। बन्धे व्यवस्थितौ काव्यं तद्विदाह्लाद-कारिणी।।" (वक्रोक्तिकाव्यजीवितम्)
8. भोजराजः(सरस्वतीकण्ठाभरणम्)—"निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम्। रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दन्ति।।"
9. जयदेवः(चन्द्रालोकम्)—"निर्दोषा लक्षणवती सरीतिर्गुणभूषणा। सालङ्काररसानेक-वृत्तिर्वाक्काव्यनामभाक्।।"
10. जगन्नाथः(रसगङ्गाधरः)—"रमणीयार्थप्रतिपादकः शब्दः काव्यम्।"
11. दण्डी (काव्यादर्शः)—"शरीरं तावत् इष्टार्थव्यवच्छिन्ना पदावली।"

संस्कृताचार्यैः काव्यस्य परिभाषा विभिन्नरूपेण दत्ता; तस्य विवेचनं कृतं स्यात्। रमणीयतायां पुरस्कृत्य भामहः, रुद्रटः, उद्भटश्च अलङ्कारमेव काव्यस्यात्मा इति अमन्यत। अनेन प्रकारेण एकस्य श्रेष्ठस्य पद्यस्य कृते तस्मिन् रस-अलङ्कार-ध्वनि-गुण-वक्रोक्ति-रमणीयता-सुशब्दावल्या-दीनि सर्वाणि तत्त्वानि आवश्यकानि सन्ति।

**(ग) काव्यस्य प्रयोजनम्—**

संस्कृत-साहित्ये काव्यस्य स्थानं महत्त्वपूर्णमस्ति। आचार्य-भामहः काव्यालङ्कारे कविता-करणस्य, पठनस्य, पाठनस्य चोद्देश्यं चतुर्वर्गाणां प्राप्तिममन्यत—

धर्मार्थकाममोक्षाणां वैचक्षण्यं कलासु च।
करोति प्रीतिं कीर्तिञ्च साधुकाव्यनिषेवणम्।।

आचार्यमम्मटः—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे।।

काव्यस्य प्रयोजनं यशःप्राप्तिः, धनप्राप्तिः, सद्व्यवहारज्ञानम्, शिवेतरस्य च अपाकरणं सद्यः परमानन्दस्यानुभूतिः तथा कान्तासम्मिततयोपदेशस्य प्राप्तिः विद्यते। व्याकरणशास्त्र-नियमानुसारं, पदप्रयोगज्ञानाय, अन्यान्यशास्त्रपरिज्ञानाय यानि काव्यानि विरचितानि, तानि शास्त्र-काव्यानि इत्युच्यन्ते।

**(घ) काव्यभेदाः—**

त्रिविधं काव्यम्-1. उत्तमम्, 2. मध्यमम्, 3. अवरम्।

1. उत्तमम्—इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः। यत्र वाच्यार्थापेक्षया व्यङ्ग्यार्थः चमत्कारजन्यः भवति तदेव उत्तमकाव्यम्। अस्य अपरनाम "ध्वनि"काव्यमपि अस्ति।

**2. मध्यमम्**—अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्। अत्र व्यङ्ग्यार्थः वाच्यार्था-पेक्षयाधिकचमत्कारजन्यः भवति तदेव काव्यं गुणीभूतव्यङ्ग्यम् अर्थात् मध्यमं काव्यम्।

**3. अवरम्**—शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्। अत्र व्यङ्ग्यार्थस्याभावो भवति। तदेव काव्यं चित्रकाव्यम् अर्थात् अवरकाव्यम्।

**शब्दः त्रिविधः**—वाचकः, लाक्षणिकः, व्यञ्जकश्च। उक्तमपि स्याद् वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा।

**शब्दस्यार्थं त्रिविधम्**—1. वाच्यार्थः, 2. लक्ष्यार्थः, 3. व्यङ्ग्यार्थश्च।

**वृत्तिः त्रिधा**—1. अभिधा, 2. लक्षणा, 3. व्यञ्जना।

**1. अभिधा**—स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते–मुख्यार्थः साक्षात् सङ्केतितार्थः भवति। शब्दस्य मुख्यार्थः अभिधावृत्त्या ज्ञायते। अर्थात् साक्षात्संकेतितमर्थं या बोधयति, सा अभिधा इत्युच्यते। यथा—"गंगायां स्नाति" इत्यत्र गंगाशब्दः साक्षात्संकेतितं भगीरथखाता-वच्छिन्नजलप्रवाहविशेषरूपगंगापदार्थस्य वाचकः।

**2. लक्षणा**—

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।
अन्योऽर्थो लक्ष्यते यत् सा लक्षणारोपिता क्रिया।।

यदा शब्दः स्वमुख्यार्थस्य अविवक्षायां स्वमुख्यार्थसम्बद्धम् अन्यार्थं (लक्ष्यार्थं) प्रतिपादयति तदा लक्षणा शब्दशक्तिः। अर्थात् मुख्यार्थबोधे सति प्रयोजनवशात् रूढिवशाद्वा यः शब्दः लक्षणया यमर्थं प्रतिपादयति, स शब्दस्तस्यार्थस्य लक्षकः। यथा—"गंगायां घोषः" इत्यादौ गंगाशब्दो जलमयादिरूपार्थवाचकत्वात् प्रकृतेऽसम्भवन्स्वस्य सामीप्यादिसम्बन्धसम्बन्धिनं तटादिं बोधयति। सा शब्दस्य अर्पिता स्वाभाविकेतरा ईश्वरानुद्भाविता वा शक्तिः लक्षणा नाम। शैत्यपावनत्वादिकं प्रयोजनम्।

**षड्विधा लक्षणा**—शुद्धा, गौणी, सोपादाना, सलक्षणा, सारोपा, साध्यवसाना च।






3. व्यञ्जना—तत्र व्यापारो व्यञ्जनात्मकः।

यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया।।
विरतास्वभिधाद्यासु ययाऽर्थो बोध्यते परः।
सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च।।

अर्थात् "शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः" इति नयेन अभिधा-लक्षणा-तात्पर्याख्यासु तिसृषु वृत्तिसु स्वं स्वमर्थं बोधयित्वा उपक्षीणासु ययाऽन्योऽर्थो बोध्यते, सा शब्दस्यार्थस्य प्रकृति-प्रत्ययादेश्च शक्तिः व्यञ्जन-ध्वजन-गमन-प्रत्यायनादिव्यपदेशविषया व्यञ्जना नाम। यथा— "गंगायां घोषः" इत्यत्र गंगाशब्दः तटे शैत्य-पावनत्वाद्यतिशयं व्यञ्जनया प्रतिपादयति इति गंगाशब्दः शैत्यपावनत्वाद्यतिशयस्य व्यञ्जकः।

(ङ) रसनिरूपणम्—

विभावेनानुभावेन व्यक्तः संचारिणा तथा।
रसतामेति रत्यादिः स्थायीभावः सचेतसाम्।। (विश्वनाथः)

नाट्यशास्त्रकारेण भरतमुनिना प्रतिपादितमस्ति—

"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः"। अत्र "निष्पत्तिः" शब्दस्य व्याख्या चतुर्भिः विद्वद्भिः चतुर्धा प्रतिपादिता—

(क) भट्टलोल्लटस्य उत्पत्तिवादः। (ख) श्री शंकुकस्य अनुमितिवादः। (ग) भट्ट-नायकस्य भुक्तिवादः। (घ) अभिनवगुप्ताचार्यस्य अभिव्यक्तिवादः।

रसस्योदाहरणमेकम्—

शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैः,
निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं,
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता।।

रसस्य स्थायिभावाः—

अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः।
आस्वादांकुरकन्दोऽसौ भावः स्थायीति संमतः।।

(सा. दर्पण)

अर्थात् यः भावः विरुद्धैः अविरुद्धैश्च भावैः न विच्छिद्यते एवंभूतः आस्वादांकुरकन्दः स्थायिभावशब्देन उच्यते। अयं स्थायिभावः सर्वभावेषु प्रधानम्। यथा—नराणां नृपतिः। इमे स्थायिभावाः अधोलिखिताः सन्ति—

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ता शमोऽपि च।।

(सा. दर्पण)

1. रतिः—रतिर्मनोऽनुकूलेऽथ मनसः प्रवणायितम्।
2. हासः—वागादिवैकृतैश्चेतोविकासो हास इष्यते।
3. शोकः—इष्टनाशादिभिश्चेतो वैक्लव्यं शोकशब्दभाक्।
4. क्रोधः—प्रतिकूलेषु तैक्ष्ण्यस्यावबोधः क्रोध इष्यते।
5. उत्साहः—कार्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते।
6. भयम्—रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयम्।
7. जुगुप्सा—दोषेक्षणादिभिर्गर्हा जुगुप्सा विषयोद्भवा।
8. विस्मयः—विविधेषु पदार्थेषु लोकसीमातिवर्तिषु।
विस्फारश्चेतसो यस्तु स विस्मय उदाहृतः।।
9. शमः—शमो निरीहावस्थायां स्वात्मविश्रामजं सुखम्।

रसभेदा—

शृंगार-हास्य-करुण-रौद्र-वीर-भयानकाः ।
वीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः।।

1. शृंगाररसः—

शृंगं हि मन्मथोभेदस्तदागमनहेतुकः।
उत्तमप्रकृतिप्रायो रसः शृंगार इष्यते।।

उदाहरणं यथा—"शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैः" संभोगशृंगारः।

2. हास्यरसः—

विकृताकारवाग्वेषचेष्टादेः कुहकाद्भवेत्।
हास्यो हासस्थायिभावः श्वेतः प्रमथदैवत।।

यथा—

गुरोर्गिरः पञ्चदिनान्यधीत्य, वेदान्तशास्त्राणि दिनत्रयं च।
अमी समाघ्राय च तर्कवादान्, समागताः कुक्कुटमिश्रपादाः।।

3. करुणरसः—

इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत्।
धीरैः कपोतवर्णोऽयं कथितो यमदैवतः।।

यथा—

विपिने क्व जटानिबन्धनं तव चेदं क्व मनोहरं वपुः।
अनयोर्घटना विधेः स्फुटं ननु खड्गेन शिरीषकर्तनम्।।

4. रौद्ररसः—

रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः।
आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतम्।।

यथा—

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं,
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिनाम्,
अयमसृङ्मेदोमांसैः करोमि दिशां बलिम्।।

5. वीररसः—

उत्तमप्रकृतिर्वीरः उत्साहस्थायिभावकः।
महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः।।

यथा—

भो लंकेश्वर! दीयतां जनकजा, रामः स्वयं याचते,
कोऽयं ते मतिविभ्रमः, स्मर नयं, नाद्यापि किंचिद्गतम्।
नैवं चेत्खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः
पत्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः।।

6. भयानकरसः—

भयानको भयस्थायिभावः कालाधिदैवतः।
स्त्रीनीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः।।

यथा—

नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपाम्,
अन्तः कंचुकिकंचुकस्य विशति त्रासादयं वामनः।
पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतम्,
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशंकिनः।।

7. वीभत्सरसः—

जुगुप्सास्थायिभावस्तु वीभत्सः कथ्यते रसः।
नीलवर्णो महाकालदैवतोऽयमुदाहृतः।

यथा—

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्क्षेभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा।

आर्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरंकः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति।।

8. अद्भुतरसः—

अद्भुतो विस्मयस्थायिभावो गन्धर्वदैवतः।
पीतवर्णो वस्तु लोकातिगमालम्बनं मतम्।।

यथा—

दोर्दण्डांचित-चन्द्रशेखर-धनुर्दण्डावभंगोद्यत-
ष्टंकार-ध्वनिरार्यबालचरित-प्रस्तावना-डिण्डिमः
द्राक्पर्यस्त-कपाल-संपुटमिलद्ब्रह्माण्ड-भाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति।।

9. शान्तरसः—

शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः।
कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः।।

यथा—

रथ्यान्तश्चरतस्तथा धृतजरत्कन्थालवस्याध्वगैः,
सत्रासं च सकौतुकं च सदयं दृष्टस्य तैर्नागरैः।
निर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे,
निःशंकः करटः कदा करपुटीभिक्षां विलुण्ठिष्यति।।

(च) रसभेदनिरूपणचक्रम्—

| क्रमांकः | रसः | स्थायिभावः | वर्णः | देवता |
|---|---|---|---|---|
| 1. | श्रृंगारः | रतिः | श्यामः | विष्णुः |
| 2. | हास्यः | हासः | शुक्लः | प्रमथः |
| 3. | करुणः | शोकः | कपोतवर्णः | यमः |
| 4. | रौद्रः | क्रोधः | रक्तः | रुद्रः |
| 5. | वीरः | उत्साहः | सुवर्णवत् | महेन्द्रः |
| 6. | भयानकः | भयम् | कृष्णः | यमः(कालः) |
| 7. | वीभत्सः | जुगुप्सा | नीलः | महाकालः |
| 8. | अद्भुतः | विस्मयः | पीतः | गन्धर्वः |
| 9. | शान्तः | शमः | कुन्दपुष्पवत् | श्रीनारायणः |

(छ) संस्कृतकाव्यानां विकासक्रमः—

संस्कृतकाव्यानाम् उत्पत्तेः बीजं "वेदे" प्राप्यते। संस्कृतकाव्यानां प्रथमकिरणं सर्वप्रथमं

ऋग्वेदे दृश्यते। तस्य अनेकानि सूक्तानि अथवा मन्त्राः ईदृशाः सन्ति, यैः कवेः प्रतिभायाः सुन्दरः परिचयः प्रस्तूयन्ते। महाकाव्यानां विकास-परम्परायां महर्षिपाणिनेः नामाऽपि गृह्यते, येन "पातालविजयम्" "जाम्बवतीविजयम्" इति द्वे महाकाव्ये लिखिते। प्रसिद्धवैयाकरणमहर्षिपतञ्जलेः नाम कंसवधबलिबन्धनामकनाट्यरचनयोः कृतेऽपि प्रसिद्धमस्ति। लौकिकसंस्कृते काव्यलेखनस्य क्रमः वाल्मीकितः प्रारब्धः। आदिकविः यदा कामातुरक्रौञ्चपक्षिमिथुनयोरेकस्य वधम् अपश्यत्। हृदयद्रवीकरणाय, रसानुभूतिकृते च आदिकवेः वाल्मीकेः श्लोकः अवश्यं द्रष्टव्यः। यथा—

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्।।

तमसानदीतीरे व्याधः कश्चन क्रौञ्चमिथुनादेकमवधीत्। हृदयविदारिकां तद्घटनां दृष्ट्वा वाल्मीकिः स्वीयामनुभूतिं श्लोकरूपेण व्यक्तीकृतवान्। अर्थात् शोकः श्लोकत्वमागतः। एषानुभूतिरेव रसानुभूतिरिति कविना परिभाषायाम् उच्यते। अस्मिन् काव्ये 24,000 श्लोकाः तथा सप्त काण्डानि सन्ति। रामायणवत् महाभारतमपि एकम् उपजीव्यं काव्यमस्ति। इदम् अष्टादशपर्वसु विभक्तम् एकं बृहद्ग्रन्थरत्नमस्ति, यस्मिन् प्रायः सपादलक्षश्लोकाः सन्ति। अस्य प्रणेता वेदव्यासोऽस्ति। रामायणेन महाभारतेन च समं पुराणान्यपि संस्कृतसाहित्यस्य उपजीव्यानि सन्ति। एषु पुराणेषु अष्टादशपुराणानां तथा तावदेव उपपुराणानां विशिष्टं महत्त्वमस्ति। वेदव्यासः अस्य रचयिता अस्ति। महाकाव्यस्य परम्परासु सर्वप्रथमं वेदव्यासस्य तथा तदनन्तरं "अश्वघोषस्य" नाम आयाति। बुद्धचरितं अष्टाविंशतिसर्गात्मकं तथा सौन्दरानन्दम् अष्टादशसर्गात्मकम् अस्य द्वे महाकाव्ये स्तः। कविकुलचूडामणिकालिदासस्य नाम संस्कृतसाहित्याकाशे देदीप्यमानसूर्यवत् अद्यापि विद्यमानमस्ति। अस्य काव्यानि ऋतुसंहारः, मेघदूतं, कुमारसम्भवं, रघुवंशञ्चास्ति।

**विकासक्रमे काव्यपरिचयः—**

| क्रमांक | कविनाम | ग्रन्थनाम | सर्गादि |
|---|---|---|---|
| 1. | कुमारदासः | जानकीहरणम् | षोडशसर्गाः |
| 2. | भारविः | किरातार्जुनीयम् | अष्टादशसर्गाः |
| 3. | माघः | शिशुपालवधमहाकाव्यम् | द्वाविंशतिसर्गाः |
| 4. | रत्नाकरः | हरविजयमहाकाव्यम् | पञ्चविंशतिसर्गाः |
| 5. | शिवस्वामी | कप्फनाभ्युदयम् | विंशतिसर्गाः |
| 6. | क्षेमेन्द्रः | दशावतारचरितम् | |
| 7. | मङ्खकः | श्रीकण्ठचरितम् | पञ्चविंशतिसर्गाः |
| 8. | श्रीहर्षः | नैषधचरितम् | द्वाविंशतिसर्गाः |
| 9. | (ऐतिहासिककाव्यानि) वाक्पतिराजः | गउडवहो | |
| 10. | पद्मगुप्तः | नवसाहसाङ्कचरितम् | अष्टादशसर्गाः |
| 11. | बिल्हणः | विक्रमाङ्कदेवचरितम् | अष्टादशसर्गाः |

क्रमशः .............

| | | | |
|---|---|---|---|
| 12. | कल्हणः | राजतरङ्गिणी | अष्टौ तरङ्गाः |
| 13. | हेमचन्द्रः | कुमारपालचरितम् | अष्टाविंशतिसर्गाः |
| 14. | सोमेश्वरः | कीर्तिकौमुदीकाव्यम् | |
| 15. | (शास्त्रकाव्यानि) भट्टिः | भट्टिः | द्वाविंशतिसर्गाः |
| 16. | (देवकाव्यानि) गोकुलनाथ | भिक्षाटनकाव्यम् | द्वाविंशतिसर्गाः |

17. अन्यानि प्रसिद्धानि देवकाव्यानि—

1. जयद्रथस्य हरचरितचिन्तामणिः,
2. लोलम्बराजस्य हरिविलासकाव्यम्,
3. वेदान्तदेशिकस्य यादवाभ्युदयम्,
4. राजचूडामणिदीक्षितस्य रुक्मिणीहरणम्,
5. कृष्णदासकविराजस्य गोविन्दलीलामृतम्,
6. अमरचन्द्रसूरेः—बालभारतम्,
7. देवप्रभसूरेः—पाण्डवचरितम्,
8. कृष्णानन्दस्य सहृदयानन्दम्,
9. वामनभट्टबाणस्य नलाभ्युदयम्।

18. यमककाव्यानि— 1. घटखर्परस्य यमककाव्यम्—द्वाविंशतिश्लोकैः ग्रथितम्।
2. "" - नीतिवर्मणः कीचकवधकाव्यम्—पञ्चसर्गाः।
3. "" - वासुदेवस्य नलोदयकाव्यम्—चत्वारः सर्गाः।

19. श्लेषकाव्यानि—

(1) सन्ध्याकरनन्दीकवेः—रामचरितम्,
(2) धनञ्जयकवेः—राघवपाण्डवीयम्,
(3) कविराजमाध्वभट्टस्य—राघवपाण्डवीयम्,
(4) हरदत्तसूरेः—राघवनैषधम्,
(5) विद्यामाधवस्य—पार्वतीरुक्मिणीयम्,
(6) वेङ्कटाध्वरीनस्य—यादवराघवीयम्,
(7) चिदम्बरकवेः—राघवपाण्डवयादवीयम्,
(8) दैवज्ञसूरेः—रामकृष्णविलोमकाव्यम्,

20. कवयित्र्यः—

(1) विज्जका
(2) फल्गुहस्ति

(3) लखिमा

(4) मोरिका

(5) इन्दुलेखा

(6) वैजयन्ती

(7) मारुला

(8) विकटनितम्बा

(9) त्रिवेणी-क्षमारावप्रभृतयः स्त्रीकवयः संस्कृतसाहित्ये प्रसिद्धाः।

21. **खण्डकाव्यानि** गीतकाव्यानि वा—खण्डकाव्यमेतत् पञ्चप्रकारकं विद्यते।

(1) ऋग्वेदकालिकं खण्डकाव्यम्

(2) भक्तिरसमयं खण्डकाव्यम्

(3) ऐतिहासिकं खण्डकाव्यम्

(4) रूपकान्तर्गतं खण्डकाव्यम्

(5) सङ्कीर्णं खण्डकाव्यम्।

(1) कालिदासस्य मेघदूतम्—अत्र पूर्वभागः, उत्तरभागश्चेति द्वौ भागौ स्तः।

(2) कालिदासस्य ऋतुसंहारम्—षट्सर्गाः, 153 श्लोकाश्च सन्ति।

(3) जयदेवस्य गीतगोविन्दम्—द्वादशसर्गात्मकं काव्यम्—कृष्णस्तुतिपरकम्।

(4) अमरुकस्य अमरुशतकम्—मुक्तकानि शृङ्गाररसस्यन्दीनि प्रबन्धायमानानि प्रसिद्धानि सन्ति।

(5) गोविन्दाचार्यस्य—आर्यासप्तशती—मुक्तकस्वरूपं, शृङ्गाररससर्वस्वभूतम्।

(6) पण्डितराजजगन्नाथस्य ग्रन्थाः—

(1) भामिनीविलासः (2) गङ्गालहरी

(3) सुधालहरी (4) अमृतलहरी

(5) करुणालहरी (6) लक्ष्मीलहरी

(7) यमुनार्णवचम्पूः (8) आसफविलासः

(9) प्राणाभरणम् (10) जगदाभरणम्

(11) चित्रमीमांसाखण्डनम् (12) मनोरमाकुचमर्दनम्

(13) रसगङ्गाधरश्च।

22. **इतरे मुक्तककाराः**—

(1) भर्तृहरिः—शतकत्रयम् (2) भल्लटः—भल्लटशतकम्

(3) मधुसूदनः—मधुसूदनशतकम् (4) हरिहरोपाध्यायः—हरिहरसुभाषितम्।

**23. स्तोत्रकाव्यानि—**

(1) पुष्पदन्तस्य महिम्नः स्तोत्रम्

(2) मयूरस्य सूर्यशतकम्

(3) शङ्कराचार्यस्य सौन्दर्यलहरी

(4) कुलशेखरस्य मुकुन्दमाला

(5) उत्पलदेवस्य शिवस्तोत्रावली

(6) जगद्धरस्य स्तुतिकुसुमाञ्जलिः।

**(ज) गद्यसाहित्यम्—**

"गद्य" शब्दस्य व्युत्पत्तिः "गद् व्यक्तायां वाचि" इति धातोः "गदमदचरयमश्चानुपसर्गे" इति सूत्रेण यत् प्रत्यये सति गद्यम् इति शब्दः निष्पन्नो भवति। यस्य च अर्थः भवति "स्पष्टं कथनम्" इति। "पादशून्या पदसंरचना एव गद्यमिति"। समग्रे वेदसाहित्ये पद्येन सह गद्यस्यापि स्थानं विद्यते। गद्यमिदं सरलं समासरहितं भूत्वा सुबोधकमस्ति। कुत्रचित् गद्येऽस्मिन् उपमा-रूपकादीनां अलङ्काराणां च प्रयोगः विहितः। वैदिकगद्यं सरलं स्पष्टं च विद्यते। ततः वेदाङ्गेषु, आयुर्वेदादिग्रन्थेषु, सूत्रवाङ्मयेषु च गद्यस्य प्राधान्यम् अस्ति।

(1) अपादः पदसन्तानो गद्यम् इति दण्डिना उक्तम्।

(2) गद्यं कवीनां निकषं वदन्ति इति आलोचकाः।

(3) वृत्तबन्धोज्झितं गद्यम् इति आचार्यविश्वनाथः।

(4) आंग्लभाषायां गद्यम् prose प्रोज इति शब्देन ज्ञायते। प्रोजशब्दस्यार्थः भवति— "स्पष्ट-सरल-अनलंकृत-भाषायां कथनम्" इति।

गद्यस्य लक्षणम्—"ओजस्समासभूयस्त्वमेतद्गद्यस्य लक्षणम्" ओजोगुणसम्पन्नत्वं, समासबाहुल्यं च गद्यकाव्यस्य लक्षणम्।

**गद्यप्रभेदाः—**

(1) कथासाहित्यम्—एतत् लेखकस्य कल्पनासु आधारितं भवति।

(2) आख्यायिकासाहित्यम्—एतत् ऐतिहासिकतथ्याधारितं भवति।

**गद्यसाहित्यस्य परिचयः—**

1. सुबन्धोः वासवदत्ता।
2. बाणभट्टस्य हर्षचरितम्-कादम्बरी च।
3. दण्डिनः काव्यादर्शः-दशकुमारचरितम् च।
4. धनपालस्य तिलकमञ्जरी।
5. वादीभसिंहस्य गद्यचिन्तामणिः।
6. मेरुतुंगाचार्यस्य प्रबन्धचिन्तामणिः।

7. राजशेखरस्य प्रबन्धकोशः।
8. वामनभट्टबाणस्य वेमभूपालचरितम्।
9. वल्लालसेनस्य भोजप्रबन्धः।
10. महाकविवरददेशिकस्य गद्यरामायणम्।
11. महाकविविश्वेश्वरपाण्डेयस्य मन्दारमञ्जरी।
12. अम्बिकादत्तव्यासस्य शिवराजविजयः।
13. ऋषिकेशभट्टाचार्यस्य प्रबन्धमञ्जरी।
14. पण्डितक्षमारावस्य कथापत्रकम्, ग्रामज्योतिः, कथामुक्तावली।
15. राजगोपालस्य शैवालिनी, कुमुदिनी।
16. कृष्णमाचार्यस्य मन्दारवती।
17. आचार्यमेधाव्रतस्य कुमुदिनीचन्द्रः।
18. आचार्यश्रीशैलस्य मेनका।
19. नृसिंहाचार्यस्य सौदामिनी।
20. भट्टमथुरानाथशास्त्रिणः भारती, संस्कृतरत्नाकरः।
21. शैलताताचार्यस्य दुर्गेशनन्दिनी।
22. हरिचरणभट्टाचार्यस्य कपालकुण्डला।
23. वामनकृष्णचित्तलस्य लोकमान्यतिलकचरितम्।
24. वेङ्कटेशवातनसोवानिकवेः शिवाजीप्रबन्धः।
25. मङ्गलदेवशास्त्रिणः प्रबन्धप्रकाशः।

एवम् आधुनिकगद्यसाहित्यं विविधं विपुलं च वर्तते। संस्कृतपत्रपत्रिकाणां योगदानमपि महत्त्वपूर्णमस्ति।

**संस्कृतगद्यस्य विशेषता—**

1. कथा—ऐतिहासिककथाः, पौराणिककथाः, नैतिककथाः, काल्पनिककथाः, विनोदपूर्णकथाः।
2. जीवनचरित्रम्।
3. वैज्ञानिकाविष्काराः।
4. वर्णनम्, प्राकृतिकदृश्यम्।
5. विचारात्मकनिबन्धाः।
6. प्राकृतिकविषयाः, यथा—जीवजन्तुपशुपक्ष्यादिविषयाः।
7. पत्रव्यवहारात्मकाः।
8. विमर्शनात्मकाः यथा—ग्रन्थविमर्शः, रचनाविमर्शः, सामाजिकविमर्शः।
9. मानवव्यवहारात्मकाः, यथा—निवासः, आचारव्यवहाराः, नीतिनियमादयः।
10. यात्रा।

# 1. गद्यकाव्यम्

## 1. हर्षचरितम् (Harshacharitam)—

संस्कृतगद्यसाहित्ये बाणभट्टः दण्डिसुबन्ध्वोः अनन्तरं सुविख्यातः रचनाकारः वर्तते। बाणभट्टस्य पिता चित्रभानुः माता च राज्यदेवी आसीत्। सम्राजो हर्षवर्धनस्याऽऽज्ञयैवायं हर्षचरितनामकस्य गद्यकाव्यस्य रचनां कृतवान्। अस्मिन् ग्रन्थेऽष्टौ उच्छ्वासाः; तत्र आद्ये उच्छ्वासत्रये बाणेन स्वीया कथा लिखिता। चतुर्थादुच्छ्वासादारभ्य समाप्ति-पर्यन्तं हर्षस्य चरित्रं वर्णितम्।

"ओजःसमासभूयास्त्वमेतद् गद्यस्य जीवितम्" इति विदुषां विशेषतयालङ्कारिकाणां मते गद्यलेखकानां मूर्धन्यो बाणः, गद्यकाव्यानां प्रथमं च हर्षचरितम्। व्यञ्जनाप्रयोगे वक्रोक्तिः रचनायां च बाणः सकलकविमूर्धन्यः। हर्षचरिते तात्कालिकोत्तरभारतस्य स्थितिः स्पष्टरूपेण प्रकाश्यते।

## 2. कादम्बरी (Kadambari)

बाणभट्टः गद्यकाव्यस्य अप्रतिमः कविः विद्यते। बाणभट्टस्य हर्षचरितम् (आख्यायिका) कादम्बरी (कथा) च सुविख्यातः वर्तते। पदानाम् उचितप्रयोगः, भावानाम् आर्जवम्, उपमा-श्लेष-परिसंख्या-उत्पेक्षा-रूपक-विरोधाभास-समासोक्ति-प्रभृतीनाम् अलङ्काराणां स्वाभाविकसमावेशः देशकालपात्रानुसारि भाषायाः मञ्जुलसन्निवेशः, पाञ्चालीरीतिश्च कादम्बरीं विहाय अन्यत्र न अवलोक्यते। अत्र राज्ञः शूद्रकस्य वर्णनं, चाण्डालकन्यावर्णनं, जाबालिवर्णनम्, विन्ध्याटवीवर्णनम्, महाश्वेतावर्णनम्, आच्छोदसरोवरवर्णनम्, चन्द्रापीडस्य दिग्विजयवर्णनमित्यादीनि मनोज्ञानि वर्णनानि वीक्ष्य केनचित् उक्तम्—"वाणी वाणो वभूव:"।

गद्यकाव्येषु कादम्बर्याः सर्वोत्तमं स्थानमास्ते। भावपक्ष-कलापक्ष-लोकचरित्र-शास्त्रीयतत्त्वसन्निवेश-बाह्यजगत्-प्रभृतीनां वर्णने कवेः सूक्ष्मातिसूक्ष्मदृष्टिः सर्वत्रैव राजते। श्रीराजशेखरेण पाञ्चालीरीतेः निदर्शना बाणस्य शैलीति कथिता—

शब्दार्थयोः समो गुम्फः पाञ्चाली रीतिरिष्यते।
शीलाभट्टारिका वाचि बाणोक्तिषु च सा यदि।।

## 3. दशकुमारचरितम् (Dashakumaracharitam)

दशकुमारचरितम् इत्यस्य ग्रन्थस्य रचनाकारः दण्डी अस्ति। दण्डिनः जन्म काञ्चीवरमिति नाम्नाधुना प्रसिद्धनगरे अभवत्। काञ्च्याः पल्लवनरेशस्य पुत्रस्य शिक्षायै दण्डी "काव्यादर्शम्" रचितवान् इति प्रसिद्धास्ति। नवमशताब्द्याः ग्रन्थेषु दण्डिनः नामोल्लेखः प्राप्यते। अतः दण्डिनः समयो नवमशताब्द्याः पूर्वं भवितुमर्हति। दशकुमारचरितं दण्डिनः गद्यकाव्यं विद्यते। दशकुमाराणां चरितं काव्येऽस्मिन् वर्णितम्; अतः दशकुमारचरितमिति नाम। दशकुमाराणां चरित्रचित्रणेनास्य नाम सार्थकं भवति।

महाकवेः दण्डिनः "दशकुमारचरितम्" संस्कृत-साहित्ये गद्यकाव्यत्रयेषु कथानकस्य रोमाञ्चकतायाः कौतूहलपूर्णतायाश्च कारणेन महत्त्वपूर्णं स्थानं भजते। दशकुमारचरितं श्लाघनीयं तथाख्यानककाव्यस्य ज्वलदुदाहरणं विद्यते। दण्डिनः पात्रस्य शिष्टो हासः, मधुरं व्यङ्ग्यम्,

पारस्परिकप्रेमालापः, सुखं दुःखं च काव्ये यत्र-तत्र वर्णितमस्ति। दण्डिनः शैली सुबोधा, सरला, सरसा तथा प्रभावमयी दृश्यते। अस्य गद्यस्यार्थस्पष्टता रसाभिव्यक्तिश्च विशिष्टगुणौ विद्यते। "दण्डिनः पदलालित्यम्" इति प्रसिद्धमस्ति। दशकुमारचरितगतासु घटनासु विस्मयजनकघटनानां प्राचुर्येणाद्भुतो रसः प्रधानम्। दण्डिनः समये भारते शैवधर्मस्य प्राधान्यमासीत्।

## (झ) चम्पू Champu काव्यविवेचनम् (मिश्रम्)—

सामान्यतः काव्यस्य भेदद्वयं प्रथते—दृश्यं श्रव्यञ्चेति। श्रव्यकाव्यमपि द्विप्रकारकम्—गद्यकाव्यं पद्यकाव्यञ्चेति। चम्पूशब्देन संस्कृतसाहित्ये "गद्यपद्यमयं काव्यम्" इति कथ्यते। पञ्चतन्त्रादिषु साहित्यग्रन्थेषु गद्यपद्यद्वयप्रयोगो दृश्यते। गद्यकाव्यगतमर्थगौरवं पद्यकाव्यगतमर्थगौरवपुरस्कृत्य रागमयत्वं चेत्युभयं मिलितं तदधिकं चमत्कारं जनयेदिति भावनैव चम्पूकाव्यस्योत्पत्तौ कारणत्वेन सम्भाव्यते। सर्वप्रथमाचार्यो दण्डी "गद्यपद्यमयी वाणी चम्पूरित्यभिधीयते" इति चम्पूलक्षणमुक्तवान्ः उपलब्धचम्पूनां प्राचीनतमचम्पूनिर्माणकालश्च ख्रीष्टाब्दस्य दशमशतकं (915–959) निश्चीयते।

### चम्पूकाव्यस्य विकासक्रमः—

चम्पूकाव्यं गद्यकाव्यस्यैव परिमार्जितं रूपमिति कथनं सत्यम्। यजुर्वेदे गद्यपद्ययोर्मिश्रण-मुपलभ्यते; तथापि नासौ चम्पूप्रकारः। त्रिविक्रमभट्टः "नलचम्पूः" इति संज्ञया प्रसिद्धं चम्पूग्रन्थं प्रणीय गद्ये पद्ये च समानभागेन काव्यगुणानुपस्थापयितुमयतत्। नलचम्पूः, मदालसाचम्पूः नवसारीशिलालेखश्चेति त्रयः प्रबन्धास्त्रिविक्रमभट्टेन विरचिताः। दिगम्बरजैनः सोमप्रभसूरि–959 तमेशवीयवर्षे यशस्तिलकचम्पूनामकं ग्रन्थं लिखितवान्। धर्मशर्माभ्युदयनामकमहाकाव्यप्रणेता हरिश्चन्द्रो नाम दिगम्बरजैनः "जीवन्धरचम्पू, नामकं ग्रन्थं प्रणीतवान्।

भोजराजेन धाराधीशेन कृता "रामायणचम्पूः" एकादश शतकोद्भवः प्रसिद्धः चम्पूरामायणस्य साहित्यिकं गौरवमतिमहत्त्वपूर्णम्। एवं च भागवतचम्पूरिति नाम्ना अनेके चम्पूग्रन्थाः प्रथन्ते। महाभारतकथामाश्रित्य अनन्तभट्टेन भारतचम्पूः नामको विशालग्रन्थो विरचितो यत्र द्वादशस्तबकेषु महाभारतकथोपनिबद्धा। दक्षिणभारतीयाश्चम्पूग्रन्थान् अधिकसंख्यायां रचितवन्तः। वरदाम्बिकापरिणयचम्पूः ऐतिहासिकदृष्ट्या महत्त्वपूर्णः। नीलकण्ठकविना कृतोऽयं ग्रन्थः समुद्रमन्थनं विषयीकरोति, स चायं नीलकण्ठः शिवलीलार्णवकर्त्तुरभिन्न एवेति ख्रीष्टसप्तदशशतक-पूर्वार्द्धभागोऽस्य निश्चितः समयः। विश्वगुणादर्शचम्पूः ग्रन्थे भौगोलिकं वर्णनं तीर्थानां गुणदोषविमर्शश्च कृतो बोध्यः। तथा च वैष्णवमतपोषकाश्चम्पूग्रन्थाः जैनमतावलम्बिनो वैष्णवविद्वांसः रघुनाथदासः चम्पूपुस्तकं कृतवान्।

## (ञ) अलंकारविवेचनम्—

**(Rhetoric)**

(उपमा, रूपकम्, दीपकम्, अपह्नुति, यमकः, शब्दालंकारः, अर्थालंकारश्चेति।)

"अलं करोतीति अलङ्कारः" "आभूषितं करोतीति अलंकारः" अलं.कृ धातोः घञः योगेन अलंकारशब्दः सिद्ध्यति। लेटिनभाषायां अलंकारशब्दस्यार्थः AURUM "स्वर्ण" विद्यते। आभूषित–करणमेव अलंकारः। अलंकारः काव्यस्य महत्त्वपूर्णमङ्गं वर्तते। अलंकृतिरलंकारः।

"काव्य-सौन्दर्यस्य विधायकानां सम्पूर्ण-तत्त्वानां विवेचनशास्त्रमेव अलंकार-शास्त्रम्।" अलंकारस्य त्रयो भेदाः (1) शब्दालंकारः, (2) अर्थालंकारः, (3) उभयालंकारश्चेति मन्यन्ते। "शब्दार्थौ सहितौ काव्यम्" इति भामह-कथनेन स्पष्टं भवति यत् "सत्यं शिवं सुन्दरम्" इत्यत्र चरमतत्त्वं सुन्दरमेव वर्तते। शिव-सुन्दरयोश्च यदा सत्येन सह संयोगो भवति, तदा संसारे मंगलोदयः भवति। ते आचार्याः गुण, रस, रीति, भावादिविषयाः अलंकारस्य अन्तर्गते मन्यन्ते। भगवान् शंकरः अलंकारशास्त्रस्य शिक्षणं सर्वप्रथमं ब्रह्मणे दत्तवान्, ब्रह्मा च देवेभ्यः कतिभ्यश्च ऋषिभ्यश्च तच्छिक्षां ददौ। तदनुसृत्याष्टादश ब्रह्मशिष्या अष्टादशस्वधिकरणेषु शास्त्रमिदं निबद्धवन्तः। नन्दिकेश्वरो रसम्, धिषणो दोषान्, उपमन्युर्गुणान्, भरतश्च रूपकाणि निरूपितवान्।

अलङ्कारो नाम सौन्दर्यम्, यथा—कटक-कुण्डल-हारादिभिः आभूषणैः कामिन्याः सौन्दर्यवृद्धिः भवति, तथैव अनुप्रास-उपमादिभिः अलङ्कारैः कविताकामिन्याः शोभावर्द्धनं क्रियते। येन कविताकामिनी कुरूपा सत्यपि सौन्दर्यं प्राप्नोति।

**अलङ्कारस्य लक्षणम्—**

1. आचार्यमम्मटेनापि उच्यते—

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः।। इति।

2. कविराजविश्वनाथेनापि उक्तम्—

शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः।
रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गनादिवत् ।।
(सा०द०)

ये शब्दार्थयोरनित्यधर्मत्वेन अतिशयशोभाकारिणः रसादीन् उपकुर्वन्ति, ते काव्ये अलङ्काराः। शरीरे यथा कटककुण्डलादीनां बाह्यशोभाऽऽधायकानाम् आत्मनः परोक्षधर्मत्वम्, तथैव काव्ये अनुप्रासोपमादीनाम् अलङ्काराणाम्।

**(ख) उपमा—**

"साम्यं वाच्यमवैधर्म्यवाक्यैक्य उपमाद्वयोः (सा०द-10/14)। अत्र एकस्मिन्नेव वाक्ये द्वयोः पदार्थयोः (उपमा-उपमेययोः) साधर्म्येण वाच्यं सादृश्यं भवति। तत्र उपमा नाम अर्थाऽलङ्कारविशेषः। उपमायाः चत्वारः पदार्थाः भवन्ति। यथा—1. साधारणधर्मः, 2. इव 3. उपमान, 4. उपमेय। पूर्णा लुप्ता इति उपमा मूलतः द्विधा।

सौरभमम्भोरुहवन्मुखस्य कुम्भाविव स्तनौ पीनौ,
हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले।
(सा०द०)

अस्मिन् उदाहरणे वाक्यत्रितयमेव वर्तते। वाक्यत्रये उपमात्रयी अपि अम्भोरुहमुपमानम्, सौरभम् इति प्रथमवाक्ये मुखमुपमेयम्, अम्भोरुहमुपमानम्, सुरभित्वं धर्मः, "वत्" इति उपमावाचकम्,

अत्र उपमानोपमेययोः साधर्म्येण वाच्यसादृश्यात् उपमा। एवमन्यत्र चन्द्रालोके लक्षणपद्यमेव उदाहरणम्।

**(ग) रूपकम्—**

निषेधरहिते उपमेये यत्र उपमानस्य अभेदारोपः तत्र रूपकम्। उपमानेन उपमेयस्य उपरञ्जनमेव अस्य अलङ्कारस्य प्रामुख्यम्। इदं रूपकं मूलतः त्रिधा—1. परम्परितम्, 2. साङ्गम्, 3. निरङ्गञ्चेति। यथा—

आहवे जगदुद्दण्डराजमण्डलराहवे।
श्रीनृसिंहमहीपाल! स्वस्त्यस्तु तव बाहवे।।

अत्र उपमेयभूते बाहौ उपमानभूतस्य राहोः अभेदारोपाद् किञ्च राजमण्डलरूपे उपमेये चन्द्रविम्बस्य उपमानभूतस्य अभेदारोपात् रूपकम्। साहित्यदर्पणे—

रूपकं रूपितोरोपो विषये निरपह्नवे।
तत्परम्परितं "साङ्गं" निरङ्गमिति च त्रिधा।। (सा०द०)

यत्रोपमानचित्रेण सर्वथाप्युपरज्यते।
उपमेयमयी भित्तिस्तत्र रूपकमिष्यते।। (चन्द्रालोके)

**(घ) दीपकम्—**

अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते।
अथ कारकमेकं स्यादनेकासु क्रियासु चेत्।।
(सा०द०)

प्रस्तुताप्रस्तुतानां च तुल्यत्वे दीपकं मतम्।
मेधां बुधः सुधामिन्दुर्बिभर्ति वसुधां भवान्।।
(चन्द्रालोके)

यत्र प्रस्तुताप्रस्तुतानां पदार्थानाम् एकेनैव धर्मेण सह सम्बन्धः तत्र दीपकम्। किञ्च, यत्र अनेकानां क्रियाणामेकेनैव कारकेण सह सम्बन्धः तत्रापि दीपकस्य लक्षणान्तरम्। उदाहरणम्—

बलावलेपादधुनापि पूर्ववत् प्रबाध्यते तेन जगज्जिगीषुणा।
सती च योषित्प्रकृतिश्च निश्चला पुमांसमभ्येति भवान्तरेष्वपि।।
(सा०द०)

अत्र प्रस्तुतभूतायाः निश्चलायाः योषित्प्रकृतेः अप्रस्तुतायाश्च पतिव्रतायाः स्त्रियः एकेनैव अनुगमनरूपेण क्रियाधर्मेण सह सम्बन्धः वर्णित इति दीपकम्। "दूरं समागतवती–" इति उदाहरणान्तरपद्ये एकस्या एव कारकभूतायाः नायिकायाः उत्तिष्ठत्यादिभिः बहुक्रियाभिः सह सम्बन्धात् दीपकमिति। चन्द्रालोकोदाहरणे प्रस्तुतस्य राज्ञः अप्रस्तुतयोः इन्दुबुधयोः एकेन धारणधर्मेण सह सम्बन्धः।

**(ङ) अपह्नुतिः**

**प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः।**
**(सा०द०10/38)**

**गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन।**
**यदि श्लेषेण काक्वावान्यथियेत्साऽप्यपह्नुतिः।**
**(सा०द०10/39)**

यत्र प्रकृतं (उपमेयम्) प्रतिषिध्य तदुपरि उपमानस्य आरोपः क्रियते तत्र अपह्नुतिः। अस्याः लक्षणान्तरम्—यत्र किमपि गोपनीयं वस्तु कथमपि सूचयित्वा श्लेषेण अश्लेषेण वा गोपाय्यते तत्रापि अपह्नुतिः भवति। प्रथमस्य अपह्नुत्यलङ्कारस्य उदाहरणं यथा—

**नेदं नभोमण्डलमम्बुराशिः नैताश्च ताराः नवफेनभङ्गाः,**
**नायं शशीकुण्डलितः फणीन्द्रो, नासौ कलङ्कः शयितो मुरारिः।।**

अत्र नभोमण्डल–तारा–शशि–कलङ्कानां प्रतिषेधात् परं तेषामुपरि अम्बुराशि–नवफेन–भङ्गफणीन्द्र–मुरारिप्रभृतीनामुपमानानाम् आरोपात् अपह्नुतिः। काले वारिधाराणाम्" इत्याद्युदाहरणं द्वितीयलक्षणस्य। चन्द्रालोके अपह्नुत्यलङ्कारस्य लक्षणम्—" अतथ्यमारोपयितुं तथ्यापास्तिरपह्नुतिः।" तत्र अपह्नुतिभेदानामपि लक्षणोदाहरणानि प्रदर्शितानि सन्ति। "नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम्" इति।

**(च) यमकम्**

**सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः।**
**क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते।।**
**(सा०द०10/8)**

**आवृत्तवर्णस्तबकन्दाङ्कुरं कवेः।**
**यमकं प्रथमाधुर्यमाधुर्यं वचसो विदुः।।**
**(चन्द्रालोके 5/8)**

अर्थवन्तः भिन्नार्थकस्य स्वरव्यञ्जनसमुदायस्य तेनैव क्रमेण पुनरावृत्तिः नाम यमकम्। अत्र द्वयोरपि पादयोः क्वचित् सार्थकत्वं क्वचिन्निरर्थकत्त्वम्। क्वचिदेकस्य सार्थकत्वम् अपरस्य निरर्थकत्वम्। उदाहरणम्—

**नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम्।**
**मृदुलतान्तलतान्तमलोकयत् स सुरभिं सुरभिं सुमनोभरैः।।**

पलाश–पलाश इति सुरभिं–सुरभिं इत्यत्र च द्वयोः सार्थकत्वम्। लतान्त–लतान्त इत्यत्र प्रथमस्य निरर्थकत्त्वम्, पराग–पराग इत्यत्र द्वितीयस्य। एतेषां क्रमेण आवृत्तेः यमकम्। चन्द्रालोकस्थं लक्षणपद्यमेव उदाहरणम्। स्तबक–स्तबक इत्यत्र द्वितीयस्य निरर्थकत्वम्। माधुर्य–माधुर्य इत्यत्र प्रथमस्य। परन्तु तेनैव क्रमेण आवृत्तेः यमकम्।

**अलङ्कारः द्विविधः—1. शब्दालङ्कारः, 2. अर्थालङ्कारश्च।**

**(छ) शब्दालंकारः-( अलङ्काराः त्रिधा विभज्यते।)**

शब्दाऽलङ्काराः—अनुप्रास-यमक-श्लेषादय; यत्र अलङ्कारे शब्दः न परिवर्तनं सहते, तत्र शब्दालंकारः।

**(ज) अर्थालंकारः—**

अर्थालंकाराः—उपमोत्प्रेक्षासन्देहरूपकसमासोक्त्यादयः, यत्र तु शब्दपरिवर्तनेऽपि अलङ्कारत्वे न काऽपि क्षतिः, तत्र अर्थाऽलङ्कारः।

**(झ) शब्दार्थोभयाऽलङ्कारः**—एकः पुनरुक्तवदाभासः, शब्दस्य परिवर्तनसहत्वे असहत्वे च शब्दार्थोभयालङ्कारः।

**(ञ) रीतिः**—(वामनाचार्यः) रीतिरात्मा काव्यस्य। पदसंघटना रीतिः। षड् रीतयः—1. वैदर्भी, 2. गौडी, 3. पाञ्चाली, 4. लाटी, 5. मागधी, 6. आवनती।

**(ट) वक्रोक्तिः ( सम्प्रदायः )**—आचार्यकुन्तकः—वक्रोक्तिः काव्यजीवितम् वक्रोक्तिः पञ्चधा—

1. वर्णवक्रता, 2. पदवक्रता, 3. वाक्यवक्रता, 4. अर्थवक्रता, 5. उक्तिवक्रता।

**(ठ) ध्वनिसम्प्रदायः**—आनन्दवर्धनः—काव्यस्यात्मा ध्वनिः। ध्वनेः त्रयः भेदाः सन्ति—1. रसध्वनिः, 2. अलङ्कारध्वनिः, 3. वस्तुध्वनिः।

**अलङ्कारशास्त्रस्य महत्त्वपूर्णाः कृतयः—**

| क्रमांकः | कृतिः | कृतिकारः |
|---|---|---|
| 1. | साहित्यदर्पणः | आचार्यः विश्वनाथः |
| 2. | रसगङ्गाधरः | पण्डितराजः जगन्नाथः |
| 3. | ध्वन्यालोकः | आनन्दवर्धनाचार्यः |
| 4. | काव्यमीमांसा | राजशेखरः |
| 5. | चन्द्रालोकः | जयदेवः |
| 6. | काव्यप्रकाशः | आचार्यः मम्मटः |
| 7. | वक्रोक्तिकाव्यजीवितम् | कुन्तकः |
| 8. | नाट्यशास्त्रम् | भरतमुनिः |
| 9. | कुवलयानन्दः | अप्पयदीक्षितः |
| 10. | सरस्वतीकण्ठाभरणम् | भोजराजः |
| 11. | दशरूपकः | धनञ्जयः |
| 12. | काव्यादर्शः | आचार्य दण्डी |
| 13. | काव्यालङ्कारः | भामहः |
| 14. | काव्यालङ्कारसूत्राणि | वामनः |
| 15. | ध्वन्यालोकलोचनः | अभिनवगुप्तः |
| 16. | औचित्यविचारचर्चा | क्षेमेन्द्रः |

# (ट) पद्यकाव्यम्

## 1. रघुवंशम् (Raghuvansham)

महाकवेः कालिदासस्य रघुवंशम् एकोनविंशतिसर्गात्मकम् एकं लालित्यपूर्णं महाकाव्यम् अस्ति। अत्र रघोः वंशस्य कथा निबद्धा अस्ति। रघुवंशे येषां राज्ञां वर्णनानि सन्ति, तेषां रामायणवर्णितनृपैः सह भेदः आपतति, परन्तु वायुपुराण-वर्णितरामवंशावल्या सह रामवंशवर्णित-रामवंशावली भूयसा सामञ्जस्यं धारयति।

एकोनविंशतिसर्गेषु वर्णिता रघुवंशीयराज्ञां नामावलिः यथाक्रमम् अत्र उल्लिखिता वर्तते। यथा—

| | | |
|---|---|---|
| 1. दिलीपः | 2. रघुः | 3. अजः, |
| 4. दशरथः | 5. रामः | 6. कुशः |
| 7. अतिथिः | 8. निषधः | 9. नलः |
| 10. नभः | 11. पुण्डरीकः | 12. क्षेमधन्वा |
| 13. देवानीकः | 14. अहीनगुः | 15. पारियात्रः |
| 16. शिलः | 17. उन्नाभः | 18. वज्रनाभः |
| 19. शंखणः | 20. व्युषिताश्वः | 21. विश्वसहः |
| 22. हिरण्यनाभः | 23. कौशल्यः | 24. ब्रह्मिष्ठः |
| 25. पुत्रः | 26. पुष्यः | 27. ध्रुवसन्धिः |
| 28. सुदर्शनः | 29. अग्निवर्णः। | |

## 2. मेघदूतम् (Meghadutam)

कविकुलगुरोः कालिदासस्य मेघदूतम् अतिप्रसिद्धं अस्ति। मेघदूते स्वाऽनुष्ठेय-कार्यप्रमादजन्यभर्तृशापाद्वर्षभोग्यप्रियाविश्लेषितस्य कस्यचिद्यक्षस्य मेघं सम्बोध्य स्ववल्लभाऽर्थं प्रेषणीयसन्देशकथनं प्रदर्शितं महाकविना। रामगिर्याश्रमस्थेन यक्षेण अलकापुर्यां विद्यमानायाः प्रियायाः सकाशे सन्देशप्रेषणाऽऽर्थं मेघस्याऽऽसादनाय मार्गमन्तराऽऽपतितानां तत्तद्देशानां यादृशं विवरणं कृतं, तेनाऽस्य कविवरस्य भौगोलिकज्ञानेऽसाधारणवैभवं स्फुटं भवति। प्रसादगुणसमलंकृतेऽत्र काव्ये यथा रस-ध्वनि-अलंकाराणामुत्कर्षो दृश्यते। काव्यमिदं खण्डकाव्यलक्षणाऽऽक्रान्तम्। खण्डकाव्यलक्षणं यथा साहित्यदर्पणे—"खण्डकाव्यं भवेत्काव्यस्यैकदेशाऽनुसारि च" इति।

### गीतिकाव्ये मेघदूतस्य स्थानम्—

गीतिकाव्यस्य आदितमं काव्यं मेघदूतम्। अस्मिन् काव्ये कुवेरशापविमुक्तस्य यक्षस्य मनोव्यथायाः मार्मिकं चित्रमस्ति। पूर्वमेघः बाह्यप्रकृतेः भारतभूमेश्च मनोहरं चित्रं प्रस्तौति। संस्कृतसाहित्यस्यातिमहार्हं रत्नमस्ति मेघदूतम्। मेघदूते तु अचेतनस्य मेघस्य दूतत्वेन प्रेषणं कालिदासस्य विचित्राऽस्ति कल्पनेयम्।

### 3. किरातार्जुनीयम् (Kiratarjuniyam)

किरातार्जुनीयम् इत्यस्य ग्रन्थस्य लेखकः महाकविः भारविः शैवमतावलम्बी प्रकाण्डपण्डितः राजनीतेर्महान् ज्ञाता, वीररसवर्णनकुशलः अलङ्कृतशैल्याः प्रवर्तकः आसीत्।

कुशीकगोत्रीयाः ब्राह्मणाः "आनन्दपुरे" निवसन्ति स्म। अस्मिन्नेव वंशे नारायणस्वामी आसीत्। तस्य पुत्रः दामोदरः "भारवि" आसीत्। भारविः दण्डिनः प्रपितामहः आसीत्। तस्य कालस्थितिः 600 ईसवीयसमीपे मन्यते। संस्कृतविद्वत्समाजे "भारवेरर्थगौरवम्", "नारिकेलफलसम्मितं वचो" "स्फुटता न पदैरपाकृता" इत्यादि वचनानि सुप्रसिद्धानि एव।

महाभारतकथामाश्रित्य महाकविभारविना अलंकृतकलापक्षप्रधानशैल्या विरचितं अष्टादशसर्गात्मकं वीररसप्रधानम् अर्थगाम्भीर्ययुक्तं बृहत्त्रय्यां प्रथमपरिगणितं "किरातार्जुनीयम्" नाम एकमेव महाकाव्यं समुपलभ्यते। अस्य ग्रन्थस्य शुभारम्भः "श्री"शब्देन, सर्गान्तः "लक्ष्मी"-शब्देन च भवति। अत्र अर्जुनस्य किरातवेशधारिणा शङ्करेण सह युद्धं वर्णितम्। किरातश्च अर्जुनश्च किरातार्जुनौ (द्वन्द्वः) किरातार्जुनौ अधिकृत्य कृतं काव्यं किरातार्जुनीयम्। अस्य ग्रन्थस्य नायकः अर्जुनः, नायिका च द्रौपदी वर्तते। अर्थगौरवं, स्पष्टता, पुनरुक्तेरभावः अलंकृतशब्दयोजनाश्च अस्य महाकाव्यस्य वैशिष्ट्यम्।

### 4. शिशुपालवधम् (Shishupalavadham)

शिशुपालवधम् इत्यस्य ग्रन्थस्य लेखकः महाकविमाघः गुर्जरदेशे "श्रीमाल" नामकस्थाने विशिष्टब्राह्मणपरिवारे जन्म लेभे। तस्य पितुः नाम "दत्तक" आसीत्। अस्य महाकवेः माघस्य समयः 700-800 मध्ये स्वीकरणं सर्वथा युक्तियुक्तं स्यात्। महाभारतीयां कथामाश्रित्य विंशतिसर्गात्मकं "शिशुपालवधमहाकाव्यम्" इति एका एव कृतिः समुपलभ्यते माघस्य। संस्कृतसाहित्ये पाण्डित्यमयशैल्याः चरमोत्कर्षो दृश्यते श्रीमाघे।

पाण्डवाः प्रथमवनवासदिवसावधिं प्रपूर्य इन्द्रप्रस्थनगरीं समधिकृतवन्त आसन्। युधिष्ठिरः राजसूययज्ञं कर्तुमैच्छत्। यज्ञेऽस्मिन् भगवान् श्रीकृष्णः सर्वकर्मद्रष्टा आसीत्। ततः सदस्यपूजाया अवसरस्समुपस्थितः। भीष्मोऽस्यै प्रतिष्ठायै भगवान् श्रीकृष्ण एव महत्तम इति उद्घोषितवान्। युधिष्ठिरश्च भगवन्तं श्रीकृष्णमेव पूजयामास। शिशुपालः भगवतः श्रीकृष्णस्य इदं सम्मानं द्रष्टुं नाशकत्। स क्रोधाविष्टः रक्तीकृतनेत्रश्च सन् उच्चमुष्णञ्च श्वसितुमारेभे। धर्मराजं युधिष्ठिरं च निन्दित्वा भगवतः श्रीकृष्णस्योपरि नानाविधानाक्षेपान् कर्तुं प्रवृत्तः। ततः शतसंख्यकेषु अपराधेषु पूर्णेषु, तद्वधेऽधिकं विलम्बमनुचितम्मत्वा भगवान् श्रीकृष्णः सुदर्शनचक्रेण शिशुपालस्य शिरश्चिच्छेद।

महाकविमाघेन विंशतिसर्गात्मके स्वीये शिशुपालवधे महाकाव्ये सर्वेषामेव रसानां साधिकारं सहृदयपरितोषं कुर्वता प्राधान्येन वीररसः तदङ्गतया च सर्वेऽन्ये रसाः यथास्थानं विन्यस्ताः। अस्य कृतौ प्रायः कोऽपि श्लोकः अलङ्काररहितो न दृश्यते। यथा—

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बिघण्टा-द्वयपरिवारितवारणेन्द्रलीलाम्।। 4/20

नवसर्गगते माघे नवशब्दो न विद्यते। इति।

### 5. नैषधीयचरितम् (Naishadhiyacharitam)

नैषधीयचरितम् अस्य महाकाव्यस्य लेखकः महाकविना श्रीहर्षेण नलदमयन्त्याः स्नेहकथायाः चित्ताकर्षकं वर्णनं द्वाविंशतिसर्गेषु समाहितम्। सौन्दर्यातिशयसमन्विता विदर्भराजतनया भैमी नैषधीयचरितमहाकाव्यस्य प्रधानभूता नायिका विद्यते। तस्यामादर्शनायिकायाः सर्वे गुणाः समाविष्टाः सन्ति। कुण्डिनपुर्या अधिपतेः भूपतेः भीमसेनस्य आत्मजा दमयन्ती त्रिलोकललनाललामभूता अतीव कमनीया वर्तते। चन्द्रमसः सारभागं समाकृष्य दमयन्त्याः सौन्दर्यातिशयविनिर्माणं वेधसा विहितमित्येवंरूपेण कल्पते महाकविः श्रीहर्षः। सा दमयन्ती अनन्यसुन्दरी, उच्चकुलप्रसूता, अनुरागवती चासीत्। यथा—

हतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा।
कृतमध्यविलं विलोक्यते धृतगम्भीरखनीलिमा।।
इतीरिता पत्त्ररथेन तेन ह्रीणा च हृष्टा च बभाण भैमी।
चेतो नलङ्कामयते मदीयं नाऽन्यत्र कुत्राऽपि च साऽभिलाषम्।।

### 6. बुद्धचरितम् (Buddhacharitam)

बुद्धचरितम् इत्यस्य रचनाकारः महाकविः अश्वघोषोऽपि बौद्धधर्म-प्रचाराय काव्यं विरचितवान्। हृदयगतभावनाया उद्बोधिका भवति कविता। कविता मानवहृदयमुत्तेजयति समाकर्षयति च। बुद्धचरितमहाकाव्ये महात्मनः गौतमबुद्धस्य चरित्रं वर्णितमस्ति। अस्मिन् ग्रन्थे 28 सर्गाः आसन् परञ्च सम्प्रति केवलं 18 सर्गाः समुपलभ्यन्ते। तेषु अपि 14 सर्गा एव अश्वघोषविरचिताः सन्ति। सौन्दरानन्दस्यान्ते कविना स्वयमेवोक्तम्—

"यथा तिक्तौषधिं पानाय मधुना सम्मेल्यते तथैवाहं धर्मप्रचाराय काव्यस्याश्रयं गृहीतवानस्मि।" अत एव अश्वघोषस्य काव्यकृतिः बौद्धधर्मस्य दार्शनिकविचाराणां प्रचारिका विद्यते। अस्यैते प्रामाणिका ग्रन्थाः सन्ति—1. बुद्धचरितम्, 2. सौन्दरानन्दम्, 3. शारिपुत्रप्रकरणञ्चेति।

#### जीवनचरितं स्थितिकालश्च—

अश्वघोषः साकेतस्य (अयोध्यायाः) निवासी आसीत्। सुवर्ण्याक्ष्याः पुत्रः अश्वघोषः तार्किकः रामायण-महाभारतयोः विशेषज्ञश्चासीत्। राज्ञः कनिष्केन सह सम्बन्धः अपि आसीत्। अतः अश्वघोषस्य स्थितिकालः 150 ईस्वीपूर्वं मन्यते।

### 7. साहित्यदर्पणम्

सहित्यदर्पणस्य लेखकः कविराजो विश्वनाथः उत्कलप्रदेशे ब्राह्मणकुले जन्म लेभे। चण्डीदासः पितामहानुजः, चन्द्रशेखरश्च पिताऽऽसीत्। विश्वनाथस्य रचनासु साहित्यदर्पणः सर्वाधिकः प्रख्यातो वर्तते। अस्मिन् ग्रन्थे श्रव्यदृश्ययोरुभयोरेव प्रकारयोः काव्ययोः वर्णनमास्ते। अयं ग्रन्थः सम्पूर्णकाव्यशास्त्रस्य प्रतिनिधिभूतो विद्यते। अस्मिन् ग्रन्थे (10) दश परिच्छेदाः सन्ति।

1. प्रथमपरिच्छेदे—काव्यलक्षणस्य, काव्यप्रयोजनस्य, काव्यभेदस्य च वर्णनमास्ते।

2. द्वितीयपरिच्छेदे—वाक्यपदयोर्लक्षणानन्तरं शब्दस्याभिधालक्षणाव्यञ्जनानां विवेचनमास्ते।
3. तृतीयपरिच्छेदे—रसानां, भावानाम्, नायकनायिकयोर्भेदानाञ्च विस्तरेण वर्णनं कृतमास्ते।
4. चतुर्थपरिच्छेदे—ध्वनिकाव्यस्य गुणीभूतव्यङ्ग्यकाव्यस्य च विवेचनं कृतमास्ते।
5. पञ्चमपरिच्छेदे—व्यञ्जनावृत्तेः संस्थापनाय युक्तीनां प्रदर्शनं कृतमास्ते।
6. षष्ठपरिच्छेदे—नाटकस्य पूर्णतया विवेचनं कृतमास्ते।
7. सप्तमपरिच्छेदे—काव्यदोषाणां सोदाहरणं निरूपणं कृतमास्ते।
8. अष्टमपरिच्छेदे—गुणानां निरूपणं कृतमास्ते।
9. नवमपरिच्छेदे—चतसृणां रीतीनां वर्णनं कृतमास्ते।
10. दशमपरिच्छेदे—शब्दार्थालङ्काराणां विशदं विवेचनं कृतमास्ते।

## (ठ) रूपककाव्यम्

### (संस्कृत-नाटकसाहित्यम्)

संस्कृतसाहित्ये वैदिकयुगात् नाटकानां परम्पराप्रवाहः विद्यते। नाटकशब्दोऽयं "नट्" धातोः निष्पन्नो वर्तते। यस्यार्थास्सन्ति—नृत्यम्, अभिनयः, अनुकरणञ्च। एतदङ्गभूतानां ताण्डव-लास्यनृत्यानाम् अभिनयगीतवाद्यादीनाञ्च सम्बन्धः शङ्करपार्वतीप्रजापतिनारदादिभिरभिहितः प्राचीनग्रन्थेषु वर्णितः। सर्वेन्द्रियाणां नयनं प्रधानम्। इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। लोके विद्यमानानाम् इतिवृत्तानां घटनानां वा चित्रणमेव नाटकम्। नाटकान्तम् हि साहित्यम् इति। महाकविना कालिदासेन उक्तम्—"नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्"। संस्कृतसाहित्ये दशरूपकाण्यष्टादशोपरूपकाणि च सन्ति।

1. काव्येषु नाटकं रम्यम्।
2. अवस्थायाः अनुकरणमेव नाटकमस्ति।
3. अवस्थाविशेषस्य अनुकरणं कृत्वा आनन्द-मनोरंजन-प्राप्तिकरणमेव नाटकम्।
4. अवस्थानुकृतिः नाट्यम्।
5. नाट्यशास्त्रं पञ्चमो वेदः इति भरतमुनिः मन्यते।
6. जग्राह पाठ्यं ऋग्वेदात्सामभ्यो गीतमेव च, यजुर्वेदादभिनयान् रसानाथर्वणादपि। ब्रह्मा ऋग्वेदात् संवादं, सामवेदात् गानं, यजुर्वेदात् अभिनयम्, अथर्ववेदात् रसञ्च गृहीत्वा नाट्यवेदमरचयत्।
7. "नाट्यकारकृतप्रसिद्धकल्पितकथासारग्रथितरचनानुसारि रङ्गपीठे प्रयोक्तृप्रशिक्षितनटा-भिनयसंगीतादिजन्यरसद्वारा प्रेक्षकाणां विनोदविश्रान्त्युपदेशजनको व्यापारः नाटकं रूपकं वा।"
8. "रूपारोपातु रूपकम्" रूपकं परिभाषयन् साहित्यदर्पणकारः विश्वनाथ-कविराजः।

अर्थात् दृश्यकाव्यं नटे रामादिस्वरूपारोपाद्रूपकमित्युच्यते। अंगेन, वचनेन, वेशरचनया स्तम्भस्वेदादिभिश्च रामयुधिष्ठिरादीनामवस्थानुकरणमभिनयपदव्यवहार्यम्। स एव नटे

रामादिरूपारोपात् "रूपकम्" इत्युच्यते। तत्र रूपकाणि तु दश एव; यथा—1. नाटकं, 2. प्रकरणं, 3. भाणः, 4. व्यायोग, 5. समवकारः, 6. डिमः, 7. ईहामृगः, 8. अंकः, 9. वीथी, 10. प्रहसनं च।

1. नाटकम्—

नाटकं ख्यातवृत्तं स्यात् पंचसन्धिसमन्वितम्।
विलसद्धैर्यादिगुणवद्युक्तम् नानाविभूतिभिः।।

अत्र ख्यातं रामायणादिप्रसिद्धं वृत्तम्, यथा—रामचरितादिः। उदाहरणम्—अभिज्ञानशाकुन्तलम्, स्वप्नवासवदत्तम्, प्रतिमानाटकम् इत्यादिः।

2. प्रकरणम्—

भवेत्प्रकरणे वृत्तं लौकिकं कविकल्पितम्।
शृंगारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक्।।

यथा—कविकल्पितलौकिकवृत्तान्तजन्यत्वे सति विनाशशालिधर्मकामार्थतत्परधीर-प्रशान्तविप्रामात्यवणिगन्यतमनायकवच्छृंगाररसप्रधानदृश्यकाव्यत्वम् प्रकरणत्वम्।

3. भाणः—

भाणः स्याद् धूर्तचरितो नानावस्थान्तरात्मकः।
एकांक एक एवात्र निपुणो पण्डितो विटः।।

अत्र आकाशभाषितस्य परवचनमपि स्वयमेवानुवदन उत्तरप्रत्युत्तरे कुर्यात्। शृंगार-वीररसौ च सौभाग्य-शौर्यवर्णनया सूचयेत्। प्रायेण भारती क्वापि कैशिक्यपि वृत्तिर्भवति। लास्यांगानि गेयपदादीनि, उदाहरणं—लीलामधुकरः।

4. व्यायोगः—

ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः।
हीनो गर्भविमर्शाभ्यां नरैर्बहुभिराश्रितः।।

"सौगन्धिकाहरणम्" अस्य व्यायोगाख्यरूपकस्य प्रतिनिधिभूतमुदाहरणमस्ति।

5. समवकारः—

वृत्तं समवकारे तु ख्यातं देवासुराश्रयम्।
संधयो निर्विमर्शास्तु त्रयोऽङ्कास्तत्र चादिमे।।

तत्र शास्त्रविरोधेन कृतो धर्मः शृंगारः। अर्थलाभार्थकल्पितो अर्थः शृंगारः। प्रहसनं शृंगारः। कामः शृंगारः। समवकीर्यन्ते बहवोऽर्था अस्मिन् इति समवकारः। यथा—समुद्रमन्थनम्।

6. डिमः—

मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।
उपरागैश्च भूयिष्ठो डिमः ख्यातेतिवृत्तकः।।

त्रिपुरदाहस्तु डिमाख्यरूपकस्य प्रतिनिधिभूतम् उदाहरणम् अस्ति।

7. ईहामृगः—

ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्तितः।
मुखप्रतिमुखे सन्धी तत्र निर्वहणं तथा।।

मिश्रं ख्याताख्यातम्। अन्यः प्रतिनायकः। पताकानायकस्तु नायकप्रतिनायकयोर्मिलिता दश। नायको मृगवदलभ्यां नायिकामत्र ईहते वाञ्छतीतीहामृगः। यथा—कुसुमशेखरविजयादिः।

8. अङ्कः—

उत्सृष्टिकांक एकांको नेतारः प्राकृता नराः।
रसोऽत्र करुणः स्थायी बहुस्त्रीपरिदेवितम्।।

इमं च केचित् "नाटकाद्यन्तःपात्यंकपरिच्छेदार्थमुत्सृष्टिकांकनामानम्" आहुः। अन्ये तु उत्क्रान्ता विलोमरूपा सृष्टिर्यत्र इत्युत्सृष्टिकांकः। यथा—शर्मिष्ठाययातिः।

9. वीथी—

वीथ्यामेको भवेदंकः कश्चिदेकोऽत्र कल्प्यते।
आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः।।

एतानि च अंगानि नाटकादिषु सम्भवन्त्यपि वीथ्यामवश्यं विधेयानि। स्पष्टतया नाटकादिषु विनिविष्टान्यपि इह उदाहृतानि। वीथीव नानारसानां चात्र मालारूपतया स्थितत्वाद् वीथीयम्। यथा—मालविकाग्निमित्रम्।

10. प्रहसनम्—

भाणवत् सन्धिसन्ध्यंग-लास्यांगाङ्कैर्विनिर्मितम्।
भवेत् प्रहसनं वृत्तं निन्द्यानां कविकल्पितम्।।

तत्र उदाहरणं शुद्धप्रहसनस्य कन्दर्पकेलिः संकीर्णप्रहसनम्; यथा—धूर्तचरितम्, लटकमेलकादिश्च।

नाटकादि-दशरूपक-निरूपण-चक्रम्

| रूपकविधा | अङ्क | नायकः | कथावस्तुः | रसः | उदाहरणम् | विशिष्टविवरणम् |
|---|---|---|---|---|---|---|
| 1. नाटकम् | 5-10 | 01धीरोदात्तः | इतिहासप्रसिद्धः | शृंगार/वीर | अभिज्ञान-शाकुन्तलम् | सर्वोत्तमगुण-गणान्वितः |
| 2. प्रकरणम् | 10 | 01धीर-प्रशान्त | लौकिकं कल्पितश्च | शृंगारः | मृच्छकटिकम् | मन्त्री-वैश्य-ब्राह्मणनायकाः |
| 3. भाणः | 01 | 01विटः | कविकल्पितम् | शृंगार/वीर | लीलामधुकरम् | धूर्तचरित्रयुतः |
| 4. व्यायोगः | 01 | 01धीरोद्धतः | इतिहासप्रसिद्धः | हास्य/शृंगार | सौगन्धिका-हरणम् | पुरुषाधिक्यम् |
| 5. समवकारः | 03 | 12देवता/मानव | इतिहासप्रसिद्धः | वीरः | समुद्रमन्थनम् | गायत्री-उष्णिकारि |
| 6. डिमः | 04 | 16विवधाः | ऐतिहासिकः | रौद्रः | त्रिपुरदाहः | मायेन्द्रजालादियुतः |

क्रमशः ..............

| | | | | | | |
|---|---|---|---|---|---|---|
| 7. ईहामृगः | 04/01 | 01/06 | ऐतिहासिकः विविधाः | शृंगारः कल्पितः | कुसुमशेखर-विजयः | दिव्यनायिका हेतुकः कलहः |
| 8. अंकः | 01 | 01. साधारणः | इतिहासप्रसिद्धः | करुणः | शर्मिष्ठाययातिः | स्त्रीविलापाधिक्यम् |
| 9. वीथी | 01 | 01. साधारणः | कविकल्पितः | शृंगारः | मालविकाग्नि-मित्रम् | त्रयोदश अंगानि भवन्ति |
| 10. प्रहसनं | 01 | 01. निन्दनीयः | कविकल्पितः | हास्यः | कन्दर्पकेलिः/ धूर्तचरितम् | भाणवदिदं प्रहसनम् |

**पारिभाषिकशब्दाः—**

1. नान्दी—

आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता।।

अर्थः—देवद्विजनृपाणां आशीर्वादसंयुक्ता स्तुतिः अनेन (नान्दीपाठेन) क्रियते।

2. सूत्रधारः—

नाट्यस्य यदनुष्ठानं तत्सूत्रं स्यात् सबीजकम्।
रङ्गदैवतपूजाकृत् सूत्रधार उदीरितः।।

अर्थः—बीजसहितं नाट्यानुष्ठानं सूत्रं कथ्यते तस्य संचालनकर्ता सूत्रधारः कथ्यते।

3. आमुखः प्रस्तावना वा—

नटी विदूषको वापि पारिपार्श्विक एव वा।
सूत्रधारेण सहितः संलापं यत्र कुर्वते।।
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा।।

अर्थः—यत्र नटी, विदूषकः अथवा पारिपार्श्विकः सूत्रधारेण सह स्वकार्यविषये विचित्रैः वाक्यैः एवं प्रकारेण वार्तालापं करोति येन प्रस्तुता कथा सूच्यते तदेव आमुखः अथवा प्रस्तावना उच्यते।

4. विष्कम्भकः—

वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः।
संक्षिप्तार्थस्तु विष्कम्भः आदावङ्कस्य दर्शितः।।

5. प्रवेशकः—

प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः।
अङ्कस्यान्तर्विज्ञेयः शेषं विष्कम्भके यथा।।

6. स्वगतम्/आत्मगतम्—

अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्।

7. प्रकाशम्—

सर्वश्राव्यं प्रकाशं स्यात्।

8. अपवारितम्—

रहस्यं च यदन्यस्य परावृत्य प्रकाश्यते तद्भवेदपवारितम्।

अर्थः—समीपस्थपात्रेभ्यः मुखं परावृत्य कस्मै पात्राय रहस्यं निवेदयति तदेव अपवारितम्।

9. जनान्तिकम्—

त्रिपताककरेणान्यानपवार्यान्तरां कथाम्।
अन्योन्यामन्त्रणं यत्स्यात् जनान्ते तज्जनान्तिकम्।।

अर्थः—जनान्तिकरूपवक्ता मुखाग्रे तिस्रः अङ्गुल्यः धृत्वा अन्यपात्रं प्रति आवरणं कृत्वा अभीष्टपात्राय कर्णे शनैः शनैः निवेदयति तदेव जनान्तिकम्।

10. कञ्चुकी—

अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः।
सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते।।

अर्थः—कञ्चुकी शिष्टजनो भवति। अयं गुणवान्, वृद्धः सर्वकार्यदक्षश्च भवति।

11. पञ्च अर्थप्रकृतयः—बीज-बिन्दु-पताका-प्रकरी-कार्यार्थप्रकृतयः पञ्च।

12. पञ्च अवस्था—आरम्भ-प्रयत्न-प्राप्त्याशा-नियताप्ति-फलागमावस्थाः।

13. पञ्चसन्धयः—मुख-प्रतिमुख-गर्भ-विमर्श-निर्वहणसन्धयः।

14. नायकलक्षणम्—

स्थायी कृती कुलीनः सुश्रीको रूपयौवनोत्साही।
दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान् नेता।।

त्रिविधः नायकः—(क) धीरोदात्तः, (ख) धीरोद्धतः, (ग) धीरललितश्च।

(क) धीरोदात्तनायकः—

अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः।।

अर्थः—आत्मप्रशंसी, क्षमावान्, अतिगम्भीरः, अतिपराक्रमी, गर्वनिगूढः, दृढ़निश्चयः धीरोदात्त नायकः भवति।

(ख) धीरोद्धतनायकः—

मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः।
आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः।।

अर्थः—धीरोद्धतनायकः मायावी, प्रचण्डः चञ्चलः, अतिगर्वी, आत्मप्रशंसी च भवति।

**(ग) धीरललितनायकः—**

**निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात्।**

अर्थः—निश्चितः (चिन्तारहितः) अहोरात्रः कलाप्रियः धीरललितनायकः भवति।

नाटकस्य स्वरूपम्—संस्कृतसाहित्यं भागद्वये विभज्यते—

(1) श्रव्यकाव्यम्—अस्य काव्यस्य पाठेन श्रवणेन च आनन्दस्य प्राप्तिः भवति। यथा—कथा, आख्यायिकाप्रभृतयः।

(2) दृश्यकाव्यम्—दृश्यकाव्ये आनन्दस्य प्राप्तये दर्शनीयस्य वस्तुनः तथाविधं सामर्थ्यं भवति। नाटकमस्यां श्रेण्याम् आगच्छति। अभिनयद्वारा अधिमञ्चं नाटकं प्रस्तुतीक्रियते।

**नाटकसाहित्यस्य परिचयः—**

(1) अश्वघोषस्य—शारिपुत्रप्रकरणे षट् अङ्काः सन्ति।

(2) कालिदासस्य—अभिज्ञानशाकुन्तलम्, मालविकाग्निमित्रम्, विक्रमोर्वशीयं चेति नाटकत्रयम्।

(3) विशाखदत्तस्य—मुद्राराक्षसम्, मुद्रया गृहीतो राक्षसः यत्रेति तन्मुद्राराक्षसमिति।

(4) भवभूतेः—महावीरचरितम्, मालतीमाधवम्, उत्तररामचरितम् इति नाटकत्रयम्।

(5) हर्षनृपतेः—रत्नावलीः, प्रियदर्शिका, नागानन्दम् (पञ्चाङ्काः) इति तिस्रः नाटिकाः।

(6) भट्टनारायणस्य—वेणीसंहारम् (महाभारतकथामाश्रित्य वीररसप्रधानम्)।

(7) शूद्रकस्य—मृच्छकटिकम् (दशाङ्काः)।

(8) भासस्य—(त्रयोदशरूपकाणि)।

1. प्रतिज्ञायौगन्धरायणम्, 2. अविमारकम्, 3. स्वप्नवासवदत्तम्, 4. प्रतिमानाटकम्, 5. अभिषेकनाटकम्, 6. मध्यमव्यायोगः, 7. पञ्चरात्रम्, 8. दूतवाक्यम्, 9. दूतघटोत्कचम्, 10. कर्णभारः, 11. उरुभङ्गम्, 12. बालचरितम्, 13. दरिद्रचारुदत्तम् चेति।

**संस्कृतनाटकस्य विशेषता—**

नाटकं साहित्यस्य महत्त्वपूर्णमङ्गं वर्तते, येन प्रकारेण चित्रस्य भिन्न-भिन्नवर्णाः सहृदयस्य चित्ते वर्णस्य आनन्दस्य अनुभूतिं कारयन्ति तेनैव प्रकारेण नाटके प्रयुक्तनायकादीनां वेशभूषा-नेपथ्य-रचनादयः दर्शकस्य हृदयोपरि विशिष्टं प्रभावयन्ति आनन्दसृष्टिञ्च कुर्वन्ति। अध्ययनप्राप्तैतादृशं किमपि ज्ञानं, शिल्पं, विद्या, कला, योगः, कार्यं नास्ति यन्नाटके न दरीदृश्यते। भरतमुनिना नाटकस्य त्रीणि उद्देश्यानि प्रतिपादितानि। यथा—

(1) हितोपजननम्—व्यक्तेः समाजस्य च कल्याणार्थम् उपदेशप्रदानम्।

(2) विश्रान्तिजननम्—व्यक्तेः समाजस्य च शान्तिप्रदानम्।

(3) विनोदजननम्—व्यक्तेः समाजस्य च मनोरञ्जनम्।

## 1. स्वप्नवासवदत्तम् (Svapnavasavadattam)

नाट्यसाहित्ये महाकविभासस्य महती प्रसिद्धिरस्ति। कालिदासस्य समये भासस्य महती प्रसिद्धिः आसीत्। स्वप्नवासवदत्ते कविः भासः पात्राणां चरित्रचित्रणे नाट्यकलायाः अद्भुतं चित्रं चित्रयति। विशुद्धस्य विशदप्रेम्णः यादृशं वर्णनं भासेन कृतं, तादृशं संस्कृतसाहित्ये सुदुर्लभम्। स्वप्नवासवदत्तं संस्कृतसाहित्यस्य जाज्वल्यमानं महार्हं रत्नं विद्यते इति नात्र संशयः। नाटकमिदं यथैव साहित्यिकदृष्ट्या महत्त्वास्पदं, तथैव व्यावहारिकदृष्ट्यापि परमोच्चस्थानं लभते।

भासः मानव-हृदय--विकार-मर्मज्ञः, प्रकृतिवर्णनस्य महान् शिल्पी, रसालङ्कारयोः भाव-कलापक्षयोश्च प्रियः कविरिति प्रतिभाति।

## 2. अभिज्ञानशाकुन्तलम् (Abhijnanashakuntalam)

महाकविकालिदासस्य अभिज्ञानशाकुन्तलम् अस्ति एकं समस्याप्रधानं घटनाप्रधानं वा नाटकम्। नाटकेऽस्मिन् नायिका शकुन्तला नायकेन राज्ञा दुष्यन्तेन गान्धर्वविवाहविधिना परिणीता। स्वनगरं प्रति परावर्तमानेन तेन "एकैकमत्र दिवसे दिवसे मदीयं, नामाक्षरं गणय, गच्छसि यावदन्तम्" इत्युक्त्वा स्वनामाङ्कितमंगुलीयकं स्वयमेव शकुन्तलायाः हस्ते परिधापितम्। इत्यभिज्ञानविषयिणी घटना महाभारतस्यादिपर्वात् गृहीता।

अभिज्ञानप्रधानं शाकुन्तलम् "अभिज्ञानशाकुन्तलम्" अभिज्ञायते अनेन इति अभिज्ञानं चिह्नमिति, अभि.ज्ञा.ल्युट्। इति व्युत्पत्तिं दर्शं दर्शं सिद्धमेव अभिज्ञानशाकुन्तलस्य समस्याप्रधानत्वम्, नायिकाप्रधानत्वं च। अभिज्ञानञ्च शाकुन्तलञ्च इति अभिज्ञानशाकुन्तलम्। कालिदासस्य सर्वस्वमभिज्ञानशाकुन्तलम्। अभिज्ञानशाकुन्तले चतुर्थेऽङ्के कविः कण्वरूपेण उपस्थितोऽस्ति। अभिज्ञानशाकुन्तलस्य चतुर्थेऽङ्के लौकिकालौकिकप्रकृतिमानवयोः विलक्षणं समन्वयोऽस्ति। अरण्यवासिन्याः शकुन्तलायाः पतिगृह-हस्तिनापुरगमनम् अरण्यराजप्रासादयोः किमपि विलक्षणं सम्बन्धं प्रतिपादयति। अभिज्ञानशाकुन्तलस्य चमत्कारो दुर्वाससः शापघटनायामाश्रितोऽस्ति, अत एव अंकोऽयं विशिष्टं स्थानं विभर्ति। "सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्" इत्यनेन शकुन्तलाया पतिगृहगमनाय अनुज्ञा प्रार्थिता। ईदृशः वाग्व्यवहारः महाकवेः गुणगौरवमेव प्रथयति।

## 3. मृच्छकटिकम् (Mrichchhakatikam)

"मृच्छकटिकं" इति नाटकस्यादौ शूद्रकस्य परिचयः वर्णितोऽस्ति। शूद्रकः शिवस्यानुग्रहेण ज्ञानं प्राप्तं, विधिना चाश्वमेधयज्ञं कृतवान्। संस्कृतसाहित्ये शूद्रकस्य महती प्रसिद्धिरस्ति। शूद्रकः विक्रमादित्य इव प्रतिभासम्पन्नः ऐतिहासिकः पुरुषः आसीत्। भारतीयाः विद्वांसः अस्य समयं विक्रमाब्दस्य प्रथमशताब्द्यां मन्यन्ते। शूद्रकः दण्डीवराहमिहिरयोः पूर्ववर्ती सिद्ध्यति। अनेन अस्य समयः पञ्चमशताब्द्यां न्यायसङ्गतं प्रतिभाति।

नाट्यकलादृष्ट्या मृच्छकटिकं सुन्दरं सफलं च नाटकं विद्यते। संस्कृतसाहित्ये सर्वप्रथममस्मिन्नेव नाटके राजवंशातिरिक्तः तथा निम्नवर्गस्य सामाजिको जनः नायकः दृश्यते।

शूद्रकस्य शैली सरला, प्रसाद-गुण-गुम्फिता च अस्ति। नूतनो भावः, अभिनवोऽर्थः स्थले-स्थले प्राप्यते। नाटकस्य मुख्यो रसः शृंगारः। कविना न्यायालयस्य वर्णनं कियत्सुन्दरं

कृतमिति। अनेन प्रकारेण शूद्रकः मृच्छकटिकनाटके यत्र तत्र समाजस्य, राज्ञः, तथा राजकर्मकस्य, वेश्यायाः चौरस्य च एतादृशं चित्रं प्रस्तौति यत् नाटकपठनेन तत्कालीनसमाजस्य चित्रम् अस्माकं सम्मुखे अलिखितचित्रमिव अवभासते।

### 4. उत्तररामचरितम् (Uttararmacharitam)

भवभूतिना विरचितं उत्तररामचरितं संस्कृत-साहित्ये नाट्यप्रतिभायाः सर्वोत्तमनिदर्शनमस्ति। भवभूतेः पितुर्नाम नीलकण्ठः, मातुर्नाम जतुकर्णी आसीत्। भट्टगोपालः तस्य पितामहः ज्ञाननिधिः गुरुश्चासीत्। सः काश्यपगोत्रीयः ब्राह्मणः आसीत्। विदर्भदेशस्थपद्मपुरनगरं तस्य जन्मस्थानं वर्तते। "श्रीकण्ठः" तस्य उपाधिरासीत्। भवभूतिः कान्यकुब्जनृपतेः यशोवर्मणः आश्रितः आसीत्। तस्य स्थितिकालः 650 ईसवीतः 750 ईसवीयसमीपे भवेत्। महाकवेः भवभूतेः तिस्रः रचना 1. मालतीमाधवम्, 2. महावीरचरितम्, 3. उत्तररामचरितञ्च प्राप्यन्ते।

सप्ताङ्कात्मके अस्मिन् नाटके रामायणस्य उत्तरार्द्धं प्रदर्शितमस्ति। अत्र रामस्य वनात् प्रत्यागमनानन्तरं राज्याभिषेकादारभ्य सीतामिलनपर्यन्तं सम्पूर्णकथा प्रदर्शिता अस्ति। उत्तररामचरितम् भवभूतेः नाट्यप्रतिभायाः सर्वोत्तमनिदर्शनमस्ति। रामायणमाश्रित्य सप्तांक-कथावृत्ते श्रीरामस्य राज्याभिषेकात् लोकापवादेन सीतानिर्वासनं ततश्च सीतारामसम्मेलनं यावत् कथा वर्णिताऽस्ति। उत्तररामचरिते प्रधानरसः करुणो वर्तते। मानवीयमनोभावानां विश्लेषणे मार्मिकचित्रणे च भवभूतिः अद्वितीयो वर्तते।

भवभूतेः प्रत्येकमपि पात्रं सांस्कृतिकादर्शम् उपस्थापयति। यथा—

रामे कर्तव्यनिष्ठा, सीतायाम् आदर्शस्त्रीत्वं, लवकुशादिषु क्षत्रियोचितवीरत्वं, वाल्मीकौ शान्तिसद्भावना च प्रस्फुटीभवति। विदूषकस्याभावात् नाटके गाम्भीर्यं परिलक्ष्यते। इत्थं भवभूतेः नाट्यपात्रेषु गम्भीरता, आदर्शवादिता, आत्मसंयमः, कर्त्तव्यनिष्ठभावना सर्वत्र दृश्यते।

### 5. मुद्राराक्षसम् (Mudrarakshasam)

विशाखदत्तनामा नाट्यकारः, यः कूटनीतिं, राजनीतिञ्चाश्रित्य मुद्राराक्षसं नामकं निर्मितवान्। विशाखदत्तस्य पितामहः श्रीवटेश्वरदत्तः, पिता चास्य भास्करदत्तः आसीत्। विशाखदत्तः कौटिल्यार्थशास्त्रस्य शुक्रनीतिशास्त्रस्य च प्रकाण्डविद्वान् आसीत्। ज्योतिःदर्शनन्यायशास्त्रेषु चास्य नैपुण्यं दृश्यते। विशाखदत्तस्य एतानि नाटकानि प्राप्यन्ते—1. मुद्राराक्षसम्, 2. देवीचन्द्रगुप्तम्, 3. अभिसारितवञ्चितकम्।

स्थितिकालः—वराहमिहिरात् पूर्वं पञ्चमशताब्द्यां विशाखदत्तस्य समयः स्वीकरणीयम् इति न्यायसङ्गतं प्रतिभाति। मुद्राराक्षसे चाणक्यराक्षसौ निजकूटनीत्या विलक्षणं राजनीतिकयुद्धं सन्दर्श्य दर्शकान् मोहयतः। अतः मुद्राराक्षसं संस्कृतनाटकेषु निःसन्देहमद्वितीयनाटकमिति निश्चप्रचम्। मुद्राराक्षसे विशाखदत्तस्य शैली पुरुषार्थपूर्णास्ति। मुख्यो रसः वीरः।

### 6. रत्नावली (Ratnavali)

अस्य ग्रन्थस्य लेखकः श्रीहर्षदेवः आसीत्। श्रीहर्षदेवस्य जन्म कुरुक्षेत्रसमीपे थाणेश्वरे 590 ईस्व्यां बभूव। श्रीहर्षदेवस्य पिता महाराजः प्रभाकरवर्द्धनः, माता च यशोमती आसीत्। सम्राट्श्रीहर्षः

उदारहृदयः, विद्वान्, कविश्चासीत्। श्रीहर्षदेवस्य प्रमुखतया तिस्रः रचनाः आसन्—1. रत्नावलीनाटिका, 2. प्रियदर्शकानाटिका, 3. नागानन्दनाटकञ्च। चतुर्णामङ्कानां निबद्धायाः रत्नावलीनाटिकायाः प्रधानो रसः शृङ्गारः, नायकः उदयनः, नायिका रत्नावली (सागरिका) चास्ति। अस्याः अमात्यः यौगन्धरायणः, राज्ञी वासवदत्ता, वसन्तकविदूषकः, बाभ्रव्यः, वसुभूतिः, कञ्चनमाला, सुसंगता, ऐन्द्रजालिकाश्च सन्ति। इयं नाटिका संस्कृतसाहित्ये महत्त्वपूर्णस्थानं प्राप्नोति।

**7. वेणीसंहारम् (Venisanharam)**

वेणीसंहारनाटकस्य रचयिता महाकविः भट्टनारायणः आसीत्। सः कान्यकुब्ज(कन्नौज)-देशोद्भवः शाण्डिल्यगोत्रीयो ब्राह्मणः आसीत्। अनेन अभिधानेन वेणीसंहारनाटकस्य प्रमुख-प्रयोजनस्य सफलतायाः निदर्शनमस्ति। अस्मिन् नाटके महाभारतस्य कथा मौलिकतया नूतनेन परिवेशेन सह प्रदर्शिता। कुटिलहृदयो दुर्योधनः पाण्डवानां साधुमनोवृत्तेः अनुचितलाभेन पाण्डवान् द्यूतक्रीडायां पराजित्य तेषां राज्यापहरणाय चेष्टते। दुर्योधनस्यैवाज्ञया दुःशासनः राज्यसभायां द्रौपद्याः वेणीं गृहीत्वा तां धर्षति। भीमस्य एषा भीषणप्रतिज्ञा सर्वत्र नाटके गुञ्जिता भवति। कौरवाणां विनाश एव नाटकस्यान्तः। नाटकान्ते भीमसेनः सवान् कौरवान् विनिहत्य दुःशासन-रुधिरेण स्वहस्ताभ्यां द्रौपद्याः मुक्त-कचान् संयतान् करोति वेणीं बध्नाति वा। करुणरसस्य सुन्दरं दृश्यं कविरत्र प्रकटयति। इत्थं नाटकस्य वीररसस्य इमे शृंगार-वीभत्स-करुण-रसाः अङ्गरसाः सन्ति, वीररसं ते सर्वे समुत्तेजयन्ति।

## (B) 3. साहित्यम्—वस्तुनिष्ठप्रश्नोत्तराणि

(1. गद्यम् Prose, 2. पद्यम् Poetry, 3. चम्पू Champu, 4. नाटकम् Drama, 5. छन्द-Metre, 6. अलंकारः-Rhetoric)

**(ङ) गद्यस्य परिचयात्मकानि वस्तुनिष्ठप्रश्नोत्तराणि—**

**1. गद्यम् (परिचयः-ग्रन्थाः-ग्रन्थकाराश्च)—**

1. प्रश्नः— गद्यः केन मुक्तो भवति?
   उत्तरम्— पद्यबन्धेन।
2. प्रश्नः—यत्र अक्षराणां निश्चितविधानं न भवति तत् किं कथ्यते?
   उत्तरम्— गद्यम्।
3. प्रश्नः— गेयताशून्यरचना भवति?
   उत्तरम्— गद्यम्।
4. प्रश्नः— येषु महाकाव्यस्य समस्त-लक्षणं न सङ्घटते तत् किं कथ्यते?
   उत्तरम्— गीतिकाव्यम्।
5. प्रश्नः— मुक्तक-काव्यं कम् आधृत्य प्रवर्त्तते?
   उत्तरम्— प्रसंगम्।
6. प्रश्नः— "वेतालपंचविंशतिः" कस्य कृतिरस्ति?
   उत्तरम्— शिवदासस्य।

7. प्रश्नः— दशकुमारचरितम् इत्यस्य लेखकः कः?
उत्तरम्— दण्डी।
8. प्रश्नः— गद्यकाव्यं वेमभूपालचरितम् इत्यस्य लेखकः कः?
उत्तरम्— वामनभट्टबाणः।
9. प्रश्नः— काव्यादर्श इत्यस्य लेखकः कः?
उत्तरम्— दण्डी।
10. प्रश्नः— वासवदत्ता अस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— सुबन्धुः।
11. प्रश्नः— तिलकमञ्जरी इत्यस्य लेखकः कः?
उत्तरम्— धनपालः।
12. प्रश्नः— गद्यचिन्तामणि इत्यस्य लेखकः कः?
उत्तरम्— वादीभसिंहः।
13. प्रश्नः— प्रबन्धचिन्तामणिः इत्यस्य लेखकः कः?
उत्तरम्— मेरुतुंगाचार्यः।
14. प्रश्नः— प्रबन्धकोशः अस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— राजशेखरः।
15. प्रश्नः— "शुकसप्ततिः" केन विरचिता?
उत्तरम्— चिन्तामणिभट्टेन।
16. प्रश्नः— बाणभट्टस्य समयः कः?
उत्तरम्— (700) सप्तम-शताब्दः।
17. प्रश्नः— बृहत्कथायाः रचनाकारः कः?
उत्तरम्— गुणाढ्यः।
18. प्रश्नः— मन्दारमञ्जरी इत्यस्य लेखकः कः?
उत्तरम्— महाकविविश्वेश्वरपाण्डेयः।
19. प्रश्नः— प्रबन्धमञ्जरी इत्यस्य लेखकः कः?
उत्तरम्— ऋषिकेशभट्टाचार्यः।
20. प्रश्नः— प्रबन्धचिन्तामणौ कियन्ति खण्डानि सन्ति?
उत्तरम्— (5) पञ्च।
21. प्रश्नः— राजगोपालस्य रचनाकार्ये स्तः?
उत्तरम्— 1. शैवालिनी, 2. कुमुदिनी।
22. प्रश्नः— कृष्णमाचार्यस्य लेखिका वर्तते?
उत्तरम्— मन्दारवती।
23. प्रश्नः— "आचार्यमेधाव्रतम्" इत्यस्य लेखकः कः?
उत्तरम्— कुमुदिनीचन्द्रः।

24. प्रश्नः— "अवदानशतकम्" केन कथासाहित्येन सम्बद्धम्?
उत्तरम्— बौद्धकथा-साहित्येन।
25. प्रश्नः— नृसिंहाचार्यस्य का रचना?
उत्तरम्— सौदामिनी।
26. प्रश्नः— भट्टमथुरानाथशास्त्रिणः रचनाकार्ये स्तः?
उत्तरम्— 1. भारती, 2. संस्कृतरत्नाकर।
27. प्रश्नः— "भोजप्रबन्धः" केन राज्ञा सम्बद्धोऽस्ति?
उत्तरम्— भोजराजेन।
28. प्रश्नः— हरिचरणभट्टाचार्यस्य का रचना?
उत्तरम्— कपालकुण्डला।
29. प्रश्नः— वामनकृष्णचित्तलस्य का रचना अस्ति?
उत्तरम्— लोकमान्यतिलकचरितम्।
30. प्रश्नः— "वेतालपञ्चविंशतिः" कासु कथासु आश्रिता?
उत्तरम्— लोककथासु।
31. प्रश्नः— प्रबन्धप्रकाशः इत्यस्य लेखकः कः?
उत्तरम्— वेङ्कटेशः।
32. प्रश्नः— पञ्चतन्त्रस्य लेखकः कः?
उत्तरम्— विष्णु शर्मा।
33. प्रश्नः— हितोपदेशं कः रचयामास?
उत्तरम्— नारायणपण्डितः।
34. प्रश्नः— "प्रबोधचिन्तामणिः" अस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— जयशेखरसूरिः।
35. प्रश्नः— राजतरंगिणी इत्यस्य लेखकः कः?
उत्तरम्— कल्हणः।
36. प्रश्नः— पञ्चतन्त्रे कति तन्त्राणि सन्ति?
उत्तरम्— (5) पञ्च।
37. प्रश्नः— हितोपदेशे कति परिच्छेदाः सन्ति?
उत्तरम्— (4) चत्वारः।
38. प्रश्नः— पञ्चतन्त्रे किं नाम प्रथमं तन्त्रम्?
उत्तरम्— मित्रभेदः।
39. प्रश्नः— पंचतन्त्रे किं नाम द्वितीयं तन्त्रम्?
उत्तरम्— मित्रसम्प्राप्तिः।
40. प्रश्नः— पंचतन्त्रे किं नाम तृतीयं तन्त्रम्?
उत्तरम्— काकोलूकीयम्।

41. प्रश्नः— पंचतन्त्रे किं नाम चतुर्थं तन्त्रम्?
उत्तरम्— लब्धप्रणाशम्।
42. प्रश्नः— पंचतन्त्रे किं नाम पंचमं तन्त्रम्?
उत्तरम्— अपरीक्षितकारकम्।
43. प्रश्नः— पञ्चतन्त्रे कस्य राज्ञः मूर्खपुत्रान् अपाठयत् विष्णुशर्मा?
उत्तरम्— अमरशक्तेः।
44. प्रश्नः— पञ्चतन्त्रस्य कस्मिन् तन्त्रे काक-कच्छप-मृग-मूषकाणां मैत्री वर्णिताऽस्ति?
उत्तरम्— मित्रसम्प्राप्तौ।
45. प्रश्नः— पञ्चतन्त्रे "वानर-मकर-कथा" कस्मिन् तन्त्रे आयाति?
उत्तरम्— लब्धप्रणाशे।
46. प्रश्नः— ब्राह्मणी-नकुलयोः कथा पंचतन्त्रस्य कस्मिन् तन्त्रे विद्यते?
उत्तरम्— अपरीक्षितकारके।
47. प्रश्नः— अपरीक्षितकारकस्य पंचतन्त्रस्य प्रथमकथा का अस्ति?
उत्तरम्— ब्राह्मणी-नकुलस्य कथा।
48. प्रश्नः— "अतिलोभो न कर्तव्यो लोभं नैव परित्यजेत्" एतत् सूक्तिसम्बन्धिनी का कथा पंचतन्त्रस्य?
उत्तरम्— लोभाविष्टचक्रधरकथा।
49. प्रश्नः— नारायणपण्डितस्य आश्रयदाता काव्यसमुत्प्रेरकश्च कः राजाविशेषः?
उत्तरम्— धवलचन्द्रः।
50. प्रश्नः— नारायणपण्डितः कस्य पुत्रान् अपाठयत्?
उत्तरम्— सुदर्शनस्य।
51. प्रश्नः— हितोपदेशस्य कति परिच्छेदाः सन्ति?
उत्तरम्— (04) चत्वारः।
52. प्रश्नः— हितोपदेशस्य प्रथमपरिच्छेदः कः?
उत्तरम्— मित्रलाभः।
53. प्रश्नः— हितोपदेशस्य द्वितीयपरिच्छेदः कः?
उत्तरम्— सुहृद्भेदः।
54. प्रश्नः— हितोपदेशस्य तृतीयपरिच्छेदः कः?
उत्तरम्— विग्रहः।
55. प्रश्नः— हितोपदेशस्य सन्धिसंज्ञकः परिच्छेदविशेषः कः?
उत्तरम्— चतुर्थः।
56. प्रश्नः— हितोपदेशे रविवाराय प्रयुक्तः शब्दविशेषः कः?
उत्तरम्— भट्टारकवारः।
57. प्रश्नः— शिवाजीप्रबन्धः इत्यस्य लेखकः कः?
उत्तरम्— वातनसोवानि।

58. प्रश्नः— बृहत्कथायाः कियन्तो वाचकाः सन्ति?
उत्तरम्— तिस्रः।
59. प्रश्नः— "बृहत्कथामञ्जरी" इत्यस्य लेखकः कः?
उत्तरम्— क्षेमेन्द्रः।
60. प्रश्नः— "बृहत्कथामञ्जर्यां" कियन्ति लम्बकानि?
उत्तरम्— (18) अष्टादश।
61. प्रश्नः— कथासरित्सागरस्य लेखकः कः?
उत्तरम्— सोमदेवः।
62. प्रश्नः— कथा-सरित्सागरे कति परिच्छेदाः सन्ति?
उत्तरम्— (18) अष्टादश।
63. प्रश्नः— हितोपदेशस्य कथा किमाधारिता?
उत्तरम्— पंचतन्त्रम्।
64. प्रश्नः— "वेतालपञ्चविंशतेः" रचनाकारः कः?
उत्तरम्— जम्भलदत्तः।
65. प्रश्नः— शैलताताचार्यस्य का रचना ?
उत्तरम्— दुर्गेशनन्दिनी।
66. प्रश्नः— "सिंहासनबत्तीसी" केन राज्ञा सम्बन्धिता?
उत्तरम्— विक्रमादित्येन।
67. प्रश्नः— वेतालपंचविंशतिः इत्यस्य मुख्यनायकः कः?
उत्तरम्— त्रिविक्रमसेनः।
68. प्रश्नः— "कथारत्नाकरस्य" लेखकः कः?
उत्तरम्— जैन-हैमविजयमणिमहोदयः।
69. प्रश्नः— "प्रबन्धचिन्तामणेः" लेखकः कः?
उत्तरम्— मेरुतुंगाचार्यः।
70. प्रश्नः— आचार्यश्रीशैलस्य का रचना?
उत्तरम्— मेनका।
71. प्रश्नः— "प्रबन्धकोशस्य" लेखकः कः?
उत्तरम्— राजशेखरः।
72. प्रश्नः— पण्डित-क्षमारावस्य कानि रचनाकार्याणि?
उत्तरम्— 1. कथापत्रकम्, 2. ग्रामज्योतिः, 3. कथामुक्तावली।
73. प्रश्नः— "पुरुषपरीक्षा" इत्यस्याः रचनाकारः कः?
उत्तरम्— मैथिल-कविकोकिलो विद्यापतिः।
74. प्रश्नः— वेमभूपालचरितम् कस्य कृतिरस्ति?
उत्तरम्— वामनभट्टबाणस्य।

41. प्रश्नः— पंचतन्त्रे किं नाम चतुर्थं तन्त्रम्?
उत्तरम्— लब्धप्रणाशम्।
42. प्रश्नः— पंचतन्त्रे किं नाम पंचमं तन्त्रम्?
उत्तरम्— अपरीक्षितकारकम्।
43. प्रश्नः— पञ्चतन्त्रे कस्य राज्ञः मूर्खपुत्रान् अपाठयत् विष्णुशर्मा?
उत्तरम्— अमरशक्तेः।
44. प्रश्नः— पञ्चतन्त्रस्य कस्मिन् तन्त्रे काक-कच्छप-मृग-मूषकाणां मैत्री वर्णिताऽस्ति?
उत्तरम्— मित्रसम्प्राप्तौ।
45. प्रश्नः— पञ्चतन्त्रे "वानर-मकर-कथा" कस्मिन् तन्त्रे आयाति?
उत्तरम्— लब्धप्रणाशे।
46. प्रश्नः— ब्राह्मणी-नकुलयोः कथा पंचतन्त्रस्य कस्मिन् तन्त्रे विद्यते?
उत्तरम्— अपरीक्षितकारके।
47. प्रश्नः— अपरीक्षितकारकस्य पंचतन्त्रस्य प्रथमकथा का अस्ति?
उत्तरम्— ब्राह्मणी-नकुलस्य कथा।
48. प्रश्नः— "अतिलोभो न कर्तव्यो लोभं नैव परित्यजेत्" एतत् सूक्तिसम्बन्धिनी का कथा पंचतन्त्रस्य?
उत्तरम्— लोभाविष्टचक्रधरकथा।
49. प्रश्नः— नारायणपण्डितस्य आश्रयदाता काव्यसमुत्प्रेरकश्च कः राजाविशेषः?
उत्तरम्— धवलचन्द्रः।
50. प्रश्नः— नारायणपण्डितः कस्य पुत्रान् अपाठयत्?
उत्तरम्— सुदर्शनस्य।
51. प्रश्नः— हितोपदेशस्य कति परिच्छेदाः सन्ति?
उत्तरम्— (04) चत्वारः।
52. प्रश्नः— हितोपदेशस्य प्रथमपरिच्छेदः कः?
उत्तरम्— मित्रलाभः।
53. प्रश्नः— हितोपदेशस्य द्वितीयपरिच्छेदः कः?
उत्तरम्— सुहृद्भेदः।
54. प्रश्नः— हितोपदेशस्य तृतीयपरिच्छेदः कः?
उत्तरम्— विग्रहः।
55. प्रश्नः— हितोपदेशस्य सन्धिसंज्ञकः परिच्छेदविशेषः कः?
उत्तरम्— चतुर्थः।
56. प्रश्नः— हितोपदेशे रविवाराय प्रयुक्तः शब्दविशेषः कः?
उत्तरम्— भट्टारकवारः।
57. प्रश्नः— शिवाजीप्रबन्धः इत्यस्य लेखकः कः?
उत्तरम्— वातनसोवानि।

58. प्रश्नः— बृहत्कथायाः कियन्तो वाचकाः सन्ति?
उत्तरम्— तिस्रः।
59. प्रश्नः— "बृहत्कथामञ्जरी" इत्यस्य लेखकः कः?
उत्तरम्— क्षेमेन्द्रः।
60. प्रश्नः— "बृहत्कथामञ्जर्यां" कियन्ति लम्बकानि?
उत्तरम्— (18) अष्टादश।
61. प्रश्नः— कथासरित्सागरस्य लेखकः कः?
उत्तरम्— सोमदेवः।
62. प्रश्नः— कथा-सरित्सागरे कति परिच्छेदाः सन्ति?
उत्तरम्— (18) अष्टादश।
63. प्रश्नः— हितोपदेशस्य कथा किमाधारिता?
उत्तरम्— पंचतन्त्रम्।
64. प्रश्नः— "वेतालपञ्चविंशतेः" रचनाकारः कः?
उत्तरम्— जम्भलदत्तः।
65. प्रश्नः— शैलताताचार्यस्य का रचना ?
उत्तरम्— दुर्गेशनन्दिनी।
66. प्रश्नः— "सिंहासनबत्तीसी" केन राज्ञा सम्बन्धिता?
उत्तरम्— विक्रमादित्येन।
67. प्रश्नः— वेतालपंचविंशतिः इत्यस्य मुख्यनायकः कः?
उत्तरम्— त्रिविक्रमसेनः।
68. प्रश्नः— "कथारत्नाकरस्य" लेखकः कः?
उत्तरम्— जैन-हैमविजयमणिमहोदयः।
69. प्रश्नः— "प्रबन्धचिन्तामणेः" लेखकः कः?
उत्तरम्— मेरुतुंगाचार्यः।
70. प्रश्नः— आचार्यश्रीशैलस्य का रचना?
उत्तरम्— मेनका।
71. प्रश्नः— "प्रबन्धकोशस्य" लेखकः कः?
उत्तरम्— राजशेखरः।
72. प्रश्नः— पण्डित-क्षमारावस्य कानि रचनाकार्याणि?
उत्तरम्— 1. कथापत्रकम्, 2. ग्रामज्योतिः, 3. कथामुक्तावली।
73. प्रश्नः— "पुरुषपरीक्षा" इत्यस्याः रचनाकारः कः?
उत्तरम्— मैथिल-कविकोकिलो विद्यापतिः।
74. प्रश्नः— वेमभूपालचरितम् कस्य कृतिरस्ति?
उत्तरम्— वामनभट्टबाणस्य।

75. प्रश्नः— "मदनपराजय:" इत्यस्य रचनाकारः कः?
उत्तरम्— नागदेवः।
76. प्रश्नः— गद्यरामायणम् कस्य कृतिरस्ति?
उत्तरम्— वरददेशिकस्य।
77. प्रश्नः— "विषमवाणलीला" अस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— आनन्दवर्धनः।
78. प्रश्नः— "अवन्तिसुन्दरी" अस्य ग्रन्थस्य रचनाकारः कः?
उत्तरम्— दण्डी।
79. प्रश्नः— गद्यं कतिविधम्, किञ्च तत्?
उत्तरम्— द्विविधम्, 1. कथा, 2. आख्यायिका।
80. प्रश्नः— "गद्यं कवीनां निकषं वदन्ति" इयं सूक्तिः केन काव्येन सम्बद्धा?
उत्तरम्— गद्यकाव्येन।
81. प्रश्नः— बाणभट्ट-विरचिताः कियन्तो ग्रन्थाः?
उत्तरम्— (3) त्रयः।
82. प्रश्नः— बाणभट्टस्य कौ गद्यग्रन्थौ स्तः?
उत्तरम्— "हर्षचरितम्-(आख्यायिका)" "कादम्बरी(कथा) च"।
83. प्रश्नः— हर्षचरितस्य नायकः कः?
उत्तरम्— राजा हर्षवर्द्धनः।
84. प्रश्नः— "आख्यायिका" इति कस्य प्रभेदोऽस्ति?
उत्तरम्— गद्यस्य।
85. प्रश्नः— गद्यसाहित्ये पदलालित्यं कस्य प्रसिद्धं नाम?
उत्तरम्— दण्डिनः।
86. प्रश्नः— दण्डीविरचितानि काव्यानि कानि?
उत्तरम्— काव्यादर्शः, दशकुमारचरितम्, अवन्तिसुन्दरीकथा।
87. प्रश्नः— गद्यकाव्यप्रकारेषु अन्यतमः प्रकारः कः?
उत्तरम्— चूर्णकम्।
88. प्रश्नः— गद्यकाव्ये कानि काव्यानि आगच्छन्ति?
उत्तरम्— 1. कथा, 2. आख्यायिका, 3. चम्पू।
89. प्रश्नः— बाणभट्टस्य समयः?
उत्तरम्— सप्तमशताब्दः।
90. प्रश्नः— बाणभट्टस्य कौ द्वौ भ्रातरौ आस्ताम्?
उत्तरम्— 1. चित्रसेनः, 2. मित्रसेनः
91. प्रश्नः— राज्ञः शूद्रकस्य राजधानी कुत्र असीत्?
उत्तरम्— विदिशा।

92. प्रश्नः— दण्डिनः कियन्तो ग्रन्थाः?
उत्तरम्— (3) त्रयः।
93. प्रश्नः— गद्यकाव्यम् अवन्तिसुन्दरीकथा कस्य कृतिः अस्ति?
उत्तरम्— दण्डिनः।
94. प्रश्नः— छन्दोविचितिकाव्यमिदं कः रचयामास?
उत्तरम्— दण्डी।
95. प्रश्नः— भारवेः प्रपौत्रः आसीत्?
उत्तरम्— दण्डी।
96. प्रश्नः— दण्डिनः किं प्रसिद्धमस्ति?
उत्तरम्— पदलालित्यम्।
97. प्रश्नः— सोमदेवस्य कृतिः कास्ति?
उत्तरम्— कथासरित्सागरः।
98. प्रश्नः— जल्हणः अस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— सोमपालविजयः।
99. प्रश्नः— "शिवराजविजयम्" केन रचितम्?
उत्तरम्— अम्बिकादत्तेन।
100. प्रश्नः— बाणस्य कानि रचनाकार्याणि सन्ति?
उत्तरम्—1. कादम्बरी, 2. हर्षचरितम्, 3. पार्वतीपरिणयः, 4. चण्डीशतकम्, 5. मुकुट-ताडितकम्।
101. प्रश्नः— कादम्बरी इत्यस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— बाणभट्टः।
102. प्रश्नः— हर्षचरितम्" कस्य कृतिरस्ति?
उत्तरम्— बाणभट्टस्य।
103. प्रश्नः— भोजराजस्य कृतिः कास्ति?
उत्तरम्— सरस्वतीकण्ठाभरणम्।
104. प्रश्नः— आचार्यविश्वनाथस्यानुसारं गद्यकाव्यस्य कति भेदाः?
उत्तरम्— (4) चत्वारो भेदाः।
105. प्रश्नः— आचार्यविश्वनाथस्यानुसारं समासरहितगद्यकाव्यः कः?
उत्तरम्— मुक्तकः।
106. प्रश्नः— लघुतर-समासयुक्तं गद्यकाव्यं विश्वनाथः किं कथयति?
उत्तरम्— चूर्णकः।

(ढ) कादम्बर्याः वस्तुनिष्ठप्रश्नोत्तराणि—

1. प्रश्नः— बाणस्य का गद्यशैली?
उत्तरम्— पाञ्चाली।
2. प्रश्नः— बाणस्य पितुः नाम किमासीत्?
उत्तरम्— चित्रभानुः।

3. प्रश्नः— बाणस्य पुत्रः कः आसीत्?
उत्तरम्— भूषणभट्टः।
4. प्रश्नः— कस्मिन् गोत्रे बाणस्य जन्म बभूव?
उत्तरम्— वत्सगोत्रे।
5. प्रश्नः— बाणविरचितं काव्यमस्ति?
उत्तरम्— कादम्बरी।
6. प्रश्नः— बाणस्य वासः आसीत्?
उत्तरम्— शोणनदीतटे प्रीतिकूटग्रामे।
7. प्रश्नः— राज्यवर्धनः कस्य पुत्रः आसीत्?
उत्तरम्— बाणभट्टस्य।
8. प्रश्नः— कादम्बरी कति भागेषु विभक्ता?
उत्तरम्— चतुर्षु भागेषु।
9. प्रश्नः— शुकनासोक्तदिशा बुद्धिः कदा कालुष्यमुपयाति?
उत्तरम्— यौवनारम्भे।
10. प्रश्नः— "बाणः" इति कस्य प्रभेदोऽस्ति?
उत्तरम्— गद्यस्य।
11. प्रश्नः— "लब्धापि दुःखेन परिपाल्यते" इति कस्य कथनम्?
उत्तरम्— शुकनाशस्य।
12. प्रश्नः— कादम्बरी ग्रन्थे कस्या कथा वर्णिताऽस्ति?
उत्तरम्— चन्द्रापीडस्य।
13. प्रश्नः— कादम्बरी इति ग्रन्थे कस्य जन्मत्रयस्य वर्णनमस्ति?
उत्तरम्— चन्द्रापीडस्य।
14. प्रश्नः— "गंन्धर्वनगरलेखेव पश्यत एव नश्यति" कुत्रेदं वाक्यम्?
उत्तरम्— कादम्बर्याम्।
15. प्रश्नः— चन्द्रापीडः पूर्वजन्मे कः आसीत्?
उत्तरम्— चन्द्रमाः।
16. प्रश्नः— तारापीडस्य पुत्रः कः आसीत्?
उत्तरम्— चन्द्रापीडः।
17. प्रश्नः— वैशम्पायनः कस्य पुत्रः आसीत्?
उत्तरम्— शुकनासस्य।
18. प्रश्नः— पुण्डरीकः कस्यामनुरक्तः आसीत्?
उत्तरम्— महाश्वेतायाम्।
19. प्रश्नः— तारापीडस्य मन्त्री कः आसीत्?
उत्तरम्— शुकनासः।

20. प्रश्नः— चन्द्रापीडस्य अनुरागः कस्यामासीत्?
उत्तरम्— कादम्बर्य्याम्।
21. प्रश्नः— साम्राज्ञी विलासवती कस्य माता आसीत्?
उत्तरम्— चन्द्रापीडस्य।
22. प्रश्नः— पुण्डरीकस्य पिता कः अस्ति?
उत्तरम्— श्वेतकेतुः।
23. प्रश्नः— पुण्डरीकस्य माता का आसीत्?
उत्तरम्— लक्ष्मी।
24. प्रश्नः— पुण्डरीकस्य अनन्यमित्रम् आसीत्?
उत्तरम्— कपिञ्जलः।
25. प्रश्नः— "पत्रलेखा" कस्य पुत्री अस्ति?
उत्तरम्— कुलूताधिपतेः।
26. प्रश्नः— चन्द्रापीडस्य सेविका दूती वा का अस्ति?
उत्तरम्— पत्रलेखा।
27. प्रश्नः— किन्नरयुगलमनुसरन् चन्द्रापीडः कुत्र अगच्छत्?
उत्तरम्— हेमकूटम्।
28. प्रश्नः— महाश्वेतायाः आश्रमः कुत्र आसीत्?
उत्तरम्— अच्छोदसरोवरस्य पार्श्वे।
29. प्रश्नः— महाश्वेता कस्य पुत्री आसीत्?
उत्तरम्— हंसस्य।
30. प्रश्नः— गन्धर्वराजहंसस्य पत्नी का आसीत्?
उत्तरम्— गौरी।
31. प्रश्नः— महाश्वेतायाः दासी अस्ति?
उत्तरम्— तरलिका।
32. प्रश्नः— "कादम्बरी" कस्य पुत्री अस्ति?
उत्तरम्— गन्दर्भराजचित्ररथस्य।
33. प्रश्नः— कादम्बर्याः माता का अस्ति?
उत्तरम्— मदिरा।
34. प्रश्नः— "कादम्बरी" शब्दस्य कोऽर्थः?
उत्तरम्— मदिरा।
35. प्रश्नः— कादम्बर्याः वीणावाहकः कः?
उत्तरम्— केयूरकः।
36. प्रश्नः— कथाकादम्बर्याः उत्तरार्द्धभागः केन सम्पूरितः?
उत्तरम्— पुलिन्दभट्टेन।

37. प्रश्नः— तारापीडस्य राजधानी कुत्र आसीत्?
उत्तरम्— उज्जयिनी।
38. प्रश्नः— "प्रायेण हि पक्षिणः पशवश्च भयाहारः" इति कस्योक्तिः?
उत्तरम्— शूद्रकस्य।
39. प्रश्नः— "नहि करतलस्पर्शं क्लेशितानाम्" इयं सूक्तिः कस्यै विद्यते?
उत्तरम्— चाण्डाल-कन्यकायै।
40. प्रश्नः— कादम्बर्याः सहचरी का अस्ति?
उत्तरम्— मदलेखा।
42. प्रश्नः— वैशम्पायन-शुकं राजसभायां का आनयति?
उत्तरम्— चाण्डालकन्या।
43. प्रश्नः— "लब्धापि दुःखेन परिपाल्यते" कस्य कथनमिदम्?
उत्तरम्— शुकनासस्य।
44. प्रश्नः— बाणभट्टः कादम्बरी-ग्रन्थस्य अख्यानं कस्य मुखात् वाचयति?
उत्तरम्— जाबालिमुखात्।
45. प्रश्नः— कादम्बरी ग्रन्थस्य मुख्य-रसः कः?
उत्तरम्— शृंगार-रसः।
46. प्रश्नः— कादम्बर्याः को प्रधाननायकः?
उत्तरम्— चन्द्रापीड़ः।
47. प्रश्नः— "कादम्बरी" ग्रन्थस्य का नायिका?
उत्तरम्— कादम्बरी।
48. प्रश्नः— बाणस्य पितुर्नाम किम्?
उत्तरम्— चित्रभानुः।
49. प्रश्नः— बाणभट्टस्य मातुः नाम किम्?
उत्तरम्— राजदेवी।
50. प्रश्नः— बाणभट्टस्य गद्य-रीति का?
उत्तरम्— पाञ्चाली।
51. प्रश्नः— "मनस्तु साधुध्वनिभिः पदे पदे, हरन्ति सन्तो मणिनूपुरा इव" इयं सूक्तिः कस्य ग्रन्थस्य विद्यते?
उत्तरम्— कादम्बरीग्रन्थस्य।
52. प्रश्नः— "कादम्बरी" इति ग्रन्थे कस्याः रीत्याः प्रयोगः अभूत्?
उत्तरम्— पञ्चाली रीत्याः।
53. प्रश्नः— "लब्धापि दुःखेन परिपाल्यते" इति कस्य कथनम्?
उत्तरम्— शुकनाशस्य।
54. प्रश्नः— राज्यरूप-विषेणोन्मत्त-मनुष्यस्य स्थितिः का भवति?
उत्तरम्— चेतनाशून्यता।

55. प्रश्नः— चन्द्रापीडस्य राज्याभिषेकं कर्तुमिच्छा कस्याभूत्?
उत्तरम्— तारापीड़स्य।

56. प्रश्नः— अभिषेकस्य सामग्रीं के आनीतवन्तः?
उत्तरम्— द्वारपालाः।

57. प्रश्नः— शुकनासः लक्ष्मीं प्रति किं कथितवान्?
उत्तरम्— अनार्यामिति।

58. प्रश्नः— "अहो विधातुरस्थाने सौन्दर्यनिष्पादनप्रयत्नः" अस्याः सूक्तेः वक्ता कः?
उत्तरम्— शूद्रकः।

59. प्रश्नः— "किं वा प्रलपितेन बहुना" अस्याः सूक्तेः वक्ता कः?
उत्तरम्— शुकः।

60. प्रश्नः— "अपनीताभरणश्च दिवसकर इव" अस्यां सूक्तौ कस्य वर्णनमस्ति?
उत्तरम्— राज्ञः शूद्रकस्य व्यायामशालायाः।

61. प्रश्नः— राज्याभिषेकस्य समये कस्याः आवश्यकता भवति?
उत्तरम्— उपदेशस्य।

62. प्रश्नः— धनं कं उन्मत्तं करोति?
उत्तरम्— अज्ञानि-जनम्।

63. प्रश्नः— "करिणीभिरिव वनकरी प्रवृत्तः" सूक्तौ कस्य वर्णनमस्ति?
उत्तरम्— स्नानशालायाः।

64. प्रश्नः— समस्तमलं प्रच्छालने (जलं विना स्नाने) कः समर्थः ?
उत्तरम्— गुरूपदेशः।

65. प्रश्नः— शूद्रकः पूर्वजन्मे कः आसीत्?
उत्तरम्— चन्द्रापीड़ः।

66. प्रश्नः— कादम्बर्याः कथायाः प्रारम्भः केन भवति?
उत्तरम्— शूद्रकेन।

67. प्रश्नः— कादम्बर्याः कथायाः अन्तः केन भवति?
उत्तरम्— चन्द्रापीड़-कादम्बर्योः मेलनेन।

68. प्रश्नः— चन्द्रापीड़स्य मातुः नाम किम्?
उत्तरम्— विलासवती।

69. प्रश्नः— कामपीड़ायां कः दिवंगतः?
उत्तरम्— पुण्डरीकः।

70. प्रश्नः— महाश्वेता का आसीत्?
उत्तरम्— कादम्बर्याः सहचरी।

71. प्रश्नः— चन्द्रापीड़ं दृष्ट्वा कामासक्तः कः अभूत्?
उत्तरम्— कादम्बरी।

72. प्रश्नः— पितुः आह्वाने चन्द्रापीड़ः कुत्र गतः?
उत्तरम्— उज्जयिनी-नगरे।
73. प्रश्नः— महाश्वेतायाः प्रेम केन सह अभूत्?
उत्तरम्— पुण्डरीकेण।
74. प्रश्नः— शाल्मली-वृक्षस्य वर्णनं कस्मिन् गद्य-काव्ये अस्ति?
उत्तरम्— कादम्बरी-ग्रन्थे।

(ण) हर्षचरितस्य वस्तुनिष्ठप्रश्नोत्तराणि—

81. प्रश्नः— हर्षचरिते कियन्त उच्छ्वासाः?
उत्तरम्— (8) अष्टौ।
82. प्रश्नः— हर्षचरिते "स्थाणीश्वरम्" कस्य राजधानी अस्ति?
उत्तरम्— हर्षवर्धनस्य।
83. प्रश्नः— हर्षवर्धनस्य पिता कः आसीत्?
उत्तरम्— प्रभाकरवर्धनः।
84. प्रश्नः— हर्षवर्धनस्य भ्राता कः?
उत्तरम्— राज्यवर्धनः।
85. प्रश्नः— प्रभाकरवर्धनस्य महिषी का आसीत्?
उत्तरम्— प्रभाकरवर्धनस्य महिषी यशोवती आसीत्।
86. प्रश्नः— हर्षचरिते हर्षस्य भगिनी का अस्ति?
उत्तरम्— राज्यश्रीः।
87. प्रश्नः— हर्षचरितस्य प्रारम्भिकेषु त्रिषु उच्छ्वासेषु कस्य कथा वर्णिताऽस्ति?
उत्तरम्— बाणभट्टस्य।
88. प्रश्नः— हर्षचरितस्य प्रथमोच्छ्वासे समुपवर्णितः "दधीचः" कस्य पुत्रः?
उत्तरम्— च्यवनस्य।
89. प्रश्नः— शर्यातिपुत्री सुकन्या कस्य माता अस्ति?
उत्तरम्— दधीचस्य।
90. प्रश्नः— हर्षचरिते समुल्लिखितस्य भगवतः च्यवन-ऋषेः आश्रमः कस्याः नद्याः तटे आसीत्?
उत्तरम्— शोणनद्याः तटे।
91. प्रश्नः— हर्षचरिते दधीचस्य दूती का अस्ति?
उत्तरम्— मालती।
92. प्रश्नः— हर्षचरिते भगवत्याः सरस्वत्याः पतिः कः?
उत्तरम्— दधीचः।
93. प्रश्नः— सरस्वती-दधीचयोः पुत्रः सारस्वतः कया लालितः पालितश्च?
उत्तरम्— अक्षमालया।
94. प्रश्नः— "अक्षमाला" सारस्वतस्य का आसीत्?
उत्तरम्— पितृव्यजाया।

95. प्रश्नः—अक्षमालायाः पुत्रः कः?
उत्तरम्— वत्सः।
96. प्रश्नः— द्वितीयोच्छ्वासे हर्षचरिते वर्णितः कृष्णः कस्य पितृव्यपुत्रः आसीत्?
उत्तरम्— हर्षस्य।
97. प्रश्नः— भैरवाचार्यस्य वर्णनं कुत्र मिलति?
उत्तरम्— हर्षचरिते।
98. प्रश्नः— हर्षस्य माता अस्ति?
उत्तरम्— यशोवती।
99. प्रश्नः— हर्षस्य सेनापतिः कः?
उत्तरम्— सिंहनादः।
100. प्रश्नः—ऐतिहासिकैः हर्षस्य जन्मतिथिः कदा स्वीक्रियते?
उत्तरम्—(590 ई.) नवत्यधिकपञ्चशताब्द्याम्।

(प) दशकुमारचरितस्य वस्तुनिष्ठप्रश्नोत्तराणि—

101. प्रश्नः— "अपहारवर्मा" कस्मिन् गद्यकाव्ये दरीदृश्यते?
उत्तरम्— दशकुमारचरिते।
102. प्रश्नः— दशकुमारचरितस्य पात्रविशेषः कः?
उत्तरम्— राजवाहनः।
103. प्रश्नः— "मित्रगुप्तः" कस्मिन् गद्यकाव्ये मिलति?
उत्तरम्— दशकुमारचरिते।
104. प्रश्नः— "विश्रुतचरितम्" कस्य वैशिष्ट्यमस्ति?
उत्तरम्— दशकुमारचरितस्य।
105. प्रश्नः— दशकुमारचरिते कियन्तः पीठिकाः सन्ति?
उत्तरम्— तिस्रः।
106. प्रश्नः— दशकुमारचरिते राजवाहनस्य पिता कः?
उत्तरम्— राजहंसः।
107. प्रश्नः— दशकुमारचरिते कियतां कुमाराणां चरित्रं वर्णितमस्ति?
उत्तरम्— दशकुमाराणाम्।
108. प्रश्नः—अवन्तिसुन्दरी-राजवाहनयोः विवाहः दशकुमारचरितस्य कस्मिन् उच्छ्वासे प्राप्यते?
उत्तरम्— पंचमे उच्छ्वासे।
109. प्रश्नः— दशकुमारचरिते कति उच्छ्वासाः सन्ति?
उत्तरम्— (8) अष्टौ।

(फ) वासवदत्तायाः वस्तुनिष्ठप्रश्नोत्तराणि—

110. प्रश्नः— सुबन्धोः का रचनास्ति?
उत्तरम्— वासवदत्ता।

111. प्रश्नः— राज्ञः चिन्तामणेः पुत्रः कः आसीत्?
उत्तरम्— राजवाहनः।

112. प्रश्नः— नायकस्य कन्दर्पकेतोः नायिका का?
उत्तरम्— वासवदत्ता।

113. प्रश्नः— कन्दर्पकेतोः सखा आसीत्?
उत्तरम्— मकरन्दः।

114. प्रश्नः— वासवदत्तायाः पितुः नाम किमासीत्?
उत्तरम्— शृंगारशेखरः।

115. प्रश्नः— "प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधिर्निबन्धम्" उक्तिरियं कस्य गद्यकाव्यस्य वैशिष्ट्यमस्ति?
उत्तरम्— सुबन्धुकृतवासवदत्तागद्यकाव्यस्य।

116. प्रश्नः— राज्यश्री कस्य पत्नी अस्ति?
उत्तरम्— ग्रहवर्मणः।

117. प्रश्नः— कस्याः नायिकायाः नाम कस्यचित् "गद्यकाव्यस्य" नाम अस्ति?
उत्तरम्— वासवदत्तायाः।

118. प्रश्नः— दूतवाक्यम् इत्यस्य नायकः कः?
उत्तरम्— कृष्णः।

(ब) अन्य-गद्य-काव्यस्य वस्तुनिष्ठप्रश्नोत्तराणि—

119. प्रश्नः— कथासरित्सागरे कति लम्बकाः सन्ति?
उत्तरम्— (18) अष्टादश।

120. प्रश्नः— कथासरित्सागरे कति श्लोकाः सन्ति?
उत्तरम्— 24, 000 श्लोकाः।

121. प्रश्नः— शुकसप्ततिग्रन्थे कति कथाः सन्ति?
उत्तरम्—(70) सप्तति कथाः।

122. प्रश्नः— पं. विष्णुशर्मलिखितपञ्चतन्त्रे कानि तन्त्रानि सन्ति?
उत्तरम्— (पञ्च) 1. मित्रलाभः, 2. मित्रभेदः, 3. सन्धिविग्रहः, 4. लब्ध-प्रणाशः, 5. अपरीक्षितकारकः।

123. प्रश्नः— अम्बिकादत्तव्यासस्य प्रसिद्धमपरं नाम किम्?
उत्तरम्— अभिनवबाणः।

124. प्रश्नः— शिवराजविजयः कीदृशः ग्रन्थः?
उत्तरम्— ऐतिहासिकोपन्यासः।

125. प्रश्नः— आधुनिकः बाणः कोऽस्ति?
उत्तरम्— अम्बिकादत्तव्यासः।

126. प्रश्नः— शिवराजविजये कति निःश्वासाः सन्ति?
उत्तरम्— द्वादश(12)।

127. प्रश्नः— शिवराजविजयस्य नायकः कः?
उत्तरम्— शिववीरः।
128. प्रश्नः— राजहंसस्य भार्या आसीत्?
उत्तरम्— वसुमती।

## (भ) पद्य-काव्यस्य परिचयात्मकवस्तुनिष्ठप्रश्नोत्तराणि—

## 2. पद्यम्-Poetry (परिचयः-ग्रन्थाः-ग्रन्थकाराश्च)

1. प्रश्नः— गङ्गालहरी" केन रचिता?
उत्तरम्— पण्डितराजजगन्नाथेन।
2. प्रश्नः— हर्षचरितमञ्जरी ग्रन्थस्य लेखकः कः?
उत्तरम्— श्रीगोविन्दचन्द्रः।
3. प्रश्नः— "सूर्यशतकम्" केन रचितम्?
उत्तरम्— मयूरभट्टेन।
4. प्रश्नः— "जानकीहरणम्" अस्य काव्यस्य कविरस्ति—
उत्तरम्— कुमारदासः।
5. प्रश्नः— "हरविजयकाव्यम्" केन रचितम्?
उत्तरम्— रत्नाकरेण।
6. प्रश्नः— "शृङ्गारतिलकम्" कस्य कवेः रचनास्ति?
उत्तरम्— कालिदासस्य।
7. प्रश्नः— केन विरचितमिदं "चौरपञ्चाशिका" काव्यम्?
उत्तरम्— बिल्हणेन।
8. प्रश्नः— "दशावतारचरितम्" इदं महाकाव्यं कस्य कवेरस्ति?
उत्तरम्— क्षेमेन्द्रमहाकवेः।
9. प्रश्नः— वेतालपंचविंशतिः कस्य कृतिरस्ति?
उत्तरम्— जैमलदत्तस्य।
10. प्रश्नः— सुभद्राधनञ्जयम्" इत्यस्य कः रचनाकारः?
उत्तरम्— रूपगोस्वामी।
11. प्रश्नः— विद्धशालभञ्जिका" केन रचिता?
उत्तरम्— राजशेखरेण।
12. प्रश्नः— विदग्धमाधवम्" इत्यस्य रचनाकारः कः?
उत्तरम्— कुलशेखरवर्मन्।
13. प्रश्नः— कर्णसुन्दरी इत्यस्य रचनाकारः कः?
उत्तरम्— बिल्हणः।
14. प्रश्नः— "जाम्बवतीविजयम्" केन विरचितमस्ति?
उत्तरम्— पाणिनिना।

15. प्रश्नः— स्वप्नवासवदत्तम् कस्य रचना वर्तते?
उत्तरम्— भासस्य।
16. प्रश्नः— बोधचन्द्रोदयम्" केन रचितः?
उत्तरम्— कृष्णमिश्रेण।
17. प्रश्नः— कालिदासविरचितानि कति महाकाव्यानि?
उत्तरम्— त्रीणि 1. रघुवंशम्, 2. कुमारसम्भवम्, 3. बुद्धचरितम्।
18. प्रश्नः— कालिदासविरचिते खण्डकाव्ये स्तः—
उत्तरम्— द्वे—मेघदूतम्, ऋतुसंहारम्।
19. प्रश्नः— किरातार्जुनीयम् केन रचितम्?
उत्तरम्— भारविना।
20. प्रश्नः— "नैषधचरितम्" कस्य कृतिरस्ति?
उत्तरम्— श्रीहर्षस्य।
21. प्रश्नः— "रावणवधम् अथवा भट्टिकाव्यम्" केन विरचितम्?
उत्तरम्— भट्टिना।
22. प्रश्नः— "जानकीहरणम्" महाकाव्यं केन विरचितम्?
उत्तरम्— कुमारदासेन।
23. प्रश्नः— "हरविजयम्" महाकाव्यस्य कः रचनाकारः?
उत्तरम्— रत्नाकरः।
24. प्रश्नः— जातकमाला कस्य रचना अस्ति?
उत्तरम्— आर्यशूरस्य।
25. प्रश्नः— प्रवन्धचिन्तामणिः कस्य कृतिरस्ति?
उत्तरम्— मेरुतुंगाचार्यस्य।
26. प्रश्नः— प्रबन्धकोशस्य रचनाकारः कः?
उत्तरम्— राजशेखरः।
27. प्रश्नः— नेमिदूतस्य रचनाकारः कः?
उत्तरम्— विक्रमकविः।
28. प्रश्नः— राजशेखरस्य कृतिः कास्ति?
उत्तरम्— काव्यमीमांसा।
29. प्रश्नः— अमरूकशतकस्य लेखकः कः?
उत्तरम्— अमरूकः।
30. प्रश्नः— महाभारतस्य प्रणेता कः?
उत्तरम्— कृष्णद्वैपायनः।
31. प्रश्नः— "गाथासप्तशती" कस्य कृतिरस्ति?
उत्तरम्-- हालकवेः।

32. प्रश्नः— "आर्यासप्तशती" कस्य कृतिरस्ति?
उत्तरम्— गोवर्धनाचार्यस्य।
33. प्रश्नः— गीतगोविन्दस्य लेखकः कः?
उत्तरम्— जयदेवः।
34. प्रश्नः— भर्तृहरेः रचनाः काः?
उत्तरम्— तिस्रः–1. नीतिशतकम्, 2. वैराग्यशतकम्, 3. शृंगारशतकम्।
35. प्रश्नः— "ऋतुसंहारम्" कस्य कृतिरस्ति?
उत्तरम्— कालिदासस्य।
36. प्रश्नः— "सूर्यशतकम्" कस्य रचना अस्ति?
उत्तरम्— मयूरभट्टस्य।
37. प्रश्नः— "चण्डीशतकं" कस्य रचना अस्ति?
उत्तरम्— बाणभट्टस्य।
38. प्रश्नः— "सौन्दर्यलहरी" कस्य कृतिरस्ति?
उत्तरम्— शंकराचार्यस्य।
39. प्रश्नः— सौन्दरानन्दम्" इति केन रचितम्?
उत्तरम्— अश्वघोषेन।
40. प्रश्नः— रामायणमञ्जरी" कस्य महाकवेः कृतिरस्ति?
उत्तरम्— क्षेमेन्द्रस्य।
41. प्रश्नः— "श्रीकण्ठचरितम्" कस्य कृतिरस्ति?
उत्तरम्— मंखकस्य।
42. प्रश्नः— "व्यक्तिविवेकः" कस्य कृतिरस्ति?
उत्तरम्— महिमभट्टस्य।
43. प्रश्नः— अन्विताभिधानवादस्य प्रवर्त्तकः कः?
उत्तरम्— गुरुः प्रभाकरः।
44. प्रश्नः— "शृंगारप्रकाशः" कस्य कृतिरस्ति?
उत्तरम्— भोजराजस्य।
45. प्रश्नः— "काव्यप्रकाशः" कस्य कृतिः अस्ति?
उत्तरम्— मम्मटस्य।
46. प्रश्नः— हेमचन्द्रस्य कृतिः कास्ति?
उत्तरम्— काव्यानुशासनम्।
47. प्रश्नः— "चन्द्रालोकः" कस्य कृतिरस्ति?
उत्तरम्— पीयूषवर्षजयदेवस्य।
48. प्रश्नः— पण्डितराज-जगन्नाथस्य कृतिः अस्ति?
उत्तरम्— रसगंगाधरः।

49. प्रश्नः— विश्वनाथकविराजस्य कृतिः अस्ति?
उत्तरम्— साहित्यदर्पणः।
50. प्रश्नः— रत्नावल्याः रचयिता कः?
उत्तरम्— हर्षदेवः।
51. प्रश्नः— व्यक्तिविवेकः कस्य रचना वर्तते?
उत्तरम्— महिमभट्टस्य।
52. प्रश्नः— अन्विताभिधानवादस्य प्रणेता कः?
उत्तरम्— प्रभाकरमिश्रः।
53. प्रश्नः— कवि मेण्ठस्य काव्यरचना का?
उत्तरम्— हयग्रीववधम्।
54. प्रश्नः— क्षेमेन्द्रस्य रामायण-महाभारतयोरुपरि लिखिता रचना का?
उत्तरम्— रामायणमञ्जरी, भारतमञ्जरी।
55. प्रश्नः— "बोधिसत्त्वावदानकल्पलता" इत्यस्य लेखकः कः?
उत्तरम्— क्षेमेन्द्रः।
56. प्रश्नः— "सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः" इति कस्य लक्षणमस्ति?
उत्तरम्— महाकाव्यस्य।
57. प्रश्नः— भामिनीविलासः कस्य रचना वर्तते?
उत्तरम्— पण्डितराजजगन्नाथस्य।
58. प्रश्नः— "कामायनी" ग्रन्थकारः कः?
उत्तरम्— जयशंकरप्रसादः।
59. प्रश्नः— "मालविकाग्निमित्रम्" ग्रन्थस्य कः रचनाकारः?
उत्तरम्— कालिदासः।
60. प्रश्नः— "इन्दिरा प्रियदर्शिनी" इति गीतिकाव्यं कस्य कृतिः?
उत्तरम्— पण्डितदुलीचन्द्रस्य।
61. प्रश्नः— "संस्कृतकुराणम्" इति कुरानग्रन्थस्यानुवादं कः कृतवान्?
उत्तरम्— सत्यदेववर्मा।
62. प्रश्नः— "अष्टाङ्गसंग्रहः" इति आयुर्वेदसम्बद्धं पुस्तकं कस्यास्ति?
उत्तरम्— वाग्भटस्य।
63. प्रश्नः— "पाकदर्पणम्" केन सम्बद्धमस्ति?
उत्तरम्— आयुर्वेदेन।
64. प्रश्नः— "भावप्रकाशः" केन रचितः?
उत्तरम्— भावमिश्रेण।
65. प्रश्नः— "सुश्रुतसंहिताम्" कः प्रत्यपादयत्?
उत्तरम्— महर्षिः सुश्रुतः।

66. प्रश्नः— "पञ्चभूतविज्ञानम्" केन सम्बद्धमस्ति?
उत्तरम्— आयुर्वेदेन।
67. प्रश्नः— "कर्पूरमञ्जरी" इत्यस्याः लेखकः कः?
उत्तरम्— राजशेखरः।
68. प्रश्नः— "युधिष्ठिरविजयम्" केन रचितम्?
उत्तरम्— वासुदेवेन।
69. प्रश्नः— "वृत्तमौक्तिकः" इत्यस्य लेखकः कः?
उत्तरम्— भट्टचन्द्रशेखरः।
70. प्रश्नः— पण्डित मधुसूदन ओझा महोदयः वैदिकछन्दस्य विवेचनार्थं कं ग्रन्थं विरचितवान्?
उत्तरम्— छन्दःसमीक्षाग्रन्थम्।
71. प्रश्नः— छन्दःसूत्रस्य रचनाकारः कः?
उत्तरम्— आचार्यपिङ्गलः।
72. प्रश्नः— पञ्चास्तिकाय इत्यस्य लेखकः कः?
उत्तरम्— कुन्दकुन्दाचार्यः।
73. प्रश्नः— सङ्गीतरत्नाकरस्य रचनाकारः कः?
उत्तरम्— सारङ्गदेवः।
74. प्रश्नः—पण्डितदामोदरः सङ्गीतविषयकं कं ग्रन्थम् अलिखत्?
उत्तरम्— सङ्गीतदर्पणम्।
75. प्रश्नः— पञ्चदशी इत्यस्य लेखकः कः?
उत्तरम्— विद्यारण्यः।
76. प्रश्नः— औचित्यसम्प्रदायस्य प्रवर्तकः कोऽस्ति?
उत्तरम्— क्षेमेन्द्रः।
77. प्रश्नः— भामहः कस्य सम्प्रदायस्य प्रवर्तकः अस्ति?
उत्तरम्— वक्रोक्तिसम्प्रदायस्य।
78. प्रश्नः—ऐतिहासिक "हम्मीरमहाकाव्यस्य" लेखकः कः?
उत्तरम्— जयचन्द्रः।
79. प्रश्नः— ईश्वरविलास-महाकाव्यस्य प्रणेता कोऽस्ति?
उत्तरम्— श्रीकृष्णभट्टः।
80. प्रश्नः— श्रीकृष्णारामभट्टः किं ऐतिहासिक-महाकाव्यं अलिखत्?
उत्तरम्— कच्छवंशमहाकाव्यम्।
81. प्रश्नः— जयवंशमहाकाव्यं केन विरचितम्?
उत्तरम्— सीतारामभट्टपर्वणीकरेण।
82. प्रश्नः— मानववंशमहाकाव्यं कस्य रचना अस्ति?
उत्तरम्— सूर्यनारायणशास्त्री महोदयस्य।

83. प्रश्नः— पं. चन्द्रशेखरशास्त्री महोदयः किम् ऐतिहासिकं काव्यं अलिखत्?
उत्तरम्— दुर्जनचरित्रमहाकाव्यम्।
84. प्रश्नः— चौरपञ्चाशिकायाः लेखकः कः?
उत्तरम्— विल्हणः।
85. प्रश्नः— श्रीकण्ठचरितं कः विरचितवान्?
उत्तरम्— मङ्खः।
86. प्रश्नः— रावणवधस्य रचनाकारः कः?
उत्तरम्— भट्टिः।
87. प्रश्नः— महाकाव्यस्य नवसाहसाङ्कचरितस्य लेखकः कः?
उत्तरम्— पद्मगुप्तपरिमलः।
88. प्रश्नः— प्रसिद्ध "खण्डनखण्डखाद्यम्" इत्यस्य लेखकः कः?
उत्तरम्— श्रीहर्षः।
89. प्रश्नः— क्षेमेन्द्रस्य कानि रचनाकार्याणि सन्ति?
उत्तरम्—"पञ्च", 1. पद्यकादम्बरी, 2. चतुर्युगसङ्ग्रहः, 3. दशावतारचरितम्, 4. रामायण-मञ्जरी, 5. भारतमञ्जरी।
90. प्रश्नः— आर्यासप्तशती कस्य रचनाकार्यं वर्तते?
उत्तरम्—गोवर्धनस्य।
91. प्रश्नः— शान्तिशतकं कः विरचितवान्?
उत्तरम्— शिल्हणः।
92. प्रश्नः— मुग्धोपदेशः कस्या रचना वर्तते?
उत्तरम्— जल्हणस्य।
93. प्रश्नः— वक्रोक्तिपञ्चाशिका कस्य कृतिः वर्तते?
उत्तरम्— रत्नाकरस्य।
94. प्रश्नः— आदर्श-रमणी कस्य रचना अस्ति?
उत्तरम्— भट्टमथुरानाथशास्त्रिणः।
95. प्रश्नः— आदर्शदम्पति इत्यस्य प्रणेता कोऽस्ति?
उत्तरम्— पं. बुद्धिचन्द्रशास्त्री।
96. प्रश्नः— स्वामी भगवदाचार्यस्य कानि रचनाकार्याणि सन्ति?
उत्तरम्—1. भारतपारिजात(गान्धिचरित), 2. पारिजातोपहारः, 3. पारिजातसौरभम्।
97. प्रश्नः— डॉ. सत्यव्रतशास्त्री महोदयस्य कानि रचनाकार्याणि सन्ति?
उत्तरम्— 1. बोधिसत्वचरितम्, 2. रामकीर्तिमहाकाव्यम्।
98. प्रश्नः— दयानन्दमहाकाव्यस्य रचनाकारः कः?
उत्तरम्— अखिलानन्दः।
99. प्रश्नः— डॉ. श्रीधरभास्करवर्णेकरस्य कानि रचनाकार्याणि सन्ति?
उत्तरम्—1. शिवराज्योदयः, 2. विवेकानन्दविजयः, 3. संघगीता।

100. प्रश्नः— हरनामामृतकाव्यस्य प्रणेता कः?
उत्तरम्— पं. विद्याधरशास्त्री।
101. प्रश्नः— महावीरसौरभम् काव्यस्य प्रणेता कः?
उत्तरम्— आचार्यमधुकरशास्त्री।
102. प्रश्नः— तर्जनी महाकाव्यस्य रचयिता कः?
उत्तरम्— पं. दुर्गादत्त शास्त्री।
103. प्रश्नः— त्रिवर्गे के भवन्ति?
उत्तरम्— धर्मार्थकामाः।
104. प्रश्नः— पण्डितजगन्नाथस्य गीतिकाव्यं किमस्ति?
उत्तरम्— भामिनीविलासः।
105. प्रश्नः— सौन्दर्यलहरी कस्य कृतिः अस्ति?
उत्तरम्— आद्यशङ्कराचार्यस्य।
106. प्रश्नः— प्रसिद्धं शिवमहिम्नस्तोत्रम् इत्यस्य लेखकः कः?
उत्तरम्— पुष्पदन्तः।
107. प्रश्नः— काञ्चीधामस्य प्रमुखाचार्याः के सन्ति?
उत्तरम्— 1. आचार्यभरतः, 2. आचार्यदण्डी।
108. प्रश्नः— शारदाधामस्य आचार्याः के सन्ति?
उत्तरम्— 1. भामह, 2. वामन, 3. उद्भट, 4. आनन्दवर्धन, 5. अभिनवगुप्त, 6. क्षेमेन्द्र, 7. कुन्तक, 8. महिमभट्ट, 9. मम्मटः।
109. प्रश्नः— धारायाः महाकालेश्वरधामस्य आचार्याः के सन्ति?
उत्तरम्—1. धनिकः, 2. धनञ्जयः, 3. भोजराजः।
110. प्रश्नः— काशीविश्वनाथस्य आचार्याः के सन्ति?
उत्तरम्—1. अप्पयदीक्षितः, 2. मधुसूदनसरस्वती, 3. पण्डितराजजगन्नाथः, 4. करपात्री स्वामी, 5. रेवाप्रसादद्विवेदी, 6. महादेवशास्त्री, 7. बालशास्त्री, 8. पण्डितराजराजेश्वर-शास्त्रिप्रभृतयः।
111. प्रश्नः— भारतीयकाव्यशास्त्रस्य आचार्यपरम्परायाः लेखकः कः?
उत्तरम्— आचार्य राधावल्लभ त्रिपाठी।
112. प्रश्नः— वस्त्वलंकारदर्शनम् इत्यस्य लेखकः कः?
उत्तरम्— ब्रह्मानन्द शर्मा।
113. प्रश्नः— श्रीहर्षस्य कानि रचनाकार्याणि सन्ति?
उत्तरम्— नव–1. नैषधीयचरितम्, 2. नवसाहसाङ्कचरितचम्पू, 3. खण्डनखण्डखाद्यम्, 4. स्थैर्यविचारणप्रकरणम्, 5. विजयप्रशस्ति, 6. गौडोर्वीशकुलप्रशस्ति, 7. अर्णववर्णन, 8. छिन्दप्रशस्ति, 9. शिवशक्तिसिद्धिः।
114. प्रश्नः— नाट्यसूत्रम् इत्यस्य लेखकः कः?
उत्तरम्— भरतः।

115. प्रश्नः— काव्यादर्शः इत्यस्य लेखकः कः?
उत्तरम्— दण्डी।
116. प्रश्नः— काव्यमीमांसा इत्यस्य लेखकः कः?
उत्तरम्— राजशेखरः।
117. प्रश्नः— अभिनवगुप्तस्य काः रचनाः?
उत्तरम्— 1. ध्वन्यालोकलोचनम्, 2. अभिनवभारती।
118. प्रश्नः— चन्द्रालोकः इत्यस्य लेखकः कः?
उत्तरम्— जयदेवः।
119. प्रश्नः— कुवलयानन्द इत्यस्य लेखकः कः?
उत्तरम्— अप्पयदीक्षितः।
120. प्रश्नः— दशरूपकम् इत्यस्य लेखकः कः?
उत्तरम्— धनञ्जयः।
121. प्रश्नः— काव्यानुशासनम् इत्यस्य लेखकः कः?
उत्तरम्— हेमचन्द्रः।
122. प्रश्नः— रससम्प्रदायस्य प्रवर्तकः कः?
उत्तरम्— भरतमुनिः।
123. प्रश्नः— अलंकार-सम्प्रदायस्य के समर्थकाः?
उत्तरम्— भामह, उद्भट, रुद्रट।
124. प्रश्नः— गुण (रीतिः) सम्प्रदायस्य के समर्थकाः?
उत्तरम्— दण्डी, वामन।
125. प्रश्नः— वक्रोक्तिसम्प्रदायस्य कः समर्थकः?
उत्तरम्— कुन्तकः।
126. प्रश्नः— ध्वनिसम्प्रदायस्य के समर्थकाः?
उत्तरम्— आननदवर्धनः, अभिनवगुप्तः।
127. प्रश्नः— औचित्यसम्प्रदायस्य कः समर्थकः?
उत्तरम्— क्षेमेन्द्रः।
128. प्रश्नः— भट्टिकाव्यम् इत्यस्य लेखकः कः?
उत्तरम्— भट्टिः।
129. प्रश्नः— शिशुपालवधम् इत्यस्य लेखकः कः?
उत्तरम्— माघः।
130. प्रश्नः— राजतरंगिणी इत्यस्य लेखकः कः?
उत्तरम्— कल्हणः।
131. प्रश्नः— कालिदासः कस्य देवस्य भक्तः?
उत्तरम्— शिवस्य।

132. प्रश्नः— "व्यक्तिविवेक" इत्यस्य रचनाकारः कः?
उत्तरम्— महिमभट्टः।
133. प्रश्नः— "विषमबाणलीला" इत्यस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— आनन्दवर्धनः।
134. प्रश्नः— अवन्तिसुन्दरी अस्य लेखकः कः?
उत्तरम्— दण्डी।
135. प्रश्नः— छन्दो वेदस्य किमङ्गं विद्यते?
उत्तरम्— पादस्थानीयम्।
136. प्रश्नः— कालिदासः कस्य राज्याश्रितः आसीत्?
उत्तरम्— विक्रमादित्यस्य।
137. प्रश्नः— भोजप्रबन्धः कस्य कृतिरस्ति?
उत्तरम्— वल्लालसेनस्य।
138. प्रश्नः— कविषु कः कविः श्रेष्ठः?
उत्तरम्— कालिदासः।
139. प्रश्नः— "हंससन्देशः" कस्य रचना अस्ति?
उत्तरम्— वेंकटेशस्य।
140. प्रश्नः— "पार्श्वाभ्युदयस्य" रचनाकारः कः?
उत्तरम्— जिनसेनः।
141. प्रश्नः— "नेमिदूतम्" इत्यस्य लेखकः कः?
उत्तरम्— विक्रमकविः।
142. प्रश्नः— शीलदूतस्य रचयिता कः?
उत्तरम्-- चरित्रसुन्दरगणिः।
143. प्रश्नः— "जैनमेघदूतम्" इत्यस्य लेखकः कः?
उत्तरम्— महाकविः मेरुतुङ्गः।
144. प्रश्नः— "पवनदूतम्" इत्यस्य रचनाकारः कः?
उत्तरम्— वादिचन्द्रः।
145. प्रश्नः— "हनुमद्दूतम्" इदं केन विरचितम्?
उत्तरम्— नित्यानन्द-स्वामिना।
146. प्रश्नः— "हंसदूतम्" अस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— रूपगोस्वामी।
147. प्रश्नः— "उद्धवसंदेशः" इत्यस्य लेखकः कः?
उत्तरम्— रूपगोस्वामी।
148. प्रश्नः— "पदकल्पतरुः" इत्यस्य रचनाकारः कः?
उत्तरम्— गोविन्ददासः।

149. प्रश्नः— "कलिविडम्बनम्" इत्यस्य लेखकः कः?
उत्तरम्— नीलकण्ठदीक्षितः।

150. प्रश्नः— "प्रबोधसुधाकरः" अस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— शङ्कराचार्यः।

151. प्रश्नः— "भावविलासः" केन विरचितः?
उत्तरम्— रुद्रकविना।

152. प्रश्नः— "जानकीपरिणयम्" इत्यस्य लेखकः कः?
उत्तरम्— चक्रकविः।

153. प्रश्नः— "चाणक्यनीतिदर्पणस्य लेखकः कः?
उत्तरम्— चाणक्यः।

154. प्रश्नः— कालिदासस्य का शैली प्रिया आसीत्?
उत्तरम्— वैदर्भी।

155. प्रश्नः— महाकाव्ये न्यूनातिन्यूनं कति सर्गाः भवन्ति?
उत्तरम्— (8) अष्टौ।

156. प्रश्नः— काव्यस्य प्रमुख-भेदाः कति भवन्ति?
उत्तरम्— (3) त्रयः।

157. प्रश्नः— महाकाव्य-विकासस्य प्रारम्भः कुतः मन्यते?
उत्तरम्— कालिदासात्।

158. प्रश्नः— अद्भुतरसे कया सन्धिः भवति?
उत्तरम्— निर्वहणेन।

159. प्रश्नः— काव्ये कति रसाः मन्यन्ते?
उत्तरम्— (9) नव-रसाः।

160. प्रश्नः— "वक्रोक्तिः काव्यजीवितम्" इति कस्य मतम्?
उत्तरम्— कुन्तकस्य।

161. प्रश्नः— आचार्यवामनमते काव्यस्यात्मा भवति?
उत्तरम्— रीतिः।

162. प्रश्नः— संकेतितार्थस्य बोधिका शक्तिः का?
उत्तरम्— अभिधा।

163. प्रश्नः— तिलकमंजरी इत्यस्य लेखकः कः?
उत्तरम्— धनपालः।

164. प्रश्नः— "शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्" इति कस्य लक्षणम्?
उत्तरम्— अनुप्रासस्य।

165. प्रश्नः— "शब्दार्थौ सहितौ काव्यम्" इति कस्य काव्य-लक्षणम्?
उत्तरम्— भामहस्य।

166. प्रश्नः— विषमबाणलीला" कस्य रचना विद्यते?
उत्तरम्— आनन्दवर्धनस्य।

167. प्रश्नः— "इष्टनाशादनिष्टापत्तेः" इदं कस्य रसस्य लक्षणम्?
उत्तरम्— करुणरसस्य।

168. प्रश्नः— प्रबन्धकोशे कति व्यक्तिनां जीवन-चरित्रं वर्तते?
उत्तरम्— (24) चतुर्विंशतिः।

169. प्रश्नः— जातकमालायां कस्य पूर्वजन्मस्य कथा विद्यते?
उत्तरम्— बोधिसत्त्वस्य।

170. प्रश्नः— "श्रीकण्ठचरितम्" इति ग्रन्थे कति सर्गाः सन्ति?
उत्तरम्— (25) पञ्चविंशतिः।

171. प्रश्नः— "हंससन्देशः" इत्यस्य कथानकः केन सम्बद्धः?
उत्तरम्— जानकी-रामौ।

172. प्रश्नः— भट्टिकाव्ये कति सर्गाः सन्ति?
उत्तरम्— (12) द्वादश।

173. प्रश्नः— शास्त्रीयदृष्ट्या "कर्पूरमंजरी" कस्यां श्रेण्यामागच्छति?
उत्तरम्— नाटिकायाम्।

## पद्यम्- Poetry

(क) रघुवंशम्, (ख) कुमारसंभवम्, (ग) मेघदूतम्, (घ) किरातार्जुनीयम्, (ङ) शिशुपालवधम्, (च) नैषधीयचरितम्, (छ) बुद्धचरितम्, (ज) सौन्दरानन्दः, (झ) साहित्यदर्पणम्, (ञ) रसगङ्गाधरः, (ट) काव्यप्रकाशः, (ठ) ध्वन्यालोकम्, (ढ) महाभारतम्, (ड) रामायणम्, (ण) ऋतुसंहारम्, (त) भर्तृहरिः—नीतिशतकम्, शृंगारशतकम्, वैराग्शतकम्। (थ) अन्य-काव्यानि)

### (क) रघुवंशस्य वस्तुनिष्ठप्रश्नोत्तराणि—

1. प्रश्नः— कालिदासविरचिताः कृतयः कति सन्ति?
उत्तरम्— (7) सप्त।

2. प्रश्नः— दीपशिखा" कस्योपाधिः?
उत्तरम्— कालिदासस्य।

3. प्रश्नः— कनिष्ठिकाधिपतिः कः?
उत्तरम्— कालिदासः।

4. प्रश्नः— कालिदासस्य जन्मकालः वर्तते?
उत्तरम्— ई. पू. प्रथमशताब्दी।

5. प्रश्नः— कालिदासविषये प्रसिद्धोक्तिः का?
उत्तरम्— उपमा कालिदासस्य।

6. प्रश्नः— रघुवंशे कति सर्गाः सन्ति?
उत्तरम्— (19) एकोनविंशतिः।
7. प्रश्नः— इन्दुमतीस्वयंवरवर्णनं कुत्रास्ति?
उत्तरम्— रघुवंशे।
8. प्रश्नः— "रघुवंशे" कति सूर्यवंशिनृपाणां वर्णनमस्ति?
उत्तरम्— (29) एकोनत्रिंशतिः।
9. प्रश्नः— प्रामुख्येन रघुवंश-महाकाव्ये कयोः उदात्तचरित्राणां वर्णनं प्राप्यते?
उत्तरम्— रघु-रामयोः।
10. प्रश्नः— रघुवंश-महाकाव्ये कस्य वंशस्य राज्ञां वर्णनं अस्ति?
उत्तरम्— इक्ष्वाकुवंशप्रभवराज्ञाम्।
11. प्रश्नः— रघुवंशमहाकाव्यस्य मल्लिनाथेन रचिता व्याख्या का?
उत्तरम्— सञ्जीवनी।
12. प्रश्नः— लघुत्रय्यां किं नाम कालिदासकाव्यं परिगण्यते?
उत्तरम्— रघुवंशम्।
13. प्रश्नः— "दिलीपस्य गो-सेवा" रघुवंशस्य कस्मिन् सर्गे वर्णिताऽस्ति?
उत्तरम्— द्वितीयसर्गे।
14. प्रश्नः—" अजविलापः" रघुवंशस्य कस्मिन् सर्गे समुपलभ्यते?
उत्तरम्— अष्टमे सर्गे।
15. प्रश्नः— रघुवंशस्य त्रयोदशे सर्गे का कथा वर्णिता अस्ति?
उत्तरम्— रामस्य अयोध्यां प्रत्यागमनम्।
16. प्रश्नः— रघुवंशे समुपवर्णितः अन्तिमः राजा कः अस्ति?
उत्तरम्— अग्निवर्णः।
17. प्रश्नः— रघुवंशस्य मंगलाचरणे कस्य वन्दना समुपलभ्यते?
उत्तरम्— शिवस्य।
18. प्रश्नः— कामधेनुशापितः राजा कः अस्ति?
उत्तरम्— दिलीपः।
19. प्रश्नः— "नन्दिनी" कस्याः पुत्री अस्ति?
उत्तरम्— कामधेनोः।
20. प्रश्नः— "संचारिणी दीपशिखेव रात्रौ, यं यं व्यतीयाय पतिंवरा सा। नरेन्द्रमार्गाट्ट इव प्रपेदे, प्रलीनभावं स स भूमिपालः।।" अनेन श्लोकेन सम्बद्धः कविविशेषः कः?
उत्तरम्— कालिदासः।
21. प्रश्नः— "शैशवेऽभ्यस्तविद्यानाम्" इदं वाक्यं कस्य ग्रन्थस्य वर्तते?
उत्तरम्— रघुवंशमहाकाव्यस्य।
22. प्रश्नः— "वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये" कस्य ग्रन्थस्य इयमुक्तिः?
उत्तरम्— रघुवंशस्य।

23. प्रश्नः— "सञ्चारिणी दीपशिखेव रात्रौ" इति रघुवंशमहाकाव्ये कस्मिन्संदर्भे वर्णितं भवति?
उत्तरम्— इन्दुमतीस्वयंवरे।
24. प्रश्नः— दिलीपस्य भार्यायाः किं नाम?
उत्तरम्— सुदक्षिणा।
25. प्रश्नः— दिलीपस्य कुलगुरुः कः आसीत्?
उत्तरम्— वशिष्ठः।
26. प्रश्नः— कालिदासस्य रीतिः/शैली का आसीत्?
उत्तरम्— वैदर्भी।
27. प्रश्नः— रघुवंशस्य नायकः कः?
उत्तरम्— दिलीपः।
28. प्रश्नः— रघुवंशस्य नायिका का?
उत्तरम्— सुदक्षिणा।
29. प्रश्नः— रघुवंशम् कस्मिन् काव्यविधौ अस्ति?
उत्तरम्— महाकाव्ये।
30. प्रश्नः— रघुवंशस्य मुख्यरसः कः?
उत्तरम्— शृंगाररसः।
31. प्रश्नः— रघुवंशम् इत्यस्य आधारग्रन्थः कः?
उत्तरम्— रामायणम्।
32. प्रश्नः— रघुवंशम् अस्मिन् ग्रन्थे अजविलापे कस्य रसस्य वर्णनं विद्यते?
उत्तरम्— करुणरसस्य।
33. प्रश्नः— रघुवंशम् अस्मिन् ग्रन्थे कति श्लोकाः विद्यन्ते?
उत्तरम्— 1569 श्लोकाः।
34. प्रश्नः— रघुः कं यज्ञं समपादयत्?
उत्तरम्— विश्वजितम्।
35. प्रश्नः— विदूषकः राज्ञः कीदृशः सहचरः भवति?
उत्तरम्— विनोदप्रियः।
36. प्रश्नः— रघुवंशम् इति ग्रन्थे रघोः वर्णने कस्य रसस्य प्रधानता अस्ति?
उत्तरम्— शान्त-रसस्य।
37. प्रश्नः— "रघुवंशम्" अस्य ग्रन्थस्य प्रारम्भे कस्य राज्ञो वर्णनेन भवति?
उत्तरम्— दिलीपस्य।
38. प्रश्नः— "रघुवंशम्" अस्य ग्रन्थस्य समाप्तिः कस्य राज्ञो वर्णनेन भवति?
उत्तरम्— अग्निवर्णस्य।
39. प्रश्नः— "रघुवंशम्" किमस्ति काव्यम्?
उत्तरम— महाकाव्यम।

40. प्रश्नः— "अनावृतकपाटं द्वारं देहि" इति केन कथितम्?
उत्तरम्— कालिदासेन।
41. प्रश्नः— "क्व सूर्यप्रभवो वंशः" कालिदासस्य इयमुक्तिः कस्मिन् ग्रन्थे विद्यते?
उत्तरम्— रघुवंश-महाकाव्ये।
42. प्रश्नः— "अलं महीपाल तव श्रमेण" इदं कथनं कस्यास्ति?
उत्तरम्— सिंहस्य।
43. प्रश्नः— नन्दिनी दिलीपस्य परीक्षां कति दिनानन्तरं करोति?
उत्तरम्— (22) द्वाविंशतिदिनानन्तरम्।
44. प्रश्नः— "कुम्भोदरः" कस्य नाम विद्यते?
उत्तरम्— शिव-सेवकस्य।
45. प्रश्नः—"न पादपोन्मूलनशक्तिरंहः शिलोच्चये मूर्च्छति मारुतस्य" कस्मात् ग्रन्थात् उद्धृतः?
उत्तरम्— रघुवंशम् ग्रन्थात्।
46. प्रश्नः— रघुवंशस्य प्रथमः राजा कः आसीत्?
उत्तरम्— मनुः।
47. प्रश्नः— रघुवंश-ग्रन्थे मुख्य-रसः कः?
उत्तरम्— वीर-रसः।

(ख) कुमारसंभवस्य वस्तुनिष्ठप्रश्नोत्तराणि—

48. प्रश्नः— कर्तिकेयजन्मनिरूपितमस्ति—
उत्तरम्— कुमारसम्भवे।
49. प्रश्नः— पार्वत्यास्तपश्चरणं कस्मिन् काव्ये वर्ण्यते?
उत्तरम्— कुमारसम्भवे।
50. प्रश्नः— कुमारसम्भवे कति सर्गाः सन्ति?
उत्तरम्— (17) सप्तदश।
51. प्रश्नः— "शरीरमाद्यं खलु धर्मसाधनम्" इदं वाक्यं कुत्रास्ति?
उत्तरम्— कुमारसम्भवे।
52. प्रश्नः— "रतिविलापः" कस्मिन् महाकाव्ये वर्णितः?
उत्तरम्— कुमारसम्भवे।
53. प्रश्नः— "कुमारसम्भवः" कमुद्दिश्य देवैरभिमतः?
उत्तरम्— तारकासुरसंहारमुद्दिश्य।
54. प्रश्नः— शिवस्य हृदये पार्वतीं प्रति प्रेमभावमुत्पादयितुं देवेन्द्रेण कः प्रेषितः?
उत्तरम्— कामदेवः।
55. प्रश्नः— शिवपार्वत्योः विवाहप्रस्तावं कर्तुं हिमालयं प्रति के अगच्छन्?
उत्तरम्— सप्तर्षयः।
56. प्रश्नः— तारकासुरसंहाराय सेनापतिरसौ स्यादिति ब्रह्मदेवः कं निर्दिशति?
उत्तरम्—षण्मुखम्(कार्तिकेयम्)।

57. प्रश्नः— हिमालयस्य पत्न्याः नाम किम्?
उत्तरम्— मेना।
58. प्रश्नः— "काम" शब्दस्य पञ्चपर्यायनामानि निर्दिशत?
उत्तरम्— अनङ्गः, पञ्चशरः, स्मरः, कुसुमेषुः, मदनः।
59. प्रश्नः— "गृहम्" इत्यस्य पर्यायपदानि कानि?
उत्तरम्— वेश्म, सद्म, निकेतनम्, गृहम्।
60. प्रश्नः— तारकासुरवधं लक्ष्यीकृत्य विरचितं काव्यमस्ति?
उत्तरम्— कुमारसम्भवम्।
61. प्रश्नः— कुमारसम्भवस्य कस्मिन् सर्गे रतिविलापः वर्णितः?
उत्तरम्— चतुर्थे सर्गे।
62. प्रश्नः— "शरीरमाद्यं खलु धर्मसाधनम्" कुमारसम्भवस्य सूक्तिरियं कस्य उक्तिरस्ति?
उत्तरम्— ब्रह्मचारिणः।
63. प्रश्नः— "अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता" यस्मिन् सूक्तिरियं मिलति, तत् काव्यं किम्?
उत्तरम्— कुमारसम्भवम्।
64. प्रश्नः— "नववैधव्यमसह्यवेदनम्" सूक्तिरियं कुत्र प्राप्यते?
उत्तरम्— कुमारसम्भवे।
65. प्रश्नः— "विषवृक्षोऽपि संवर्ध्य स्वयं क्षेत्तुमसाम्प्रतम्" सूक्तिरियं कुत्र प्राप्यते?
उत्तरम्— कुमारसम्भवे।
66. प्रश्नः— "पुत्रोत्सवे माद्यति का न हर्षात्" सूक्तिरियं कुतः समुद्धृता?
उत्तरम्— कुमारसम्भवतः।
67. प्रश्नः— कुमारसम्भवः इत्यस्य नायकः कः?
उत्तरम्— शिवः।
68. प्रश्नः— कुमारसम्भवः इत्यस्य नायिका का?
उत्तरम्— पार्वती।

(ग) मेघदूतस्य वस्तुनिष्ठप्रश्नोत्तराणि—

69. प्रश्नः— "मेघदूतम्" इत्यस्य लेखकः कः?
उत्तरम्— कालिदासः।
70. प्रश्नः— मेघसंदेशकाव्ये नायकः कः?
उत्तरम्— कश्चिद् यक्षः।
71. प्रश्नः—"आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां" इत्युक्तिः कस्मिन् ग्रन्थेऽस्ति?
उत्तरम्— मेघदूते।
72. प्रश्नः— अलकापुराधीशः कः?
उत्तरम्— कुबेरः।

73. प्रश्नः— केवलं मन्दाक्रान्ताछन्दसि निबद्धः ग्रन्थः कः?
उत्तरम्— मेघदूतम्।

74. प्रश्नः—यक्षः शापकालं कुत्र यापयति?
उत्तरम्— रामगिरौ।

75. प्रश्नः— मेघदूते कस्य वर्णनमस्ति?
उत्तरम्— यक्षस्य।

76. प्रश्नः—यक्षस्य दूतः कोऽस्ति?
उत्तरम्— मेघः।

77. प्रश्नः— मेघदूते किं छन्दः प्रयुक्तमस्ति?
उत्तरम्— मन्दाक्रान्ता।

78. प्रश्नः— मेघदूते प्रधानः रसः कः?
उत्तरम्— विप्रलम्भशृंगारः।

79. प्रश्नः—यक्षः केन शापितः?
उत्तरम्— कुबेरेण।

80. प्रश्नः— मेघदूतस्य उपजीव्यकाव्यं किम्?
उत्तरम्— ब्रह्मवैवर्तपुराणम्।

81. प्रश्नः— मेघदूते कैलासपर्यन्तं मेघस्य सहयात्रिणः के सन्ति?
उत्तरम्— राजहंसाः।

82. प्रश्नः— मेघदूते "जह्नुकन्या" का अस्ति?
उत्तरम्— गंगा (निर्विन्ध्या)।

83. प्रश्नः— मेघदूतस्य यक्षः कस्यानुचरः आसीत्?
उत्तरम्— कुबेरस्य।

84. प्रश्नः— कालिदासमते मेघे कति द्रव्याणि विद्यन्ते?
उत्तरम्— (04) चत्वारः।

85. प्रश्नः— मेघदूते चेतनाचेतनेषु प्रकृतिकृपणः कः?
उत्तरम्— कामार्त्तः।

86. प्रश्नः—"याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा" इत्यत्र "अधिगुण"शब्देन कस्य बोधः भवति?
उत्तरम्— मेघस्य।

87. प्रश्नः— मेघदूतम् अवन्त्यां कस्य कथायाः प्रसिद्धिम् उद्भावयति?
उत्तरम्— उदयनस्य।

88. प्रश्नः— "शिप्रावातः प्रियतम इव प्रार्थना चाटुकारः" अनेन पद्यांशेन सम्बद्धः नगरविशेषः कः?
उत्तरम्— उज्जयिनी।

89. प्रश्नः—"शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या" अनेन वाक्यांशेन कस्य नृत्यं संकेतितम्?
उत्तरम्— शिवस्य।

90. प्रश्नः—"ज्ञातास्वादो विवृतजघनं को विहातुं समर्थः" अनेन पद्यांशेन कस्याः संकेतः प्रदर्शितः मेघदूते?
उत्तरम्— गभीरायाः नद्याः।

91. प्रश्नः— भगवतः स्कन्दस्य वसतिः कुत्र अस्ति?
उत्तरम्— देवगिरौ।

92. प्रश्नः— "अन्तः शुद्धसत्वमपि भविता वर्णमात्रेण कृष्णः" अनेन पद्यांशेन कस्याः नद्याः संकेतः समुपलभ्यते?
उत्तरम्— सरस्वत्याः।

93. प्रश्नः— मेघदूते मेघाच्छादितः कैलासः कीदृशः वर्णितः अस्ति?
उत्तरम्— बलरामसदृशः।

94. प्रश्नः—"मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम्" इत्यनेन संबद्धः नगरविशेषः कः?
उत्तरम्— अलका।

95. प्रश्नः— मेघदूते यक्षगृहस्य सम्मुखे कः वृक्षः वर्तते?
उत्तरम्— मन्दारवृक्षः।

96. प्रश्नः—यक्षगृहस्य सम्मुखे कीदृक् पर्वतः दृश्यते?
उत्तरम्— इन्द्रनीलपर्वतः।

97. प्रश्नः—यक्षगृहस्य हेममालेः गृहस्य मुख्यद्वारे चित्रितौ स्तः?
उत्तरम्— शंख-पद्मौ।

98. प्रश्नः—यक्षिणी विशालाक्षी शापदिवसानां गणना केन माध्यमेन करोति?
उत्तरम्— पुष्पमाध्यमेन।

99. प्रश्नः—यक्षस्य शापान्तः कदा भवति?
उत्तरम्— देवोत्थापिन्याम्-एकादश्याम्।

100. प्रश्नः—"नीचैः गच्छत्युपरि च दशा चक्रनेमिक्रमेण" सूक्तिरियं कस्मिन् ग्रन्थे समुपलभ्यते?
उत्तरम्— मेघदूते।

101. प्रश्नः— "मेघदूतम्" कीदृशं काव्यम्?
उत्तरम्— गीति-काव्यम्।

102. प्रश्नः— "माघे मेघे गतं वयः" अत्र मेघे पदस्य कोऽभिप्रायः?
उत्तरम्— मेघदूतम्।

103. प्रश्नः— मेघदूतम् इत्यस्य नायिका का?
उत्तरम्— यक्षिणी।

104. प्रश्नः— मेघदूतम् कियद् भागे विभक्तम्, विभागं नाम किम्?
उत्तरम्— द्वयोः भागयोः—1. पूर्वमेघः, 2. उत्तरमेघः।

105. प्रश्नः— मेघदूतम् इति ग्रन्थे श्लोकानां का संख्या?
उत्तरम्— 115 श्लोकाः।
106. प्रश्नः— मेघदूतम् ग्रन्थस्य प्रमुख-रसः कः?
उत्तरम्— विप्रलम्भशृंगारः।
107. प्रश्नः— मेघदूतम् ग्रन्थस्य उपजीव्यग्रन्थः कः?
उत्तरम्— रामायणम्।
108. प्रश्नः— मेघदूतम् अस्य ग्रन्थस्य का शैली?
उत्तरम्— वैदर्भी।
109. प्रश्नः— मेघदूतम् इति ग्रन्थे कः छन्दः प्रयुक्तः?
उत्तरम्— मन्दाक्रान्ता।
110. प्रश्नः— उपमासम्राट् कः?
उत्तरम्— कालिदासः।
111. प्रश्नः— मेघदूतम् इति ग्रन्थे यक्षानुसारं कियत्यः मासः शेषो विद्यते?
उत्तरम्— (4) चत्वारः।
112. प्रश्नः— मेघदूतम् ग्रन्थे यक्षिणी शापदिवसस्य गणना कया क्रियते?
उत्तरम्— पुष्पैः।
113. प्रश्नः—"कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे" अत्र "जन" शब्दः कस्य बोधकः?
उत्तरम्— यक्षस्य।
114. प्रश्नः— मेघदूतम् ग्रन्थानुसारं मेघतत्वं किम्?
उत्तरम्— धूमज्योतिः सलिलमरुतां सन्निपातः।
115. प्रश्नः— "आषाढ़स्य प्रथमदिवसे" कस्य ग्रन्थस्योक्तिः?
उत्तरम्— मेघदूतम् ग्रन्थस्य।
116. प्रश्नः— मेघदूतम् इति ग्रन्थे विरही-यक्षः केन माध्यमेन संदेशं प्रेषयति?
उत्तरम्— मेघ-माध्यमेन।
117. प्रश्नः— मेघदूतम् इति ग्रन्थे अभिशप्त-यक्षः कुत्र स्थितोऽस्ति?
उत्तरम्— हेमकूटे।
118. प्रश्नः— अभिशप्त-यक्षस्य पत्नी कुत्र वसति?
उत्तरम्— अलकापुरी-नगरे।
119. प्रश्नः— मेघदूतस्य पूर्वमेघे कति श्लोकाः सन्ति?
उत्तरम्— (63) त्रिषष्टिश्लोकाः।
120. प्रश्नः— मेघदूतस्य उत्तरमेघे कति श्लोकाः सन्ति?
उत्तरम्— (52) द्विपञ्चाशत् श्लोकाः।
121. प्रश्नः— मेघदूतम् इति ग्रन्थोपरि अधुनापर्यन्तं कतिषु भाषासु टीका विद्यते?
उत्तरम्— (18) अष्टादशभाषासु।

122. प्रश्नः— धनपति-कुवेरस्य नगरी कुत्रास्ति?
उत्तरम्— अलकायाम्।
123. प्रश्नः— कुवेरं कः अदशत्?
उत्तरम्— भ्रमरः।
124. प्रश्नः— गीतिकाव्ये कस्य वर्णनं भवति?
उत्तरम्— जीवनस्य एकपक्षस्य।
125. प्रश्नः— "कश्चित्कान्ता विरहगुरुणा स्वाधिकारात्प्रमत्तः" अत्र श्लोके कः छन्दः?
उत्तरम्— मन्दाक्रान्ता।
126. प्रश्नः— "कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु" इयं सूक्तिः कुतः उद्धृतः?
उत्तरम्— मेघदूतात्।
127. प्रश्नः— "रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय" इयं सूक्तिः कुतः उद्धृतः?
उत्तरम्— मेघदूतात्।
128. प्रश्नः— मेघस्य यात्रा-समये वामपार्श्वे कस्याः ध्वनिः भवति?
उत्तरम्— चातकस्य।
129. प्रश्नः—"सद्यः पाति प्रणयि हृदयं विप्रयोगे रुणद्धि" अत्र "प्रणयि हृदयं" केन सम्बद्धः?
उत्तरम्— यक्षिण्या।
130. प्रश्नः—"प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः" अत्र यत् शब्देन कस्य ग्रहणम्?
उत्तरम्— आम्रकूटस्य।
131. प्रश्नः—"भक्तिच्छेदैरिव विरचितां भूतिमंगे गजस्य" अत्र गजस्य तुलना केन सह वर्तते?
उत्तरम्— विन्ध्येन।
132. प्रश्नः—यात्राकाले मेघं कामुकत्वस्य तत्काल-फलं कुत्र प्राप्यते?
उत्तरम्— विदिशायाम्।
133. प्रश्नः— उद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि—इयं केन पर्वतेन सम्बद्धः?
उत्तरम्— नीचैः इत्यनेन।
134. प्रश्नः— "स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु" इयं कस्याः नद्या सम्बद्धः?
उत्तरम्— निर्विन्ध्यायाः (गंगायाः)।
135. प्रश्नः— मेघदूते कस्याः नद्याः पवनं "प्रार्थनाचाटुकार-प्रियतमम्" इति कथ्यते?
उत्तरम्— शिप्रा-नद्याः।
136. प्रश्नः— "अप्यन्यस्मिञ्जलधर महाकालमासाद्य काले" इयं केन नगरेण सम्बद्धः?
उत्तरम्— उज्जयिनी-नगरेण।
137. प्रश्नः—"मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः" अत्र "सुहृत्" शब्देन कस्य बोधो भवति?
उत्तरम्— यक्षस्य।
138. प्रश्नः— "ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः" इयं कया नद्या सम्बद्धः?
उत्तरम्— गम्भीरा-नद्या।

139. प्रश्नः— सगरतनयस्वर्गसोपानपंक्तिम्- इयं कस्याः विशेषणम्?
उत्तरम्— जह्नोः कन्याम्।

140. प्रश्नः—"सोपानत्त्वं कुरु मणितटारोहणाग्रयायी" अत्र मेघस्य सोपानत्वं कयोः देवदम्पत्योः आरोहणाय उद्दिष्टोऽस्ति?
उत्तरम्— गौरी-शंकरयोः।

141. प्रश्नः—"यत्र स्त्रीणां प्रियतमभुजालिङ्गनोच्छ्वासितानाम्" इयमुक्तिः केन नगरेण सम्बद्धः?
उत्तरम्— अलका-नगरेण।

142. प्रश्नः— अलकायां कुबेरस्य भवनतः कस्यां दिशायां यक्षस्यावासः अस्ति?
उत्तरम्— उत्तर-दिशायाम्।

143. प्रश्नः— "कच्चिद् भर्तुः स्मरसि रसिके त्वं हि तस्य प्रियेति" इयं कया सम्बद्धः?
उत्तरम्— सारिकया।

144. प्रश्नः— "भूयो भूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ति" इयमुक्तिः कया सम्बद्धः?
उत्तरम्— वीणया।

145. प्रश्नः—"प्रायः सर्वोपरि भवति करुणावृत्तिरार्द्रान्तरात्मा" अत्र सर्वशब्देन कस्य बोधो भवति?
उत्तरम्— मेघस्य।

**(घ) किरातार्जुनीयस्य वस्तुनिष्ठप्रश्नोत्तराणि—**

146. प्रश्नः— भारविः भारतस्य कस्य भागस्य निवासी?
उत्तरम्— दक्षिणभागस्य।

147. प्रश्नः— भारविः कस्य नरेशस्य सभापण्डित आसीत्?
उत्तरम्— चालुक्यवंशीयनरेशस्य।

148. प्रश्नः— भारवेः पितुः नाम किम्?
उत्तरम्— श्रीधरः।

149. प्रश्नः— भारवेः मातुः नाम किम्?
उत्तरम्— सुशीला।

150. प्रश्नः— दुर्योधनस्य अपरं नाम किम्?
उत्तरम्— सुयोधनः।

151. प्रश्नः— "शरद्वर्णनम्" कस्मिन् महाकाव्ये वर्तते?
उत्तरम्— किरातार्जुनीये।

152. प्रश्नः— किरातवेषधारी कः आसीत्?
उत्तरम्— शिवः।

153. प्रश्नः— किरातार्जुनीये महाकाव्ये कति सर्गाः समुपलभ्यन्ते?
उत्तरम्— (18) अष्टादश।

154. प्रश्नः— श्री-शब्देन किन्तावत् महाकाव्यं प्रारभ्यते ?
उत्तरम्— किरातार्जुनीयम्।

155. प्रश्नः— पाशुपतास्त्रप्राप्त्यर्थं अर्जुनः कुत्र प्रयाति?
उत्तरम्— हिमालये।
156. प्रश्नः— शिवार्जुनयोः युद्धः कुत्र वर्णितोऽस्ति?
उत्तरम्— किरातार्जुनीये।
157. प्रश्नः— अर्थगौरवं कस्य कवेः प्रसिद्धम्?
उत्तरम्— भारवेः।
158. प्रश्नः— "सहसा विदधीत न क्रियामविवेकः परमापदां पदम्" इति वाक्यस्य कर्ता कः?
उत्तरम्— भारविः।
159. प्रश्नः— नारिकेलफलसंमितम् वचः कस्य अस्ति?
उत्तरम्— भारवेः।
160. प्रश्नः— किरातार्जुनीयस्य प्रथमसर्गस्य छन्दः कः?
उत्तरम्— वंशस्थबिलम्।
161. प्रश्नः— किरातार्जुनीये महाकाव्ये युधिष्ठिरस्य गुप्तचरः कः?
उत्तरम्— वनेचरः।
162. प्रश्नः— "हितं मनोहारि च दुर्लभं वचः" सूक्तिरियं कस्य उक्तिरस्ति?
उत्तरम्— वनेचरस्य।
163. प्रश्नः— भारवेः स्थितिकालः कः?
उत्तरम्— सप्तमशतकः।
164. प्रश्नः— भारविः कीदृशो भक्त आसीत्?
उत्तरम्— शैवः।
165. प्रश्नः— भारवेः अपरं नाम किम्?
उत्तरम्— आतपत्रभारविः।
166. प्रश्नः— राजनीतिपरकं किं महाकाव्यम्?
उत्तरम्— किरातार्जुनीयम्।
167. प्रश्नः— किरातार्जुनीये कस्य रसस्य प्राधान्यम्?
उत्तरम्— वीर-रसस्य।
168. प्रश्नः— शिवार्जुनयुद्धमवलम्ब्य रचितं काव्यं किम्?
उत्तरम्— किरातार्जुनीयम्।
169. प्रश्नः— "न तितिक्षा सममस्ति साधनम्" इदं वाक्यं कस्य ग्रन्थस्य वर्तते?
उत्तरम्— किरातार्जुनीयस्य।
170. प्रश्नः— अर्थगौरवाय कः कविः प्रसिद्धः?
उत्तरम्— भारविः।
171. प्रश्नः—"न नोननुन्नो नुन्नोनो नाना नानानना ननु" अस्मिन् श्लोके कः कविः असाधारण-कौशलं प्रदर्शितवान्?
उत्तरम्— भारविः।

172. प्रश्नः— कस्य महाकाव्यस्य आदितः सर्गत्रयम् "पाषाणत्रयं" कथ्यते?
उत्तरम्— किरातार्जुनीयस्य।
173. प्रश्नः— किरातार्जुनीयम् महाभारतस्य कस्मात् पर्वात् गृहीतः?
उत्तरम्— वनपर्वात्।
174. प्रश्नः— किरातार्जुनीयम् ग्रन्थे एकाक्षर-अलंकाराणां का संख्या?
उत्तरम्— (7) सप्त।
175. प्रश्नः— भारविमहोदयस्य वास्तविकं नाम किमासीत्?
उत्तरम्— दामोदरः।
176. प्रश्नः— "विचित्ररूपाः खलु चित्तवृत्तयः" इयं सूक्तिः कस्मात् ग्रन्थात् उद्धृतः?
उत्तरम्— किरातार्जुनीयम् ग्रन्थात्।

(ङ) शिशुपालवधस्य वस्तुनिष्ठप्रश्नोत्तराणि—

177. प्रश्नः— माघविरचितं महाकाव्यं किमस्ति?
उत्तरम्— शिशुपालवधम्।
178. प्रश्नः— रैवतकपर्वतवर्णनं कुत्र वर्तते?
उत्तरम्— शिशुपालवधे।
179. प्रश्नः— माघः भारतस्य कस्य भूभागस्य निवासी?
उत्तरम्— गुजरातप्रान्तस्य भीमनाल-नगरस्य।
179. प्रश्नः— शिशुपालवधे कति सर्गाः सन्ति?
उत्तरम्— (20) विंशतिः।
180. प्रश्नः— "माघे सन्ति त्रयो गुणा" इत्युक्त्या किं काव्यं प्रसिद्धम्?
उत्तरम्— शिशुपालवधम्।
181. प्रश्नः— "बृहत्त्रयी" पदेन कानि पुस्तकानि गृह्यन्ते?
उत्तरम्— "त्रीणि" 1. शिशुपालवधम्, 2. किरातार्जुनीयम्, 3. नैषधीयचरितम्।
182. प्रश्नः— रैवतकपर्वतस्य वर्णनं कस्मिन् सर्गे विद्यते?
उत्तरम्— चतुर्थे सर्गे।
183. प्रश्नः— "घण्टामाघः" कस्योपाधिः?
उत्तरम्— माघस्य।
184. प्रश्नः— शिशुपालवधस्य प्रतिनायकः कः?
उत्तरम्— शिशुपालः।
185. प्रश्नः— "क्षणे-क्षणे यन्नवतामुपैति, तदेव रूपं रमणीयतायाः" इति केन प्रतिपादितम्?
उत्तरम्— माघेन।
186. प्रश्नः— शिशुपालवधस्य प्रेरणास्रोतं मुख्यं पुराणं किम्?
उत्तरम्— श्रीमद्भागवतम्।
187. प्रश्नः— "नवसर्गगते माघे नवशब्दो न विद्यते" कस्य कृते इदं वाक्यम्?
उत्तरम्— माघस्य कृते।

188. प्रश्नः— शिशुपालवधस्य अङ्गीरसः कः?
उत्तरम्— वीररसः।
189. प्रश्नः— माघविरचिताः ग्रन्थसंख्या कियती अस्ति?
उत्तरम्— एका।
190. प्रश्नः— "प्रभातवर्णनम्" शिशुपालवधस्य कस्मिन् सर्गे वर्तते?
उत्तरम्— एकादशे सर्गे।
191. प्रश्नः— नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम्।
उत्तरम्—मृदुलतान्तलतान्तमलोकयत् स सुरभिं सुरभिं सुमनोभरैः।।
192. प्रश्नः— अनुप्रासस्य योजनायां माघः कस्य सहोदरः?
उत्तरम्— भारवि-महोदयस्य।
193. प्रश्नः—"शरीरभाजां भवदीयदर्शनं, व्यनक्ति कालत्रितयेऽपि योग्यताम्" इति कस्य ग्रन्थस्य सूक्तिः?
उत्तरम्— शिशुपालवधम् इति ग्रन्थस्य।
194. प्रश्नः— उपमा, अर्थगौरवम्, पदलालित्यञ्च एते त्रयः गुणाः कस्मिन् काव्ये सन्ति?
उत्तरम्— माघे।
195. प्रश्नः— माघस्य पितुर्नाम किमासीत्?
उत्तरम्— दत्तक-सर्वाश्रमः।
196. प्रश्नः— "माघकाव्यम्" इति कस्य ग्रन्थस्य प्रसिद्धिरस्ति?
उत्तरम्— शिशुपालवधकाव्यस्य।
197. प्रश्नः— "मेघे माघे गतं वयः" इति कस्य महाकाव्यस्य लोकप्रियतां सूचयति?
उत्तरम्— शिशुपालवधस्य।
198. प्रश्नः— माधुर्यौजःप्रसादाख्यास्त्रयो गुणाः कस्य कवेर्महाकाव्ये सन्ति?
उत्तरम्— माघस्य काव्ये।
199. प्रश्नः— "बृहत्त्रय्यां किं परिगण्यते?
उत्तरम्— शिशुपालवधम्।
200. प्रश्नः— शिशुपालवधस्य प्रथमसर्गे द्वारिकायां कस्यागमनं दृश्यते?
उत्तरम्— नारदस्य।
201. प्रश्नः— युधिष्ठिरेण अनुष्ठिते कस्मिन् यज्ञे भगवता श्रीकृष्णेन शिशुपालस्य वधः विधीयते?
उत्तरम्— राजसूययज्ञे।
202. प्रश्नः—"क्षणे-क्षणे यन्नवतामुपैति, तदेव रूपं रमणीयतायाः" सूक्तिरियं कस्मिन् ग्रन्थे समुपलभ्यते?
उत्तरम्— शिशुपालवधे।
203. प्रश्नः— उपमा, अर्थगौरवं, पदलालित्यञ्च सर्वेषामुपलब्धिः कस्य काव्ये समुपलभ्यते?
उत्तरम्— माघस्य।

204. प्रश्नः— रैवतक-पर्वतस्य वर्णनं कुत्र दरीदृश्यते?
उत्तरम्— शिशुपालवधे।
205. प्रश्नः— "शिशुपालवधम्" इत्यस्य प्रमुख-रसः कः?
उत्तरम्— वीररसः।
206. प्रश्नः— "शिशुपालवधम्" इति महाकाव्ये कति सर्गाः सन्ति?
उत्तरम्— (20) विंशतिः।
207. प्रश्नः— "शिशुपालवधम्" इति ग्रन्थे प्रथमसर्गस्य प्रधान-छन्दः किम्?
उत्तरम्— वंशस्थः।
208. प्रश्नः—"सती च योषित्प्रकृतिः सुनिश्चला पुमांसमभ्येति भवान्तरेष्वपि" इयं सूक्तिः कस्मात् ग्रन्थात् उद्धृताऽस्ति?
उत्तरम्— शिशुपालवधम् ग्रन्थात्।
209. प्रश्नः— माघस्य जन्मस्थानं कुत्र विद्यते?
उत्तरम्— भीमनाले।
210. प्रश्नः— शिशुपालवधम् केषु निबद्धोऽस्ति?
उत्तरम्— सर्गेषु।
211. प्रश्नः— शिशुपालवधम् इति ग्रन्थे कति श्लोकाः सन्ति?
उत्तरम्— 1650 श्लोकाः।
212. प्रश्नः— महाकवि-माघस्य समयः कः?
उत्तरम्— 675 खीष्टाब्दः।
213. प्रश्नः— शिशुपालवधस्य नायकः कः?
उत्तरम्— कृष्णः।
214. प्रश्नः— शिशुपालवधस्य मंगलाचरणस्य प्रारम्भः केन शब्देन भवति?
उत्तरम्— "श्री" शब्देन।
215. प्रश्नः— शिशुपालवधस्य प्रथमसर्गे श्लोक-संख्या कति?
उत्तरम्— (75) पञ्चसप्ततिः।
216. प्रश्नः— शिशुपालवधस्य मंगलाचरणे कस्य वर्णनमस्ति?
उत्तरम्— कृष्णस्य।
217. प्रश्नः— नारदस्य हस्ते किमस्ति?
उत्तरम्— वीणा।
218. प्रश्नः— "नवानधोऽधो वृहतः पयोधरान्" इति कुत्र दरीदृश्यते?
उत्तरम्— शिशुपालवधम् ग्रन्थे।
219. प्रश्नः— नारदस्य पितुर्नाम किम्?
उत्तरम्— ब्रह्मा।
220. प्रश्नः— "भवन्ति नापुण्यकृतां मनीषिणः" इति सूक्तौ कस्य वर्णनमस्ति?
उत्तरम्— सज्जनस्य।

221. प्रश्नः— नारदः कस्य संदेशं नीत्वा कृष्णस्य पार्श्वे आगच्छत्?
उत्तरम्— इन्द्रस्य।
222. प्रश्नः— "शिशुपालवधम्" कुतः उद्धृतोऽस्ति?
उत्तरम्— महाभारतस्य सभापर्वणः।
223. प्रश्नः— शिशुपालवधस्य लेखकः कः?
उत्तरम्— घण्टामाघः।
224. प्रश्नः— महाकवि माघः कस्य अनुगामी अस्ति?
उत्तरम्— भारवेः।
225. प्रश्नः— द्वारिकाधीशः कः?
उत्तरम्— श्रीकृष्णः।
226. प्रश्नः— श्रीकृष्णस्य राजप्रासादे कस्य आगमनं भवति?
उत्तरम्— देवर्षिनारदस्य।
227. प्रश्नः— शिशुपालस्योपरि आक्रमणस्य चर्चा केन कृता?
उत्तरम्— बलरामेण।
228. प्रश्नः— उद्धवः कस्याः वार्तायाः विरोधयति?
उत्तरम्— बलरामस्य।
229. प्रश्नः— शिशुपालवधस्य तेजःपुञ्जः कस्मिन् समाहितो भवति?
उत्तरम्— श्रीकृष्णे।
230. प्रश्नः— अनुप्रासस्य योजनायां माघः कस्य सहोदरः?
उत्तरम्— भारवि-महोदयस्य।
231. प्रश्नः— राजसूययज्ञे कस्य अग्रिमा पूजा भवति?
उत्तरम्— कृष्णस्य।

(च) नैषधीयचरितस्य वस्तुनिष्ठप्रश्नोत्तराणि—

232. प्रश्नः— "तव वर्त्मनि वर्ततां शिवं पुनरस्तु त्वरितं समागमः" इतीयं कस्य कवेरुक्तिः?
उत्तरम्— श्रीहर्षस्य।
233. प्रश्नः— "हंससंदेशः" कस्मिन् काव्ये वर्णितोऽस्ति?
उत्तरम्— नैषधीयचरिते।
234. प्रश्नः— श्रीहीरः मामल्लदेवी च कस्य पितरौ आस्ताम्?
उत्तरम्— श्रीहर्षस्य।
235. प्रश्नः— श्रीहर्षेण विरचिताः कियन्तो ग्रन्थाः?
उत्तरम्— (9) नव।
236. प्रश्नः— श्रीहर्षस्य आश्रयदाता कः आसीत्?
उत्तरम्— जयन्तचन्द्रः (जयचन्द्रः)।
237. प्रश्नः— श्रीहर्षस्य मातुलः कः?
उत्तरम्— मम्मटः।

238. प्रश्नः— श्रीहर्षस्य पितुर्नाम किम्?
उत्तरम्— हीरः।

239. प्रश्नः— श्रीहर्षस्य मातुर्नाम किम्?
उत्तरम्— मामल्लदेवी।

240. प्रश्नः— नैषधीचरिते कति सर्गाः सन्ति?
उत्तरम्— द्वाविंशतिः।

241. प्रश्नः— नैषधे नायकनायिके कौ स्तः?
उत्तरम्— दमयन्ती-नलौ।

242. प्रश्नः— दमयन्त्याः पितुः नाम किम्?
उत्तरम्— भीमसेनः।

243. प्रश्नः— नैषधीयचरितस्य उपजीव्यमस्ति?
उत्तरम्— महाभारतम्(नलोपाख्यानम्)।

244. प्रश्नः— नैषधे अङ्गीरसः कः?
उत्तरम्— शृगाररसः।

245. प्रश्नः— विद्वदौषधं किमस्ति?
उत्तरम्— नैषधम्।

246. प्रश्नः— "श्रीहर्षः" कस्याः शताब्द्याः पण्डितः?
उत्तरम्— द्वादश-शताब्द्याः।

247. प्रश्नः— श्रीहर्षः कस्य मतं खण्डितवान्?
उत्तरम्— उदयनाचार्यस्य मतम्।

248. प्रश्नः— उदयनाचार्यः कीदृशो नैयायिकः?
उत्तरम्— द्वैतवादी।

249. प्रश्नः— श्रीहर्षस्य कृतिः कास्ति?
उत्तरम्— नैषधीयचरितम्।

250. प्रश्नः— नैषधीयचरिते कति सर्गाः समुपलभ्यन्ते?
उत्तरम्— (22) द्वाविंशतिः।

251. प्रश्नः— दमयन्तीमभिलक्ष्य नलस्य गुणगानं कः करोति?
उत्तरम्— हंसः।

252. प्रश्नः—"मदेकपुत्रा जननी जरातुरा नवप्रसूतिर्वरटा तपस्विनी" नैषधीयचरिते कस्य सूक्तिः?
उत्तरम्— हंसस्य।

253. प्रश्नः— श्रीहर्षः कस्य वादस्य समर्थकः?
उत्तरम्— अद्वैतवादस्य।

254. प्रश्नः— प्रभाकरवर्धनस्य पुत्रः आसीत्?
उत्तरम्— हर्षवर्धनः।

255. प्रश्नः— प्रभाकरवर्धनस्य भार्या का आसीत्?
उत्तरम्— यशोवती।
256. प्रश्नः— दित्याः पुत्रस्य किं नाम अस्ति?
उत्तरम्— हिरण्यकशिपुः।
257. प्रश्नः— "दयितं जनः खलु गुणीति मन्यते" अयं श्लोकः कुतः उद्धृतः?
उत्तरम्— नैषधीचरितात्।
258. प्रश्नः— हिरण्यकशिपुं कः अमारयत्?
उत्तरम्— विष्णुः।
259. प्रश्नः— हिरण्यकशिपुः पुनर्जन्मनि कस्य अवतारं गृहीतवान्?
उत्तरम्— रावणस्य।
260. प्रश्नः— नैषधीयचरितम् अस्य ग्रन्थस्य गणना कुत्र क्रियते?
उत्तरम्— वृहत्त्रय्याम्।
261. प्रश्नः— नैषधीयचरितम् किमस्ति?
उत्तरम्— महाकाव्यम्।
262. प्रश्नः— नैषधीयचरितम् इत्यस्य रचयिता कविः कः?
उत्तरम्— श्रीहर्षः।
263. प्रश्नः— श्रीहर्षस्य शैली का?
उत्तरम्— वैदर्भी।
264. प्रश्नः— नैषधीयचरितम् अस्मिन् ग्रन्थे प्रयुक्तानि प्रत्येकपदानि कानि?
उत्तरम्— श्लिष्टानि।
265. प्रश्नः— भीमस्य राजधानी कुत्रासीत्?
उत्तरम्— विदर्भः।
266. प्रश्नः— दूत-कार्ये कः कुशलः आसीत्?
उत्तरम्— हंसः।
267. प्रश्नः— नैषधीयचरितम् इत्यस्य नायकः कीदृशो विद्यते?
उत्तरम्— कुलीनः।
268. प्रश्नः— नैषधीयचरितम् इत्यस्य नायिका कीदृशी विद्यते?
उत्तरम्— कुलीना।
269. प्रश्नः— नैषधीयचरिते कविः शिल्पविज्ञानेन सह कस्य विज्ञानस्य वर्णनं कृतवान्?
उत्तरम्— प्राणिविज्ञानस्य।
270. प्रश्नः— नैषधीयचरिते कविः सामुद्रिकशास्त्रेण सह कस्य वर्णनं कृतवान्?
उत्तरम्— तन्त्रशास्त्रस्य।
271. प्रश्नः— नैषधीयचरिते प्रयुक्तं छन्दः किम्?
उत्तरम्— उपजातिः।

272. प्रश्नः— "श्रीहर्षः" कस्य राज्याश्रित आसीत्?
उत्तरम्— जयचन्द्रस्य।
273. प्रश्नः— "कृतमध्यबिलं विलोक्यते" इयं कस्यै नायिकायै कथितः?
उत्तरम्— दमयन्त्यै।

(छ) बुद्धचरितस्य वस्तुनिष्ठप्रश्नोत्तराणि—

274. प्रश्नः— बुद्धचरितस्य लेखकः कः?
उत्तरम्— अश्वघोषः।
275. प्रश्नः— "बुद्धचरितम्" कीदृशं काव्यम्?
उत्तरम्— महाकाव्यम्।
276. प्रश्नः— अश्वघोषस्य बुद्धचरिते कति सर्गाः सन्ति?
उत्तरम्— (28) अष्टाविंशतिः।
277. प्रश्नः— "इक्ष्वाकु" इति शब्देन कः ग्रन्थः प्रारभ्यते?
उत्तरम्— बुद्धचरितम्।
278. प्रश्नः— अश्वघोषस्य मातुः नाम किम्?
उत्तरम्— सुवर्णाक्षी।
279. प्रश्नः— अश्वघोषः कः आसीत्?
उत्तरम्— बौद्धः।
280. प्रश्नः— अश्वघोषः कस्य स्थानस्य निवासी आसीत्?
उत्तरम्— साकेतस्य।
281. प्रश्नः— बुद्धचरितस्य प्रथमसर्गस्य किं नाम?
उत्तरम्— भगवत्प्रसूतिः।
282. प्रश्नः— बुद्धचरिते अन्तःपुरविहारसंज्ञकः सर्गविशेषः कः?
उत्तरम्— द्वितीयः।
283. प्रश्नः— बुद्धचरिते अभिनिष्क्रमणं कस्मिन् सर्गे वर्णितम् अस्ति?
उत्तरम्— पञ्चमे सर्गे।
284. प्रश्नः— महाकविः अश्वघोषः"छन्दकनिवर्तनम्" कस्मिन् सर्गे प्रस्तौति?
उत्तरम्— (06) षष्ठसर्गे।
285. प्रश्नः— बुद्धचरितस्य सप्तमसर्गस्य प्रधानवर्ण्यविषयः कः अस्ति?
उत्तरम्— तपोवनप्रवेशः।
286. प्रश्नः— बुद्धचरितस्य कस्मिन् सर्गे "अन्तःपुरविलापः" वर्णितः?
उत्तरम्— अष्टमे सर्गे।
287. प्रश्नः— बुद्धचरिते "कुमारान्वेषणम्" कस्मिन् सर्गे समुपलभ्यते?
उत्तरम्— नवमे सर्गे।
288. प्रश्नः— बुद्धचरितस्य दशमसर्गस्य वर्ण्यविषयः कः?
उत्तरम्— श्रेण्याभिगमनम्।

289. प्रश्नः— बुद्धचरिते कामविगर्हणसंज्ञकः सर्गः कः?
उत्तरम्— एकादश सर्गः।
290. प्रश्नः— बुद्धचरितस्य कस्मिन् सर्गे "अराडदर्शनः" प्राप्यते?
उत्तरम्— द्वादशे सर्गे।
291. प्रश्नः— बुद्धचरितस्य कस्मिन् सर्गे अन्तःपुरविलापः प्राप्यते?
उत्तरम्— त्रयोदशे सर्गे।
292. प्रश्नः— "बुद्धत्वप्राप्तिः" बुद्धचरितस्य कस्मिन् सर्गे समुपवर्णिता?
उत्तरम्— (14) चतुर्दशे सर्गे।
293. प्रश्नः— बुद्धचरितम् ग्रन्थे किं छन्दः?
उत्तरम्— अनुष्टुप्।
294. प्रश्नः— बुद्धचरितम् इत्यस्य कः प्रमुखरसः?
उत्तरम्— शान्तरसः।

(ज) सौन्दरानन्दस्य वस्तुनिष्ठप्रश्नोत्तराणि—

295. प्रश्नः— सौन्दरानन्द इत्यस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— अश्वघोषः।
296. प्रश्नः— सौन्दरानन्दमहाकाव्ये कति सर्गाः विद्यन्ते?
उत्तरम्— (18) अष्टादश।
297. प्रश्नः— सौन्दरानन्दे कयोः कथा समुवर्णिता?
उत्तरम्— सुन्दरी-नन्दयोः।
298. प्रश्नः— बुद्धस्य नन्दः कीदृशः भ्राता आसीत्?
उत्तरम्— वैमात्रेयः।
299. प्रश्नः— सौदरानंन्दमहाकाव्ये कति सर्गाः सन्ति?
उत्तरम्— (18) अष्टादश।
300. प्रश्नः— अश्वघोषरचिताः मुख्यतः कियन्तो ग्रन्थाः?
उत्तरम्— त्रयो ग्रन्थाः।

(झ) साहित्यदर्पणस्य वस्तुनिष्ठप्रश्नोत्तराणि—

301. प्रश्नः— आचार्यविश्वनाथः कस्य सम्प्रदायस्य आचार्यः?
उत्तरम्— रससम्प्रदायस्य।
302. प्रश्नः— विश्वनाथेन काव्यस्य किं लक्षणं कृतम्?
उत्तरम्— "वाक्यं रसात्मकं काव्यम्"।
303. प्रश्नः— कस्य मते वक्रोक्तिस्तु अलंकार एवास्ति?
उत्तरम्— विश्वनाथमते।
304. प्रश्नः— विश्वनाथमते काव्यशरीरे रसस्य का स्थितिः वर्तते?
उत्तरम्— आत्मरूपा।

305. प्रश्नः— आचार्यविश्वनाथः केनोपाधिना विभूषितः?
उत्तरम्— "कविराज" इत्युपाधिना।
306. प्रश्नः— "रीतिस्तु संघटना-विशेषः" इति कस्येयमुक्तिः?
उत्तरम्— विश्वनाथकविराजस्य।
307. प्रश्नः— साहित्यदर्पणस्य दशपरिच्छेदेषु कयोः विवेचनं प्राप्यते?
उत्तरम्— काव्य-नाट्ययोः।
308. प्रश्नः— साहित्यदर्पणे "रसात्मकं" इति पदस्य विग्रहः अस्ति?
उत्तरम्— रस एव आत्मा यस्य।
309. प्रश्नः— विश्वनाथस्य पितुर्नाम किमासीत्?
उत्तरम्— चन्द्रशेखरः।
310. प्रश्नः— विश्वनाथमते काव्यगुणाः काव्यशरीरे कीदृशः वर्तन्ते?
उत्तरम्— शौर्यादिवत्।
311. प्रश्नः— विश्वनाथस्य सुप्रसिद्धो ग्रन्थः कः?
उत्तरम्— साहित्यदर्पणः।
312. प्रश्नः— विश्वनाथकविराजमते काव्ये अलंकाराः कीदृशो विराजन्ते?
उत्तरम्— कटककुण्डलादिवत्।
313. प्रश्नः— विश्वनाथकविराजः कस्य राज्ञः "सन्धिविग्रहकः" आसीत्?
उत्तरम्— उत्कलस्य राज्ञः।
314. प्रश्नः— विश्वनाथकविराजः काव्ये रीतेः तुलना केन समं करोति?
उत्तरम्— अवयवसंस्थानेन।
315. प्रश्नः— साहित्यदर्पणे कियन्तः परिच्छेदाः सन्ति?
उत्तरम्— (10) दश।
316. प्रश्नः— साहित्यदर्पणे कस्य शैली विलोक्यते?
उत्तरम्— काव्यप्रकाशस्य।
317. प्रश्नः— शब्दस्य मुख्या शक्तिः का?
उत्तरम्— अभिधा।
318. प्रश्नः—मुख्यार्थबाधे सति प्रयोजनवशात् रूढ़िवशाद्वा या वृत्तिः प्रयुज्यते, सा काऽस्ति?
उत्तरम्— लक्षणा।
319. प्रश्नः— "विरतास्वभिधाद्यासु ययार्थो बोध्यते परः" सा का वृत्तिः?
उत्तरम्— व्यञ्जनावृत्तिः।
320. प्रश्नः— आर्थीव्यञ्जनायां हेतुः कोऽस्ति?
उत्तरम्— वक्तृवैशिष्ट्यम्।
321. प्रश्नः— "गंगायां घोषः" इत्यत्र लक्षणामूलाशाब्दीव्यञ्जनया गंगापदात् कोऽर्थः बोध्यः?
उत्तरम्— शैत्यपावनत्वाद्यतिशयः।

322. प्रश्नः— शाब्दीव्यञ्जना कतिविधा?
उत्तरम्— द्विविधा।
323. प्रश्नः— आचार्यविश्वनाथकविराजः लक्षणायाः कति भेदान् स्वीकरोति?
उत्तरम्— (80) अशीतिभेदान्।
324. प्रश्नः— उपादानलक्षणा का अस्ति?
उत्तरम्— अजहत्स्वार्था।
325. प्रश्नः— लक्षणलक्षणा का अस्ति?
उत्तरम्— जहत्स्वार्था।
326. प्रश्नः— "गंगायां घोष" उदाहरणेऽस्मिन् का लक्षणा?
उत्तरम्— प्रयोजनमूला।
327. प्रश्नः— "कुन्ताः प्रविशन्ति" इत्यत्र का लक्षणा?
उत्तरम्— प्रयोजनमूला-उपादानलक्षणा।
328. प्रश्नः—रूढ़ेः प्रयोजनस्य वा अनिवार्यता कुत्र दरीदृश्यते?
उत्तरम्— लक्षणायाम्।
329. प्रश्नः—योग्यताकांक्षासत्तियुक्तः पदोच्चयः कः?
उत्तरम्— वाक्यम्।
330. प्रश्नः—येनोपायेन संकेतितार्थः बोध्यते तत् किमुच्यते?
उत्तरम्— संकेतग्रहसाधनम्।
331. प्रश्नः— शक्तिग्रहं संकेतग्रहसाधनं कतिविधम्?
उत्तरम्—(08) अष्ट।
332. प्रश्नः—"इह सहकारतरौ पिको रौति" इत्यत्र केन शक्तिग्रहोपायेन संकेतग्रहः भवति?
उत्तरम्—सिद्धपदसान्निध्यात्।
333. प्रश्नः— "भू सत्तायाम्" इत्यत्र केन संकेतग्रहसाधनेन भू-धातोः सत्तायां संकेतग्रहः सम्भवति?
उत्तरम्— व्याकरणात्।
334. प्रश्नः— "गोसदृशो गवयः" इत्यत्र केनोपायात् संकेतग्रहः?
उत्तरम्— उपमानात्।
335. प्रश्नः—"गुणे शुक्लादयः पुंसि गुणिलिंगास्तु तद्वति" इत्यत्र संकेतग्रहस्य कः उपायविशेषः प्रयुक्तः?
उत्तरम्— कोशः।
336. प्रश्नः—"यवमयश्चरुर्भवति" इत्यत्र यवशब्दस्य दीर्घसूकविशेषः अर्थः कस्माद् बोध्यते?
उत्तरम्— वाक्यशेषात्।
337. प्रश्नः— "घटोऽस्ति कलशविशेषः" इत्यत्र कस्मादुपायाद् घटे शक्तिग्रहः?
उत्तरम्— विवृतेः।
338. प्रश्नः— साहित्यदर्पणे कविराजविश्वनाथः कति रसान् स्वीकरोति?
उत्तरम्— (09) नव रसान्।

339. प्रश्नः— वेद्यान्तरस्पर्शशून्यः ब्रह्मास्वादसहोदरः कः?
उत्तरम्— रसः।

340. प्रश्नः— अर्वाचीनरसः कः?
उत्तरम्— शान्तः।

341. प्रश्नः— आस्वादांकुरकन्दोऽसौ भावः कः?
उत्तरम्— स्थायिभावः।

342. प्रश्नः— "रतिः" कस्य स्थायिभावः?
उत्तरम्— शृंगारस्य।

343. प्रश्नः— सर्वभावेषु प्रधानः भावः कः?
उत्तरम्— स्थायिभावः।

344. प्रश्नः— मनोऽनुकूलेऽथ मनसः प्रवणायितम् भवति?
उत्तरम्— रतिः।

345. प्रश्नः— "हासः" कस्य स्थायिभावः?
उत्तरम्— हास्यरसस्य।

346. प्रश्नः— वागादिवैकृतैश्चेतो विकासः कथ्यते?
उत्तरम्— हासः।

347. प्रश्नः— करुणरसस्य स्थायिभावः कः?
उत्तरम्— शोकः।

348. प्रश्नः— "क्रोधः" कस्य रसस्य स्थायिभावः?
उत्तरम्— रौद्ररसस्य।

349. प्रश्नः— "उत्साहः" कस्य स्थायिभावः?
उत्तरम्— वीररसस्य।

350. प्रश्नः— भयानकरसस्य स्थायिभावः कः?
उत्तरम्— भयम्।

351. प्रश्नः— "जुगुप्सा" कस्य स्थायिभावः?
उत्तरम्— वीभत्सस्य।

352. प्रश्नः— "विस्मयः" कस्य स्थायिभावः?
उत्तरम्— अद्भुतस्य।

353. प्रश्नः— "शमः" कस्य स्थायिभावः?
उत्तरम्— शान्तस्य।

354. प्रश्नः— क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः रसः कः?
उत्तरम्— रौद्रः।

355. प्रश्नः— उत्साहस्थायिभावकः हेमवर्णः महेन्द्रदैवतः रसः कः?
उत्तरम्— वीरः।

356. प्रश्नः— भयस्थायिभावः कृष्णवर्णः कालाधिदैवतः स्त्रीनीचप्रकृतिः कः?
उत्तरम्— भयानकः।
357. प्रश्नः— जुगुप्सास्थायिभावः नीलवर्णः महाकालदैवतः कः?
उत्तरम्— वीभत्सः।
358. प्रश्नः— विस्मयस्थायिभावो गन्धर्वदैवतः पीतवर्णः कः?
उत्तरम्— अद्भुतः।
359. प्रश्नः— शमस्थायिभावः उत्तमप्रकृतिः कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः कः?
उत्तरम्— शान्तरसः।
360. प्रश्नः— महाकाव्ये कति सर्गाः आवश्यकाः सन्ति?
उत्तरम्— (08) अष्टौ।
361. प्रश्नः— कविराजविश्वनाथप्रणीतस्य साहित्यदर्पणस्य कस्मिन् परिच्छेदे महाकाव्यलक्षणं विद्यते?
उत्तरम्— षष्ठपरिच्छेदे।
362. प्रश्नः— साहित्यदर्पणः केषु विभक्तः?
उत्तरम्— परिच्छेदेषु।
363. प्रश्नः— साहित्ये नायकस्य चत्वारो भेदाः के सन्ति?
उत्तरम्—1. धीरोदात्तः, 2. धीरोद्धतः, 3. धीरललितः, 4. धीरशान्तः।
364. प्रश्नः— साहित्ये कति सम्प्रदायाः सन्ति?
उत्तरम्— (6) षट् सम्प्रदायाः।
365. प्रश्नः— "दोषास्तस्यापकर्षकाः" इति कः उक्तवान्?
उत्तरम्— विश्वनाथः।
366. प्रश्नः— यमके द्वयोः पदयोः प्रयोगः कति वारं भवति?
उत्तरम्— द्विवारम्।
367. प्रश्नः— गंगायां घोषः इत्यस्य कः लक्ष्यार्थः?
उत्तरम्— गंगातटे घोषः।
368. प्रश्नः— "विरतास्वभिधाद्यासु ययार्थो बोध्यते परः" इदं कस्याः वृत्तेः लक्षणम्?
उत्तरम्— व्यञ्जनावृत्तेः।
369. प्रश्नः— "बौद्धव्यवैशिष्ट्य" इत्यस्मिन् आधारिता वृत्तिः का?
उत्तरम्— आर्थी-व्यञ्जना।
370. प्रश्नः— "इष्टनाशादनिष्टापत्तेः" इदं कस्य रसस्य लक्षणम्?
उत्तरम्— करुण-रसस्य।
371. प्रश्नः— आवृत्तेः उच्चारण-समयस्य बोधकयन्त्रं किम्?
उत्तरम्— स्पैक्ट्रोग्राफः।
372. प्रश्नः— वैदिक-संस्कृत-भाषायां कति मूलध्वनयः?
उत्तरम्— (52) द्विपञ्चाशत्।

373. प्रश्नः— "कलिङ्गः साहसिकः" अत्र का लक्षणा?
उत्तरम्— रूढ़िमती-लक्षणा।

374. प्रश्नः— लक्षणायाः कति भेदाः?
उत्तरम्— (80) अशीतिः।

375. प्रश्नः— "अनुभावो विकारस्तु भावसंसूचनात्मकः" कस्य लक्षणम्?
उत्तरम्— अनुभावस्य।

376. प्रश्नः— संचारिभावानां कति संख्या?
उत्तरम्— (33) त्रयस्त्रिंशत्।

377. प्रश्नः— "अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमा" कस्य लक्षणम्?
उत्तरम्— स्थायीभावस्य।

378. प्रश्नः— "कार्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते" कस्य लक्षणम्?
उत्तरम्— वीररसस्य।

379. प्रश्नः— "अकालजलदावली किरतु नाम मुक्तावली" इयं पक्तिः कया सम्बद्धा?
उत्तरम्— अतिशयोक्त्या।

380. प्रश्नः— "प्रस्फुटं सुन्दरं साम्यमुपमेत्यभिधीयते" कस्य लक्षणमिदम्?
उत्तरम्— उपमायाः।

(ञ) रसगङ्गाधरस्य वस्तुनिष्ठप्रश्नोत्तराणि—

381. प्रश्नः— रसगङ्गाधरे अध्यायस्य किं नाम?
उत्तरम्— आननम्।

382. प्रश्नः— पण्डितराजजगन्नाथः कुत्रत्य आसीत्?
उत्तरम्— काश्याः निवासी।

383. प्रश्नः— पण्डितराजजगन्नाथस्य पितुर्नाम किमासीत्?
उत्तरम्— पेरूभट्टः।

384. प्रश्नः— "पण्डितराज" इत्युपाधिना केन राज्ञा जगन्नाथो विभूषितः?
उत्तरम्— दिल्ल्याः बादसाहेन शाहजहाँ महोदयेन।

385. प्रश्नः— पण्डितराजस्य द्वेषिणौ कौ पण्डितौ?
उत्तरम्— भट्टोजिदीक्षित-अप्पयदीक्षितौ।

386. प्रश्नः— जगन्नाथस्य गुरोर्नाम किमस्ति?
उत्तरम्— वीरेश्वरः।

387. प्रश्नः— जगन्नाथेन मनोरमायाः खण्डनं केन नाम्ना कृतम्?
उत्तरम्— "मनोरमाकुचमर्दनी" इति नाम्ना।

388. प्रश्नः— जगन्नाथस्य अलङ्कारशास्त्रपरको ग्रन्थः कः?
उत्तरम्— रसगङ्गाधरः।

389. प्रश्नः— कस्य सम्प्रदायस्य आचार्यः पण्डितराजः?
उत्तरम्— रससम्प्रदायस्य।

390. प्रश्नः— पण्डितराजजगन्नाथस्य कियन्तो ग्रन्थाः?
उत्तरम्— (12) द्वादश।
391. प्रश्नः— जगन्नाथमतेन किन्नाम काव्यम्?
उत्तरम्— "रमणीयार्थप्रतिपादकः शब्दः काव्यम्"।

(ट) काव्यप्रकाशस्य वस्तुनिष्ठप्रश्नोत्तराणि—

392. प्रश्नः— मम्मटस्य किमलङ्कारशास्त्रम्?
उत्तरम्— काव्यप्रकाशः।
393. प्रश्नः— काव्यप्रकाशे कति अंशाः, के च ते?
उत्तरम्— त्रयः—1. कारिका, 2. वृत्तिः, 3. उदाहरणञ्च।
394. प्रश्नः— काव्यप्रकाशे कियन्त उल्लासाः?
उत्तरम्— (10) दश।
395. प्रश्नः— मम्मटस्य उपाधिः अस्ति?
उत्तरम्— राजानकः।
396. प्रश्नः— काव्यप्रकाशस्य प्रथम-उल्लासे किं वर्णितमस्ति?
उत्तरम्—काव्यप्रयोजनम्, काव्यकारणम्, काव्यस्वरूपादिभूमिकाभागः।
397. प्रश्नः— काव्यप्रकाशस्य द्वितीय-उल्लासे किं वर्णितमस्ति?
उत्तरम्—काव्यलक्षणम्।
398. प्रश्नः— अर्थव्यंजकतायाः विमर्शः कस्मिन् उल्लासे वर्तते?
उत्तरम्— तृतीये उल्लासे।
399. प्रश्नः— मम्मटः कस्मिन् उल्लासे ध्वनि-विचारणां प्रस्तौति?
उत्तरम्— चतुर्थे उल्लासे।
400. प्रश्नः— रसस्य विवेचनं कस्मिन् उल्लासे वर्तते?
उत्तरम्— पञ्चमे उल्लासे।
401. प्रश्नः— चित्रकाव्यं कुत्र निरूपितमस्ति?
उत्तरम्— षष्ठे उल्लासे।
402. प्रश्नः— काव्यदोषस्य विवेचनं कस्मिन् उल्लासे वर्तते?
उत्तरम्— सप्तमे उल्लासे।
403. प्रश्नः— गुणालंकार-विभागानां विमर्शः कस्मिन् उल्लासे वर्तते?
उत्तरम्— अष्टमे उल्लासे।
404. प्रश्नः— शब्दालंकारस्य विवेचनं कस्मिन् उल्लासे वर्तते?
उत्तरम्— नवमोल्लासे।
405. प्रश्नः— दशमोल्लासे कस्य वर्णनम् अस्ति?
उत्तरम्— अर्थालङ्कारस्य।
406. प्रश्नः— मम्मटेन काव्यस्य कति प्रयोजनानि परिगणितानि?
उत्तरम्—षट्, काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे।।

407. प्रश्नः— मम्मटस्य कानि प्रयोजनानि कविनिष्ठानि सन्ति?
उत्तरम्—1. यशः, 2. अर्थः, 3. शिवेतरस्य(अशिवस्य) क्षयः।
408. प्रश्नः— सहृदयनिष्ठप्रयोजनानि कानि सन्ति?
उत्तरम्—त्रीणि-1. व्यवहारज्ञानम्, 2. आनन्दानुभूतिः, 3. कान्तासम्मिततया उपदेशः।
409. प्रश्नः— मम्मटः काव्यविभेदस्य आधारं कं स्वीकरोति?
उत्तरम्— व्यंग्यार्थम्।
410. प्रश्नः— मम्मटः काव्यस्य कति भेदान् स्वीकरोति?
उत्तरम्— त्रयो भेदाः—1. उत्तमः, 2. मध्यमः, 3. अधमः।
411. प्रश्नः— शब्दाः कति प्रकारकाः भवन्ति?
उत्तरम्— त्रयः—1. वाचकशब्दः, 2. लाक्षणिकशब्दः, 3. व्यंजकशब्दः।
412. प्रश्नः— मम्मटः अर्थस्य कति प्रकारान् स्वीकरोति?
उत्तरम्— त्रीन्—1. वाच्य-अर्थः, 2. लक्ष्य-अर्थः, 3. व्यंग्य-अर्थः।
413. प्रश्नः— मम्मटेन दोषस्य का परिभाषा प्रदत्ता?
उत्तरम्— मुख्यार्थहतिर्दोषः।
414. प्रश्नः— मम्मटः रसं कं स्वीकरोति?
उत्तरम्— विभावादि द्वारा व्यज्यमानं स्थायीभावम्।
415. प्रश्नः— मम्मटेन रसस्य अंगीधर्मः कः स्वीक्रियते?
उत्तरम्— गुणः।
416. प्रश्नः— कति रसदोषाः सन्ति?
उत्तरम्— (13) त्रयोदश।
417. प्रश्नः— मम्मटेन कति गुणाः मन्यन्ते?
उत्तरम्— त्रयः—1. माधुर्यम्, 2. ओजः, 3. प्रसादः।
418. प्रश्नः— काव्यप्रकाशस्य प्रथमोल्लासस्य किं नाम?
उत्तरम्— काव्यस्वरूपनिरूपणम्।
419. प्रश्नः— काव्यप्रकाशे रसस्य का परिभाषा?
उत्तरम्—"व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः"।
420. प्रश्नः— काव्यप्रकाशे कति अर्थालङ्काराः प्रतिपादिताः सन्ति?
उत्तरम्— 61 एकषष्टिः।
421. प्रश्नः— काव्यप्रकाशे कति परिच्छेदाः विद्यन्ते?
उत्तरम्— (10) दश।
422. प्रश्नः— मम्मटः शब्दस्य कति व्यापारान्/प्रक्रियाः/शक्तीः स्वीकरोति?
उत्तरम्— तिस्रः—1. अभिधा, 2. लक्षणा, 3. व्यंजना चेति।
423. प्रश्नः— "लोकोत्तरवर्णनानिपुणकविकर्म काव्यम्" इति को वदति?
उत्तरम्— मम्मटाचार्यः।

424. प्रश्नः— रसनिष्पत्तिसूत्रं केन प्रतिपादितम्?
उत्तरम्— भरतमुनिना।

425. प्रश्नः— मम्मटः लक्षणां कां क्रियां स्वीकरोति?
उत्तरम्— आरोपिताम्।

426. प्रश्नः— "तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि" कस्येयं काव्यपरिभाषा?
उत्तरम्— मम्मटस्य।

427. प्रश्नः— मम्मटः कस्य भूभागस्य निवासी आसीत्?
उत्तरम्— कश्मीरस्य।

428. प्रश्नः— मम्मटः कस्य मार्गस्य आचार्यः?
उत्तरम्— ध्वनिमार्गस्य।

429. प्रश्नः— मम्मटः केनोपाधिना विभूषितः?
उत्तरम्—"ध्वनि-प्रस्थापन-परमाचार्य" इत्युपाधिना।

430. प्रश्नः— "अन्विताभिधानवादः" इति कस्योक्तिः?
उत्तरम्— मम्मटस्य।

431. प्रश्नः— संकल्पविकल्पात्मिकान्तःकरणवृत्तिः" केन सम्बद्धा?
उत्तरम्— मनसा।

## (ठ) ध्वन्यालोकस्य वस्तुनिष्ठप्रश्नोत्तराणि—

432. प्रश्नः— ध्वन्यालोके कति उद्द्योताः सन्ति?
उत्तरम्— चत्वारः।

433. प्रश्नः— ध्वन्यालोके प्रथमोद्द्योतस्य प्रतिपाद्यः विषयः कः?
उत्तरम्— ध्वनेः काव्यात्मारूपेण प्रतिष्ठापनम्।

434. प्रश्नः— कस्मिन् उद्द्योते काव्य-स्वरूपस्य विचारणा वर्तते?
उत्तरम्— चतुर्थोद्द्योते।

435. प्रश्नः— ध्वन्यालोकस्य आधार-सिद्धान्तः कोऽस्ति?
उत्तरम्— ध्वनिसिद्धान्तः।

436. प्रश्नः— ध्वनि-सिद्धान्तस्य मूलप्रेरणा केन शास्त्रेण प्राप्यते?
उत्तरम्— व्याकरणशास्त्रेण।

437. प्रश्नः— ध्वनि-सिद्धान्तः व्याकरणस्य केन सिद्धान्तेन प्रेरितो भवति?
उत्तरम्— स्फोट-सिद्धान्तेन।

438. प्रश्नः— ध्वनेः आश्रयीभूतशब्द-शक्तिः का अस्ति?
उत्तरम्— व्यंजना-शक्तिः।

439. प्रश्नः— व्यंजना कस्मिन् शास्त्रे मन्यते?
उत्तरम्— काव्यशास्त्रे।

440. प्रश्नः— ध्वन्यालोकस्य मंगलश्लोकः कः?
उत्तरम्— स्वेच्छाकेसरिणः स्वच्छस्वच्छायासितेन्दवः।
त्रायन्तां वो मधुरिपोः प्रपन्नार्तिच्छिदो नखाः।।

441. प्रश्नः— अभिनवे अस्मिन् मंगल-श्लोके कति ध्वनयः स्वीकृतम्?
उत्तरम्— त्रिविधः—1. वस्तुध्वनिः, 2. अलङ्कार-ध्वनिः, 3. रस-ध्वनिः।
442. प्रश्नः— ध्वनेः द्वौ मुख्य-भेदौ कौ स्तः?
उत्तरम्— 1. अविवक्षितवाच्यध्वनिः, 2. विवक्षितान्यपरवाच्यध्वनिः।
443. प्रश्नः— अविवक्षितवाच्यध्वनेः अपरं नाम किमस्ति?
उत्तरम्— लक्षणामूलध्वनिः।
444. प्रश्नः— अविवक्षितवाच्य/लक्षणामूलध्वनेः कति भेदाः सन्ति?
उत्तरम्— द्वे, 1. अर्थान्तरसंक्रमितवाच्यध्वनिः, 2. अत्यन्ततिरस्कृतवाच्यध्वनिः।
445. प्रश्नः— असंलक्ष्यक्रमध्वनिं पदेन कथ्यन्ते?
उत्तरम्— 1. रसः, 2. रसाभासः, 3. भावाभासः, 4. भावोदयः, 5. भावसन्धिः, 6. भाव-शबलता, 7. भावशान्तिः।
446. प्रश्नः— आनन्दवर्धनः ध्वन्यालोकस्य तृतीयोद्द्योते कस्य काव्यस्वरूपस्य उल्लेखं अकरोत्?
उत्तरम्—1. मुक्तकः, 2. सन्दानितकः, 3. विशेषकः, 4. पर्यायबन्धः, 5. परिकथा, 6. खण्डकथा, 7. सकलकथा, 8. सर्गबन्धः, 9. अभिनेयार्थः, 10. आख्यायिका, 11. कथा।
447. प्रश्नः— "काव्यस्यात्मा ध्वनिः" कस्येयं काव्यपरिभाषा?
उत्तरम्— आनन्दवर्धनस्य।
448. प्रश्नः— काव्यालोकः (ध्वन्यालोकः) कस्मिन् विभाजितः अस्ति ?
उत्तरम्— उद्द्योते।
449. प्रश्नः— ध्वन्यालोके अध्यायः कथ्यते?
उत्तरम्— उद्द्योतः।
450. प्रश्नः— ध्वनिसिद्धान्तस्य प्रवर्त्तकः कः?
उत्तरम्— आनन्दवर्धनः।

(ड) ऋतुसंहारम् इत्यस्य वस्तुनिष्ठप्रश्नोत्तराणि—

451. प्रश्नः— ऋतुसंहारम् इति ग्रन्थे कति सर्गाः सन्ति?
उत्तरम्— (6) षट्सर्गाः।
452. प्रश्नः— ऋतुसंहारम् इति ग्रन्थे कति श्लोकाः सन्ति?
उत्तरम्— 144 श्लोकाः।
453. प्रश्नः— ऋतुसंहारे ऋतु-क्रमः कोऽस्ति?
उत्तरम्— ग्रीष्मः, वर्षा, शरद्, हेमन्तः, शिशिरः, वसन्तः।
454. प्रश्नः— ऋतुसंहारे कति सर्गाः सन्ति?
उत्तरम्— (6) षट्।
455. प्रश्नः— ऋतुसंहारे ऋतुवर्णनक्रमे प्रथमर्तुः कः?
उत्तरम्— ग्रीष्मः।
456. प्रश्नः— ऋतुसंहारे ऋतुवर्णनक्रमे अन्तिमः ऋतुः कः?
उत्तरम्— वसन्तः।

457. प्रश्नः— ऋतुसंहारः कस्मिन् काव्येऽन्तर्भवति?
उत्तरम्— खण्ड (गीति) काव्ये।

**(ढ) शतकत्रयस्य वस्तुनिष्ठप्रश्नोत्तराणि—**
**(नीतिशतकम्, शृंगारशतकम्, वैराग्यशतकम्)**

458. प्रश्नः— भर्तृहरिविरचितानि पुस्तकानि कानि सन्ति?
उत्तरम्— त्रीणि, 1. नीतिशतकम्, 2. शृंगारशतकम्, 3. वैराग्यशतकम्।

459. प्रश्नः— भर्तृहरेः प्रेमिकायाः किं नाम?
उत्तरम्— पिङ्गला।

460. प्रश्नः— साहित्य-संगीत-कला-विहीनः पशुः कः कथितवान्?
उत्तरम्— भर्तृहरिः।

461. प्रश्नः— "विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं" श्लोकांशः कुतः उद्धृतः?
उत्तरम्— नीतिशतकम् इति ग्रन्थात्।

462. प्रश्नः— "सत्संगतिः कथम किं न करोति पुंसाम्" इयं सूक्तिः कुतः उद्धृतः?
उत्तरम्— नीतिशतकम् इति ग्रन्थात्।

463. प्रश्नः— "शतकत्रयम्" कस्य रचना अस्ति?
उत्तरम्— भर्तृहरेः।

464. प्रश्नः—"धिक् तां च तं च मदनं च इमां च मां च" पद्यमिदं कस्मिन् शतकग्रन्थे प्राप्यते?
उत्तरम्— नीतिशतके।

465. प्रश्नः— "कालो न यातो वयमेव यातास्तृष्णा न जीर्णा वयमेव जीर्णा" पद्यमिदं कस्मिन् शतके समुपलभ्यते?
उत्तरम्— वैराग्यशतके।

466. प्रश्नः—"साहित्यसंगीतकलाविहीनः, साक्षत्पशुः पुच्छविषाणहीनः" इत्यनेन पद्यांशेन सम्बद्धः ग्रन्थविशेषः कः?
उत्तरम्— नीतिशतकम्।

467. प्रश्नः— "मनस्वी कार्यार्थी गणयति न दुःखम् न च सुखम्" पद्यमिदं भर्तृहरेः कस्मिन् शतके समुपलभ्यते?
उत्तरम्— नीतिशतके।

468. प्रश्नः— "क्षीयन्तेऽखिलभूषणानि सततं" पद्यमिदं कस्मिन् शतकग्रन्थे प्राप्यते?
उत्तरम्— नीतिशतके।

469. प्रश्नः— "सर्वे गुणाः काञ्चनमाश्रयन्ति" इयं सूक्तिः कस्मात् ग्रन्थात् उद्धृता।?
उत्तरम्— नीतिशतकात्।

470. प्रश्नः— "मनस्तु साधुध्वनिभिः पदे पदे, हरन्ति सन्तो मणिनूपुरा इव" इयं सूक्तिः कस्मात् ग्रन्थात् उद्धृता?
उत्तरम्— नीतिशतकात्।

471. प्रश्नः— "न्यायात्पथः प्रविचलन्ति पदं न धीराः" इयं सूक्तिः कस्मात् ग्रन्थात् उद्धृता?
उत्तरम्— नीतिशतकात्।

472. प्रश्नः—"पीत्वा मोहमयीं प्रसादमधुरामुन्मत्तभूतं जगत्" इयं सूक्तिः भर्तृहरेः कस्मात् ग्रन्थात् उद्धृता?
उत्तरम्— वैराग्यशतकात्।

(ण) अन्य-पद्यकाव्यस्य वस्तुनिष्ठप्रश्नोत्तराणि—

473. प्रश्नः— भट्टिकाव्यरचनाकालः कः?
उत्तरम्— 500 ई०
474. प्रश्नः— अद्भुतरसस्य स्थायिभावोऽस्ति?
उत्तरम्— विस्मयः।
475. प्रश्नः— "मृत्युञ्जयः" इत्यस्य गणरूपं किम्?
उत्तरम्— तगणः।
476. प्रश्नः— "काव्यकवि" -अष्टविध इति क उक्तवान्?
उत्तरम्— राजशेखरः।
477. प्रश्नः— कवेः सादृश्यं केन क्रियते?
उत्तरम्— प्रजापतिना।
478. प्रश्नः— वरतन्तुशिष्यः कः आसीत्?
उत्तरम्— कौत्सः।
479. प्रश्नः— "रीतिरात्मा काव्यस्य" इति कः वदति?
उत्तरम्— वामनाचार्यः।
480. प्रश्नः— "वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्" इदं वाक्यं कुत्रास्ति?
उत्तरम्— अग्निपुराणे।
481. प्रश्नः— क्षेमेन्द्रस्य कः सम्प्रदायः?
उत्तरम्— औचित्यसम्प्रदायः।
482. प्रश्नः— वामनाचार्यमते गुणाः कतिविधाः?
उत्तरम्—शब्दार्थभेदेन विंशतिः।
483. प्रश्नः— अनुमितिसम्प्रदायस्य प्रवर्तकोऽस्ति?
उत्तरम्— महिमभट्टः।
484. प्रश्नः— "विभावानुभावव्यभिचारसंयोगाद्रसनिष्पत्तिः" अस्मिन् सूत्रे कयोः पदयोः व्याख्यानानि भिन्नानि प्रवृत्तानि?
उत्तरम्—"संयोगात्-निष्पत्तिः" इत्यनयोः।
485. प्रश्नः— अद्भुतरसस्य स्थायिभावोऽस्ति?
उत्तरम्— विस्मयः।
486. प्रश्नः— "विदुरनीतिः" केन सम्बद्धा?
उत्तरम्— महाभारतेन।
487. प्रश्नः— शमस्थायिभावकः रसः कः?
उत्तरम्— शान्तः।

488. प्रश्नः— स्तोत्रकाव्येषु किं काव्यं प्रसिद्धमस्ति?
उत्तरम्— भामिनीविलासः।
489. प्रश्नः— गीतगोविन्दे कियन्तः सर्गाः सन्ति?
उत्तरम्— (12) द्वादश।
490. प्रश्नः— जयदेवः कस्य राज्याश्रितः?
उत्तरम्— लक्ष्मणसेनस्य।
491. प्रश्नः— गीतगोविन्दे को रसः?
उत्तरम्— भक्ति-रसः।
492. प्रश्नः— गीतगोविन्दस्य नायकः कः?
उत्तरम्— कृष्णः।
493. प्रश्नः—"ललितलवङ्गलतापरिशीलं कोमलमलयसमीरं" इयं कस्मात् ग्रन्थात् सम्बद्धा?
उत्तरम्— गीतगोविन्दात्।
494. प्रश्नः— प्रेयोरसस्य प्रतिपादकः कः?
उत्तरम्— रुद्रटः।
495. प्रश्नः— "निःशेषच्युतचन्दनं स्तनतटं" कस्योदाहरणम्?
उत्तरम्— बौद्धव्यवैशिष्ट्यस्य।
496. प्रश्नः— "सशंखचक्रो हरिः" इति कस्योदाहरणम्?
उत्तरम्— संयोगस्य।
497. प्रश्नः— "एतानि तैलानि हेमन्ते सुखानि" इति कस्य उदाहरणम्?
उत्तरम्— रूढीगौणीसारोपा उपादानलक्षणलक्षणायाः।
498. प्रश्नः— "भीमार्जुनौ" कस्याः शब्दशक्तेः उदाहरणम्?
उत्तरम्— साहचर्यस्य।
499. प्रश्नः— "श्वेतो धावति" कस्याः उदाहरणम्?
उत्तरम्— रूढौ साध्यवसानोपदानलक्षणायाः।
500. प्रश्नः— "अभूताहरणम्" कस्याः उदाहरणमस्ति?
उत्तरम्— गर्भसन्धेः।
501. प्रश्नः— "ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः" कस्य लक्षणम्?
उत्तरम्-- व्यायोगस्य।
502. प्रश्नः— "नातिस्वल्पा नातिदीर्घा सर्गा अष्टाधिका इह" कस्य लक्षणमस्ति?
उत्तरम्— महाकाव्यस्य।
503. प्रश्नः— "अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये" इति काऽस्ति?
उत्तरम्— लक्षणलक्षणा।
504. प्रश्नः— "कुपितो मकरध्वजः" कस्योदाहरणम्?
उत्तरम्— लिङ्गस्य।

505. प्रश्नः— "स्थाणुं वन्दे" इत्यत्र स्थाणुः कोऽस्ति?
उत्तरम्— शिवः।
506. प्रश्नः— "विलासः परिसर्पश्च विधृतं तापनं तथा" इति कस्य लक्षणम्?
उत्तरम्— प्रतिमुखस्य।
507. प्रश्नः— "नो नित्यः पूर्वसंवेदोज्झितः" इति कः?
उत्तरम्— रसः।
508. प्रश्नः— रसस्य स्थायीभावः कुत्र न विद्यते?
उत्तरम्— समभावे।
509. प्रश्नः— वाच्यो लक्ष्यश्च व्यङ्ग्यश्च कस्य भेदाः भवन्ति?
उत्तरम्— अर्थस्य।
510. प्रश्नः— भट्टिकाव्ये कति सर्गाः एवं श्लोकाः सन्ति?
उत्तरम्—द्वाविंशतिः सर्गाः, 3624 श्लोकाः।
511. प्रश्नः— व्याकरणस्य प्रौढिः कृतिः कास्ति?
उत्तरम्— भट्टिकाव्यम्।
512. प्रश्नः— राज्ञः राजवाहनस्य कति मन्त्रिणः आसन्?
उत्तरम्— (3) त्रयः।
513. प्रश्नः— मालवनरेशः कः आसीत्?
उत्तरम्— मानसारः।
514. प्रश्नः— राजहंसस्य पुत्रः आसीत्?
उत्तरम्— राजवाहनः।
515. प्रश्नः— मिथिलानरेशः कः आसीत्?
उत्तरम्— प्रहारवर्मणः।
516. प्रश्नः— राजवाहनस्य परिणयः कया सह जातः?
उत्तरम्— अवन्तिसुन्दर्या।
517. प्रश्नः— अपहारवर्मा उपहारवर्मा च कस्य पुत्रौ आस्ताम्?
उत्तरम्— प्रहारवर्मणः।
518. प्रश्नः— काममंजरी का आसीत्?
उत्तरम्— गणिका।
520. प्रश्नः— प्रबन्धकोशे कति जीवनचरितानि वर्णितानि सन्ति?
उत्तरम्— (24) चतुर्विंशतिः।
521. प्रश्नः—आचार्यराधावल्लभत्रिपाठीमहोदयेन ऐतरेय महीदासस्य सिद्धान्तः कः मन्यते?
उत्तरम्— अनुकीर्तनम्।
522. प्रश्नः— अभिराजयशोभूषणस्य काव्यलक्षणं किम्?
उत्तरम्— लोकोत्तराख्यानं काव्यम्।

523. प्रश्नः— पौराणिकवाङ्मयेपु काव्यशास्त्रीयतत्त्वविवेचकः प्राचीनतमः ग्रन्थः कः?
उत्तरम्— अग्निपुराणम्।
524. प्रश्नः— इन्द्रायुधः कः आसीत्?
उत्तरम्— अश्वः।
525. प्रश्नः— गीतगोविन्दस्य रचयिता कः?
उत्तरम्— जयदेवः।
526. प्रश्नः— हंससन्देशस्य नायिका-नायकौ कौ स्तः?
उत्तरम्— जानकी-रामौ।
527. प्रश्नः— "हंसदूतम्" इत्यस्य ग्रन्थस्य रचनाकारः कः?
उत्तरम्— रूपगोस्वामी।
528. प्रश्नः— हंसदूतम् कस्मिन् छन्दसि निबद्धमस्ति?
उत्तरम्— शिखरिणीछन्दसि।
529. प्रश्नः— हंसदूते दौत्यकर्म सम्पादयन् हंसः कुत्र याति?
उत्तरम्— श्रीकृष्णस्य पार्श्वे।
530. प्रश्नः— गीतगोविन्दाख्ये गीतिकाव्ये कति सर्गाः सन्ति?
उत्तरम्— (12) द्वादश।
531. प्रश्नः—"धीर-समीरे यमुना-तीरे वसति वने वनमाली" गीतिरियं कस्मिन् ग्रन्थे विद्यते?
उत्तरम्— गीतगोविन्दे।
532. प्रश्नः— सुप्रसिद्धः दशावतारस्तोत्रः कुत्र दरीदृश्यते?
उत्तरम्— गीतगोविन्दे।
533. प्रश्नः— गोवर्धनाचार्यः कस्य राज्ञः सभाकविः आसीत्?
उत्तरम्— लक्ष्मणसेनस्य।
534. प्रश्नः— आर्यासप्तशत्याः प्रधानरसः कः?
उत्तरम्— श्रृंगारः।
535. प्रश्नः— "भज गोविन्दं भज गोविन्दं गोविन्दं भज मूढमते" अस्य रचनाकारः कः?
उत्तरम्— शंकराचार्यः।
536. प्रश्नः— संस्कृत-साहित्ये बृहत्तमं महाकाव्यं किमस्ति?
उत्तरम्— हरविजयम्।
537. प्रश्नः— हरविजयमहाकाव्ये कति सर्गाः विद्यन्ते?
उत्तरम्— (50) पञ्चाशत्।
538. प्रश्नः— "राघवपाण्डवीयम्" कस्य महाकवेः कृतिरस्ति?
उत्तरम्— कविराजस्य।
539. प्रश्नः— राघवपाण्डवीये महाकाव्ये कति सर्गाः प्राप्यन्ते?
उत्तरम्— (13) त्रयोदश।

540. प्रश्नः— श्रीकण्ठचरितमहाकाव्ये कति सर्गाः सन्ति?
उत्तरम्— (25) पञ्चविंशतिः।
541. प्रश्नः— "वक्रोक्तिः काव्यजीवितम्" परिभाषेयं कस्य विद्यते?
उत्तरम्— कुन्तकस्य।
542. प्रश्नः—एकवृत्तमयाः पद्याः अवसाने अन्यवृत्तकाः कुत्र भवन्ति?
उत्तरम्— सर्गे।
543. प्रश्नः— कस्मिन् काव्ये "सर्गाः" आख्यानसंज्ञकाः भवन्ति?
उत्तरम्— आर्षकाव्ये।
544. प्रश्नः— साक्षात्सङ्केतितार्थस्य बोधिका शक्तिः का?
उत्तरम्— अभिधा।
545. प्रश्नः— "एको रसः करुण एव निमित्तभेदात्" इति केनोक्तम्?
उत्तरम्— भवभूतिना।
546. प्रश्नः— कवेः कालानुसारिक्रमः कः?
उत्तरम्— भासः, कालिदासः, बाणभट्टः, भवभूतिः।
547. प्रश्नः— अग्रिमा शब्दशक्तिः का?
उत्तरम्— अभिधा।
548. प्रश्नः— शब्दस्य व्यंग्यार्थबोधिका वृत्तिः का?
उत्तरम्— व्यंजना।
549. प्रश्नः— वीररसस्य स्थायिभावः कः?
उत्तरम्— उत्साहः।
550. प्रश्नः— "न धर्मवृद्धेषु वयः समीक्ष्यते" कस्येदं वचनम्?.
उत्तरम्— कालिदासस्य।
551. प्रश्नः— महाकवि दण्डिमहोदयस्य काव्यशास्त्रीयग्रन्थः कः?
उत्तरम्— काव्यादर्शः।
552. प्रश्नः— संस्कृतमहाकाव्येषु सर्वविशालम् महाकाव्यं किमस्ति?
उत्तरम्— हरविजयमहाकाव्यम्।
553. प्रश्नः—हरविजयमहाकाव्ये कियन्ति सर्गाः सन्ति?
उत्तरम्— (50) पञ्चाशत्।
554. प्रश्नः— कस्मिन् पुराणे काव्यशास्त्रं प्राप्यते?
उत्तरम्— अग्निपुराणे।
555. प्रश्नः— आचार्य रेवाप्रसाद द्विवेदी महोदयस्य काव्यशास्त्रीयग्रन्थः कः?
उत्तरम्— अभिनवकाव्यालंकारकारिका!
556. प्रश्नः— "विदग्धमुखमण्डनम्" किमस्ति?
उत्तरम्— काव्यम्।

332. प्रश्नः— शूद्रकविरचितस्य मृच्छकटिकाख्यप्रकरणस्य दशमांकस्य संज्ञा अस्ति?
उत्तरम्— संहारः।
333. प्रश्नः— "न पर्वताग्रे नलिनी प्ररोहति, न गर्दभाः वाजिपुरं वहन्ति" इति सूक्तिसम्बद्धः ग्रन्थविशेषः कः?
उत्तरम्— मृच्छकटिकम्।
334. प्रश्नः— "न भीतो मरणादस्मि केवलं दूषितं यशः" कस्मिन् ग्रन्थेऽस्ति?
उत्तरम्— मृच्छकटिकम्।
335. प्रश्नः— शूद्रककविरचितमिदं "मृच्छकटिकम्" किमिति व्यपदिश्यते?
उत्तरम्— प्रकरणम्।
336. प्रश्नः— चारुदत्तकथामाश्रित्य शूद्रककविरचितमिदं दृश्यकाव्यम्?
उत्तरम्— मृच्छकटिकम्।
337. प्रश्नः— अधस्तनयुग्मानां समीचीनां तालिकां पश्यन्तु?
उत्तरम्—1. भवभूतिः-उत्तररामचरितम्, 2. कालिदासः-अभिज्ञानशाकुन्तलम्, 3. भट्टनारायणः-वेणीसंहारः, 4. भासः-स्वप्नवासवदत्तम्।
338. प्रश्नः— चारुदत्तस्य निवासस्थानं कुत्र आसीत्?
उत्तरम्— उज्जयिनीनगरे।
339. प्रश्नः— नाट्यशास्त्रस्य प्रख्यात-टीका का अस्ति?
उत्तरम्— अभिनवगुप्तस्य अभिनव-भारती।
340. प्रश्नः— अधोनिर्दिष्टान् दृश्यश्रव्य-स्तोत्रादिकाव्यनिर्देशनं पूर्वकं दर्शयत?
उत्तरम्—1. दशकण्ठवधम्-काव्यम्। 2. नलचरित्रम्-नाटकम्। 3. युधिष्ठिरविजयम्-यमककाव्यम्। 4. मेघदूतम्-गीतिकाव्यम्। 5. नैषधीयचरितम्-महाकाव्यम्। 6. सौन्दर्यलहरी-स्तोत्रकाव्यम्। 7. रत्नावली-नाटिका।
341. प्रश्नः— "हृदये गृह्यते नारी" इयं सूक्तिः कस्मात् ग्रन्थात् उद्धृतः?
उत्तरम्— मृच्छकटिकात्।
342. प्रश्नः— शूद्रकः कः आसीत्?
उत्तरम्— राजा।
343. प्रश्नः— मृच्छकटिकम् इति ग्रन्थे कति श्लोकाः विद्यन्ते?
उत्तरम्— 380 श्लोकाः।
344. प्रश्नः— मृच्छकटिकम् इत्यस्य प्रतिनायकः कः?
उत्तरम्— शकारः।
345. प्रश्नः— "सर्वत्रार्जवं शोभने" अनया सूक्त्या सम्बद्धाः रचना का?
उत्तरम्— मृच्छकटिकम्।
346. प्रश्नः— मृच्छकटिकम् नाटके चारुदत्तस्य कः सेवकः द्यूतकरोऽभूत्?
उत्तरम्— संवाहकः।

347. प्रश्नः— चारुदत्तस्य गृहे आभूषणानां चौरः कः?
उत्तरम्— शर्विलकः।
348. प्रश्नः— श्यालकः(शकारः) कां प्राप्तुमिच्छति?
उत्तरम्— वसन्तसेनाम्।
349. प्रश्नः— श्यालकः(शकारः) अन्धरात्रौ वसन्तसेनायाः कैः सह अनुगच्छन्?
उत्तरम्— विट-चिट्याभ्यां सह।
350. प्रश्नः— अन्धरात्रौ वसन्तसेना कस्य गृहे प्रविष्टा?
उत्तरम्— चारुदत्तस्य गृहे।
351. प्रश्नः— द्यूतस्य व्यसनेन त्रस्तः कः बौद्ध-भिक्षुकः अभूत्?
उत्तरम्— संवाहकः।
352. प्रश्नः— वसन्तसेनायाः कः ग्रीवां घोटयति स्म?
उत्तरम्— शकारः।
353. प्रश्नः— राजानं पालकं हत्वा कः राजा अभूत्?
उत्तरम्— आर्यकः।
354. प्रश्नः— चारुदत्तस्य स्थानोपरि कं मृत्युदण्डस्य आज्ञां बभूव?
उत्तरम्— शकारम्।
355. प्रश्नः— मृच्छकटिकम् नाटकस्य प्रारम्भः केन भवति?
उत्तरम्— नान्दीपाठेन।
356. प्रश्नः— मृच्छकटिकम् नाटकस्य अन्तः केन भवति?
उत्तरम्— भरतवाक्येन।
357. प्रश्नः— चारुदत्तः कीदृशः नायकः?
उत्तरम्— धीरप्रशान्तः।
358. प्रश्नः— वसन्तसेनां कः जानाति स्म?
उत्तरम्— संवाहकः।
359. प्रश्नः— शकारस्य प्रणयनिवेदनं का अस्वीकरोतिस्म?
उत्तरम्— वसन्तसेना।
360. प्रश्नः— मृच्छकटिकम् नाटके हत्यायाः आरोपः कस्योपरि सिद्धो भवति?
उत्तरम्— चारुदत्तोपरि।
361. प्रश्नः— मृच्छकटिकम् नाटके शर्विलकस्य प्रेमिका का?
उत्तरम्— मदनिका।
362. प्रश्नः— वसन्तसेनायाः दासी का?
उत्तरम्— मदनिका।
363. प्रश्नः— चारुदत्तं गृहीत्वा श्मशाने के गच्छन्ति?
उत्तरम्— चाण्डालजनाः।

364. प्रश्नः— वसन्तसेनायाः विवाहः केन सह भवति?
उत्तरम्— चारुदत्तेन सह।

(ञ) शारिपुत्रप्रकरणस्य वस्तुनिष्ठप्रश्नोत्तराणि—

365. प्रश्नः— अश्वघोषस्य आश्रयदाता कः आसीत्?
उत्तरम्— सम्राट् कनिष्कः।

366. प्रश्नः— अश्वघोषस्य माता का आसीत्?
उत्तरम्— सुवर्णाक्षी।

367. प्रश्नः— शारिपुत्रम् इति किम्?
उत्तरम्— प्रकरणम्।

368. प्रश्नः— "बालवाल्मीकिः" कः आसीत्?
उत्तरम्— मुरारिः।

369. प्रश्नः— अनर्घराघवस्य उपजीव्यं किम्?
उत्तरम्— रामायणम्।

370. प्रश्नः— राजशेखरविरचितानि नाटकानि कानि सन्ति?
उत्तरम्— बालरामायणम्, बालभारतम्, कर्पूरमंजरी।

371. प्रश्नः— आद्यः नाटककारः कः?
उत्तरम्— भासः।

372. प्रश्नः-- "छन्दहीनो न शब्दोऽस्ति, न छन्दः शब्दवर्जितम्" कस्य उक्तिरियम्?
उत्तरम्— भरतमुनेः।

(ट) मालविकाग्निमित्रस्य वस्तुनिष्ठप्रश्नोत्तराणि—

373. प्रश्नः— मालविकाग्निमित्रम् अस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— कालिदासः।

374. प्रश्नः— मालविकाग्निमित्रम् अस्य ग्रन्थस्य नायकः कः?
उत्तरम्— अग्निमित्रः।

375. प्रश्नः— मालविकाग्निमित्रम् ग्रन्थे मालविकायाः नाट्याचार्यः कः?
उत्तरम्— गणदासः।

376. प्रश्नः— मालविकाग्निमित्रम् इत्यस्य ग्रन्थस्य विदूषकः कः?
उत्तरम्— गौतमः।

377. प्रश्नः— मालविकाग्निमित्रम् इत्यस्य पट्टमहिषी का?
उत्तरम्— धारिणी।

378. प्रश्नः— कालिदासस्य धारिणी इत्यस्याः पुत्रः कः?
उत्तरम्— वसुमित्रः।

379. प्रश्नः— अग्निमित्रस्य द्वितीया भार्या का?
उत्तरम्— इरावती।

380. प्रश्नः—"पुराणमित्येव न साधु सर्वम्, न चापि काव्यं नवमित्यवद्यम्" कुत्र उद्धृतोऽस्ति?
उत्तरम्— मालविकाग्निमित्रात्।

381. प्रश्नः— "मालविकाग्निमित्रम्" अस्मिन् ग्रन्थे कति अङ्काः सन्ति?
उत्तरम्— (5) पञ्चाङ्काः।

382. प्रश्नः— "मालविकाग्निमित्रम्" अस्मिन् ग्रन्थे परिव्राजिकायाः रूपे काऽस्ति?
उत्तरम्— कौशिकी।

383. प्रश्नः— "मालविकाग्निमित्रम्" अस्मिन् ग्रन्थे धारिणी इत्यस्याः कान्या का?
उत्तरम्— वसुलक्ष्मी।

384. प्रश्नः— "श्लिष्टा क्रिया कस्य चिदात्मसंस्था संक्रान्तिरूपस्य विशेषयुक्ता" इयमुक्तिः मालविकाग्निमित्रस्य केन अङ्केन सम्बद्धोऽस्ति?
उत्तरम्— प्रथमाङ्के।

### (ठ) विक्रमोर्वशीयस्य वस्तुनिष्ठप्रश्नोत्तराणि—

385. प्रश्नः— विक्रमोर्वशीयम् अस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— कालिदासः।

386. प्रश्नः— विक्रमोर्वशीयम् अस्य ग्रन्थस्य नायकः कः?
उत्तरम्— पुरुरवा।

387. प्रश्नः— विक्रमोर्वशीयम् ग्रन्थे कति अङ्काः सन्ति?
उत्तरम्— (5) पञ्च।

388. प्रश्नः— विक्रमोर्वशीयम् इत्यस्याः का विधा अस्ति?
उत्तरम्— त्रोटकः।

389. प्रश्नः— विक्रमोर्वशीयम् अस्य ग्रन्थस्य विदूषकः कः?
उत्तरम्— माणवकः।

### (ड) स्वप्नवासवदत्तस्य वस्तुनिष्ठप्रश्नोत्तराणि—

390. प्रश्नः— उदयनस्य (स्वप्नवासवदत्ते) शत्रुः कोऽस्ति?
उत्तरम्— आरुणिः।

391. प्रश्नः— वासवदत्तायाः मातुरभिधानं किमस्ति?
उत्तरम्— अंगारवती।

392. प्रश्नः— "वासवदत्ता" विक्रमबाहोः सिंहलेश्वरस्य का अस्ति?
उत्तरम्— मातुलपुत्री।

393. प्रश्नः— उदयनस्य प्रथमविवाहिता पत्नी का अस्ति?
उत्तरम्— वासवदत्ता।

394. प्रश्नः— वत्सराज-उदयनस्य कञ्चुकी कः?
उत्तरम्— वाभ्रव्यः।

395. प्रश्नः— कौशाम्बीनरेशस्य वत्सराज-उदयनस्य मन्त्री कः?
उत्तरम्— यौगन्धरायणः।
396. प्रश्नः— सिंहलेश्वरस्य विक्रमबाहोः मन्त्री कः?
उत्तरम्— वसुभूतिः।
397. प्रश्नः— वासवदत्तायाः धात्री काऽस्ति?
उत्तरम्— वसुन्धरा।
398. प्रश्नः— घोषवती वीणायाः सम्बन्धः केन सह विद्यते?
उत्तरम्— स्वप्नवासवदत्तेन सह।
399. प्रश्नः— नाटके कति अंकाः भवन्ति?
उत्तरम्— (5-10)
400. प्रश्नः— नाटके एक एव भवेदङ्गी किम्?
उत्तरम्— शृंगारो वीर एव वा।
401. प्रश्नः—रूपकस्य कति भेदाः भवन्ति?
उत्तरम्— (10) दश।
402. प्रश्नः— स्वप्नवासवदत्तस्य नायकः कः?
उत्तरम्— उदयनः।
403. प्रश्नः— स्वप्नवासवदत्तस्य नायिका का?
उत्तरम्— वासवदत्ता।
404. प्रश्नः— वसन्तकयुतं नाटकं किमस्ति?
उत्तरम्— स्वप्नवासवदत्तम्।
405. प्रश्नः— स्वप्नवासवदत्तस्य नाटकस्य स्वप्नांकः कः?
उत्तरम्— पञ्चमः।
406. प्रश्नः— वत्सराज-उदयनस्य मन्त्री कः अस्ति?
उत्तरम्— यौगन्धरायणः।
407. प्रश्नः— "पद्मावती" कस्य पुत्री आसीत्?
उत्तरम्— मगधनरेशस्य।
408. प्रश्नः— "वासवदत्ता" कस्य पुत्री अस्ति?
उत्तरम्— महासेन-प्रद्योतस्य।
409. प्रश्नः—घोषवती वीणा कस्मिन् नाटके प्राप्यते?
उत्तरम्— स्वप्नवासवदत्ते।
410. प्रश्नः— स्वप्नवासवदत्ते नाटके अवन्तिका-वेशधारी का अस्ति?
उत्तरम्— वासवदत्ता।
411. प्रश्नः— महासेन-प्रद्योतस्य कञ्चुकी कः?
उत्तरम्— रैभ्यः।

412. प्रश्नः— "दुःखं न्यासस्य रक्षणम्" इति सूक्तियुतं नाटकं किम्?
उत्तरम्— स्वप्नवासवदत्तम्।
413. प्रश्नः— "भर्तृस्नेहाद् सा विदग्धात्मदग्धा" उक्तिरियं कुत्र प्राप्यते?
उत्तरम्— स्वप्नवासवदत्ते।
414. प्रश्नः— "प्रद्वेषो बहुमानो वा संकल्पादुपजायते" उक्तिरियं कुत्र प्राप्यते?
उत्तरम्— स्वप्नवासवदत्ते।
415. प्रश्नः— स्वप्नवासवदत्तम् इति ग्रन्थे कस्य अभावो विद्यते?
उत्तरम्— नान्देः।
416. प्रश्नः— लावणक-ग्रामः कुत्र प्राप्यते?
उत्तरम्— स्वप्नवासवदत्ते।
417. प्रश्नः— स्वप्नवासवदत्तम् इति ग्रन्थे कति अङ्काः सन्ति?
उत्तरम्— (6) षडङ्काः।

(ढ) अन्य नाटकस्य वस्तुनिष्ठप्रश्नोत्तराणि—

418. प्रश्नः— नाटके "प्रवेशकस्य" प्रयोगः कुत्र भवति?
उत्तरम्— द्वयोः अङ्कयोः मध्ये।
419. प्रश्नः— "मृगनयना" अत्र त्रिलुप्ता-उपमादर्शनाय उपयुक्तविग्रहः कः?
उत्तरम्— मृगस्य नयने इव चञ्चले नयने यस्याः सा "मृगनयना"।
420. प्रश्नः— विक्रमोर्वशीयम् इति ग्रन्थे अङ्कानां संख्या का?
उत्तरम्— (5) पञ्च।
421. प्रश्नः— अनर्घराघव इत्यस्य लेखकः कः?
उत्तरम्— मुरारि।
422. प्रश्नः— अनर्घराघव ग्रन्थे कति अङ्काः सन्ति?
उत्तरम्— (7) सप्त अङ्काः।
423. प्रश्नः— अनर्घराघवस्य सप्तमाङ्के रामस्य अयोध्याप्रत्यावर्तनप्रसङ्गे कस्य अनुकरणं कृतं स्यात्?
उत्तरम्— रघुवंशस्य।
424. प्रश्नः— भासस्य नाटकः कया दृष्ट्या सफलो भवति?
उत्तरम्— कथोपकथन-दृष्ट्या।
425. प्रश्नः-- "प्रतिज्ञायौगन्धरायण" ग्रन्थे कति अङ्काः सन्ति?
उत्तरम्— (4) चत्वारः अङ्काः।
426. प्रश्नः— विद्धशालभञ्जिका" केन रचितः?
उत्तरम्— दिङ्नागेन।
427. प्रश्नः— विद्धशालभंजिकायां कति अङ्काः सन्ति?
उत्तरम्— (4) चत्वारः।

428. प्रश्नः— शास्त्रीय-दृष्ट्या विद्धशालभंजिकायाः का श्रेणी?
उत्तरम्— नाटिका।

## 5. छन्दः-Metre (Prosody)

(ण) छन्दसः वस्तुनिष्ठप्रश्नोत्तराणि—

1. प्रश्नः— उपलभ्यमानेषु प्राचीनच्छन्दोग्रन्थः कः?
उत्तरम्— पिङ्गलच्छन्दश्शास्त्रम्।
2. प्रश्नः— छन्दसः व्युत्पत्तिजन्यार्थः किमस्ति?
उत्तरम्— "छाद्यतेऽनेनेति च्छन्दः" (आवरणम्)।
3. प्रश्नः— वेदपुरुषस्य पादौ कं मन्यते?
उत्तरम्— छन्दः (छन्दः पादौ तु वेदस्य।)
4. प्रश्नः— छन्दोवेदाङ्गस्य आधारग्रन्थः कः?
उत्तरम्— छन्दःसूत्रम्।
5. प्रश्नः— "श्रीकण्ठः" इति कस्य कवेः नाम वर्तते?
उत्तरम्— भवभूतेः।
6. प्रश्नः— वृहती छन्दसि कति अक्षराणि भवन्ति?
उत्तरम्— 36 षट्त्रिंशत्।
7. प्रश्नः— छन्दः सूत्रं कति अध्याये विभक्तः अस्ति?
उत्तरम्— अष्टाध्यायेषु।
8. प्रश्नः— छन्दसः सूत्रे कति सूत्राणि सन्ति?
उत्तरम्— 329 सूत्राणि
9. प्रश्नः— छन्दसः सूत्रे कियत् पर्यन्तं वैदिकछन्दानां विवेचनमस्ति?
उत्तरम्— प्रथमतः चतुर्थाध्यायस्य सप्तमसूत्रपर्यन्तम्।
10. प्रश्नः— वैदिक-छन्दसनां प्रतिपादकसूत्राणि कानि?
उत्तरम्— -119 सूत्राणि।
11. प्रश्नः— पिङ्गलाचार्यद्वारा केषां छान्दसिकाणां उल्लेखः कृतं स्यात्?
उत्तरम्—(8 अष्ट) 1. क्रौएटुकिं, 2. यास्क, 3. ताण्डिक, 4. सैतव, 5. काश्यप, 6. शाक्य, 7. माण्डव्य, 8. रात।
12. प्रश्नः— के के मूलरूपेण छन्दसः प्रवक्ता सन्ति?
उत्तरम्—1. यास्कः, 2. काश्यपः, 3. ताण्डी, 4. माण्डव्यः।
13. प्रश्नः— वैदिकछन्दःविधानानुसारं छन्दसः कति मुख्यभेदाः?
उत्तरम्—त्रयः, 1. गद्यम्, 2. पद्यम्, 3. गीतिछन्दः।
14. प्रश्नः— समस्त-वैदिकछन्दसां का संख्या?
उत्तरम्— (26) षड्विंशतिः।

15. प्रश्नः— प्रसिद्ध "गायत्री छन्दसि" कति अक्षराणि भवन्ति?
उत्तरम्—(24 चतुर्विंशतिः अक्षराणि।)
16. प्रश्नः— कतिपय वैदिक-छन्दसां अक्षरविवरणम्?
उत्तरम्—1. गायत्री(24 अक्षराणि) 2. उष्णिक्(28) 3. अनुष्टुप्(32) 4. बृहती(36) 5. पङ्क्ति(40) 6. त्रिष्टुप् (44), 7. जगती(48)।
17. प्रश्नः— नियत-वर्णव्यवस्थान्विता छन्दं किं कथ्यते?
उत्तरम्— वृत्तम्।
18. प्रश्नः— नियत-मात्रा-व्यवस्थान्विता छन्दं किं कथ्यते?
उत्तरम्— जातिः।
19. प्रश्नः— ऋग्वेदे कतीनां छन्दसां प्रयोगो भवति?
उत्तरम्— (13 त्रयोदश छन्दानाम्)
20. प्रश्नः— ऋग्वेदे त्रयोदशछन्दसां कानि नामानि?
उत्तरम्—1. गायत्री, 2. उष्णिक्, 3. अनुष्टुप्, 4. बृहती, 5. पङ्क्ति, 6. त्रिष्टुप्, 7. जगती, 8. अतिजगती, 9. शक्वरी, 10. अतिशक्वरी, 11. अष्टि, 12. अत्यष्टि, 13. धृति।
21. प्रश्नः—यजुर्वेदे कति छन्दांसि प्रयुक्ताः?
उत्तरम्—(8 अष्ट) 1. अतिधृति, 2. कृति, 3. प्रकृति, 4. आकृति, 5 विकृति, 6. सङ्कृति, 7. अभिकृति, 8. उत्कृति।
22. प्रश्नः— अथर्ववेदे कति छन्दांसि प्रयुक्ताः?
उत्तरम्—(5पञ्च) 1. उक्ता, 2. अत्युक्ता, 3. मध्या, 4. प्रतिष्ठा, 5. सुप्रतिष्ठा।
23. प्रश्नः— "वक्रोक्तिरेव काव्यस्य जीवितमिति" कस्य मतम्?
उत्तरम्— राजानककुन्तकस्य।
24. प्रश्नः— वंशस्थवृत्तस्य प्रत्येकस्मिन् पादे वर्णा भवन्ति?
उत्तरम्— 12 द्वादश।
25. प्रश्नः—यस्मिन् छन्दसि प्रतिचरणं चतुर्दशवर्णाः भवन्ति तत्?
उत्तरम्— वसन्ततिलका।
26. प्रश्नः— "गङ्गावतरणम्" इति कस्य कवेरस्ति?
उत्तरम्— नीलकण्ठदीक्षितस्य।
27. प्रश्नः— कस्मिन् छन्दसि "अष्टमे" तथा "सप्तमे" (वर्णेषु) यतिर्भवति?
उत्तरम्— मालिनी।
28. प्रश्नः— "नगणस्य" उदाहरणं किम्?
उत्तरम्— नभसि।
29. प्रश्नः— "मगणस्य" उदाहरणं दर्शयत?
उत्तरम्— काश्मीरः।
30. प्रश्नः— वेदपुरुषस्य चलनात्मकं कार्यं केन प्रचलति?
उत्तरम्— छन्दोवेदांगेन।

31. प्रश्नः— छन्दोवेदाङ्गस्य आधारग्रन्थः किमस्ति?
उत्तरम्— छन्दःसूत्रम्।
32. प्रश्नः— सात्त्विकभावेषु किं न गण्यते?
उत्तरम्— विभावः।
33. प्रश्नः—यमकानुप्रासयोः समानता अस्ति?
उत्तरम्— द्वयोः वर्णानामावृत्तिर्भवति।
34. प्रश्नः— "गतहिमेरिव चित्रविभावरी" के गणाः अत्र?
उत्तरम्— नगण-भगण-भगण-रगणाः।
35. प्रश्नः— "चित्तस्य नो विस्मयमादधाति" अत्र गणान् निर्दिशत?
उत्तरम्— तगणः तगणः जगणः गुरुद्वयम् च।
36. प्रश्नः— "पुष्पैः शंसत्यादरं त्वत्प्रयत्ने" अत्र गणाः सन्ति?
उत्तरम्— मगणः तगणः तगणः गुरुद्वयम्।
37. प्रश्नः— "नभौ भरौ" इति कस्य छन्दसः गणसूचनम्?
उत्तरम्— द्रुतविलम्बितम्।
38. प्रश्नः— "यमनसभला गः" कस्य छन्दसः गणनिर्देशनमिदम्?
उत्तरम्— शिखरिणी।
39. प्रश्नः— तगण-भगण-जगण-जगण-गुरु-गुरु" एते गणाः कस्मिन् छन्दसि भवन्ति?
उत्तरम्— वसन्ततिलका।
40. प्रश्नः— जगण-तगण-जगण-रगणाः कस्य छन्दसः भवन्ति?
उत्तरम्— वंशस्थम्।
41. प्रश्नः— "त्रिमुनियतियुता" अत्र "त्रिमुनि" इत्यनेन का संख्या?
उत्तरम्— 7+7+7=21
42. प्रश्नः— "सूर्याश्वैः" इत्यस्य का संख्या?
उत्तरम्— 12+7=19।
43. प्रश्नः— "षड्वेदैर्हयैर्हरिणी" अत्र "हरिणी" छन्दसः कति संख्या?
उत्तरम्— 6+4+7=17।
44. प्रश्नः— रसैरुद्रैश्छिन्ना-शिखरिणी छन्दसः कति संख्या?
उत्तरम्— 8+11=19।
45. प्रश्नः— वसुग्रहयति- इत्यत्र यतिसंख्यां निर्दिशत?
उत्तरम्— 8+9=17।
46. प्रश्नः— "छन्द" शब्दस्य यास्कसम्मता व्युत्पत्तिः कास्ति?
उत्तरम्— छन्दांसि छादनात्।
47. प्रश्नः— छन्दोवेदांगस्य प्रतिनिधिग्रन्थः "छन्दसूत्रम्" केन प्रणीतम् अस्ति?
उत्तरम्— पिंगलेन।

48. प्रश्नः— सर्वाधिक-प्रयुक्तः ऋग्वैदिक-गायत्री-छन्दः कति पदा विद्यते?
उत्तरम्— त्रिपदा।
49. प्रश्नः— "अनुष्टुप्" छन्दसि कति अक्षराणि सन्ति?
उत्तरम्— (32) द्वात्रिंशतिः।
50. प्रश्नः— "त्रिष्टुप्" छन्दसि कति अक्षराणि सन्ति?
उत्तरम्— (44) चतुश्चत्वारिंशत्।

## 6. अलङ्कारः

**(त) अलङ्कारस्य वस्तुनिष्ठप्रश्नोत्तराणि—**

1. प्रश्नः— "काव्यालंकारसूत्रम्" कस्य कृतिरस्ति?
उत्तरम्— आचार्यवामनस्य।
2. प्रश्नः— क्षेमेन्द्रस्य कृतिः किमस्ति?
उत्तरम्— कविकण्ठाभरणम्।
3. प्रश्नः— काव्यालंकारसूत्रवृत्तिकारः कः?
उत्तरम्— वामनः।
4. प्रश्नः— "अलंकारसर्वस्वम्" कस्य कृतिरस्ति?
उत्तरम्— रुय्यकस्य।
5. प्रश्नः— "काव्यालंकारः" कस्य कृतिरस्ति?
उत्तरम्— रुद्रटस्य।
6. प्रश्नः— "वाग्भटलंकारः" कस्य कृतिरस्ति?
उत्तरम्— वाग्भटस्य।
7. प्रश्नः— ध्वन्यालोकः किमस्ति?
उत्तरम्— अलंकारशास्त्रम्।
8. प्रश्नः— अभिहितान्वयवादस्य प्रवर्त्तकः कः?
उत्तरम्— कुमारिलः।
9. प्रश्नः— "उपमा-उत्प्रेक्षा" अनयोः समानता का?
उत्तरम्— द्वावपि सादृश्यमूलकौ अलङ्कारौ।
10. प्रश्नः— कस्मिन्नलङ्कारे "मिथ्याज्ञानं" भवति?
उत्तरम्— भ्रान्तिमान्।
11. प्रश्नः— "चक्रवालकम्" इत्यस्य कोऽभिप्रायः?
उत्तरम्— क्षुद्रप्रबन्ध इति।
12. प्रश्नः— "त्वन्मुखश्रीकृते नूनं पद्मैर्वैरायते शशी" अत्रालङ्कारः कः?
उत्तरम्— उत्प्रेक्षा।
13. प्रश्नः—"पङ्कजं पश्यतस्तस्य मुखं मे गाहते मनः" इति कस्यालङ्कारस्योदाहरणमिदम्?
उत्तरम्— स्मृतिमतः।

14. प्रश्नः— "नायं सुधांशुः किं तर्हि? व्योमगङ्गासरोरुहम्" अत्र कोऽलङ्कारः?
उत्तरम्— अपह्नुतिः।
15. प्रश्नः— अलंकारसम्प्रदायस्य प्रवर्तकः आचार्यः कः?
उत्तरम्— भामहः।
16. प्रश्नः— भामहस्य काव्यशास्त्रीयग्रन्थविशेषः कः?
उत्तरम्— काव्यालंकारः।
17. प्रश्नः— आचार्य-भामहस्य निवासस्थानं कुत्रास्ति?
उत्तरम्— कश्मीरः।
18. प्रश्नः— काव्यालंकारसूत्रे आचार्यभामहेन वर्णिताः अलंकाराः कति सन्ति?
उत्तरम्— (23) त्रयोविंशतिः।
19. प्रश्नः— रीतिसम्प्रदायस्य प्रवर्तकः आचार्यः कः?
उत्तरम्— वामनः।
20. प्रश्नः— "भावप्रकाशनम्" किम् इदम्?
उत्तरम्— अलङ्कारग्रन्थः।
21. प्रश्नः— वक्रोक्तिसम्प्रदायस्य प्रवर्तकः कः?
उत्तरम्— कुन्तकः।
22. प्रश्नः— काव्यादर्शे कति अलंकाराः विवेचिताः सन्ति?
उत्तरम्— (35) पञ्चत्रिंशत्।
23. प्रश्नः— औचित्यसम्प्रदायस्य प्रवर्तकः आचार्यः कः?
उत्तरम्— क्षेमेन्द्रः।
24. प्रश्नः— "औचित्यविचारचर्चा" कस्य कृतिरस्ति?
उत्तरम्— क्षेमेन्द्रस्य।
25. प्रश्नः— वक्रोक्तेः समस्तालङ्कारमूलत्वम् इति केन प्रतिपादितम्?
उत्तरम्— भामहेन।
26. प्रश्नः— ध्वनिसम्प्रदायस्य प्रवर्तकः आचार्यः कः?
उत्तरम्— आनन्दवर्धनः।
27. प्रश्नः— आचार्यवरस्य आनन्दवर्धनस्य उपाधिः किम्?
उत्तरम्— राजानकः।
28. प्रश्नः— अलङ्कारशास्त्रस्य समस्तसिद्धान्तानां सूत्रात्मकः ग्रन्थोऽस्ति?
उत्तरम्— काव्यालङ्कारसूत्रम्।
29. प्रश्नः— करुणरसस्य वर्णः कः?
उत्तरम्— कपोतः।
30. प्रश्नः— "यत्र कारणं विना कार्योत्पत्तिर्भवति" तत्र कोऽलङ्कारः?
उत्तरम्— विभावना।

31. प्रश्नः— वीररसस्य स्थायिभावः कः?
उत्तरम्— उत्साहः।
32. प्रश्नः— वाच्यार्थप्रतिपादिका शक्तिः का भवति?
उत्तरम्— अभिधा।
33. प्रश्नः— "काव्यं ग्राह्यमलंकारात्" कस्येदं वचनम्?
उत्तरम्— आचार्यवामनस्य।
34. प्रश्नः— वामनस्य दृष्ट्या अलंकारः कः?
उत्तरम्— सौन्दर्यमलङ्कारः।
35. प्रश्नः— वामनस्य "रीतिरात्मा काव्यस्य" इति वचने रीतिः इत्यस्य कोऽर्थः?
उत्तरम्— विशिष्टा पदरचना रीतिः।
36. प्रश्नः— भोजराजः स्व "सरस्वतीकण्ठाभरण"ग्रन्थे कति अलंकाराः वर्णितमस्ति?
उत्तरम्— (72) द्विसप्तति अलंकाराः।
37. प्रश्नः— "शृंगारप्रकाशः" कस्य रचना अस्ति?
उत्तरम्— भोजराजस्य।
38. प्रश्नः— मम्मटः शब्दालंकाराः कति स्वीकरोति?
उत्तरम्—5 षट् अलंकाराः—1. अनुप्रासः, 2. यमकः, 3. वक्रोक्तिः, 4. श्लेषः, 5. चित्रम्, 6. पुनरुक्तवदाभासः।
39. प्रश्नः— मम्मटः उभयालंकाराः कति स्वीकरोति?
उत्तरम्— 1 एकम्।
40. प्रश्नः— मम्मटः अर्थालंकाराः कति स्वीकरोति?
उत्तरम्— (67) सप्तषष्टिः।
41. प्रश्नः— मम्मटेन केषां चित्रालंकाराणां वर्णनं क्रियते?
उत्तरम्—(4 चत्वारः) 1. खड्बन्धः, 2. मुरजबन्धः, 3. पद्मबन्धः, 4. सर्वतोभद्रः।
42. प्रश्नः— काव्यालंकारसंग्रह इत्यस्य लेखकः कः?
उत्तरम्— उद्भटः।
43. प्रश्नः— आचार्यराधावल्लभत्रिपाठिमहोदयेन काव्यात्मा कां मन्यते?
उत्तरम्— अलंकारम्।
44. प्रश्नः— आचार्यराधावल्लभत्रिपाठिमहोदयेन कस्मिन् रूपे अलंकारं मन्यते?
उत्तरम्— "अलं भूषणवारणपर्याप्तिषु"।
45. प्रश्नः— भूषणरूपे अलंकारं केन लोकेन सह सम्बद्धः?
उत्तरम्— आधिभौतिकजगतेन।
46. प्रश्नः— "सिद्धान्तलेशसंग्रहः" इति वेदान्तग्रन्थं क आलङ्कारिकः रचितवान्?
उत्तरम्— अप्पयदीक्षितः।
47. प्रश्नः— वारणरूपे अलंकारं केन लोकेन सह सम्बद्धः?
उत्तरम्— आधिदैविकलोकेन।

48. प्रश्नः— वीभत्सस्य स्थायिभावः किम्?
उत्तरम्— जुगुप्सा।
49. प्रश्नः— जातकालंकारस्य लेखकः कः?
उत्तरम्— गणेशः।
50. प्रश्नः— "निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः" अत्र कः अलंकारः?
उत्तरम्— उपमा अलंकारः।
51. प्रश्नः— काव्यप्रकाशस्य नवमोल्लासस्य किं नाम?
उत्तरम्—शब्दालङ्कारनिर्णयात्मकः।
52. प्रश्नः— "लिम्पतीव तमोऽङ्गानि, वर्षतीवाञ्जनं नभः। असत्पुरुषसेवेव, दृष्टिर्विफलतां गता।।" अस्मिन् श्लोके कः अलंकारः?
उत्तरम्— उत्प्रेक्षा अलंकारः।
52. प्रश्नः— "सुरभिं सुरभिं सुमनोहरैः" अत्र कः अलंकारः?
उत्तरम्— "यमक" अलंकारः।
53. प्रश्नः—"प्रतिकूलतामुपगते हि विधौ, विफलत्वमेति बहुसाधनता" अस्मिन् वाक्ये कः अलंकारः?
उत्तरम्— श्लेषालंकार।
54. प्रश्नः—"क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः" इदं उदाहरणं कस्य अलंकारस्य विद्यते?
उत्तरम्— निदर्शना-अलंकारस्य।
55. प्रश्नः— श्लेषस्य कति भेदाः भवन्ति?
उत्तरम्— (2) द्वौ।
56. प्रश्नः—यः उपमा दातुं योग्यं स्यात्, सः कः भवति?
उत्तरम्— उपमेयः।
57. प्रश्नः—यत्र एक-पदे एकाधिकार्थः बोधयति सः कः अलंकारः?
उत्तरम्— श्लेषालंकारः।
58. प्रश्नः—यदा हेतु भविते सति फलाभाव-अभिलक्षितः, तत्र को अलंकारः?
उत्तरम्— विशेषोक्तिः।
59. प्रश्नः— शब्दपरिवृत्ति असहिष्णुत्वं कुत्र प्राप्तो भवति?
उत्तरम्— शब्दालंकारे।
60. प्रश्नः— शब्दशक्तिः कति भवति?
उत्तरम्— (3) तिस्रः।
61. प्रश्नः— विश्वनाथः वक्रोक्तिं कस्मिन् रूपे मन्यते?
उत्तरम्— अलंकाररूपे।
62. प्रश्नः— "तद्रूपकमभेदो य उपमानोपमेययोः" कस्य अलंकारस्य लक्षणम्?
उत्तरम्— रूपकस्य।

63. प्रश्नः— "सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः" कस्य अलंकारस्य लक्षणमिदम्?
उत्तरम्— सन्देहस्य।

64. प्रश्नः— आचार्य उद्भटद्वारा विवेचितानाम् अलंकाराणां का संख्या?
उत्तरम्— (41) एकचत्वारिंशत्।

65. प्रश्नः— अलंकार-सम्प्रदायस्य प्रवर्तकः कः?
उत्तरम्— अग्निपुराणकारः।

66. प्रश्नः— कति सूत्राणि सन्ति "काव्यालंकारसूत्रम्" नामक ग्रन्थे?
उत्तरम्— 319 सूत्राणि।

TOTAL- 1793



# 4
# ज्योतिषम्

**(क) ज्योतिष-शास्त्रस्य परिचयः—**

कालात् प्रसूतमिदं विश्वं काले एव परिवर्द्धितं परिचालितञ्च। कालं विहाय कोऽपि जीवः जगति स्थातुं न शक्नोति। तादृशस्य कालस्य ज्ञानं ज्योतिषशास्त्रं विना न भवितुमर्हति, अतः भास्कराचार्येण ज्योतिषशास्त्रस्य व्याख्यानावसरे "कालतन्त्रं जगुः" इत्थं परिभाषितम्। ज्योतिष-शास्त्रं भारतीय-विद्यायाः महत्त्वपूर्णम् अङ्गमस्ति। "ज्योतिषां सूर्यादिग्रहाणां बोधकं शास्त्रम्" वर्तते। "नभोमण्डले स्थित-ज्योतिः पिण्डसंबद्धाः विद्याः ज्योतिर्विद्याः" इति मन्यते। वेदाङ्गज्योतिषे आचार्य-लगधेनापि उक्तं यत्-वेदाः यज्ञार्थमभिप्रयुक्ताः, यज्ञादयः कालमपेक्षन्ते, कालो ज्योतिषशास्त्रस्य विषयः। अतः कालविधानशास्त्रं ज्योतिषम् इति नाम्ना प्रसिद्धम्। यथा अथर्ववेदे—

> पूर्णः कुम्भोऽधिकालः अहिस्तत् पश्यामो बहुधा नो सन्तः।
> य इमा विश्वानि भुवनानि प्रत्यङ्ककालस्तमाहुः परमे व्योमन्।।

कालज्ञापकमिदं शास्त्रं मयूराणां शिखा, नागानां मणिरिव वेदाङ्गेषु मूर्ध्नि स्थितम्, इति सोमाकरभाष्ये प्रतिपातिम्। यथा—

> यथा शिखा मयूराणां नागानां मणयो यथा।
> तद्वद्वेदाङ्गशास्त्राणां ज्योतिषं मूर्धनि स्थितम्।

(वेदाङ्गज्योतिषम्)

ज्योतिषं ज्ञान(वेद) शरीरस्य नयनं वर्तते। नेत्राभावे शरीरस्य अपूर्णता व्यर्थता च भवति। इदं ज्योतिष-शास्त्रं कालविज्ञापकं शास्त्रम्। मुहूर्त्तं शोधयित्वा क्रियमाणा यज्ञादिक्रिया विशेषाः सत् फलाय कल्पन्ते। अतोऽस्य ज्यौतिषशास्त्रस्य वेदाङ्गत्वं स्वीकृतम्। यथा—

> वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः।
> तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञान्।।

(वेदाङ्गज्योतिषः)

ज्योतिःशास्त्रं तु वेदस्य नेत्रस्थानीयमस्ति, यथोक्तं पाणिनीयशिक्षायां "ज्योतिषामयनं चक्षुः"। ज्योतिषज्ञानं विना अहोरात्र-पक्ष-मास-ऋतु-संवत्सराणां शुभत्वाशुभत्वज्ञानमपि सम्भवं नास्ति।

किम्बहुना यज्ञसम्पादनाय यात्रादिकसम्पादनाय चापि ज्योतिषः आवश्यकता भवत्येव। वैदिकसंहितासु कालविभागः सर्वत्र समुपलभ्यते एव।

## ( ख ) ज्योतिषशास्त्रस्य निर्वचनानि—

1. "सूर्यादिग्रहचारेणाधारीकृत्य निर्मितं शास्त्रं ज्योतिषम्" नृसिंहदैवज्ञः।
2 "ज्योतींषि ग्रहनक्षत्राण्यधिकृत्य कृतो ग्रन्थो ज्योतिषम्" सिद्धान्तशिरोमणिटीकायाम्।
3. "ज्योतिष्=पिण्डानि प्रतिपाद्यन्ते यस्मिन् तत् ज्योतिषमिति" आचार्यमुरलीधरः।
4. "ज्योतींषि ग्रहनक्षत्रादीनधिकृत्य कृतो ग्रन्थो ज्योतिष इति" अमरकोषः।
5. वेद अस्माकं ज्ञानमूलं कर्ममूलञ्च, तत्रोक्तज्ञानादयः यज्ञादयश्च कालाश्रिताः, अतः ज्योतिषशास्त्रं कालविधानशास्त्रम् अस्ति। (आचार्यलगधेन प्रोक्तम्)
6. "यो ज्योतिषं वेत्ति नरः स सम्यक् धर्मार्थकामान् लभते यशश्च" (भास्करेण प्रोक्तं—सि. शिरो.)

## ( ग ) ज्योतिषशास्त्रस्य वैदिकभेदाः—

ज्योतिषवेदाङ्गस्य द्वौ ग्रन्थौ उपलभ्येते। चतुर्णामपि वेदानां पृथक्-पृथक् ज्योतिषशास्त्रमासीत्। यथा—

(1) ऋग्वेदस्य ज्योतिषशास्त्रम्—आर्चज्योतिषम्, षट्त्रिंशत्पद्यात्मकम्।

(2) यजुर्वेदस्य ज्योतिषशास्त्रम्—याजुष-ज्योतिषम्, ऊनचत्वारिंशत् पद्यात्मकम्।

(3) सामवेदस्य ज्योतिषशास्त्रम्—नोपलभ्यते।

(4) अथर्ववेदस्य ज्योतिषशास्त्रम्—आथर्वण ज्योतिषम्, द्विषष्ट्युत्तरशतपद्यात्मकम्।

एतेषां त्रयाणामपि ज्योतिषाणां प्रणेता लगधो नामाचार्यः। तत्र याजुषज्योतिषस्य प्रामाणिकं भाष्यद्वयमपि प्राप्यते। एकं सोमाकरविरचितम्, द्वितीयं सुधाकरद्विवेदीकृतम्। एतस्य ज्योतिषशास्त्रस्य वर्त्मत्रयं वर्तते। तदिदं शास्त्रं त्रिस्कन्धमुच्यते। तदुक्तम्—

सिद्धान्तसंहिताहोरारूपं स्कन्धत्रयात्मकम्।
वेदस्य निर्मलं चक्षुर्ज्योतिश्शास्त्रमकल्मषम्।।

## ( घ ) ज्योतिषशास्त्रस्योत्पत्तिः—

संस्कृतवाङ्मयान्तरस्येव ज्योतिषशास्त्रस्योत्पत्तिरपि ब्रह्मण एवाभूदिति सर्वथा विश्वस्यते। ब्रह्मा हि पितामहोऽस्य जगतः यज्ञसाधननिमित्तं चतुर्भ्यो मुखेभ्यश्चतुर एव वेदान् प्रावोचत्। तेन हि वेदानां यज्ञात्मकत्वम्। ते च यज्ञाः कालाश्रयेणैव सिद्ध्यन्ति इति तत्सिद्ध्यर्थं ब्रह्मा कालावबोधकं ज्योतिषशास्त्रं विनिर्माय नारदाय प्रोवाच। नारदश्च शास्त्रस्यास्य महत्त्वमङ्गीकृत्य लोके प्रवर्तयामासेदम्।

**ज्योतिषशास्त्रप्रवर्त्तकाः अष्टादशाचार्याः—**

सूर्यः पितामहो व्यासो वशिष्ठोऽत्रिः पराशरः।
कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिराः।।

लोमशः पौलिशश्चैव च्यवनो यवनो भृगुः।
शौनकोऽष्टादशश्चैते ज्योतिःशास्त्रप्रवर्त्तकाः।।

(आचार्यकश्यपः, भा. ज्यो.)

**(ङ) ज्योतिषशास्त्रस्य प्रयोजनानि—**

मानवस्य बहुविधकार्यस्य सिद्धिर्जायते। कृषिकर्मणि बीजवपनादारभ्य सस्यकर्त्तनं यावज्ज्योतिषशास्त्रस्य आवश्यकता पदे-पदे अनुभूयते। एवं च ग्रहग्रहणसंक्रान्तियज्ञव्रतोद्वाहादि-क्रियाणां सिद्धिः निर्णयश्च ज्योतिषशास्त्रेणैव सम्भवति। यथा—

ग्रहग्रहणसंक्रान्तिर्यज्ञाध्ययनकर्मणाम् ।
प्रयोजनं व्रतोद्वाहक्रियाणां कालनिर्णयः।।

(ज्योतिषबोधे पं. कमलाकान्तठाकुरः)

नारदेन प्रोक्तं यत् सर्वाः श्रौतस्मार्तक्रियाः ज्योतिषं विना न सिद्ध्यन्ति। यथा—

वेदस्य निर्मलं चक्षुः ज्योतिःशास्त्रमकल्मषम्।
विनैतदखिलं कार्यं श्रौतस्मार्तं न सिद्ध्यति।।

(नारदसंहिता-1/6)

आचार्यभट्टोत्पलेनापि बृहत्संहितायां प्रयोजनावसरे सर्वमपि समुपस्थापितम्। यथा—

सर्वारम्भश्च जगतो लोके च विविधाः क्रियाः।

आर्यभट्ट, वराहमिहिर, भास्कराचार्य, इत्यादिभिः पुरुषप्रणीतग्रन्थैश्च शास्त्रमिदं समृद्धं वर्त्तते। अत्र प्रश्नशकुनजातकताजिकमुहूर्त्तादिविषयकप्रतिपादकाः ग्रन्थाः अस्य शास्त्रस्य पोषका एव।

(1) गणितफलितयोः विज्ञानस्य समन्वयः वर्त्तते।

(2) खगोल-ज्ञानस्य चर्चा वर्त्तते।

धर्म-अर्थ-कामसाधकम् इदं ज्योतिषशास्त्रं नूनं लोके महत्त्वपूर्णमिति। "धर्मार्थकामाः सममेव सेव्या यो ह्येकभक्तः स नरो जघन्यः" इति। धर्मानुरोधेनार्थस्यानुरोधेन कामस्य मोक्षानुरोधेन सर्वेषामुपयोग एवास्य परमः संदेशः। न केवलम् इदं शास्त्रमेव लोकोपकारकम् अपितु ज्योतिषशास्त्रस्य दर्शनम् अपि पापनाशकं भवति। यथा—

दशदिनकृतपापं हन्ति सिद्धान्तवेत्ता, त्रिदिवजनितदोषं तन्त्रविज्ञः स एव।
करणभगणवेत्ता हन्त्यहोरात्रदोषं, जनयति च ह्यघमास्तत्र नक्षत्रसूचीः।।

अर्वाचीनज्योतिर्विज्ञानस्य मतमस्ति यत् ज्योतिषशास्त्रेण लोकोपरि महत् उपकारः कृतः, अङ्कगणित-बीजगणित-रेखागणित-दशमलवादीनामाकारप्रकाराः पाश्चात्यदेशेषु विभिन्नरूपेण अगच्छन्, तेन ज्योतिषशास्त्रम् आयुर्वेदश्च विशेषरूपेण प्रभावितौ बभूवतुः।

**(च) ज्योतिषशास्त्रस्य भेदाः—**

ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितं
तत्कात्स्न्योपनयस्य नाम मुनिभिः सङ्कीर्त्यते संहिता।

स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानस्त्वसौ
होरान्योऽङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः।।

(बृहत्संहिता-919)

गणितं जातकं शाखा यो वेत्ति द्विजपुङ्गवः।
त्रिस्कन्धो विनिर्दिष्टः संहितापारगश्च सः।।

(बृहत्संहिता भट्टोत्पलटीकायाम्)

पञ्चस्कन्धमिदं शास्त्रं होरागणितसंहिताः।
केरलिः शकुनञ्चेति ज्योतिःशास्त्रमुदीरितम्।।

(ज्योतिर्निबन्धावली)

**(1) स्कन्धत्रयं—"होरा, सिद्धान्त, संहिता" वर्त्तते।**

प्राचीनकालतः ज्योतिषशास्त्रे स्कन्धत्रयं भेदमुपस्थापितम् आचार्यैः। वराहमिहिरेणापि स्कन्धत्रयं बहुषु भेदेषु स्वीकृतम्। आचार्यगर्गेणाऽपि गणित-जातक-संहितेति भेदाः गृहीताः। नारदेनाऽपि स्कन्धत्रयं स्वीकृतम्। केषाञ्चिन्मतमिदं यत् ज्योतिषस्य न केवलं त्रय एव स्कन्धाः, अपितु शास्त्रमिदं पञ्चस्कन्धात्मकमपि। तत्र अधिकस्कन्धद्वयं केरलिः शकुनञ्चेति। एतेषां स्कन्धानां विश्लेषणेन इदानीं काले मनोविज्ञानं, जीवविज्ञानं, पदार्थविज्ञानं, रसायनविज्ञानं, चिकित्सा-शास्त्रम् इत्यादयः अस्मिन् स्कन्धत्रये अन्तर्भूताः भवन्ति। आदिकालस्यान्ते ज्योतिषशास्त्रस्य "गणित, सिद्धान्त, फलित" इति त्रयो भेदाः स्वतन्त्र-रूपेण प्रस्फुटिताः संजाताः। ग्रहाणां गति-स्थिति-अयनांश-पातादि गणितज्योतिष-शास्त्रस्य एवंच शुभाशुभ-समयस्य निर्णय-विधायकः यज्ञ-यागादि-कार्यार्थं समयस्य स्थानस्य च निर्धारणं फलित-ज्योतिषशास्त्रस्य च विषयोऽस्ति।

**(2) विराट् स्कन्धपञ्च—**

**"होरा, सिद्धान्त, संहिता, प्रश्न, शकुन" रूपं वर्त्तते।**

विराट्पंचस्कन्धात्मकस्य विवेचनम्-

**(क) होरा (जातकशास्त्रम्)—**

होराशब्दस्य उत्पत्तिः "अहोरात्र" शब्दद्वारा भवति। आदौ अकारस्य अन्ते त्रकारस्य लोपे सति "होरा" इति शब्दः आद्यन्तवर्णलोपाद्धोराभवत्यहोरात्रादिति वराहमिहिरस्य वचनेन सिद्ध्यति। "कललघनाङ्कुरास्थि" इत्यादितः आरम्भ मृत्युपर्यन्तं मानवस्य सर्वाऽपि शुभाशुभकालकलना अत्रोपलभ्यते। इदं होराशास्त्रं प्रतिक्षणं लोकोपकारः करोति। रुग्णजनानां ग्रहचिकित्सामाध्यमेन उपचारः, अरिष्टग्रस्तानाम् अरिष्टशमनोपायः, विविध-अशुभयोगस्य निर्धारणं होराशास्त्रमाध्यमेन क्रियते। अस्मिन् शास्त्रे जन्मकुण्डलीस्थ-द्वादशभावगत-ग्रहाणां स्थितिः, युतिदृष्ट्यादीनां विस्तृतविवेचनं दृश्यते। मानवजीवनस्य सुख-दुःख-इष्ट-अनिष्ट-उन्नति-अवनति-भाग्योदयानां चर्चा अस्मिन् स्कन्धे भवति।

ज्योतिर्विद्भिः होराशास्त्रं पञ्चभेदाः निर्धारयन्ति—1. जातकं, 2. ताजिकं, 3. रमलं, 4. प्रश्नः, 5. स्वप्नश्चेति।

1. जातकम्—सर्वातिशायित्वेन जातकस्यैव प्राधान्याद्यदा कदा होराशास्त्रमेव जातकशब्देनाऽप्यभिधीयते। यत्र तत्र जन्मकालग्रहनक्षत्रतिथिराश्यादीनाधारीकृत्य भूतवर्तमानभाविशुभाऽशुभफलादेशः क्रियते तज्जातकम्। जातकसम्बद्धग्रन्थाश्च बृहज्जातकादयः।

2. ताजिकम्—यथा हि जातकं होराशास्त्रस्य प्रथमो भागस्तथैव ताजिकमस्यापरो भागः। यत्र च गोचरमाधारीकृत्य फलादेशः क्रियते तत्ताजिकम्। ताजिकमित्यपेक्षायामुच्यते ताजिकं नाम वार्षिकादिनानाविधफलादेशफलकशास्त्रमेव। ताजिकग्रन्थाश्च ताजिकनीलकण्ठीप्रभृतयः। यथोक्तं पाराशरशास्त्रे—

आकाशे यानि दृश्यन्ते ज्योतिर्बिम्बान्यनेकशः।
तेषु नक्षत्रसंज्ञानि ग्रहसंज्ञानि कानिचित्।।
तानि नक्षत्रनामानि स्थिरस्थानानि यानि वै।
गच्छन्तो भानि गृह्णन्ति सततं ये तु खेचराः।।

(3/2-4)

सामान्यतस्ताजिकशास्त्रे संज्ञातन्त्रं वर्षतन्त्रं प्रश्नतन्त्रञ्चेति त्रीणि विषयाणि निरूपितानि दृश्यन्ते। समरसिंहप्रणीतो ग्रन्थः "ताजिकतन्त्रसारः" विद्यते। अस्य 1356 शके लिखिता प्रतिलिपिर्लभ्यते।

3. सामुद्रिकशास्त्रम्—सामुद्रिकशास्त्रमपि होराशास्त्रस्य प्रसिद्धमङ्गान्तरम्। समुद्रे प्रोक्तं लक्षणं सामुद्रमिति भट्टोत्पलः। यत्र हि नराणामङ्गादिवशात् फलादेशः क्रियते तत्सामुद्रिकमिति। तत्रोक्तं यज्ज्ञानमिदं श्रीमता सामुद्रेण मुनिना प्रवर्तितं नारदगर्गपराशरादिभिर्व्याख्यातं विस्तारितञ्च।

4. प्रश्नतन्त्रम्—प्रश्नतन्त्रं हि होराशास्त्रस्यापरमङ्गम्। प्रश्नलग्नमाधारीकृत्य फलादेशकशास्त्रमेव प्रश्नशास्त्रमित्युच्यते। वस्तुतस्त्वयं तात्कालिकशास्त्रम्। एकतः प्रश्नतन्त्रं हि जातकशास्त्रे ताजिकशास्त्रे च परिशिष्टरूपेणापि विवेचितं दृश्यतेऽपरतः सन्त्यस्यापि स्वतन्त्रग्रन्था अपि। अस्योत्पत्तिमादाय ताजिकनीलकण्ठ्यामुक्तम्—

दैवज्ञस्य हि दैवेन सदसत्फलवाञ्छया।
अवश्यं गोचरे मर्त्यः सर्वः समुपनीयते।।
अश्रौषीच्च पुरा विष्णोर्ज्ञानाय समुपस्थितः।
वचनं लोकनाथोऽपि ब्रह्मा प्रश्नादिनिर्णयम्।।

अथैतद्विषयस्य कतिपये ग्रन्था अत्र सारतः स्मर्यन्ते। नारदप्रणीत-प्रश्ननारदी, भट्टोत्पलप्रणीत-प्रश्नज्ञानम्, नृसिंहप्रणीत-प्रश्नसारः 1550 शके, 1670 शके परमानन्दपाठकेन प्रणीतः प्रश्नमाणिक्यमाला इति।

5. ग्रहाणां मानवजीवने प्रभावः—"यत् पिण्डे तद् ब्रह्माण्डे" इति सिद्धान्तेन न खलु दार्शनिकपक्षाणामेव सिद्धिर्भवति अपितु ज्योतिर्पिण्डानां ब्रह्माण्डान्तर्गतानां प्रभावानामपि सिद्धिर्भवति। केनापि सत्यमुक्तं यत्—"ग्रहैर्व्याप्तमिदं सर्वं त्रैलोक्यं सचराचरम्"। खस्थानां पिण्डानां भूस्थितजनैः सह सम्बन्धः सहसा न प्रतीतिमायाति परं तयोरविच्छिन्नः सम्बन्धोऽस्त्येव यथार्थतः शास्त्रप्रमाणात्। "यः गतिमान् स ग्रहः" आकाशस्थसमस्तज्योतिर्पिण्डानां प्रभावः अशेषचराचराणामुपरि स्वाभाविक एव।

**(6) भावफलविचार:**—भारतीयज्योतिषशास्त्रस्य फलितविभागे फलादेशार्थम् एका सरणिबद्धा परम्परा विधिश्च वर्तते, यैः न केवलं मानवस्यैवापितु चराचरस्य जगति कीदृशं कदा च किम् फलं भविष्यतीति सर्वं विचार्यते। अत्र मानवजीवनस्य प्रमुखतात्त्विकविषयाः द्वादशभावेषूपनिबद्धाः सन्ति। अयं भावः स्थिररूपेण शास्त्रेऽस्मिन् परिगण्यते, यस्य गणना लग्नात् भवति अर्थात् यस्मिन् लग्ने कोऽपि जातकः जन्म गृह्णाति तदेव प्रथमो भावनाम्ना ख्यातः।




**(ख) सिद्धान्तशास्त्रम्—**

अस्मिन् स्कन्धे गणितसिद्धान्तयोः प्रतिपादनं भवति। खगोलीयज्योतिर्पिण्डानां गति-स्थितिकक्षा-युगादिव्यवस्था-नवविधकालमानानि च इदानीमपि लोकव्यवस्थायाः कृते महत्त्वपूर्णः विद्यते। लोके चमत्कृतिः सूर्य-चन्द्रयोः ग्रहणं, तज्जन्यशुभाशुभनिर्धारणं लोकोपकारकमेव। सूर्योदय-सूर्यास्तयोः परिगणना चराचराणां कृते महदुपकारी दृश्यते। एवंभूतमिदं शास्त्रं खगोलीयपिण्डानां प्रत्येकक्षणस्य वैशिष्ट्यं जगति विशेषेणोपस्थापयति। यथा—

(1) व्यक्त-अव्यक्त-गणितस्य प्रतिपादनम्।

(2) विविध-प्रश्नोत्तरविधिः।

(3) ग्रह-नक्षत्राणां स्थितिः।

(4) तुरीय-नालिकादियन्त्राणां वर्णनम्।

(5) दिग्-देश-काल-ज्ञानस्य उपायाः।

(6) अक्षक्षेत्र-सम्बन्धि-अक्षज्या, लम्बज्या, द्युज्या, कुज्या, तदधृति, समशंकु इत्यादीनां साधनम्।

(7) गणितस्य सिद्धान्तः, तन्त्रः, करणम् इति त्रयो भेदाः सन्ति।

**(छ) सिद्धान्तज्योतिषस्य तात्त्विकसमीक्षणम्—**

**(क) देशान्तरसंस्कार:**—देशयोः अन्तरं देशान्तरमिति। अत्र कयोः देशयोः? इत्यत्र रेखादेशस्वदेशयोः पूर्वापरमन्तरं देशान्तरपदेनाभिधीयते। सीतारामझामहाभागैः कथितं यत्—"भूमौ

तिष्ठति यो यत्र पृष्ठस्थानं तदुच्यते। स्वदेशोऽपि स एवास्य"। कपिलेश्वरः उक्तं यत्—रेखादेशस्वदेशयोः पूर्वापरमन्तरमेव योजनात्मकं देशान्तरम्।

**( ख ) अधिमासः**—अधिको मासः इत्यधिमासः। अर्थात् चैत्रादिद्वादशमासेभ्योऽतिरिक्तत्वात् अधिमासः वक्तव्यः। अस्य अपरो नाम मलमासः। मलमासोऽयं सौरचान्द्रमानयोः विकारः इति। "मलं वदन्ति कालस्य मासं कालविदोऽधिकम्" इति गृहीतम्। त्याज्यकर्माणि—

माङ्गल्यमभिषेकश्च मलमासे विवर्जयेत्।
त्यजेद्दानं महादानं व्रतं देवविलोकनम्।।
वापीकूपतडागादिप्रतिष्ठां यज्ञकर्म च।

**( ग ) क्षयमासविचारः**—क्षयो मास इति अर्थात् यस्मिन् चान्द्रमासे रवेः द्विसंक्रान्तिः जायते स क्षयाख्यः मासः भवतीति, अत्र क्षयाख्यः संज्ञा भवतीति। भास्करेण प्रोक्तम्—

असंक्रान्तिमासोऽधिमासः स्फुटः स्यात्
द्विसंक्रान्तिमासः क्षयाख्यः कदाचित्।
क्षयः कार्तिकादित्रये नान्यतः स्यात्,
तदा वर्षमध्येऽधिमासद्वयञ्च।।

**( घ ) अहर्गणः**—अह्नां गणः अहर्गण इति। सिद्धान्तज्योतिषशास्त्रस्य मूलभूतप्रयोजनानि ग्रहाणां साधनानि एव अस्माकं महर्षयः दिव्यज्ञानेन सततावेक्षणपद्धत्या (वेधेन) च ग्रहाणाम् आनयनं कृतमस्ति।

**( ङ ) मध्यमग्रहः**—मध्यममानेनागतो ग्रहः मध्यमग्रहः। ग्रहाः स्वस्वप्रतिवृत्ते भ्रमन्ति। तत्र गणितेनानीतफलं कक्षावृत्तीयं भवति। एवमत्र मध्यमः ग्रहः कक्षाप्रमाणकालप्रमाणाभ्यां सिध्यति। एवमेव ग्रहाः कन्दुकः इव मध्यममानात् स्पष्टमानं धारयन्ति।

**( च ) मन्दफलम्**—ग्रहप्रभावस्य भूकेन्द्रातिरिक्तकेन्द्रस्य स्थितिः सम्भवात् फलोत्पत्ति-र्भवतीति। गणितागतो मध्यमग्रहो मन्दोच्चेन अपकृष्टो यावदन्तरितो भवति तत् फलं मन्दफलमिति। वस्तुतस्तु ग्रहभ्रमणवृत्तस्य केन्द्रं भूगर्भादन्यत्र भवति। भूस्थो द्रष्टा दृष्ट्युपलब्धं ग्रहं गणितागततुल्यं न पश्यति, तयोरनन्तरमेव मन्दकर्मणि मन्दफलमिति।

**( छ ) शीघ्रफलम्**—ग्रहाणां योजनात्मिका गतिः समाना भवति, तद्-तद् गतिवशात् ग्रहा कल्पे युगे वा पूर्वाभिमुखगत्या भ्रमन्ति, तावदेव कल्पभगणं युगभगणं वा। वस्तुतस्तु अहर्गणा-नुपातेनागतग्रहाः मध्यमाः भवन्ति, तत्र ग्रहाणां स्पष्टीकरणार्थं संस्कारविशेषः ज्योतिर्विद्भिः उक्तमस्ति। तत्तु मन्दफलं शीघ्रफलमेव मुख्यरूपेण प्राप्यते। स्पष्टग्रहाः स्वकक्षायां मध्यमग्रहेभ्यो पृथक् भवन्ति, ते कियत् अन्तरं गृह्णन्ति इति फलमेव शीघ्रफलं मन्दफलं च।

**( ज ) स्पष्टग्रहः**—अस्पष्टाः स्पष्टाः क्रियन्ते, तेन फलसंस्कारेण कर्मणा वा तत् स्पष्टकर्म इति। वस्तुतस्तु मध्यमग्रहाः आकाशे प्रत्यक्षतः दृष्टे सति नोपलभ्यन्ते, अतोऽत्र येन संकारविशेषेण मध्यमग्रहाः दृश्ययोग्याः भवेयुः, तदेव स्पष्टसंस्कारः स्पष्टकर्म वा उच्यते। सर्वेऽपि ग्रहाः स्वस्वकक्षावृत्ते प्रतिक्षणं समागतियोजनैः भ्रमन्ति। परन्त्वत्र भूवासिभिः यदा प्रत्यक्षतः दृश्यन्ते

तदेव गणितस्योपादेयतां सिध्यति। यथा भास्करैः—"भ्रमन्ग्रहस्वप्रतिमण्डले नृभिः स यत्र कक्षावलये विलोक्यते। स्फुटो हि तत्र"।

(झ) चरसंस्कारः—"चर् गतिभक्षणे" धातुत्वात् गत्यर्थे चरशब्दस्य प्रयोगः ज्योतिषशास्त्रे कृतमस्ति। सिद्धान्ते उच्यते यत्—निरक्षक्षितिजस्वक्षितिजयोरन्तरं चरमिति। यथा भास्करः—

उन्मण्डलक्ष्मावलयान्तराले द्युरात्रवृत्ते चरखण्डकालः।
तज्ज्या कुज्या चरशिञ्जिनि स्याद् व्यासार्धवृत्ते परिणामिता सा।।

(ञ) उदयान्तरसंस्कारः—उदयोः अन्तरम् उदयान्तरम् इति, एवमत्रोच्यते यत् मध्यमसावन-स्फुटसावनयोः अन्तरम् उदयान्तरं वा विषुवांश-भुजांशयोः अन्तरम् उदयान्तरम् अथवा रविगतिकलातुल्यासुनाक्षत्रषष्टिघटिका-रविगतिकलोत्पन्नासुनाक्षत्रषष्टिघटिकयोः अन्तरम् उदयान्तरम्।

(ट) पञ्चाङ्गसाधनम्—तिथि-वार-नक्षत्र-योग-करणानां (पञ्चानां) साधनमेव पञ्चाङ्ग-साधनम् उच्यते। तिथ्यादीनामानयनं पञ्चाङ्गकार्योपकारकं विद्यते, यत्र पञ्चाङ्गमाध्यमेन श्रौतस्मार्त्तानां व्रत-पर्व-तिथ्युत्सवादीनां सारल्येन ज्ञानं सम्भवति।

## (ज) संहिताशास्त्रम्

ज्योतिषशास्त्रस्य संहितास्कन्धः सर्वाधिकं लोकोपकारकं वर्तते। ग्रहाणां सामूहिकप्रभावो येन ज्ञायते स संहितास्कन्धः। संहिताशास्त्रोक्ता प्रक्रिया समस्तभूमण्डलस्योपरि सञ्जातग्रहप्रभावस्य मूल्याङ्कनं करोति। सकलेयं भूमिः कृतिकादिनवखण्डानि विभज्य तत्-तद् भूभागस्य तत्-तत् सम्बन्धीनि नक्षत्राणि प्रतिनिधिकारकरूपाणि भवन्ति। तन्नक्षत्राधारेण भूमण्डलस्य स्थितिं ज्ञातुं शक्यते। संहितायाः स्कन्धे भूशोधनं, जलाशयनिर्माणम्, मांगलिक-कार्याणां षोडशसंस्कारमुहूर्तः, उल्कापातः, वृष्टिः, ग्रहाणां उदयास्तफलम्, ग्रहचारस्य फलम्, ग्रहण-फलम् इत्यादीनां निरूपणं विस्तारपूर्वकं क्रियते। जीवनेन सम्बद्धाः सर्वेऽपि शुभाशुभ-लौकिक-विषयाः अस्यान्तर्गताः सन्ति।

## (झ) प्रश्नशास्त्रं निमित्तशास्त्रञ्च

यत्र प्रश्नलग्नमाश्रित्य फलादेशः क्रियते तत्प्रश्नशास्त्रम्। प्रश्नग्रन्थाश्च प्रश्नसारादयः। इदं तत्काल-फलादेशात्मकं शास्त्रमस्ति। यत्र प्रश्नकर्तृणाम् उच्चारित-अक्षरोपरि फलस्य प्रतिपादनं क्रियते। अस्मिन् शास्त्रे- (1) प्रश्नाक्षर-सिद्धान्तः, (2) प्रश्नलग्न-सिद्धान्तः, (3) स्वरविज्ञान-सिद्धान्तः। इति त्रयाणां सन्निवेशो भवति। अस्मिन् शास्त्रे चर्चा, चेष्टा, हाव-भाव इत्यादि माध्यमेन मनोगत-भावानां वैज्ञानिक-दृष्ट्या विश्लेषणं कृत्वा फलादेशः क्रियते।

अस्य शास्त्रस्य विषयसीमायां प्रत्येक-कार्यस्य पूर्वं शुभाशुभयोः ज्ञान-प्राप्तिः मुख्यं लक्ष्यं वर्त्तते। तत्र पशुपक्षिमनुष्यादीनां हाव-भाव-चेष्टादिभिः प्राकृतिक-परिस्थितिवशेन च परीक्षणं शुभाशुभफलज्ञानाय भवति।

**शकुनः (निमित्तशास्त्रम्)—**

अस्य शास्त्रस्य विषयसीमायां प्रत्येक-कार्यस्य पूर्वं शुभाशुभयोः ज्ञान-प्राप्तिः मुख्यं लक्ष्यं वर्त्तते। तत्र पशुपक्षिमनुष्यादीनां हाव-भाव-चेष्टादिभिः प्राकृतिक-परिस्थितिवशेन च परीक्षणं शुभाशुभफलज्ञानाय भवति।

## (ञ) रमलशास्त्रम्

रमलशास्त्रं हि पाशकविद्याऽप्युच्यते। निर्दिष्टकोकेष्वन्यतमस्य स्पर्शे वा वरणे या स्थितिर्घटते तदनुसारेण फलकथनमेव रमलशास्त्रविषयः। यत्र च प्रस्तारद्वारा शुभाशुभफलं कथ्यते तद्रमलशास्त्रम्। अस्य शास्त्रस्य प्रचार-प्रसारस्तु वैदेशिक-संसर्गेण भारते भवति स्म। संस्कृतभाषायां "रमलनवरत्नम्" नाम्नि ग्रन्थे पाशानिर्माणविधिः उपलभ्यते। यथा—

वेदतत्त्वोपरिकृतं रमलशास्त्रं च सूरिभिः।
तेषां भेदाः षोडशैव न्यूनाधिक्यं न जायते।।

अर्थात् अग्नि, वायु, जल, पृथ्वी इति चत्वारि तत्त्वानि रमलशास्त्रस्य विशिष्टता वर्त्तन्ते। इति चतुष्टयतत्त्वाणां षोडश भेदाः कथ्यन्ते। अतः रमलस्य पाशे 16 षोडशाकृतिः कृतम्। संज्ञा-बलाबल-प्रश्नापकरण-प्रश्नकथन-अवधिकथन-मुष्टिकथन-मूकप्रश्न-चौरनामकथन-वर्षपत्रकथनेति नवरत्नानि निरूपितानि सन्ति। इत्थं हि रमलशास्त्रमपि शास्त्रान्तरवत् समृद्धं लोकोपकारि च।

रमलनवरत्नशास्त्रस्य मङ्गलाचरणे—

नत्वा श्रीरमलाचार्यान् परमाद्यसुखाभिधैः। उद्धृतं रमलाम्भोधेर्नवरत्नं सुशोभनम्।।

अर्थात् प्राचीन-रमलाचार्यान् प्रणम्य परमसुखनामकः ग्रन्थकर्ता रमलशास्त्रसमुद्रात् सुन्दरं नवरत्नं निष्कासितवान्। उक्तञ्च स्वग्रन्थे—

यदा मुस्तरी कर्कटे वा कमाने यदाचश्मखोरा जमी वासमाने।
तदा ज्योतिषी क्या कहै क्या पढ़ेगा? हुआ बालका बादशाही करेगा।।

अत्र मुस्तरी (वृहस्पति) कर्कटे (कर्क राशि) कमाने (धनु) चश्मखोर(शुक्र) बोधव्यः।

कवि रहीमः स्व-कवितायाम्—

दृष्ट्वा तत्र विचित्रतां तरुलतां मैं था गया बाग में।
काचित्तत्र कुरङ्गशावनयना गुल तोड़ती थी खड़ी।।

**स्वप्नशास्त्रम्**—सुप्तस्य मनसश्चेष्टा स्वप्नः। स्वप्नमादाय फलादेशकं हि स्वप्नशास्त्रम्। स्वप्नशास्त्रं हि शास्त्रान्तराङ्गत्वेन बहुधा विकसितं दृश्यते स्वतन्त्रशास्त्रम्।

## (ट) ज्योतिषशास्त्रस्य लोकोपकारकत्वम्

प्राचीनभारतवर्षे शास्त्रद्वयमेव बहुविश्रुतम् आसीत्। अनयोः प्रत्यक्षसम्बन्धः लोकेन सह आसीदिति। यत्र आयुर्वेदशास्त्रं मानवस्य शारीरिकव्याधिं मानसिकव्याधिं च दूरीकरणार्थं प्रयतमानः दृश्यतेस्म, तत्रैव ज्योतिःशास्त्रं रोगातिरिक्तमानवस्य सर्वविश्व कल्याणार्थं सर्वासां स्थितीनां घटनानां च शुभाशुभनिर्धारणं करोतिस्म। इमे द्वे शास्त्रे लोकोपकारकदृष्ट्या एव आचार्यप्रवरैः प्रस्थितौ जातौ। ज्योतिषायुर्वेदशास्त्रं प्रायोगिकं शास्त्रं वर्तते, यतो हि अनयोः द्वयोः शास्त्रयोः परिणामं सर्वांशतया लोके प्रभावयति। अतएव प्रोक्तं "ज्योतिर्वैद्यौ निरन्तरौ ज्ञेयौ" इति।

ज्योतिष-शास्त्रस्य विषये प्रसिद्धिः—

अन्यानि शास्त्राणि विनोदमात्रं न किञ्चिदेषा भुवि दृष्टमस्ति।
चिकित्सितं ज्योतिषमन्त्रवादा पदे-पदे प्रत्ययमावहन्ति।।

सत्संस्कारस्य कृते शुभमुहूर्तादि-निर्धारणं पञ्चाङ्गमाध्यमेन तिथ्यादिनिरूपणं, व्रतोत्सवादीनां विधानं धर्मसाधनोपाया इत्यादयः बहवः विषयाः स्वयमेव ज्योतिषशास्त्रस्य लोकोपकारकत्वं प्रस्तौति।

## (ठ) ज्योतिषशास्त्रसम्मतप्रमाणानि

केवलं ज्योतिषशास्त्रमेव प्रत्यक्षशास्त्रमस्ति, अन्यानि शास्त्राणि अप्रत्यक्षाणि सन्ति। अस्मिन् शास्त्रे त्रीणि प्रमाणानि गृहीतानि सन्ति। प्रमाणस्य विवेचना ज्योतिषपरम्परायाः पाश्चात्य-ग्रन्थकारः कमलाकरभट्टमहोदयेन कृतमस्ति। सिद्धान्ततत्त्वविवेके उक्तं—"प्रत्यक्ष-आगम-युक्तिशालि तदिदं शास्त्रम्" अर्थात् ज्योतिषशास्त्रे त्रीणि प्रमाणानि गृहीतानि सन्ति, तत्र 1. प्रत्यक्षः, 2. आगमः, 3. युक्तिः।

**1. प्रत्यक्षप्रमाणम्**—ज्योतिषशास्त्रस्य अपर नाम प्रत्यक्षशास्त्रमपि अस्ति। अन्यानि सर्वाण्यपि शास्त्राणि अप्रत्यक्षाणि सन्ति। ज्योतिषशास्त्रे सूर्योदयः पञ्चवादने आयाति, परन्तु प्रत्यक्षदृष्टे सत्यपि यदि पञ्चवादने सूर्योदयः परिलक्ष्यते तदैव तस्य गणनाया महत्त्वमङ्गीक्रियते अस्माभिः। ग्रहाणां स्पष्टीकरणविचारे परममन्दफलपरमसिद्धफलसाधने प्रत्यक्षप्रमाणमेव कारणं भवति। आचार्य-आर्यभट्यदारम्भ कमलाकरभट्टं यावत् सर्वैरेकस्वरेण प्रत्यक्षप्रमाणस्य एव सर्वाधिकं ग्रहणं समर्थनं च कृतमिति।

**2. आगमप्रमाणम्**—"आगमम्" अस्य शब्दस्य भावः "आर्षवचनान्येव प्रमाणम्" इति वर्तते। आचार्य वराहमिहिरेण प्रोक्तं यत् ज्योतिशास्त्रम् आगमम् इति। यथा—

ज्योतिषमागमं शास्त्रं विप्रतिपत्तौ नहि योग्यमस्माकम्। (बृहत्संहिता)

ज्योतिषशास्त्रे बहुषु स्थानेषु आगमप्रमाणस्योदाहरणं प्राप्यते। ग्रहादिभगणानाम् आगमप्रमाणमेव मत्वा गणितक्रियां कुर्यादिति विदां मतम्। (सू. सि.) अयनांशचलनावसरे आगमप्रमाणस्यैवोपलब्धिः भवति। भास्कराचार्यस्तु ग्रहाणां मन्दोच्चानां च भगणकथनावसरे वासनाभाष्ये उक्तमस्ति यत्—ग्रहमन्दशीघ्रोच्चपाताः स्वमार्गेषु गच्छन्त एतावतः पर्य्यायान् कल्पे कुर्वन्ति इत्यत्रागम एव प्रमाणम्।

**3. युक्तिप्रमाणम्**—युक्तिप्रमाणं अर्थात् उपपत्तिप्रमाणम्। ज्योतिषशास्त्रे युक्तिप्रमाणस्यैव सर्वाधिकं महत्त्वं विद्वद्भिः स्वीक्रियते। विशेषरूपेण इदं प्रमाणं सिद्धान्तज्योतिषे अङ्गीक्रियते, यतो हि तत्रोक्तग्रह-गति-स्थिति-कक्षा-दिनमानादिव्यवस्था-आदिस्थितयः च उपपत्तिबलेनैव सिद्ध्यन्ति। प्रायशः सर्वेऽपि ग्रन्थकाराः स्व-स्वग्रन्थे अस्यैव प्रमाणस्य वर्णनं प्रदत्तमस्ति। आचार्यकमलाकरस्तु सर्वेष्वपि प्रमाणेषु युक्तियुक्तोपाय एवाङ्गीकृतः, यथोक्तं सिद्धान्ततत्त्वविवेके यत्—

युक्तियुक्तमुपादेयं वचनं बालकादपि।
अन्यत्तृणमिव त्याज्यं ब्राह्मोक्तमपि हि ध्रुवम्।।

## (ड) ज्योतिषमेव विज्ञानम्

ज्योतिषं सूर्यादिग्रहाणां बोधकं शास्त्रमस्ति। आकाशे यान्यपि ज्योतिःपिण्डानि सन्ति तानि सर्वाण्येव ज्योतिष्पदवाच्यानि भवन्ति। तत्राकाशे समेषां ज्योतिःपिण्डानां गणना पृथक्-पृथक् रीत्या ज्योतिषशास्त्रे एकया विशिष्टप्रक्रियया विहिताऽस्ति। न केवलं गतिमान् ग्रह एव स्वकीयं

प्रभावं भूमौ ददति, अपितु नक्षत्राणां विविध उल्कादीनां प्रभावोऽपि भूमौ दृश्यते। वेदेभ्यः निःसृतमिदं शास्त्रं वैदिककालादारभ्य इदानीं यावत् स्वकीयं वैज्ञानिकत्वं विशिष्टत्वं च पदे-पदे स्फुटयति। इदानीं विज्ञानशब्दस्य ग्रहणं Science पदेन क्रियते। Science इत्यस्य कृते आक्सफोर्ड नाम्नि शब्दकोशे वर्णितमस्ति यत्—यस्य ज्ञानस्योत्पत्तिः प्रायोगिकाधारेण भवति एवञ्च एकया सरणिबद्धपरम्परया सह नियतसूत्रवशात् सर्वदा फलैकरूपता स्यात् तदेव विज्ञानम्। एवमत्र मूलं प्रायोगिकमेवोपलभ्यते। वैदिककाले विज्ञानस्य अन्वेषणं क्रियते चेत्तदा तत्राऽपि द्विविधं विज्ञानं प्राप्यते; तच्चायुर्वेदज्योतिर्विज्ञानम्। आयुर्वेदविज्ञानेनात्र मानवस्य चिकित्सासम्बन्धिनः सर्वेऽपि निदानोपचारा विशदीक्रियते तथा ज्योतिर्विज्ञानेन खगोलीयपिण्डानां वर्णनपूर्वकं गृहनिर्माण-आन्तरिक्षोत्पातप्रभृतिविषयाणाम् उपस्थापनं समासेनात्रोपपाद्यते।

1. **वैदिककाले**—किञ्चिदंशात्मकः खगोलविज्ञानम्, वर्षाविज्ञानम्, वास्तुविज्ञानं च।
2. **पौराणिके काले**—अस्मिन् काले विषयस्य बाहुल्यं बहूनां भेदोपभेदानां चर्चा उपलभ्यते। रामायणमहाभारतादावपि बहवो ज्योतिषसम्बद्धप्रसङ्गाः स्मृताः दृश्यन्ते। रामायणे मुहूर्तादि-कमधिकृत्य प्रासङ्गिकं वर्णनं लभ्यते। महाभारतं तु भारतीयपरम्परायाः विश्वकोष एव।
3. **आर्ष काले**—खगोलविज्ञानम्, भौतिकविज्ञानम्, वर्षाविज्ञानम्, वास्तुविज्ञानम्, ऋतुविज्ञानम्, भूगर्भविज्ञानं च। आर्षपरम्पराऽनन्तरं सर्वप्रथमम् आचार्यार्यभट्टेन तृतीयशताब्द्याम् एका विशिष्टा सारणिबद्धा ज्योतिर्विज्ञानस्य परम्परा सिद्धान्तश्च स्वकीयार्यभट्टीयतन्त्रे प्रतिपादितः। वराहमिहिरस्य बृहत्संहितायां बहुविज्ञानरत्नानि प्रतिपादितानि सन्ति, एवं स्कन्धत्रयेषु समाना लेखनी वाराहेण चालिता। अत्र वराहकालीनविज्ञानस्य उल्लेखः क्रियते—
   1. सिद्धान्ते—खगोलविज्ञानम्, गतिविज्ञानम्।
   2. फलिते—फलादेशविज्ञानम्, मनोविज्ञानम्, चिकित्साविज्ञानम्।
   3. संहितायाम्—अन्तरिक्षविज्ञानम्, खगोलविज्ञानम्, वर्षाविज्ञानम्, रत्नविज्ञानम्, वास्तुविज्ञानम्, वाणिज्यविज्ञानम्, सामुद्रिकविज्ञानम्, वृक्षायुर्वेदविज्ञानं च।

## (ढ) ज्योतिषशास्त्रस्य प्रसिद्धाः ग्रन्थाः

| सिद्धान्तस्कन्धे | होरास्कन्धे | संहितास्कन्धे |
|---|---|---|
| सूर्यसिद्धान्तः (आर्षः) | बृहज्जातकम् (वराहमिहिरस्य) | गर्गसंहिता (आर्षः) |
| आर्यभट्टीयम् (आर्यभट्टस्य) | होरारत्नम् (बलभद्रस्य) | वसिष्ठसंहिता (आर्षः) |
| शिष्यधीवृद्धिदतन्त्रम्(लल्लस्य) | जातकपारिजातः(वैद्यनाथस्य) | भृगुसंहिता (आर्षः) |
| पञ्चसिद्धान्तिका(वराहमिहिरस्य) | ताजिकनीलकण्ठी (नीलकण्ठस्य) | कश्यपसंहिता (आर्षः) |
| ब्राह्मस्फुटसिद्धान्तः(ब्रह्मगुप्तस्य) | भावकुतूहलम्(जीवनाथस्य) | नारदसंहिता (आर्षः) |
| श्राजमृगाङ्कम् (भोजस्य) | जातकालङ्कारः(गणेशस्य) | बृहत्संहिता(वराहमिहिरस्य) |
| सिद्धान्तशेखरः(श्रीपतेः) | जातकपद्धतिः(केशवस्य) | लघुपाराशरी (आर्षः) |
| करणप्रकाशः(ब्रह्मदेवस्य) | | सारावली (कल्याण वर्मणः) |

| | | |
|---|---|---|
| भास्वती (शतानन्दस्य) | स्फुटग्रन्थाः | रमलनवरत्नम् (परमसुखस्य) |
| सिद्धान्तशिरोमणिः(भास्करस्य) | 1. गणकतरङ्गिणी(सुधाकरस्य) | मुहूर्तमार्तण्डः(नारायणस्य) |
| सिद्धान्तदर्पणः(नीलकण्ठस्य) | 2. भारतीयज्योतिषम्(शंकरबाल-कृष्णस्य) | मुहूर्तचिन्तामणिः(रामस्य) |
| ग्रहलाघवम्(गणेशदैवज्ञस्य) | 3. भारतीयज्योतिषेतिहासः (गोरक्षप्रसादस्य) | नरपतिजयचर्यास्वरोदयः (नरपतेः) |
| सिद्धान्ततत्त्वविवेकः (कमलाकरस्य) | 4. हिन्दूगणितशास्त्रेतिहासः | |
| लीलावती (फाटीगणिते) भास्करस्य | 5. भारतीयज्योतिषम् (नेमिचन्द्रस्य) | |
| चापीयत्रिकोणगणितम् (वीजगणिते) नीलाम्बर) सरलत्रिकोणमितिः | 6. संस्कृतशास्त्रेतिहासः (बलदेवस्य) | |

## (ण) विशिष्टज्योतिर्विदां सङ्क्षिप्तः परिचयः

अथाऽत्र परिचाय्यन्ते कतिपये विशिष्टाः ज्योतिषाचार्याः। स्नम्भेऽस्मिन् लगधादारभ्य सुधाकरपर्यन्तं ये हि खलु मूलग्रन्थप्रणेतारो वा विशिष्टव्याख्याग्रन्थप्रणेतारस्त एव सादरमुपस्थापिताः।

| ग्रन्थप्रणेता | परिचयः | ग्रन्थः |
|---|---|---|
| 1. लगधाचार्यः | 1410 वर्षमित-शक पूर्वकालः, | वेदाङ्गज्योतिषाख्यः |
| 2. स्फुजिध्वजः | अस्य कालः शकानन्तरं144 वर्षाणि, | यावनहोराशास्त्रम् |
| 3. आर्यभट्टः (प्रथमः) | कुसुमपुर-निवासिनः, कलिगतवर्षे 397 शकाब्दः जन्मः | आर्यभट्टीयं तन्त्रम् |
| 4. वराहमिहिरः | 427 शकवर्षे, कापित्थ आदित्य-दासस्य पुत्रः, | त्रिस्कन्धादि14 ग्रन्थाः |
| 5. पृथुयशा | वराहमिहिरस्य पुत्रः, 490 शाके, काम्पिल्लक-वास्तव्यः | फलितज्यो. टीका |
| 6. कल्याणवर्मा | 500 शके, | सारावली |

क्रमशः .............

| ग्रन्थप्रणेता | परिचयः | ग्रन्थः |
|---|---|---|
| | देवग्राम (व्याघ्र-पल्ली) | |
| 7. लल्लाचार्यः | 525 शाके, शाम्बाख्यस्य पौत्रः, त्रिविक्र-मस्य सुतः | शिष्यधी-रत्नकोष, जातकसार |
| 8. भास्करः (प्रथम) | 530 शाके, | महाभास्करीयं, लघुभास्करीयम् |
| 9. ब्रह्मगुप्तः | 550 शाके, जिष्णुसुतः, | ब्राह्मस्फुटसि०, खण्डखाद्यककरणम् |
| 10. समरसिंह | 600 शाके, | ताजिकतन्त्रसारः |
| 11. पद्मनाभः | 700 शाके, | व्यवहारप्रदीप, बीजगणितम् |
| 12. श्रीधराचार्यः | 725 शाके, | त्रिशतिका, व्यक्तगणितम्, जातकपद्धतिः |
| 14. महावीरः | 775 शाके, | सारसङ्ग्रहः |
| 15. मनुः | 780 शाके, | बृहन्मानसकरणम् |
| 16. बलभद्रः | 800 शाके, | ग्रहगणितादि सप्त-ग्रन्थाः |
| 17. वित्तेश्वरः | 821 शाके, | करणसारः |
| 18. मुञ्जालः | 854 शाके, | लघुमानसम् |
| 19. आर्यभट्टः (द्वितीयः) | 875 शाके, | महासिद्धान्तः |
| 20. पृथुदकः | 880 शाके, | ब्राह्मस्फुटसि०टीका, खण्डखाद्यटीका |
| 21. भट्टोत्पलः | 888 शाके, | बृहज्जा-लघुजातकटीकादि 12 ग्रन्थाः |
| 22. विजयनन्दी | 888 शाके, | करणतिलकम् |
| 23. भानुभट्टः | 900 शाके, | तिलककरणम्, रसायनकरणम् |
| 24. श्रीपतिः | 961 शाके, | सिद्धान्तशेखरः, बीजगणितादि 7 ग्रन्थाः |
| 25. वरुणः | 962 शाके | खण्डनखाद्यटीका, |
| 26. भोजदेवः | 964 शाके | राजमृगाङ्कः, राजमार्तण्डादि 5 ग्रन्थाः |
| 27. दशबलः | 980 शाके | करणकमलमार्तण्डः |
| 28. ब्रह्मदेवः | 1014 शाके | करणप्रकाशः |
| 29. शतानन्दः | 1021 शाके | भास्वतीकरणम् |
| 30. उत्तमः | 1038 शाके | करणोत्तमः |

क्रमशः ..............

| ग्रन्थप्रणेता | परिचयः | ग्रन्थः |
|---|---|---|
| 31. महेश्वरः | 1040 शाके | शेखरः, फलितज्योतिषमादि 5 ग्रन्थाः |
| 32. सोमेश्वरः | 1041 शाके | अभिलपितार्थचिन्तामणिः |
| 33. माधवः | 1060 शाके | सिद्धान्तचूडामणिः |
| 34. विष्णुदेवः | 1075 शाके | बीजगणितम् |
| 35. भास्कराचार्यः | 1082 शाके | सिद्धान्तशिरोमणिः, करणकु0, विवाहपटलः |
| 36. बल्लालसेनः | 1090 शाके | अद्भुतसागरः |
| 37. नरपतिः | 1090 शाके | नरपतिजयचर्या |
| 38. अनन्तदेवः | 1120 शाके | बृहज्जातकटीका, ब्रह्मसिद्धान्तटीका |
| 39. कालिदासदैवज्ञः | 1135 शाके | ज्योतिर्विदाभरणम् |
| 40. केशवार्कः | 1200 शाके | करणकण्ठीरवः, विवाहवृन्दाभरणम् |
| 41. महादेवः | 1238 शाके | ग्रहसिद्धिः |
| 42. महेन्द्रसूरिः | 1260 शाके | यन्त्रराजः |
| 43. महादेवः | 1289 शाके | कामधेनुकरणम् |
| 44. नार्मदः | 1300 शाके | सूर्यसिद्धान्त टीका |
| 45. तेजःसिंह | 1300 शाके | दैवज्ञालङ्कृतिः |
| 46. पद्मनाभः | 1320 शाके | यन्त्ररत्नावली |
| 47. दामोदरः | 1339 शाके | भटतुल्यकरणम् |
| 48. वैद्यनाथः | 1350 शाके | जातकपारिजातः |
| 49. गङ्गाधरः | 1356 शाके | चान्द्रमानतन्त्रम्, लीलावतीटीका |
| 50. मकरन्दः | 1400 शाके | मकरन्दकरणम्, मकरन्दसारिणी |
| 51. शार्ङ्गधरः | 1400 शाके | विवाहपटलः |
| 52. केशवः (द्वितीयः) | 1418 शाके | ग्रहकौतुकम्, मुहूर्ततत्त्वम्, तिथिसिद्धिः आदि 13ग्रन्थाः |
| 53. रामचन्द्रः | 1420 शाके | कल्पद्रुमकरणम् |
| 54. लक्ष्मीदासः | 1422 शाके | गणिततत्त्वचिन्तामणिः |
| 55. ज्ञानराजः | 1425 शाके | बीजगणितम्, सिद्धान्तसुन्दरम्, ज्ञानराजजातकम् |
| 56. गणेशदैवज्ञः | 1442 शाके | ग्रहलाघवम्, श्राद्धविधिः आदि 13 ग्रन्थाः |
| 57. पीताम्बरः | 1444 शाके | विवाहपटलः |
| 58. हरिभट्टः | 1445 शाके | ताजिकसारः |
| 59. शिवदासः | 1446 शाके | ज्योतिर्निबन्धः |
| 60. अनन्तः | 1447 शाके | अनन्तसुधारसः |

क्रमशः .............

| ग्रन्थप्रणेता | परिचयः | ग्रन्थः |
|---|---|---|
| 61. ढुण्ढिराजः | 1460 शाके | जातकाभरणम्, पञ्चाङ्गफलम्, कुण्डलकल्पलतादि 6ग्रन्थाः |
| 62. सूर्यः | 1463 शाके | सूर्यप्रकाशः, बीजगणितम्, ग्रहविनोदादि 14 ग्रन्थाः |
| 63. कञ्चपल्लूः | 1479 शाके | ज्योतिषदर्पणः |
| 64. नृसिंहः | 1480 शाके | मध्यमग्रहसिद्धिः |
| 65. गणेशः | 1480 शाके | ताजिकभूषणपद्धतिः |
| 66. रघुनाथः | 1484, 1487 शाके | सुबोधमञ्जरी, मणिप्रदीपः, |
| 67. कृपारामः | 1490 शाके | सर्वार्थचिन्तामणिः, पञ्चपक्षीटीकादि 7 ग्रन्थाः। |
| 68. नारायणः | 1493 शाके | मुहूर्तमार्तण्डः, |
| 69. दिनकरः | 1500 शाके | खेटकसिद्धिः |
| 70. नृहरिः | 1505 शाके | जातकसारः |
| 71. गङ्गाधरः | 1508 शाके | ग्रहलाघवटीका |
| 72. नीलकण्ठः | 1509 शाके | तोडलरानन्दः, ताजिकनीलकण्ठी, |
| 73. श्रीनाथः | 1512 शाके | ग्रहचिन्तामणिः |
| 74. रामभट्टः | 1522 शाके | रामविनोदकरणम्, मुहूर्तचिन्तामणिः, यन्त्रप्रकाशः |
| 75. मल्लारिः | 1524 शाके | ग्रहलाघवटीका |
| 76. गणेशः | 1525 शाके | जातकालङ्कारः, |
| 77. गोविन्ददैवज्ञः | 1525 शाके | मुहूर्तचिन्तामणिटीका-पीयूषधाराटीका |
| 78. दिवाकरः | 1528 शाके | पद्मजातकम्, मकरन्दविवरणादि 5 ग्रन्थाः, |
| 79. विष्णुः | 1530 शाके | विष्णुकरणम् |
| 80. कृष्णः | 1540 शाके | बीजनवाङ्कुरः, जातकपद्धतिटीका, |
| 81. नारायणः | 1540 शाके | केशवपद्धतिटीका, |
| 82. शिवः | 1540 शाके | मुहूर्तचूडामणिः, अनन्तसुधारसटीका, |
| 83. नागेशः | 1541 शाके | ग्रहप्रबोधः |
| 84. गोविन्दः | 1541 शाके | रसालाटीका-(नीलकण्ठी) |
| 85. विश्वनाथः | 1550 शाके | तजिकनीलकण्ठीटीका, ग्रहनार्थप्रकाशिकादि 19 टीका ग्रन्थाः। |
| 86. मुनीश्वरः | 1550 शाके | सिद्धान्तसार्वभौमः, पाटीसारादि 5 टीका ग्रन्थाः। |
| 87. कमलाकरभट्टः | 1550 शाके | सिद्धान्ततत्त्वविवेकः, |
| 88. माधवः | 1555 शाके | शिशुबोधिनीटीका(नीलकण्ठी) |
| 89. सोमदैवज्ञः | 1559 शाके | पद्धतिभूषणम्, कल्पलता, |

क्रमशः ..............

| ग्रन्थप्रणेता | परिचयः | ग्रन्थः |
|---|---|---|
| 90. रङ्गनाथः | 1560 शाके | सिद्धान्तचूडामणिः, पलभागखण्डनम् इत्यादि 4 ग्रन्थाः। |
| 91. नित्यानन्दः | 1561 शाके | सर्वसिद्धान्तराजः, |
| 92. बालकृष्णः | 1671 शाके | ताजिककौस्तुभः, |
| 93. बलभद्रः | 1564 शाके | होरारत्नम्, हायनरत्नम्, |
| 94. कृष्णः | 1575 शाके | करणकौस्तुभः, तन्त्ररत्नम्, |
| 95. रत्नकण्ठः | 1580 शाके | पञ्चाङ्गकौतुकम् |
| 96. रघुनाथः | 1582 शाके | मुहूर्तमाला |
| 97. विद्दणः | 1582 शाके | वार्षिकतन्त्रम् |
| 98. महादेवः | 1583 शाके | मुहूर्तदीपकः |
| 99. गोविन्दः | 1600 शाके | होराकौस्तुभः, बृहज्जातकटीका, |
| 100. गण्पतिः | 1607 शाके | मुहूर्तगणपतिः |
| 101. चिन्तामणिः | 1607 शाके | रमलचिन्तामणिः |
| 102. जटाधरः | 1626 शाके | फत्तेशाहप्रकाशः, |
| 103. दादाभटः | 1641 शाके | किरणावलीटीका |
| 104. नारायणः | 1660 शाके | होरासारसुधानिधिः, स्वरसागरः, इत्यादि 5 ग्रन्थाः। |
| 105. परमानन्दः | 1660 शाके | प्रश्नमाणिक्यमाला, |
| 106. जगन्नाथः | 1660 शाके | सिद्धान्तसम्राट्, |
| 107. नयनसुखोपाध्यायः | 1660 शाके | कटरः, |
| 108. राघवः | 1662, 1732 शाके | पद्धतिचन्द्रिका, खेटकृतिः, पञ्चाङ्गार्कः, |
| 109. जयरामः | 1667 शाके | रमलामृतम् |
| 110. शङ्करः | 1688 शाके | वैष्णवकरणम् |
| 111. मणिरामः | 1696 शाके | ग्रहगणितचिन्तामणि |
| 112. मूला | 1703 शाके | ब्रह्मसिद्धान्तसारः, |
| 113. मथुरानाथः | 1704 शाके | यन्त्रराजघटनम्, |
| 114. चिन्तामणिदीक्षितः | 1705 शाके | सूर्यसिद्धान्तसारिणी, गोलानन्दः, |
| 115. दिनकरः | 1734 शाके | ग्रहविज्ञानसारिणी, मासप्रवेशसारिणी, लग्नसारिणी-आदि 9 ग्रन्थाः, |
| 116. शिवः | 1737 शाके | तिथिपारिजातः, |
| 117. सुवाजी बापू | 1740 शाके | सिद्धान्तशिरोमणिप्रकाशः |

क्रमशः ..............

1. **परोक्षकृता मन्त्राः**—परोक्षकृताः ऋचः सर्वाभिः नामविभक्तिभिः युज्यन्ते। आख्यातस्य प्रथमपुरुषैश्च युज्यते, यथा—"इन्द्रो दिवः इन्द्र ईशे पृथिव्याः।"
2. **प्रत्यक्षकृताः मन्त्राः**—ये मन्त्राः मध्यमपुरुषेण आख्यातस्य संयुक्ताः भवन्ति ते प्रत्यक्षकृताः इत्युच्यन्ते। यथा—"त्वमिन्द्र बलादधि" "वि न इन्द्र मृधो जहि" "मा चिदन्यत् विशंसत।"
3. **आध्यात्मिकाः मन्त्राः**—आध्यात्मिक्यः ऋचस्ताः भवन्ति, यासु उत्तमपुरुषस्य प्रयोगो भवति। किंच तासु ऋक्षु अहमिति सर्वनाम्नः प्रयोगो भवति। यथा—लवसूक्तस्य "इन्द्रो वैकुण्ठः" इत्यादिका मन्त्राः।

## (ञ) दैवतस्वरूपनिरूपणम्

दैवतस्वरूपनिरूपणे यास्काचार्यः चतुर्णां मतानां विचाराणां वा उल्लेखं करोति, यथा—1. पौरुषविध्यम्, 2. अपौरुषविध्यम्, 3. नित्यमौभयविध्यम्, 4. कर्मार्थात्मोभयविध्यञ्च। स्तुतिप्रकरणे देवतानां बाह्वादीनाम् अंगानां वर्णनं कृतमस्ति। देवता-विषयकं विचारम् उपस्थापयन् यास्काचार्यः निरुक्तकारः आह—तिस्र एव देवता इति नैरुक्ताः। यदेतदुक्तं कर्मपृथक्त्वात् देवानां भेदः इति अनैकान्तिक एष दृष्टान्तः दृश्यते हि अनेके एकस्मिन् कर्मणि कर्मकर्तारो व्यापृता भवन्ति इति। यथा—पृथिव्यां मनुष्यः पशवो, देवाः इति स्थानैकत्वं सम्भोगैकत्वं च दृश्यते। अर्थात् येन प्रकारेण पृथिवी ओषध्युत्पत्तौ स्वकार्यारम्भे पर्जन्यवाय्वादित्यकृतामुपकारम् अपेक्षते। यथोक्तम्—"त्रयः तपन्ति पृथिवीमनूपाः" इति।

## (ट) निरुक्तस्य वस्तुनिष्ठप्रश्नोत्तराणि—

1. प्रश्नः— श्रोत्ररूपेण प्रतिष्ठितं वेदांगं किम्?
   उत्तरम्— निरुक्तम्।
2. प्रश्नः— दुर्गावृत्तिकारेण दुर्गाचार्येण कति निरुक्तकाराः उल्लिखिताः सन्ति?
   उत्तरम्— (12) द्वादश।
3. प्रश्नः— यास्कविरचिते निरुक्ते कति अध्यायाः वर्तन्ते?
   उत्तरम्— (14) चतुर्दशाध्यायाः।
4. प्रश्नः— यास्कमते "उषा" पदस्य निर्वचनं किमस्ति?
   उत्तरम्— उच्छति।
5. प्रश्नः— यास्कमते निशीथादारभ्य सूर्योदयपर्यन्तं कस्य कालः वर्तते?
   उत्तरम्—अश्विनः।
6. प्रश्नः— "ऋतावरी" कस्याः विशेषणम् अस्ति?
   उत्तरम्— उषसः।
7. प्रश्नः— "यो अस्कभायदुत्तरं सधस्थं" इति मन्त्रांशेन सम्बद्धः दैवतः कः?
   उत्तरम्— विष्णुः।
8. प्रश्नः— वृद्धं च्यवनं नवयुवकं कः अकरोत्?
   उत्तरम्— अश्विन्।

9. प्रश्नः— "चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च" कस्याः उक्तिरियम्?
उत्तरम्— यास्कस्य।
10. प्रश्नः—यास्कमते आख्यातस्य लक्षणं किमस्ति?
उत्तरम्— भावप्रधानम्।
11. प्रश्नः—यास्कमते पदानां कति विभागाः विद्यन्ते?
उत्तरम्— (04) चत्वारः।
12. प्रश्नः—यास्कमते नामलक्षणं किम्?
उत्तरम्—सत्वप्रधानम्।
13. प्रश्नः— कति भावविकाराः विद्यन्ते?
उत्तरम्— (06) षट्।
14. प्रश्नः— निरुक्ते कः विधिः प्रयुक्तः?
उत्तरम्— वैदिकशब्दानां निर्वचनम्।
15. प्रश्नः— निरुक्तस्य उपजीव्यग्रन्थविशेषः कः?
उत्तरम्— निघण्टुः।
16. प्रश्नः— वर्णागमः, वर्णविपर्ययः, वर्णविकारः, वर्णविनाशः अनेकार्थधातुप्रयोगश्च कुत्र वरीवर्त्ति?
उत्तरम्— निरुक्ते।
17. प्रश्नः— निघण्टौ कति अध्यायाः सन्ति?
उत्तरम्— (05) पञ्च।
18. प्रश्नः— निरुक्ते कस्य विदुष उल्लेखो नास्ति?
उत्तरम्— व्याडेः।
19. प्रश्नः—यास्कसम्मतं समुद्र-पदस्य निर्वचनं अस्ति?
उत्तरम्—समुद्यन्ति एनमापः।
20. प्रश्नः— "विश्वान् नरान् नयति" कस्य निर्वचनम् अस्ति?
उत्तरम्— वैश्वानरस्य।
21. प्रश्नः— "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" कस्येयमुक्तिः?
उत्तरम्— पतञ्जलेः।
22. प्रश्नः—"अर्थावबोधे निरपेक्षतया पदजातं यत्र उक्तं तत् निरुक्तम्" इति कस्येयमुक्तिः?
उत्तरम्—सायणाचार्यस्य।
23. प्रश्नः—यास्कमते अग्नेः निवासस्थानमस्ति?
उत्तरम्— पृथ्वीलोके।
24. प्रश्नः— विष्णोस्त्रीणि पदानि केन पूर्णानि भवन्ति?
उत्तरम्—मधुना।
25. प्रश्नः— देवतानां स्थानानि कुत्र वर्णितानि सन्ति?
उत्तरम्— निरुक्ते।

26. प्रश्नः— सदसद्भ्यामनिर्वचनीयं किम्?
उत्तरम्—अज्ञानम्।

27. प्रश्नः— भूतानां केभ्योंऽशेभ्यः ज्ञानेन्द्रियाणि उत्पद्यन्ते?
उत्तरम्— सात्त्विकेभ्यः।

28. प्रश्नः— यास्कमते कति पदजातानि सन्ति?
उत्तरम्—चत्वारि।

29. प्रश्नः— निरुक्तस्य अर्थः किं भवति?
उत्तरम्—व्युत्पत्तिकारकः।

30. प्रश्नः— दुर्गाचार्यः निरुक्तोपरि कं ग्रन्थं अलिखत्?
उत्तरम्— दुर्गवृत्तिः।

31. प्रश्नः— सम्प्रति निरुक्त-साहित्यं केन नाम्ना अभिहितं भवति?
उत्तरम्—भाषा-विज्ञानेन।

32. प्रश्नः— निरुक्तं कस्य भाष्यम् अस्ति?
उत्तरम्— निघण्टु इत्यस्य।

33. प्रश्नः— निघण्टुः किमस्ति?
उत्तरम्—वैदिक-शब्दानां कोषग्रन्थः।

34. प्रश्नः— निघण्टु इत्यस्य प्रथमाध्यायत्रयस्य किं नाम विद्यते?
उत्तरम्— नैघण्टुक-काण्डम्।

35. प्रश्नः— चतुर्थोऽध्यायः किं कथ्यते?
उत्तरम्— नैगमकाण्डम्, एकपदिक-काण्डम् वा।

36. प्रश्नः— दैवतकाण्डस्य नाम्ना निघण्टु इत्यस्य कोऽध्यायः ज्ञायते?
उत्तरम्— पञ्चमोऽध्यायः।

37. प्रश्नः— सायणाचार्यस्य निघण्टु-निरुक्तस्य विषये किं मतमस्ति?
उत्तरम्— उभयोः मिलित्वा निरुक्तवेदाङ्गः अस्ति।

38. प्रश्नः— के सन्ति चतुर्दशनिरुक्तकाराः?
उत्तरम्—1. औपमन्यवः, 2. औदुम्बरायणः, 3. वाष्यायणि, 4. गार्ग्यः, 5. आग्रायणः, 6. शाकपूणिः, 6. और्णनाम, 8. तैटिकः, 9. गालव, 10. स्थैलाष्ठीवि, 11. कौष्टुकि, 12. कास्थक्य, 13. यास्क, 14. शाकपूणिपुत्रकौत्सव्यः।

39. प्रश्नः— निघण्टु इत्यस्य प्रथमम् अध्यायत्रयं किं कथ्यते?
उत्तरम्— नैघण्टुक-काण्डम्।

40. प्रश्नः— निरुक्तकारयास्कः स्थान-विभागस्य दृष्ट्या देवान् त्रिश्रेणीषु के विभाजितः?
उत्तरम्—1. पृथ्वीस्थानम्, 2. अन्तरिक्ष-स्थानम्, 3. द्यु-स्थानम्।

41. प्रश्नः— निरुक्तस्य सर्वे शब्दाः कुत्रातः उत्पन्नाः भवन्ति?
उत्तरम्— नामधातोः।

42. प्रश्नः— नैघण्टुककाण्डे तु कति अध्यायाः सन्ति?
उत्तरम्—त्रयोऽध्यायाः।
43. प्रश्नः— नैगमकाण्डे कति अध्यायाः?
उत्तरम्— चतुर्थाऽध्यायाः।
44. प्रश्नः— दैवतकाण्डम् इत्यत्र कति अध्यायाः?
उत्तरम्— पञ्चाध्यायाः।
45. प्रश्नः— औदुम्बरायणस्य पितुः नाम किम्?
उत्तरम्—औदुम्बरः।
46. प्रश्नः— औदुम्बरायणस्य पितामहः कः?
उत्तरम्—उदुम्बरः।
47. प्रश्नः— निरुक्तदर्शनस्य प्रणेता एवं विवेचकः कः?
उत्तरम्— औदुम्बरायणः।
48. प्रश्नः— प्रश्नः— शाकपूणिः निरुक्तकारस्य समयः कः?
उत्तरम्— 800 ई०पू०।
49. प्रश्नः— यास्कस्य अपरं नाम किम्?
उत्तरम्—पारस्करः।
50. प्रश्नः— निरुक्तस्य विशेषप्रयोजनं किम्?
उत्तरम्— शब्दार्थविवेचनम्।
51. प्रश्नः— व्याकरणस्य बाह्यप्रयोजनं किम्?
उत्तरम्— शब्दानां व्युत्पत्ति-लिङ्ग-वचन-कारकादीनां परिष्करणम्।
52. प्रश्नः— व्याकरणस्य अन्तरंगप्रयोजनं किम्?
उत्तरम्— रक्षोहागमलघ्वसन्देहाः।
53. प्रश्नः— निरुक्तस्य का परिभाषा?
उत्तरम्— अर्थाऽवबोधे निरपेक्षतया पदजातं यत्र तद् निरुक्तम्।
54. प्रश्नः— निरुक्तस्य प्रतिपाद्यो विषयः कतिविधः?
उत्तरम्— (5) पञ्चविधः। "वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थातिशयेन युक्तस्तदुच्यते पञ्चविधं निरुक्तम्।।"
55. प्रश्नः— निर्वचनशब्दस्य निष्पत्तिः कथं भवति?
उत्तरम्— निर्, वच् परिभाषणे, ल्युट् प्रत्ययेन निष्पन्नो भवति।
56. प्रश्नः— निरुक्तशब्दस्य निष्पत्तिः कथं भवति?
उत्तरम्— निर्, वच् परिभाषणे क्त प्रत्ययेन निष्पन्नो भवति।
57. प्रश्नः— व्युत्पत्तिशब्दस्य निष्पत्तिः कथं भवति?
उत्तरम्—(विशिष्ट-उत्पत्तिः) वि, उत्, पद, क्तिन् प्रत्ययेन निष्पन्नो भवति।

58. प्रश्नः—- शास्त्रशब्दस्य निष्पत्तिः कथं भवति?
उत्तरम्—शास् अनुशिष्टौ इति धातोः ष्ट्रन् प्रत्ययेन निष्पन्नो भवति।
(शिष्यते अनेन इति शास्त्रम्)
59. प्रश्नः— भाषाशब्दस्य निष्पत्तिः कथं भवति?
उत्तरम्— भाष् व्यक्तायां वाचि इति धातोः अ एवं टाप् प्रत्ययाभ्यां निष्पन्नो भवति।
60. प्रश्नः—यज्ञशब्दस्य निष्पत्तिः कथं भवति?
उत्तरम्—याज् धातोः नङ् प्रत्ययेन निष्पन्नो भवति।
61. प्रश्नः— ध्वनिशब्दस्य सिद्धिः कथं भवति?
उत्तरम्— ध्वन् धातोः इ प्रत्ययेन भवति।
62. प्रश्नः— दैवतस्वरूपनिरूपणे यास्काचार्यस्य कानि चत्वारि मतानि?
उत्तरम्—1. पौरुषविध्यम्, 2. अपौरुषविध्यम्, 3. नित्यमौभयविध्यम्, 4. कर्मार्थात्मोभय-विध्यञ्च।
63. प्रश्नः— निरुक्ते त्रिविधा मन्त्राः के सन्ति?
उत्तरम्— 1. परोक्षकृता मन्त्राः, 2. प्रत्यक्षकृता मन्त्राः, 3. आध्यात्मिक्याः मन्त्राः,
64. प्रश्नः— निरुक्ते षड्भावविकाराः के सन्ति?
उत्तरम्—1. जायते, 2. अस्ति, 3. विपरिणमते, 4. वर्धते, 5. अपक्षीयते, 6. विनश्यतीति।
65. प्रश्नः— स्कन्दस्वामिनः पितुर्नाम किम्?
उत्तरम्— भर्तृध्रुवः।
66. प्रश्नः—परोक्षकृता मन्त्राः के भवन्ति?
उत्तरम्—ये मन्त्राः आख्यातस्य प्रथमपुरुषैश्च युज्यते।
67. प्रश्नः— प्रत्यक्षकृता मन्त्राः के भवन्ति?
उत्तरम्— ये मन्त्राः मध्यमपुरुषेण आख्यातस्य संयुक्ताः भवन्ति।
68. प्रश्नः—आध्यात्मिक्याः मन्त्राः के भवन्ति?
उत्तरम्—ये मन्त्राः उत्तमपुरुषेण आख्यातस्य संयुक्ताः भवन्ति।
69. प्रश्नः—नामजातिः का कथ्यते ?
उत्तरम्— "सत्त्वप्रधानानि नामानि"।
70. प्रश्नः—आख्यातजातिः का कथ्यते?
उत्तरम्— "भावप्रधानमाख्यातम्"।
71. प्रश्नः—उपसर्गाः किं कुर्वन्ति?
उत्तरम्— नानाविधानर्थान् अभिव्यंजयन्ति।
72. प्रश्नः— निपातः कः कथ्यते?
उत्तरम्— उच्चावचेषु निपतन्तीति निपाताः।
73. प्रश्नः— षट्सु वेदाङ्गेषु निरुक्तस्य स्थानं किम्?
उत्तरम्— चतुर्थं स्थानम्।



# 7
# भाषाविज्ञानम्
# (Linguistics)

## (क) भाषाविज्ञानस्य परिचयः

भासयति या सा भाषा। मानवः केन प्रकारेण वक्ति? तस्योपभाषायाः विकासः केन प्रकारेण भवति? भाषासूपभाषासु च केन प्रकारेण, केन केन हेतुना कदा-कदा च भवति परिवर्तनमथवा विकासः? केन प्रकारेण काचनापि भाषा विकसिता सति कस्याश्चन स्वतन्त्रायाः भाषायाः स्वरूपं धत्ते? एतेषां समेषां विषयाणां विधिवद् अध्ययनं क्रियते भाषाविज्ञाननामके विषये शास्त्रेऽस्मिन् शब्दानामुत्पादितः रूपविकासः, वाक्यानां संरचनाप्रभृतीनां विषयाणां विवेचनं क्रियते। भाषाविज्ञानं तु अनेकेषां प्राचीनानाम् अर्वाचीनानां च भाषाणां, तेषाम् अवयवानां च साङ्गोपांगमध्ययनं विधिविशेषमाश्रित्य क्रियते।

"वर्णनात्मक-ऐतिहासिक-तुलनात्मकाध्ययनानां माध्यमेन भाषायाः प्रकृतेः विकासस्योत्पत्तेः संरचनायाश्चाध्ययनपूर्वकम् एतेषां समेषां विषयाणां सैद्धान्तिकं निर्धारणमेव भाषाविज्ञानम्।" अर्थात् "भाषाविज्ञानं भाषायाः उत्पत्तेः, तस्याः संरचनायाः, तस्याः विकासस्य तस्याः ह्रासस्य च अध्ययनं क्रियते। भाषाविज्ञाननामके विषये शास्त्रेऽस्मिन् शब्दानामुत्पादितः रूपविकासः, वाक्यानां संरचनाप्रभृतीनां विषयाणां विवेचनं क्रियते। अनेन प्रकारेण भाषाविज्ञानस्य माध्यमेन कस्याश्चन-भाषायाः वैज्ञानिकमध्ययनं क्रियते इति निश्चीयते।

संस्कृतवैदिकवाङ्मये बहूनि रूपाणि प्राप्यन्ते, येषां प्रयोगः सम्प्रति लौकिकसंस्कृते, भाषायां वा नैव दृश्यते। एतस्यामवस्थायां लौकिक-अलौकिकयोः संस्कृतयोः अध्ययनं करोति भाषाविज्ञानम्। भाषावैज्ञानिकानां प्रयोगेणैव सुनिश्चितं जातं यत् संस्कृत-पालि-प्राकृतानां भाषाणां मूलम् एकमेव आस्ते। संस्कृतसाहित्यस्य वैज्ञानिकम् अध्ययनं करोति भाषाविज्ञानम्। भाषाविज्ञानस्य सम्बन्धः सर्वेषां मानवानां भाषाभिः सममस्ति। इत्थं भाषाविज्ञाने ध्वनेः, ध्वनि-उच्चारणोपयोगिनां स्वरयन्त्रमुखजिह्वादि-अङ्गानां, प्रकृति-प्रत्ययादीनां, संज्ञा-सर्वनाम-क्रिया-विशेषणादीनां, नामाख्यातोपसर्गनिपातानां, पदपदार्थविषयकानां विकारादीनां, विकारमूलककारकानाम् अन्येषां विविधविधविषयाणाञ्च अध्ययनं क्रियते।

अर्थात् भाषा तु यादृच्छिकवाचिकध्वनिसंकेतस्य सा पद्धतिः अस्ति, यया मानवः पारस्परिकविचाराणां विनिमयं करोतीति। इत्थं भाषाविषयकाः विचारणीयाः विषयाः अधोलिखिताः सन्ति—

1. भाषा तु एका पद्धतिरस्ति।
2. भाषा संकेतात्मिका अस्ति।
3. वाचिकध्वनिसंकेत एव भाषाऽस्ति।
4. भाषायां यादृच्छिकसंकेतस्य समावेशः भवति।
5. उच्चारणावयवेभ्यः निःसृतः ध्वन्यात्मक-विचार एव भाषाऽस्ति। (प्लेटो)
6. "व्यक्ता वाचि वर्णा येषां त इमे व्यक्तवाचः"। (पतञ्जलि)

पाणिनीयशिक्षायाम्-(श्लोक-संख्या-षट्तः दशपर्यन्तम्) वर्णानां विभागः पञ्चधा कृतं स्यात्। यथा—(1) स्वरतः, (2) कालतः, (3) स्थानात्, (4) आभ्यन्तरप्रयत्नात्, (5) बाह्यप्रयत्नात्। संस्कृतभाषा-विषयक-वर्णोत्पत्ति-सिद्धान्तस्य अतीव वैज्ञानिकं निरूपणं कृतम्।

## (ख) भाषाविज्ञानानां वर्गीकरणम्

संस्कृतभाषायाः भाषाविज्ञानिक-वर्गीकरणं—संस्कृतभाषायाः वैज्ञानिकमध्ययनमेव भाषाविज्ञानमित्यभिधीयते। इदानीं भाषाविज्ञानस्य पञ्चैव प्रकारास्समुपलब्धाः सन्ति। प्रकाराः संक्षेपेण अत्र प्रस्तूयन्ते।

**(1) ऐतिहासिकं भाषाविज्ञानम्**—अस्मिन् भाषाविज्ञाने भाषायाः विकासस्य-अध्ययनं क्रियते। अस्मिन् अध्ययने कस्याश्चनैकस्या एव भाषायाः परिवर्तितानां रूपाणाम् अध्ययनं क्रियते। यथा—संस्कृतभाषायाः वैदिकलौकिकरूपयोः अध्ययनम्। ऐतिहासिकभाषावैज्ञानिकाः इदमपि प्रतिपादयन्ति यत् संस्कृत-पालि-प्राकृतानां भाषाणाम् एकमेव मूलमास्ते।

**(2) प्रायोगिकं भाषाविज्ञानम्**—भाषाविज्ञानस्यास्य विभागस्य सम्बन्धः विविधक्षेत्रेषु भाषाविज्ञानस्य प्रयोगेण सह विद्यते। अन्यस्याः भाषायाः शिक्षा केन प्रकारेण प्रदेया? अनुवादः केन प्रकारेण करणीयः? उच्चारणस्य दोषाः केन प्रकारेण अपाकरणीयाः? इत्यादीनां प्रभृतीनां विषयाणां विचारः अत्र क्रियते।

**(3) संरचनात्मकं भाषाविज्ञानम्**—अस्मिन् भाषाविज्ञाने भाषायां प्रयुक्तानां सर्वेषां तत्त्वानां पारस्परिके विशिष्टे सन्दर्भेऽध्ययनं क्रियते। संरचनात्मकभाषाविज्ञानस्य विषये पाश्चात्येषु देशेष्वत्यधिकं कार्यं भवति। संरचनात्मकेन भाषाविज्ञानेन निश्चिताः निष्कर्षाः समुपलभ्यन्ते।

**(4) वर्णनात्मकं भाषाविज्ञानम्**—भाषाविशेषस्य वक्तारः कस्मिंश्चित् समयविशेषे येन प्रकारेण तस्याः भाषायाः व्याहरणं व्यवहरणं च कुर्वन्ति, तस्यैव विश्लेषणात्मकमध्ययनं वर्णनात्मकं च करोति भाषाविज्ञानम्। स च समयविशेषो भूतकालिको वर्तमानकालिको वा भवितुमर्हति। एतादृशीनामपि भाषाणामध्ययनं वर्णनात्मकेन भाषाविज्ञानेन क्रियते। एतादृशी व्याहारमात्राश्रिता संस्कृतभाषा अतीतकालविशेषे कीदृश्यासीत्? तस्यां कति ध्वनयः आसन्? पदानां रचना

कीदृश्यासीत्? वाक्यानि कीदृशान्यासन्? इत्यादिकानां विषयाणामध्ययनं वर्णनात्मकं भाषाविज्ञानं करोति।

**(5) तुलनात्मकं भाषाविज्ञानम्**—अस्मिन् भाषाविज्ञाने एकाधिकानां भाषाणां तुलनात्मक-मध्ययनं विभिन्नान् कालानाश्रित्य क्रियते। कस्यचन परिवारविशेषस्य विभिन्नानां भाषाणाम् ऐतिहासिकस्य सम्बन्धस्य ज्ञानाय तासां तुलनात्मकमध्ययनं क्रियते। कदाचित् तासां साम्यवैषम्ययोर्ज्ञानाय चापि तुलनात्मकमध्ययनं क्रियते।

## (ग) भाषाविज्ञानस्याङ्गानि

भाषाविज्ञानं साहित्यसम्पत्तिविरहिताया अपि भाषायाः वैज्ञानिकमध्ययनं करोति। भाषाविज्ञानस्य सम्बन्धः सर्वेषां कालानां भाषाविषयकाणां तत्त्वैः साकं भवति; भाषायाः कस्याश्चन तत्वानि सङ्कलय्य तानि चाश्रित्य सिद्धान्तानामपि निर्धारणं करोति। अस्मिन् अध्ययने ध्वनीनामुच्चारणस्य, अक्षराणां शब्दानां पदानां वाक्यानां च संरचनायाः विवेचनं क्रियते।

**(1) ध्वनिविज्ञानम्**—सम्पूर्णा भाषा ध्वन्याश्रिता भवति। अत एव भाषाविज्ञानेऽपि ध्वनेरध्ययनस्य महत्त्वपूर्णस्थानं भवति। ध्वनिविज्ञाने मानवशरीरस्योच्चारणोपयोगिनाम् अवयवानां परिचयः क्रियते। तानि चाङ्गानि यथा—(क) स्वरयन्त्रम्, (ख) मुखम्, (ग) जिह्वा, (घ) ताल्वादिकं च। तदनन्तरं ध्वनीनामुच्चाणस्थानस्य उच्चारणप्रयत्नस्य दृष्ट्यापि वर्गीकरणं क्रियते। अत एव ध्वनिविज्ञानस्य इमे विषयाः सन्ति—उच्चारणावयवाः, ध्वनीनां संख्या, ध्वनीनां वर्गीकरणम्, ध्वनिविकाराणां दिशः, तासां कारणानि ध्वनिनियमाश्च।

**(2) पदविज्ञानम्**—पदपदार्थं निरूपयता महर्षिणा पाणिनिनाऽभिहितम्—"सुप्तिङन्तं पदम्"। तथाविधाः वर्णाः पदशब्देनाभिधीयन्ते येषां वर्णसमूहानामन्ते सुप्विभक्तीनामथवा तिङ्विभक्तीनां संयोगो भवति। आचार्यविश्वनाथेनाप्यभिहितम्—"वर्णाः पदं प्रयोगार्हानन्वितै-कार्थबोधकाः" इति। अस्मिन् पदविज्ञाने नानाविधानां पदानामध्ययनं क्रियते। यथा—संज्ञा, सर्वनाम, क्रिया, क्रिया-विशेषणादिकानां, धातुरूपाणां, शब्दरूपाणाम्। अनेनैव साकमस्मिन् विज्ञाने पदानां मूलम्, पदानां व्युत्पत्तिः, पदानां वाक्येषु प्रयोगाः, पदानां काले-काले सञ्जातं रूपपरिवर्तनम्, पदानां प्रयोगेषु देशकालानुसारेण विकारादिकाः विवेच्यन्ते। पदानि एव भाषायाः मूलभूतानि सन्ति। अत एव पदविज्ञानं भाषाविज्ञानस्य मूलभूतं विद्यते।

**(3) वाक्यविज्ञानम्**—अनेकेषां सार्थकानाम् अन्वितानाञ्च पदानां समूहो वाक्यमित्यभिधीयते। वाक्यस्य स्वरूपं निरूप्यता आचार्येण विश्वनाथेनाभिहितम्—"वाक्यं स्याद् योग्यताकाङ्क्षा-सत्तियुक्तः पदोच्चयः" इति। अयमाशयो यत् पदानां समूह एव वाक्यमित्यभिधीयते, परन्तु तस्मिन् पदसमूहे वैशिष्ट्यत्रयमपेक्षितं भवति वाक्यत्वाय—1. योगयता—योग्यानां पदानां समूहो वाक्यमित्यभिधीयते। यथा—जलेन सिञ्चतीत्येव वाक्यम्। 2. आकांक्षा—साकाङ्क्षाणामेव पदानां समूहो वाक्यमभिधीयते। 3. आसतिः—अनेनैव प्रकारेण पदेषु वाक्यत्वायासत्तिरप्यावश्यकम्। सा चासत्तिरपि द्विप्रकारवती भवति—कालकृता स्थानकृता च। अत्र वाक्यानाम् ऐतिहासिकं तुलनात्मकमध्ययनमपि प्रस्तूयते।

**(4) अर्थविज्ञानम्**—शब्दार्थयोः शब्दविदः अभेद-सम्बन्धं स्वीकुर्वन्ति। सर्वे शब्दाः सार्थकाः भवन्ति। येन प्रकारेणात्मानं विना शरीरं नश्यति, तेनैव प्रकारेण शब्दानामपि सार्थकता अर्थैरेव भवति। अत एवार्थविज्ञानं भाषाविज्ञानस्यातीव महत्त्वपूर्णमङ्गं वर्तते। अर्थविज्ञाने शब्दानामर्थ-निर्धारणस्य प्रक्रिया अधीयते। इत्थं शब्दानाम् अर्थपरिवर्तनानि तेषामर्थपरिवर्तनानां कारणानि प्रभृतयो विषयाः अर्थविज्ञानस्य विषयाः सन्ति।

## (घ) भाषाणां वर्गीकरणम्

सम्प्रति अस्मिन् संसारे त्रीणि सहस्राणि भाषाः प्रचलन्ति। एतासां सर्वासां भाषाणां द्विधा वर्गीकरणं कृतमस्ति।

**(1) आकृतिमूलकं वर्गीकरणम्**—वर्गीकरणस्यास्याधारः सम्बन्धतत्त्वमस्ति। वर्गीकरणेऽस्मिन् वाक्यानां पदानाञ्च अध्ययनं क्रियते। एतदनुसारेणात्र वर्गद्वयम् उपलभ्येते—(क) अयोगात्मिकाः भाषाः। (ख) योगात्मिकाः भाषाश्च। योगात्मिके भाषासंवर्गे पुनस्त्रिविधाः उपवर्गाः सन्ति—1. अश्लिष्टाः, 2. श्लिष्टाः, 3. प्रश्लिष्टाश्च।

**(2) पारिवारिकं वर्गीकरणम्**—भाषायाः पारिवारिकं वर्गीकरणमतीव वैज्ञानिकमस्ति। वर्गीकरणेऽस्मिन् रचनातत्त्वम्, अर्थतत्त्वञ्च समानरूपेण आलोच्येते। ध्वनिः, पदरचना, वाक्यरचना, अर्थः, शब्दसम्पत्तिः, स्थानसान्निध्यं च एतेषु षट्सु विषयेषु साम्ये सति भाषायाम् एकः परिवारः भवति।

डॉ. देवेन्द्रनाथशर्मा महोदयः वर्गीकरणेऽस्मिन् अष्टादशभाषापरिवाराणां नामानि निर्दिशति—

| | | | | | |
|---|---|---|---|---|---|
| 1. | भारोपीय-परिवारः, | 2. | द्राविड्-परिवारः, | 3. | बुरुशस्की-परिवारः, |
| 4. | काकेशी-परिवारः, | 5. | यूराल-अल्टाई-परिवारः, | 6. | चीनी-परिवारः, |
| 7. | जापानी-कोरियाई-परिवारः, | 8. | अत्युत्तरी-परिवारः, | 9. | बास्क-परिवारः, |
| 10. | सांमी-हामी-परिवारः, | 11. | सूडाली-परिवारः, | 12. | बान्तू-परिवारः, |
| 13. | होतेन्तोत-बुशमैनी-परिवारः, | 14. | मलय-पोलिनेशियाई-परिवारः, | 15. | पापुई-परिवारः, |
| 16. | आस्ट्रेलियन-परिवारः, | 17. | द. पू. एशियाई परिवारः, | 18. | अमरीकी-परिवारः, |

## (ङ) भारोपीय-भाषापरिवारस्य सामान्य-परिचयः

विश्वेऽस्मिन् सर्वेषु भाषा-परिवारेषु भारोपीयभाषापरिवारस्य सर्वातिशायी महत्त्वमस्ति। यतः भौगोलिक साहित्यिक-सांस्कृतिक-वैज्ञानिक-भाषावैज्ञानिक-राजनैतिक-सामाजिकोत्कर्षेभ्यः विश्वस्य सर्वाः भाषाः भारोपीयभाषापरिवारस्य ऋणी सन्ति। सम्प्रति भाषापरिवारोऽयं एशिया महाद्वीपादारभ्य यूरोप-महाद्वीपपर्यन्तं विस्तीर्णमस्मि। अध्ययन सौकर्यदृष्ट्या ते वर्गीकृतानि सन्ति। यथोक्तं कपिलदेवद्विवेदिमहोदयेन—

ईरानी-भारती चैव बाल्टो-सुस्लाविकी।
आर्मीनी अल्बनी चैताः शतम्वर्गे समाश्रिताः।
इटालिकी च ग्रीकी च जर्मनिक केल्टिकी तथा।
हित्ती तोखरिकी चैताः केन्टुम्वर्गे प्रकीर्तिताः।।




## (च) भारोपीय-भाषापरिवारस्य वैशिष्ट्यानि

आचार्यवरेण कपिलदेव-द्विवेदिमहोदयेन दशधा-वर्णितं वैशिष्ट्यं भारोपीय-भाषापरिवारस्य।

भारोपीयपरिवारवैशिष्ट्यं दशकं मतम्।
शिलष्टयोगात्मकत्वं तु प्रकृतिप्रत्ययात्मता।।
एकाक्षरत्वं धातूनां सुप्-तिङौ कृच्च तद्धिताः।
स्वातन्त्र्यमुपसर्गाणां पदमूला च वाक्यता।।
प्रत्ययार्थानभिव्यक्तिः समासाभिरुचिस्तथा।
अपश्रुतेः प्रयोगश्च, प्रत्ययाधिक्यमेव च।।

1. शिलष्टयोगात्मकत्वम्,
2. प्रकृतिप्रत्ययात्मता,
3 धातूनाम् एकाक्षरत्वम्,
4. सुप्-तिङ-कृत्-तद्धित-प्रत्ययात्मकता,
5. उपसर्गाणां स्वातन्त्र्यम्,
6. पदमूलावाक्यता,
7. प्रत्ययार्थानभिव्यक्तिः,
8. समासांभिरुचिः,
9. अपश्रुतिप्रयोगः,
10. प्रत्ययाधिक्यम्।

## (छ) ध्वनिवर्गीकरणम्

स्थान-प्रयत्न-करणैः एव मानव-वाग्यन्त्रस्य निर्मितिः सम्भवति। इमे सर्वे एव सम्मिलितरूपेण ध्वन्युत्पादकाः सन्ति। अत एव एभिः साहाय्येन एव ध्वनेः वर्गीकरणं कर्तुं शक्यते। इमे सर्वे भाषिक-ध्वन्याधारभूताः त्रिवर्गेषु वर्गीकृताः ध्वन्युत्पादकाः अधोलिखिताः, (क) स्थानम्कण्ठच्छदादारभ्य ओष्ठपर्यन्तं स्थानसंज्ञकाः अवयवाः अधोलिखिताः सन्ति—

(क) मुखगत-स्थान-बोधक-चक्रम्

| कण्ठः | तालु | ओष्ठ | मूर्धा | दन्ताः | कण्ठतालु | कण्ठोष्ठम् | दन्तोष्ठम् | जिह्वामूलम् |
|---|---|---|---|---|---|---|---|---|
| अ | इ | उ | ऋ | लृ | ए | ओ | व् | ᳲक |
| क् | च् | प् | ट् | त् | ऐ | औ | | ᳲख |
| ख् | छ् | फ् | ठ् | थ् | – | – | – | – |
| ग् | ज् | ब् | ड् | द् | – | – | – | – |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| घ् | झ् | भ् | द्द् | ध् | – | – | – | – |
| ङ् | ञ् | म् | ण् | न् | – | – | – | – |
| ह् | य् | ॅप | र् | ल् | – | – | – | – |
| : विसर्ग | श् | ॅफ | ष् | स् | – | – | – | – |

**( ख ) आभ्यन्तरबाह्यप्रयत्नज्ञानार्थकं चक्रम्**

| आभ्यन्तरप्रयत्नाः | स्पृष्टाः | | | ईषत्स्पृष्टाः | ईषद्विवृताः | | विवृताः | संवृताः |
|---|---|---|---|---|---|---|---|---|
| संज्ञा | स्पर्शाः | | | अन्तःस्थाः | ऊष्माणः | | स्वराः | |
| वर्णाः | क ख | ग घ | ङ | य | श | | अ इ उ | ह्रस्वोऽ- |
| | च छ | ज झ | ञ | र | ष | | ऋ लृ | कार |
| · | ट ठ | ड ढ | ण | ल | स | | ए ओ | प्रयोगः |
| | त थ | द ध | न | व | | ह | ऐ औ | |
| | प फ | ब भ | म | | | | | |
| बाह्यप्रयत्नाः | अल्पमहाप्राणाः | अल्पप्राणाः | म. प्रा. | अल्पप्राणाः | महाप्राणाः | महा. | उदात्तानुदात्तस्वरिताः | |
| | विवाराः | संवारः | संवारः | संवारः | विवारः | संव | | |
| | श्वासाः | नादाः | नादाः | नादाः | श्वासाः | नाद. | | |
| | अघोषाः | घोषाः | घोषाः | घोषाः | अघोषाः | घो. | | |

**( ग ) करणम्**—करणं नाम तादृशानाम् इन्द्रियाणां संवर्गोऽस्ति, यः ध्वन्युच्चारणे भाषिक-ध्वनिनिष्पत्तौ वा सहायकः भवति। स्थान-करणयोः केवलं गत्यात्मकमन्तरमस्ति। अनया दृष्ट्या अधरोष्ठं, जिह्वां मृदुतालुं स्वरतन्त्रीं च करणमित्यभिधानेन अभिधीयते ध्वनिवैज्ञानिकैः।

एतेषां व्यावहारिक-उपयोगिता इयमस्ति यद् अनेन साहाय्येन कस्यापि भाषा-विशेषस्य स्वराणाम् उच्चारण-प्रक्रियायाः सम्यक्-निर्धारणं कर्तुं शक्यते। पूर्णरूपेण कस्यामपि भाषायाम् इमे स्वराः नोपलभ्यन्ते, परन्तु आंशिकरूपेण सर्वासु भाषासु प्राप्यन्ते।

## ( ज ) ध्वनि-नियमाः

ध्वनिप्रवृत्तिरेव भाषावैज्ञानिकैः "ध्वनिनियमः" इत्युच्यते। सत्यं तु इदमस्ति यत् सर्वे ध्वनिनियमाः आदौ तु प्रवृत्तिस्वरूपाः एव भवन्ति, किन्तु यदा ते पूर्णतां यान्ति, तदा ध्वनिनियमाः इत्यभिधीयन्ते लोकैः। ध्वनि-नियमाः कालसापेक्षाः भवन्ति। भाषा-देश- कालेभ्यः सह सम्बद्धत्वात् इमे ध्वनिनियमाः सीमिताः भवन्ति।

अत्र प्रसिद्धाः त्रिविधाः ध्वनिनियमाः संक्षेपेण प्रस्तूयन्ते, ते सन्ति—

**1. ग्रिम-नियमः—(Grimmi's Law)** ग्रिमनियमस्तु ध्वनिनियमस्य सर्वाधिकं प्रसिद्धम् उदाहरणमस्ति। ग्रिम-महोदयस्यानुसारेण प्रथम-ध्वनिपरिवर्तनं मूलभारोपीयध्वनयः संस्कृत-ग्रीक-लैटिनभाषासु सुरक्षिताः सन्ति, किन्तु व्यंजनानि तु संस्कृतभाषायामेव विशुद्धरूपेण उपलभ्यन्ते। एवमेव घोष-महाप्राणध्वनयः घोषाल्पप्राणा अभूवन्। परिवर्तनेऽस्मिन् घोषाल्पप्राणध्वनयः अघोषाल्पप्राणाः अभूवन्।

**2. ग्रासमन-नियमः—(Grassmani's law)**—द्वौ सन्निकृष्टौ महाप्राणध्वनी (वर्णौ)

साकं नहि भवतः, अपितु तयोः द्वयोः वर्णयोः एकः (प्रक्रमः) अल्पप्राणो भवति। यथा—संस्कृतभाषायां "धा" धातोः "धधाति" इति निष्पन्ने पूर्वधकारस्य स्थाने दकारः (अल्पप्राणः) इति जाते" दधाति" इति निष्पन्नं भवति।

**3. वर्नर-नियमः (Verneri's law)**—ग्रिम-नियमस्य अपवादपरिमार्जकोऽयं वर्नर-नियमः। यदि "क् त् प्" इत्येषां वर्णानां पूर्ववर्तिस्वरे बलाघातो भवति, तर्हि ग्रिमनियमानुसारेण क् त् प् इत्येतेषु स्थानेषु" ख् थ् फ्" इति परिवर्तनं भवत्येव।

## (झ) भाषाविज्ञानस्य वस्तुनिष्ठप्रश्नोत्तराणि

1. प्रश्नः— भाषायाः मूलतमः संघटकः कः अस्ति?
   उत्तरम्— ध्वनिः।
2. प्रश्नः— आंगिक-भाषायाः सीमा कतिविधा?
   उत्तरम्— त्रिविधा।
3. प्रश्नः— भाषायाः लघुतम-सार्थक-इकाई का अस्ति?
   उत्तरम्— ध्वनिमः।
4. प्रश्नः— भाषाविज्ञानं किमस्ति?
   उत्तरम्— भाषाणामध्ययनम्।
5. प्रश्नः— अपभाषायाः कियन्तो विशेषताः सन्ति?
   उत्तरम्— चतस्त्रः।
6. प्रश्नः— कस्मिन् वेदांगे ध्वनिविज्ञानस्य विवेचना दरीदृश्यते?
   उत्तरम्— शिक्षावेदांगे।
7. प्रश्नः— कूटभाषायाः कियन्ति रूपाणि?
   उत्तरम्— चत्वारि।
8. प्रश्नः— आकृति-उच्चारणकालयोः मापकः यन्त्रविशेषः कः?
   उत्तरम्— स्पेक्ट्रोग्राफः।
9. प्रश्नः— कृत्रिमभाषायाः अवलम्बने कियन्ति कठिनानि?
   उत्तरम्— चत्वारि।
10. प्रश्नः— भाषा कस्य साधनं विद्यते?
    उत्तरम्— विचारविनिमयस्य।
11. प्रश्नः— विभाषायाः स्वाभाविक-निर्बलता भवन्ति?
    उत्तरम्— (3) तिस्त्रः।
12. प्रश्नः— भाषायाः विकास-सोपानानि कियन्ति, कानि च तानि?
    उत्तरम्— चत्वारि, 1. आंगिकभाषा, 2. वाचिकभाषा, 3. लिखितभाषा, 4. यान्त्रिकभाषा।
13. प्रश्नः— विभाषाणां भाषा-पदग्रहणे कति साधनानि कारणानि वा?
    उत्तरम्— (9) नव।

14. प्रश्नः—मध्य-भारतीय-आर्यभाषायाः समयः कः?
उत्तरम्— 500 ई० पूर्वतः 1000 ई० वर्षपर्यन्तम्।
15. प्रश्नः— भाषोत्पत्तेः सिद्धान्ताः कतिसंख्यकाः?
उत्तरम्—एकादश।
16. प्रश्नः—आधुनिक-भारतीय-आर्यभाषायाः कः कालः?
उत्तरम्— 1000 ई० वर्षात् वर्त्तमान-कालपर्यन्तम्।
17. प्रश्नः— माहेश्वर-सूत्राणामुत्पत्तिः कस्माज्जाता?
उत्तरम्— शिवस्य डमरुनिनादात्।
18. प्रश्नः—आधुनिक-भारतीय-आर्यभाषाणां कियन्तो विशेषताः?
उत्तरम्— (7) सप्त।
19. प्रश्नः— भाषोत्पत्ति-विषये "प्लेटो" महोदयस्य कः सिद्धान्तः?
उत्तरम्— रणन-सिद्धान्तः।
20. प्रश्नः— भाषायाः धातु-सिद्धान्तस्य प्रतिपादकः कः?
उत्तरम्— मैक्समूलर।
21. प्रश्नः— "प्रकृति-सिद्धान्तः" केनाऽनुमतः?
उत्तरम्— जर्मनविदुषा "हर्डर" महोदयेन।
22. प्रश्नः— आधुनिक-भारतीय-आर्यभाषाः योगात्मका-अयोगात्मका वा?
उत्तरम्—योगात्मकाः।
23. प्रश्नः— "अनुकरण-सिद्धान्तः" केन प्रदत्तः?
उत्तरम्— "मैक्समूलर" महोदयेन।
24. प्रश्नः—पश्चिमी-हिन्दी कस्याः भाषायाः विकसिता जाता?
उत्तरम्— शौरसेनीभाषायाः।
25. प्रश्नः— संकेत-सिद्धान्ते कियत्योऽसङ्गतयः?
उत्तरम्— चतस्रः।
26. प्रश्नः— पश्चिमी-हिन्दीभाषायाः प्रमुखा विभाषाः कियत्यः?
उत्तरम्— (5) पञ्च।
27. प्रश्नः— आवेग-सिद्धान्ते कियन्तो दोषाः?
उत्तरम्— अष्टौ।
28. प्रश्नः—राजस्थानी-भाषायाः अन्तर्गताः विभाषाः कियत्यः?
उत्तरम्— (4) चतस्रः।
29. प्रश्नः— अनुकरण-सिद्धान्ते कियत्यो विप्रतिपत्तयः?
उत्तरम्— (5) पञ्च।
30. प्रश्नः—"संस्कृतम्" कस्य परिवारस्य मुख्या भाषाऽस्ति?
उत्तरम्— भारत-यूरोपीय-परिवारस्य।

31. प्रश्नः— समन्वय-सिद्धान्ते कियन्तस्तर्काः?
उत्तरम्— (3) त्रयः।
32. प्रश्नः— वैदिक-भाषायाः कति विशेषताः?
उत्तरम्— (5) पञ्च।
33. प्रश्नः— भाषापरिवर्तने कति बाह्यकारणानि?
उत्तरम्— (6) षट्।
34. प्रश्नः— भाषा-परिवर्तने कति आभ्यन्तरकारणानि भवन्ति?
उत्तरम्— (6) षट्।
35. प्रश्नः— भाषा-परिवर्तने प्रयत्नलाघवस्य कति प्रक्रियाः भवन्ति?
उत्तरम्— (7) सप्त।
36. प्रश्नः— भारत-यूरोपीय-परिवारस्य कियत्यः शाखाः?
उत्तरम्— (10) दश।
37. प्रश्नः— स्थानभेदेन आगमाः कतिविधाः, के च ते?
उत्तरम्— (3) त्रयः, 1. आदि, 2. मध्य, 3. अन्त्यः।
38. प्रश्नः— "भाषाविज्ञान की भूमिका" इत्यस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— आचार्य देवेन्द्रनाथ शर्मा।
39. प्रश्नः— देवेन्द्रनाथ शर्म्मणः पितुर्नाम किम्?
उत्तरम्— पं० शिवशरण शर्मा।
40. प्रश्नः— देवेन्द्रनाथ शर्म्मणः पत्न्याः नाम किम्?
उत्तरम्— श्रीमती कुसुम शर्मा।
41. प्रश्नः—भारतयूरोपीयपरिवारस्य भाषाणां विशेषताः कतिसंख्यकाः?
उत्तरम्— (14) चतुर्दश।
42. प्रश्नः— समीकरणस्य भेदः कतिविधः, कश्च सः?
उत्तरम्— (2) द्विविधः, 1. पुरोगामी समीकरणम्, 2. पश्चगामी-समीकरणम्।
43. प्रश्नः— भाषाणां प्रमुख-वर्गीकरणाधारः कतिविधः, के च ते?
उत्तरम्— (2) द्विविधः, 1. आकृतिमूलकः, 2. पारिवारिकश्च।
44. प्रश्नः— प्राचीनतमः भाषावैज्ञानिकः कोऽस्ति?
उत्तरम्— पाणिनि।
45. प्रश्नः— "व्यक्ता वाचि वर्णा येषां त इमे व्यक्तवाचः" भाषायाः इयं परिभाषा कुतः उद्धृताऽस्ति?
उत्तरम्— महाभाष्यतः।
46. प्रश्नः— आकृतिमूलकस्य प्रमुखो भेदः कतिविधः, कश्च सः?
उत्तरम्— (2) द्विविधः, 1. अयोगात्मकः, 2. योगात्मकश्च।
47. प्रश्नः— पारिवारिकं वर्गीकरणं किम्?
उत्तरम्— सम्मिलित-रचनातत्त्वमर्थतत्त्वञ्चाऽऽधारीकृत्य कृतं भाषावर्गीकरणं "पारिवारिकं वर्गीकरणम्"।

48. प्रश्नः— मेरियो-पाई-महोदयस्य मते विश्वेऽस्मिन् कति भाषाः सन्ति?
उत्तरम्— 2776 भाषाः।
49. प्रश्नः— वर्गीकरणदृष्ट्या सर्वासां भाषाणां न्यूनातिन्यूनः कति विभागः स्वीकृतः?
उत्तरम्— 02 द्वौ विभागौ।
50. प्रश्नः— परिवारमूलके वर्गीकरणे डॉ. देवेन्द्रनाथशर्मा कति भाषापरिवारः स्वीकरोति?
उत्तरम्— 18 अष्टादश भाषापरिवाराः।
51. प्रश्नः— वैज्ञानिक-सांस्कृतिकदृष्ट्या सर्वप्रमुख-भाषापरिवारः कः?
उत्तरम्— भारोपीयपरिवारः।
52. प्रश्नः— सर्वाधिकभाषाः कस्मिन् परिवारे समुपलभ्यन्ते?
उत्तरम्— अमेरीकीपरिवारे।
53. प्रश्नः— साहित्यिकदृष्ट्या सर्वाधिक-समृद्धः भाषा-परिवारः कः?
उत्तरम्— भारोपीयपरिवारः।
54. प्रश्नः—एकाक्षरी-भाषा का अस्ति?
उत्तरम्— चीनी।
55. प्रश्नः— प्राचीन नागरी लिपेः कया शैल्या उड़ियालिपिः विकसितः?
उत्तरम्— पूर्वी-शैल्या।
56. प्रश्नः— भारोपीय-भाषा अस्ति?
उत्तरम्— लैटिन।
57. प्रश्नः— कस्य भाषापरिवारस्य सर्वाधिक-प्रयोक्तारः सन्ति?
उत्तरम्—भारोपीयपरिवारस्य।
58. प्रश्नः— कृष्ण-कैस्पियनसागरयोः मध्ये कः भाषापरिवारः विद्यते?
उत्तरम्— काकेसीपरिवारः।
59. प्रश्नः— चीन-तिब्बत-वर्मा-स्यामपर्यन्तः व्याप्तः परिवारविशेषः कः?
उत्तरम्—चीनीपरिवारः।
60. प्रश्नः— अरब-देशे मुख्यरूपेण का भाषा भाषते?
उत्तरम्— सामी।
61. प्रश्नः— लीबिया-सोमालीत्यादिदेशेषु का व्यवह्रियते?
उत्तरम्— हामी।
62. प्रश्नः— सूडानी-भाषापरिवारे कति भाषाः सन्ति?
उत्तरम्—425 भाषाः।
63. प्रश्नः— बान्टू-परिवारस्य भाषा का?
उत्तरम्— काफिर।
64. प्रश्नः— बान्टू-परिवारे कति भाषाः विद्यन्ते?
उत्तरम्— 150 भाषाः।

65. प्रश्नः— पापुई–भाषापरिवारे कति भाषाः भाषन्ते?
उत्तरम्— 132 भाषाः।
66. प्रश्नः— आस्ट्रेलियाई–भाषापरिवारे कति भाषाः सन्ति?
उत्तरम्—100 भाषाः।
67. प्रश्नः— सहस्रभाषात्मकः भाषापरिवारः कः?
उत्तरम्— अमरीकीपरिवारः।
68. प्रश्नः— केन्टुम्–शतम्वर्गयोः विभक्तः भाषापरिवारः कः?
उत्तरम्— भारोपीयपरिवारः।
69. प्रश्नः— कस्मिन् यन्त्रे कृत्रिमतालोः प्रयोगः क्रियते?
उत्तरम्—पैलेटोग्राफ।
70. प्रश्नः— मानवस्वरतन्त्री प्रतिसेकेण्डे कतिचक्रं यावत् कम्पनं कर्तुं शक्नोति?
उत्तरम्— 42–2048 चक्र/ सेकेण्डे।
71. प्रश्नः— मानवस्वरतन्त्री प्रतिसेकेण्डे कतिबारम् अनावृतं संवृतं च (Open & Closed) भवितुं शक्नोति?
उत्तरम्— 800 बारम्।
72. प्रश्नः— सामान्यवार्तालापे पुरुषेषु स्वरतन्त्र्याः कम्पनगतिः किमस्ति?
उत्तरम्— 109–163 चक्र/सेकण्ड।
73. प्रश्नः— सामान्यवार्तालापे स्त्रीषु स्वरतन्त्र्याः कम्पनगतिः किमस्ति?
उत्तरम्— 228–326 चक्र/सेकण्ड।
74. प्रश्नः—भाषाविज्ञाने स्वनिम (Phoneme) शब्दस्य प्रथमप्रयोगः केन कदा च कृतः?
उत्तरम्— प्रो. हैवेट–महोदयेन 1876 A.D.
75. प्रश्नः— मानस्वर–चतुर्भुजस्य कल्पना केन कृता?
उत्तरम्— प्रो. डेनियल–जान्स–महोदयेन।
76. प्रश्नः—कस्य कारणस्य प्रभावाद् "स्कूल" इत्यस्य "इस्कूल" इति उच्चारणं क्रियते?
उत्तरम्—आगमकारणस्य प्रभावाद्।
77. प्रश्नः— कस्मात् कारणात् "स्थल" इति शब्दस्य "थल" इति उच्चारणं क्रियते?
उत्तरम्— लोपस्य।
78. प्रश्नः— विकारकारणाद् "गम्भीर" इति शब्दस्य किमुच्चारणं क्रियते?
उत्तरम्— गहिर।
79. प्रश्नः— "पिशाच" इति शब्दस्य "पिसाच" उच्चारणे किं कारणम्?
उत्तरम्— विपर्ययकारणम्।
80. प्रश्नः— "अग्नि" इति शब्दस्य "आग" इति उच्चारणे किं कारणम्?
उत्तरम्— समीकरणः।
81. प्रश्नः— "धर्म" इति शब्दस्य "धरम" इति उच्चारणे किं कारणम्?
उत्तरम्— स्वरभक्तिः।

82. प्रश्नः— भाषिक-ध्वनीनां वर्गीकरणे मुख्यतया कति आधाराः स्वीक्रियन्ते?
उत्तरम्— 03 आधाराः।
83. प्रश्नः— उ, ऊ, ओ, औ, इमे स्वराः कीदृशाः सन्ति?
उत्तरम्— वर्तुलाः।
84. प्रश्नः— आकारः कीदृग् स्वरः अस्ति?
उत्तरम्— अर्धवर्तुलः।
85. प्रश्नः— डेनियल-जॉन्स-महोदयः कस्मिन् विश्वविद्यालये प्रोफेसरः आसीत्?
उत्तरम्—लन्दन-विश्वविद्यालये।
86. प्रश्नः— बानरः=बन्दरः इत्यत्र ध्वनिपरिवर्तनस्य हेतुः किमस्ति?
उत्तरम्— व्यञ्जनागमः।
87. प्रश्नः— ग्रिम-नियमानुसारेण पूर्वजार्मनिक-गकारस्य/ठववा उच्चजर्मनरूपं किमस्ति?
उत्तरम्— क् BUCH।
88. प्रश्नः—ग्रिम-नियमानुसारेण निम्नजर्मनस्य "UP" इत्यस्य उच्चजर्मने किं भवति?
उत्तरम्—। UF.
89. प्रश्नः—ग्रासमन-नियमस्य प्रतिष्ठापकः"हेर्मान-ग्रासमन" कस्य देशस्य निवासी आसीत्?
उत्तरम्— जर्मनदेशस्य।
90. प्रश्नः— ग्रासमन-मते "दधामि" इत्यस्य मूलरूपं किम् आसीत्?
उत्तरम्— धधामि।
91. प्रश्नः— ग्रासमन-मते "बभार" इत्यस्य मूलरूपं किम् आसीत्?
उत्तरम्— भभार।
92. प्रश्नः—फेर्नर-नियमस्य प्रतिष्ठापकः "कार्ल-फेर्नर" कस्य देशस्य निवासी आसीत्?
उत्तरम्— जर्मनदेशस्य।
94. प्रश्नः— फेर्नर-मते संस्कृतभाषायाः "सप्तम्" गाथिकभाषायां किं भवति?
उत्तरम्— सिबुन्।
95. प्रश्नः— फेर्नर-मते "शतम्" इत्यस्य गाथिकरूपं किमस्ति?
उत्तरम्— हुन्द।
96. प्रश्नः— खरोष्ठी-लिपेः प्राचीनतमः लेखः कुत्र मिलति?
उत्तरम्— मनसेरा।
97. प्रश्नः— अन्तर्राष्ट्रीयलिपौ अलिजिह्वीय-नासिक्य-ध्वनिः किमस्ति?
उत्तरम्— छ।
98. प्रश्नः— रोमनलिपिः कीदृग् लिपिरस्ति?
उत्तरम्— ध्वनिलिपिः।
99. प्रश्नः— अरबी-लिपेः उपजीव्यलिपिः का अस्ति?
उत्तरम्— सामी-लिपिः।

100. प्रश्नः—यूरोपीय-लिपयः कस्याः रूपान्तराणि सन्ति?
उत्तरम्— ग्रीकलिपेः।
101. प्रश्नः— प्राचीन-नागरीलिपिः ब्राह्मीलिपेः कस्याः शाखायाः विकृतिरस्ति?
उत्तरम्— उत्तरीशाखायाः।
102. प्रश्नः—अन्तर्राष्ट्रीय-ध्वन्यात्मक-लिपिचिह्ननिर्माणे सर्वाधिकयोगदानं कस्यास्ति?
उत्तरम्—डेनियल-जॉन्स-महोदयस्य।
103. प्रश्नः— "भरसि" इत्यस्य संस्कृत-शब्दस्य अवेस्तारूपं किमस्ति?
उत्तरम्— बरहि।
104. प्रश्नः— "अहुर" "बवइति" इत्यस्य अवेस्ता-रूपस्य संस्कृतरूपं किमस्ति?
उत्तरम्— असुर, भवति।
105. प्रश्नः— संस्कृत-भकारस्य अवेस्तायां किं भवति?
उत्तरम्— ब।
106. प्रश्नः— अवेस्तायाः "बवइति" इत्यस्य संस्कृतरूपं किं भवति?
उत्तरम्— भवति।
107. प्रश्नः— संस्कृतस्य "भरन्ति" इत्यस्य अवेस्तारूपं किमस्ति?
उत्तरम्— बरइन्ति।
108. प्रश्नः—संस्कृतस्य "क्रतु" इत्यस्य अवेस्तारूपं किमस्ति?
उत्तरम्— खतुम्।
109. प्रश्नः—अवेस्तायाः "हथ्थ" इत्यस्य संस्कृतरूपं किम्?
उत्तरम्— हत्थ।
110. प्रश्नः—अवेस्तायाः "फ" इत्यस्य संस्कृतरूपं किम्?
उत्तरम्— प।
111. प्रश्नः—अवेस्तायाः "ए इति" इत्यस्य संस्कृतरूपं किम्?
उत्तरम्— एति।
112. प्रश्नः—संस्कृतस्य "प्रोक्तः" इत्यस्य अवेस्तारूपं किमस्ति?
उत्तरम्— प्रफाओख्तो।
113. प्रश्नः— प्राचीन-लिपीषु वर्णमाला-रहित-लिपिः किमस्ति?
उत्तरम्— सिन्धुघाटीलिपिः , हिट्टाइटलिपिः, चीनीलिपिः, रोमनलिपिः।
114. प्रश्नः— वर्णमालायुक्त-लिपिः का अस्ति?
उत्तरम्— ब्राह्मीलिपिः, अरवीलिपिः।
115. प्रश्नः— अरबी-लिपेः अभिधानं किमस्ति?
उत्तरम्— नस्खी।
116. प्रश्नः— अरबी-लिपौ कति अक्षराः विद्यन्ते?
उत्तरम्— 28 अक्षराः।

117. प्रश्नः— उर्दू-लिपेः किं नाम अस्ति?
उत्तरम्— अरबी।
118. प्रश्नः— ग्रीक-लिपौ कति अक्षराः सन्ति?
उत्तरम्— 24 अक्षराः।
119. प्रश्नः— ग्रिम-नियमानुसारेण भारतीय-गकारस्य परिवर्तितं जर्मनरूपं किमस्ति?
उत्तरम्— क्।
120. प्रश्नः—ग्रिम-नियमानुसारेण मूलभारोपीय-बकारस्य परिवर्तितं जर्मनरूपं किमस्ति?
उत्तरम्— प्।
121. प्रश्नः— माध्यन्दिनशाखायां टवर्गीयध्वनिभिन्न-षकारस्य उच्चारणं किमस्ति?
उत्तरम्— ख्।
122. प्रश्नः— गुरुमुखी-लिपेः उपजीव्यलिपिः का अस्ति?
उत्तरम्— शारदालिपिः।
123. प्रश्नः— प्रो. ब्लूलर-मतानुसारेण ब्राह्मीलिपौ कति वर्णाः आसन्?
उत्तरम्— 41 वर्णाः।
124. प्रश्नः— बौद्धग्रन्थे ललितविस्तरे कति लिपीनामुल्लेखः प्राप्यते?
उत्तरम्— 64 लिपीनाम्।
125. प्रश्नः— जैनग्रन्थे समवांगसूत्रे कति लिपीनां नामोल्लेखः प्राप्यते?
उत्तरम्— 16 लिपीनाम्।
126. प्रश्नः— संस्कृत-वाङ्मये भाषाविज्ञानस्य प्राचीन-नाम किमस्ति?
उत्तरम्— शिक्षा।
127. प्रश्नः— स्वरयन्त्राणां तेषां कार्याणां च प्रदर्शकः यन्त्रविशेषः कः?
उत्तरम्— लैरिंगोस्कोप।
128. प्रश्नः— प्राचीन-भारतीय-आर्यभाषाकालः कोऽस्ति?
उत्तरम्— 1500 B.C. 500 B.C.
129. प्रश्नः— मध्यकालीन-आर्यभाषाकालः कोऽस्ति?
उत्तरम्— 500 B.C-100 B.C.
130. प्रश्नः— आधुनिक-भारतीय-आर्यभाषाकालः कोऽस्ति?
उत्तरम्— 1000। B.C.- अद्यावधिपर्यन्तम्।
131. प्रश्नः— वैदिकसंस्कृतवत् ईरानीभाषा का अस्ति?
उत्तरम्— अवेस्ता।
132. प्रश्नः— वैदिकसंस्कृते एव मिलति नान्यत्र लकारोऽयम्?
उत्तरम्— लेट् लकारः।
133. प्रश्नः— पालिभाषायां सन्धिरियं नास्त्येव?
उत्तरम्— विसर्गसन्धिः।

134. प्रश्नः— अयोगात्मक-भाषा का अस्ति?
उत्तरम्— तिब्बती।
135. प्रश्नः— योगात्मकभाषा काऽस्ति?
उत्तरम्— तुर्की।
136. प्रश्नः— आकृतिमूलकवर्गीकरणे अश्लिष्टयोगात्मकभाषा काऽस्ति?
उत्तरम्— तेलुगू।
137. प्रश्नः— भाषायाः आकृतिमूलकवर्गीकरणविषयकं कः विकल्पः समीचीनः?
उत्तरम्— अयोगात्मकः, अश्लिष्टः, श्लिष्टः, प्रश्लिष्टः।
138. प्रश्नः— "अवेस्ता" कस्य देशस्य भाषा अस्ति?
उत्तरम्— ईरानी।
139. प्रश्नः— पालिभाषायां कतिविधा विशेषताऽवलोक्यते?
उत्तरम्— (9) नवविधा।
140. प्रश्नः— प्रकृतानां कियत्यः संख्याः, काश्च ताः?
उत्तरम्— (5) पञ्च, 1. महाराष्ट्री, 2. शौरसेनी, 3. मागधी, 4. अर्द्धमागधी, 5. पैशाची च।
141. प्रश्नः— महाराष्ट्रीयभाषायाः कियत्यो विशेषताः सन्ति?
उत्तरम्— (4) चतस्रः।
142. प्रश्नः— मागधी भाषायाः कियत्यो विशेषताः सन्ति?
उत्तरम्— (3) तिस्रः।
143. प्रश्नः— अर्द्धमागधी भाषायाः कियत्यो विशेषताः सन्ति?
उत्तरम्— (3) तिस्रः।
144. प्रश्नः— पैशाची भाषायाः कियत्यो विशेषताः सन्ति?
उत्तरम्— (3) तिस्रः।
145. प्रश्नः— शौरसेनी भाषायाः कियत्यो विशेषताः सन्ति?
उत्तरम्— (3) तिस्रः।
146. प्रश्नः—अपभ्रंशस्य कियत्यो विशेषताः सन्ति?
उत्तरम्— (12) द्वादश।
147. प्रश्नः—"मैथिलीभाषा" कस्या अपभ्रंशभाषायाः अन्तर्गता?
उत्तरम्— मगधीभाषायाः अन्तर्गता।
148. प्रश्नः—भोजपुरीभाषा कस्या अन्तर्गता?
उत्तरम्— मगधीभाषायाः अन्तर्गता।
149. प्रश्नः—संस्कृत-भाषया साम्यं कस्याः भाषायाः विद्यते?
उत्तरम्— अवेस्ता-भाषायाः।
150. प्रश्नः—"तोषारी" भाषा कस्य परिवारस्य कस्य वर्गस्य च विद्यते?
उत्तरम्— भारत-यूरोपीय-परिवारस्य, "केतुम्" वर्गस्य च।

151. प्रश्नः—काकेशी-परिवारस्य कियत्यो विशेषताः सन्ति?
उत्तरम्— (5) पञ्च।
152. प्रश्नः— अमेरिकी-परिवारे प्रायः भाषाणां सङ्ख्या कियत्यः?
उत्तरम्— (1000) सहस्रम्।
153. प्रश्नः— रूक्षताया दूरीकरणं किं कथ्यते?
उत्तरम्— परिमार्जनम्।
154. प्रश्नः— अद्यत्वे ज्ञानक्षेत्रं कतिधा विभक्तम्, तच्च किम्?
उत्तरम्— (3) त्रिधा, 1. भौतिकविज्ञानम्, 2. समाजविज्ञानम्, 3. ग्गानविकी च।
155. प्रश्नः— व्याकरणस्य भाषाविज्ञानयोः कः सम्बन्धः?
उत्तरम्— उपकार्योपकारकभावसम्बन्धः।
156. प्रश्नः— शास्त्ररूपे भाषाविज्ञानस्य विशेषताः कतिसङ्ख्यकाः?
उत्तरम्— (5) पञ्च।
157. प्रश्नः— भाषाविज्ञानस्य प्रयोजनानि कियन्ति?
उत्तरम्— (7) सप्त।
158. प्रश्नः— भाषाविज्ञानस्य अङ्गानि कियन्ति?
उत्तरम्— (6) षड्।
159. प्रश्नः— भाषाविज्ञानस्य शाखाः कियत्यः सन्ति, काश्च ताः?
उत्तरम्— (3) तिस्रः, 1. वर्णनात्मक, 2. ऐतिहासिक, 3. तुलनात्मकाः।
160. प्रश्नः— कतिविधा वाक्, का च सा?
उत्तरम्— (4) चतुर्विधा, 1. परा, 2. पश्यन्ति, 3. मध्यमा, 4. वैखरी च।
161. प्रश्नः— भाषाविज्ञानस्य ज्ञानस्य काभिः शाखाभिः साकं सम्बन्धोऽस्ति?
उत्तरम्—(क) मनोविज्ञानेन, (ख) शरीर विज्ञानेन, (ग) भौतिक विज्ञानेन, (घ) व्याकरणेन, (ङ) साहित्येन, (च) इतिहासेन, (छ) भूगोलेन, (ज) मानवविज्ञानेन, (झ) समाज विज्ञानेन, (ञ) दर्शनेन च साकं सम्बन्धो विद्यते।
162. प्रश्नः— ध्वनेः प्रसिद्धो भेदः कतिविधः, कश्च सः?
उत्तरम्— (2) द्विविधः, 1. स्वरः, 2. व्यञ्जनञ्च।
163. प्रश्नः— को नाम स्वरः?
उत्तरम्— (क) यासामुच्चारणे निःश्वासे यत्र न कुत्राप्यवरोधो भवति तत्र ताः ध्वनयः "स्वरः" नाम्ना व्यवह्रियन्ते। (ख) स्वयं राजन्ते स्वरा वा।
164. प्रश्नः— किं नाम व्यञ्जनम्?
उत्तरम्— यासां ध्वनीनामुच्चारणे निःश्वासे कुत्राऽप्यवरोधो जायते ता ध्वनयो "व्यञ्जन" नाम्ना व्यवह्रियन्ते।
165. प्रश्नः— मुखविवरस्याऽनुसारेण स्वराणां कियन्तो भेदाः, के च ते?
उत्तरम्— (4) चत्वारो भेदाः, 1. विवृतम्, 2. अर्धविवृतम्, 3. अर्धसंवृतम्, 4. संवृतञ्च।

166. प्रश्नः— स्वरप्रधाना का भाषा?
उत्तरम्— वैदिकभाषा।
167. प्रश्नः— कर्ण-नेत्रयोर्भाषायां कियन्ति अन्तराणि?
उत्तरम्— (5) पञ्च।
168. प्रश्नः— ध्वनिविज्ञानस्य कतिविधः प्रमुखः पक्षः, कश्च सः?
उत्तरम्— (2) द्विविधः, 1. औच्चारणिकः, 2. ध्वानिकश्च।
169. प्रश्नः—स्वनिमस्य कियत्यो विशेषता विद्यते?
उत्तरम्— उच्चरित-भाषायाः।
170. प्रश्नः—"संस्कृतम्" कीदृशी भाषा विद्यते?
उत्तरम्— "श्लिष्ट-योगात्मका भाषा"।
171. प्रश्नः—भाषाविज्ञानदृष्ट्या भाषायाः अङ्गं किम्?
उत्तरम्— वाक्यम्।
172. प्रश्नः—भाषाविज्ञानदृष्ट्या संस्कृते कियन्ति कारकाणि?
उत्तरम्— (7) सप्त।
173. प्रश्नः—वाच्यं कतिविधम्, किञ्च तत्?
उत्तरम्— (3) त्रिविधम्, 1. कर्तृवाच्यम्, 2. कर्मवाच्यम्, 3. भाववाच्यञ्च।
174. प्रश्नः—कालः कतिविधः, कश्च सः?
उत्तरम्— (3) त्रिविधः, 1. भूतकालः, 2. वर्तमानकालः, 3. भविष्यत्कालश्च।
175. प्रश्नः—भूतकालस्य कियन्तो भेदाः, के च ते?
उत्तरम्— (3) त्रयो भेदाः, 1. अद्यतनम्, 2. अनद्यतनम्, 3. परोक्षश्च।
176. प्रश्नः— अर्थाऽनुसारेण वाक्यस्य कियन्तो भेदाः, के च ते?
उत्तरम्— (8) अष्टौ भेदाः, 1. विधिवाक्यम्, 2. निषेधवाक्यम्, 3. प्रश्नवाक्यम्, 4. अनुज्ञावाक्यम्, 5. इच्छार्थकवाक्यम्, 6. सन्देहार्थकवाक्यम्, 7. संकेतार्थकवाक्यम्, 8. विस्मयादिबोधकवाक्यञ्च।
177. प्रश्नः— शब्दः कतिविधः, कश्च सः?
उत्तरम्— (3) त्रिविधः, 1. वाचकः, 2. लक्षकः, 3. व्यञ्जकश्च।
178. प्रश्नः— अर्थः कतिविधः, कश्च सः?
उत्तरम्— (3) त्रिविधः, 1. वाच्यः, 2. लक्ष्यः, 3. व्यङ्ग्यश्च।
179. प्रश्नः— शब्दस्य कति वृत्तयः, काश्च ताः?
उत्तरम्— (3) तिस्रः, 1. अभिधा, 2. लक्षणा, 3. व्यञ्जना।
180. प्रश्नः— पाठकस्य कियन्तो गुणाः?
उत्तरम्— (6) षड्।
181. प्रश्नः— पाठकस्य कियन्तो दोषाः?
उत्तरम्— (6) षड्।

182. प्रश्नः—तुलनात्मक-भाषाविज्ञानस्य जनकः कः?
उत्तरम्— पाणिनिः।
183. प्रश्नः—समास-कारकप्रकरणयोः मूलाधारौ कौ स्तः?
उत्तरम्— (2) द्वौ, 1. वाक्यविज्ञानम्, 2. अर्थविज्ञानञ्च।
184. प्रश्नः— भाषाविज्ञानस्य निर्माणयुगः कः उच्यते?
उत्तरम्— अष्टादश-शताब्दी।
185. प्रश्नः—आधुनिक-भाषाविज्ञानस्य जनकः कः आसीत्?
उत्तरम्— "फर्दिनान्द द सोसूर" महोदयः।
186. प्रश्नः—लिपेः सम्बन्धः केन विद्यते?
उत्तरम्— सभ्यतायाः विकासेन।
187. प्रश्नः—मुख्यतो लिपेः विकास-सोपानानि कियन्ति, कानि च तानि?
उत्तरम्—(3) त्रीणि, 1. चित्रलिपिः, 2. भावलिपिः, 3. ध्वनिलिपिः।
188. प्रश्नः—लिपेः प्राचीनतमं रूपं किम्?
उत्तरम्— चित्रात्मकम्।
189. प्रश्नः—भारतस्य सर्वाः लिपयः कुतो निःसृताः?
उत्तरम्— ब्राह्मीलिपितः।
190. प्रश्नः—उत्तरी-शैलीतो विकसिताः कियत्यो लिपयः, काश्च ताः?
उत्तरम्—(5) पञ्च, 1. गुप्तलिपिः, 2. कुटिललिपिः, 3. प्राचीन-नागरी, 4. शारदा, 5. बँगलालिपि च।
191. प्रश्नः—भाषा-भूगोलस्य उपयोगितायाः कियन्ति कारणानि?
उत्तरम्— (6) षट्।
192. प्रश्नः—प्रत्येक-विज्ञानस्य कियन्तः पक्षाः, के च ते?
उत्तरम्—(3) त्रयः, 1. सिद्धान्त-पक्षः, 2. अनुप्रयोग-पक्षः, 3. व्यावहारिकोपयोगश्च।
193. प्रश्नः—भाषा-विश्लेषणस्य कियन्तः स्तराः, के च ते?
उत्तरम्— (4) चत्वारः, 1. पदम्, 2. स्वनम्, 3. वाक्यम्, 4. अर्थश्च।
194. प्रश्नः—कस्यापि संगणकस्य कौ मुख्यावयवौ?
उत्तरम्— 1. हार्डवेयर, 2. सॉफ्टवेयर।
195. प्रश्नः—"हार्डवेयर" इत्यस्य कार्यं किम्?
उत्तरम्— संगणके अभियान्त्रिकपक्षस्य ज्ञानम्।
196. प्रश्नः—संगणके विभिन्न-कार्यनिष्पादन-क्षमता केन आगच्छति?
उत्तरम्— "सॉफ्टवेयर" इत्यनेन।
197. प्रश्नः—आधुनिक-व्यक्तिगतसंगणके कियन्तोऽवयवाः, के च ते?
उत्तरम्—(3) त्रयोऽवयवाः, 1. केन्द्रप्रसारविभागः. {C.P.U.} 2. जवनिका [Monitor], 3. कुञ्जिकामण्डलम् [Keyboard]

198. प्रश्नः—भाषायाः आकृतिमूलक-वर्गीकरण-विषयः कः?
उत्तरम्— अयोगात्मकः, अश्लिष्टः, प्रश्लिष्टः, विश्लिष्टः।

199. प्रश्नः—"उष्ट्र" इत्यस्य "ऊँट" इति ध्वनिपरिवर्तनस्य कः प्रकारः?
उत्तरम्— अनुनासिकता।

200. प्रश्नः—अनुनासिक-वर्णानां का संख्या?
उत्तरम्— (5) पञ्च।

201. प्रश्नः— कस्मिन् यन्त्रे कृत्रिम-तालुः इत्यस्य प्रयोगो भवति?
उत्तरम्— पैलेटोग्राफस्य।

202. प्रश्नः—आवृत्ति एवं उच्चारण-समयस्य बोधक-यन्त्रं किम्?
उत्तरम्— स्पैक्ट्रोग्राफः।

203. प्रश्नः—"ध्वनिपरिवर्तनस्य आन्तरिक-कारणं किम्?
उत्तरम्— ध्वनेः परिवेशः।

204. प्रश्नः—"शाक" -"साग" अस्य ध्वनि-परिवर्तनस्य कारणं किम्?
उत्तरम्— घोषीकरणम्।

205. प्रश्नः—"स्वरतन्त्रिणां मध्ये प्रस्फुटित-अंशस्य किं नाम?
उत्तरम्— काकलः।

206. प्रश्नः— पाणिनीय-शिक्षायां ध्वनिः कति वर्गेषु विभक्तः?
उत्तरम्— (5) पञ्च।

207. प्रश्नः—"अ" इति कीदृशः स्वरः?
उत्तरम्— केन्द्रीय-स्वरः।

208. प्रश्नः—"ऊ" अत्र कीदृशः स्वरः?
उत्तरम्— पश्च-स्वरः।

209. प्रश्नः—"ऐ" अत्र कीदृशः स्वरः?
उत्तरम्— अर्धविवृत-स्वरः।

210. प्रश्नः—वैदिक-संस्कृते प्रयुक्त-लकारः कः?
उत्तरम्— लेट् लकारः।

211. प्रश्नः—लौकिक-संस्कृते कति ध्वनयः सन्ति?
उत्तरम्— (48) अष्टचत्वारिंशत्।

212. प्रश्नः—आंग्लभाषा भारोपीय-परिवारस्य कया भाषया सम्बद्धः?
उत्तरम्— इयालिक।

213. प्रश्नः—"रोमन-लिपि" इत्यस्मिन् ग्रीकात् कौ द्वौ अक्षरौ गृहीतः?
उत्तरम्— लई ण

214. प्रश्नः—विसर्गस्य (:) उच्चारण-स्थानं किम्?
उत्तरम्— कण्ठः।

215. प्रश्नः— वैदिक-ध्वनि-समूहेषु स्वराणां का: संख्या:?
उत्तरम्— (13) त्रयोदश।
216. प्रश्नः— ब्राह्मी-लिपि: कीदृश: अस्ति?
उत्तरम्— वैज्ञानिक-लिपि:।
217. प्रश्नः— भरतमुने: अनुसारं प्राकृत-भाषा: कति सन्ति?
उत्तरम्— (7) सप्त।
218. प्रश्नः—"भतृजाय=भावज" अत्र ध्वनिपरिवर्तनस्य नियम: क:?
उत्तरम्— स्वर-व्यञ्जनलोप:।
219. प्रश्नः—"भाण्डागार=भण्डार" अत्र ध्वनिपरिवर्तनस्य नियम: क:?
उत्तरम्— स्वर-व्यञ्जनलोप:।
220. प्रश्नः—"समुद्र=समुन्दर" अत्र ध्वनिपरिवर्तनस्य नियम: क:?
उत्तरम्— स्वर-व्यञ्जनलोप:।
221. प्रश्नः—प्राचीन-नागरीलिपे: कया शाखया बाँगला-लिपे: विकास: अभूत्?
उत्तरम्— पूर्वी।
222. प्रश्नः—अन्तर्राष्ट्रीय स्पर्श-ओष्ठ्यलिपि: क:?
उत्तरम्— Pb
223. प्रश्नः—अन्तर्राष्ट्रीय लिपे: स्पर्श-अलिजिह्वीय-लिपि: क:?
उत्तरम्— aG
224. प्रश्नः— अन्तर्राष्ट्रीय लिपे: ओष्ठ्य-नासिक्यलिपि: क:?
उत्तरम्— M
225. प्रश्नः—प्राचीन-नागरी-लिपि: "ब्राह्मीलिपे:" कया शैल्या विकसिता अभूत्?
उत्तरम्— उत्तरी-शैल्या।
226. प्रश्नः— अन्तर्राष्ट्रीय कण्ठ्य-नासिक्य-लिपि: क:?
उत्तरम्— N
227. प्रश्नः— अन्तर्राष्ट्रीय-लिपे: पार्श्विक-संहर्षहीन-मूर्धन्य: क:?
उत्तरम्— I
228. प्रश्नः— अन्तर्राष्ट्रीय उत्क्षिप्त मूर्धन्य-लिपि: क:?
उत्तरम्— R
229. प्रश्नः—V इयं का अन्तर्राष्ट्रीय-लिपि: अस्ति?
उत्तरम्— दन्तोष्ठ्य-संहर्षहीन अर्धस्वर:।
230. प्रश्नः—Ce Ze इयं का अन्तर्राष्ट्रीय-लिपि: अस्ति?
उत्तरम्— संहर्षी वर्त्स्य तालव्य:।
231. प्रश्नः— अन्तर्राष्ट्रीय संवृत-स्वर-लिपि: का?
उत्तरम्— Iu

232. प्रश्नः—आरोही-अवरोही-भेदयोः केषां स्वराणां द्विधा विभक्तुं शक्यते?
उत्तरम्— संयुक्तस्वरः।
233. प्रश्नः— अन्तर्राष्ट्रीय-लिपौ स्पर्शतालव्यलिपिरस्ति?
उत्तरम्— C J.
234. प्रश्नः— अन्तर्राष्ट्रीय-लिपौ दन्त्य-वर्त्स्य-स्पर्श-लिपिः किमस्ति?
उत्तरम्— T D.
235. प्रश्नः— अन्तर्राष्ट्रीय-लिपौ "ङ्गं" इत्यस्य ध्वनिसंवर्गः कः?
उत्तरम्— स्पर्शकण्ठ्यः।
236. प्रश्नः— नेपाली-भाषायाः लिपिः का अस्ति?
उत्तरम्— नेवारीलिपिः।

**स्थान-प्रयत्न-विवेचनम्-**

237. प्रश्नः— भाषिक-ध्वनि-वर्गीकरणस्य आधाराः काः सन्ति?
उत्तरम्— स्थान-प्रयत्न-कारणानि।
238. प्रश्नः—कियन्ति उच्चारण-स्थानानि?
उत्तरम्— (7) सप्त।
239. प्रश्नः— अनुनासिकवर्णोच्चारणे सहायकौ स्तः?
उत्तरम्— मुख-नासिके।
240. प्रश्नः— दन्त्यवर्णाः के सन्ति?
उत्तरम्— लृ त थ द ध न ल स।
241. प्रश्नः— अकारस्य उच्चारणस्थानं किमस्ति?
उत्तरम्— कण्ठः।
242. प्रश्नः— हक्वोः(ह, कु) उच्चारणस्थानं किमस्ति?
उत्तरम्— कण्ठः।
243. प्रश्नः— इकारस्य उच्चारणस्थानं किमस्ति?
उत्तरम्— तालुः।
244. प्रश्नः—यच्वोः(य, चु) उच्चारणस्थानं किमस्ति?
उत्तरम्— तालुः।
245. प्रश्नः— ऋकारस्य उच्चारणस्थानं किम्?
उत्तरम्— मूर्द्धा।
246. प्रश्नः— टवर्गस्य रकारस्य च उच्चारणस्थानं किमस्ति?
उत्तरम्— मूर्द्धा।
247. प्रश्नः— लृकारस्य उच्चारणस्थानं किम्?
उत्तरम्— दन्ताः।
248. प्रश्नः— ˙वर्ग-लकारयोः उच्चारणस्थानं किम्?
उत्तरम्— दन्ताः।

249. प्रश्नः— उकार-पवर्गयोः उच्चारणस्थानं किम्?
उत्तरम्— ओष्ठौ।
250. प्रश्नः— ञमङणनानाम् उच्चारणस्थानं किम्?
उत्तरम्— नासिका।
251. प्रश्नः— एकारस्य उच्चारणस्थानं किम्?
उत्तरम्— कण्ठतालुः।
252. प्रश्नः— औकारस्य उच्चारणस्थानं किम्?
उत्तरम्— कण्ठोष्ठ्यम्।
253. प्रश्नः— वकारस्य उच्चारणस्थानं किम्?
उत्तरम्— दन्तोष्ठ्यम्।
254. प्रश्नः— "स्" कारस्य उच्चारणस्थानं किम्?
उत्तरम्— दन्त्यः।
255. प्रश्नः— "ष्" कारस्य उच्चारणस्थानं किम्?
उत्तरम्— मूर्धन्यः।
256. प्रश्नः— "र" "ल" "य" इति वर्णानां का संज्ञा?
उत्तरम्— अन्तःस्थः।
257. प्रश्नः— आभ्यन्तरप्रयत्न-ईषत्स्पृष्टं कं कथ्यते?
उत्तरम्— अन्तःस्थः।
258. प्रश्नः— श् ष् स् ह" एतेषां वर्णानां का संज्ञा?
उत्तरम्— ऊष्माणः।
259. प्रश्नः—आभ्यन्तर-प्रयत्नमाधारीकृत्य व्यञ्जनस्य कति भेदाः जायन्ते?
उत्तरम्— (8) अष्टौ।
260. प्रश्नः—"श" इत्यस्य ध्वनि-वर्ग कः?
उत्तरम्— संघर्षी।
261. प्रश्नः—अन्तःस्थस्य अपरं नाम किम्?
उत्तरम्— अर्द्धस्वरः।
262. प्रश्नः— महाप्राणीकरणस्य उदाहरणं किमस्ति?
उत्तरम्— बाष्प-भाप।
263. प्रश्नः—घोष-अघोषध्वन्योः सुस्पष्टमापकः यन्त्रविशेषः कः?
उत्तरम्— काइमोग्राफ।
264. प्रश्नः— श्वासग्रहणकाले स्वरतन्त्रीणां कीदृग् स्थितिः भवति?
उत्तरम्— पूर्णविवृतः।
265. प्रश्नः— ध्वन्युच्चारणे सर्वाधिकोपयोगी इन्द्रियं किमस्ति?
उत्तरम्— जिह्वा।

266. प्रश्नः— कस्योच्चारणे वायुः निर्बाधगत्या बहिः निःसरति?
उत्तरम्— स्वरस्य।
267. प्रश्नः— वर्गाणां तृतीयवर्णस्य बाह्यप्रयत्नं किमस्ति?
उत्तरम्— अल्पप्राणः।
268. प्रश्नः— खकारस्य बाह्यप्रयत्नं किमस्ति?
उत्तरम्— विवारः।
269. प्रश्नः— स्वराणाम् आभ्यन्तरप्रयत्नं किमस्ति?
उत्तरम्— विवृतम्।
270. प्रश्नः— शकारस्य ध्वनिसंवर्गः कोऽस्ति?
उत्तरम्— संघर्षी।
271. प्रश्नः— संघर्षी-ध्वनिसंवर्गे कः परिगणितः अस्ति?
उत्तरम्— य्।
272. प्रश्नः— संस्कृतभाषायां "स"कारस्य ध्वनिसंवर्गः कोऽस्ति?
उत्तरम्— अन्तस्थः।
273. प्रश्नः— संस्कृतभाषायाम् अन्तस्थवर्णाः कति सन्ति?
उत्तरम्— 04 चत्वारः।
274. प्रश्नः— रकारः कस्मिन् ध्वनिसंवर्गे परिगणितः वैयाकरणैः?
उत्तरम्— अन्तस्थसंवर्गे।
275. प्रश्नः— अर्धस्वराः के सन्ति?
उत्तरम्— अन्तस्थाः।
276. प्रश्नः— ककारस्य घोषरूपं किमस्ति?
उत्तरम्— ग्।
277. प्रश्नः— तकारस्य घोषरूपं किमस्ति?
उत्तरम्— द्।
278. प्रश्नः— चकारस्य महाप्राणभूतः कः?
उत्तरम्— छ्।
279. प्रश्नः— फकारस्य अल्पप्राणभूतः कः?
उत्तरम्— प्।
280. प्रश्नः— "प" कारस्य महाप्राणभूतः कः?
उत्तरम्— फ्।
281. प्रश्नः— "प" कारस्य घोषरूपं किम्?
उत्तरम्— ब्।
282. प्रश्नः— "त"कारस्य महाप्राणरूपं किम्?
उत्तरम्— थ्।

283. प्रश्नः— "ट"कारस्य ध्वनिवर्गः कः?
उत्तरम्— अघोष-महाप्राण-मूर्धन्य-स्पर्श।
284. प्रश्नः— अल्पप्राणसंज्ञकाः के सन्ति?
उत्तरम्— प् त् च्।
285. प्रश्नः— महाप्राणसंज्ञकाः के सन्ति?
उत्तरम्— घ् झ् ध्।
286. प्रश्नः— तालव्यवर्णः कोऽस्ति?
उत्तरम्— श्।
287. प्रश्नः— मानस्वरेषु पञ्चस्वराः के सन्ति?
उत्तरम्— उ, ऊ, ओ, औ, आ।
288. प्रश्नः— डेनियल-जॉन्स-महोदयस्य मानस्वरे अग्रस्वराः के सन्ति?
उत्तरम्— इ, ई, ए, ऐ।
289. प्रश्नः—डेनियल-जॉन्स-महोदयस्य स्वरचतुर्भुजं मानस्वरं वा अभिलक्ष्य अर्धसंवृतस्वरान् निर्दिशतु?
उत्तरम्— ए, ओ।
290. प्रश्नः— अर्धविवृतस्वराः के सन्ति?
उत्तरम्— ऐ, औ।
291. प्रश्नः— संवृतस्वराः कस्मिन् विकल्पे प्रदर्शिताः सन्ति?
उत्तरम्— इ, ओ।
292. प्रश्नः— विवृतस्वराः के सन्ति?
उत्तरम्— अ, आ।
293. प्रश्नः— खर्-वर्णाः किं भवन्ति?
उत्तरम्— श्वासाः अघोषाश्च।
294. प्रश्नः— हश्-वर्णाः किं भवन्ति?
उत्तरम्— नादाः घोषाश्च।
295. प्रश्नः— वर्गाणां प्रथम-तृतीय-पञ्चमाः यमश्च किं भवन्ति?
उत्तरम्— अल्पप्राणाः।
296. प्रश्नः— वर्गाणां द्वितीय-चतुर्थौ शलश्च किं भवन्ति?
उत्तरम्— महाप्राणाः।
297. प्रश्नः— आभ्यन्तरप्रयत्नाः कति प्रकारकाः भवन्ति?
उत्तरम्— 05 पञ्चप्रकारकाः।
298. प्रश्नः— स्पृष्टं प्रयत्नं केषां भवति?
उत्तरम्— स्पर्शाणाम्।
299. प्रश्नः— ईषत्स्पृष्टं प्रयत्नं केषां भवति?
उत्तरम्— अन्तःस्थानाम्।

300. प्रश्नः— ईषद्विवृतं प्रयत्नं केषां भवति?
उत्तरम्— ऊष्मणाम्।
301. प्रश्नः— वकाराणां प्रयत्नं किं भवति?
उत्तरम्— विवृतम्।
302. प्रश्नः— ह्रस्वस्य अवर्णस्य प्रयोगे किं भवति?
उत्तरम्— संवृतम्।
303. प्रश्नः— बाह्यप्रयत्नाः कतिविधाः भवन्ति?
उत्तरम्— 11 एकादशधाः।
304. प्रश्नः— अल्पवायोः यत्र प्रयोगः स्युः तत्र बाह्यप्रयत्नः कः?
उत्तरम्— संवारः।
305. प्रश्नः— अधिकवायोः यत्र प्रयोगः स्युः तत्र बाह्यप्रयत्नः कः?
उत्तरम्— महाप्राणः।
306. प्रश्नः— "श्वास" बाह्यप्रयत्नस्य अपरं नाम किमस्ति?
उत्तरम्— अघोषः।
307. प्रश्नः— संस्कृते "स" वर्णं का ध्वनिः कथ्यते?
उत्तरम्— ऊष्मः।
308. प्रश्नः— संस्कृते अनुस्वारस्य ध्वनिवर्गः कः?
उत्तरम्— नासिक्यं।
309. प्रश्नः— विसर्गः कस्य पश्चात् प्रयुक्तो भवति?
उत्तरम्— सामान्यस्वरस्य।
310. प्रश्नः— कस्याः ध्वनेः निःश्वासः मुखविवरेन सह नासिकाविवरणात् निस्सरति?
उत्तरम्— अनुनासिकध्वनेः।
311. प्रश्नः— "ओ" इति कः स्वरः?
उत्तरम्— अर्धसंवृतः।
312. प्रश्नः— "उ" इति कः स्वरः?
उत्तरम्— संवृतः।
313. प्रश्नः— "ल" इति कस्य वर्गस्य अस्ति?
उत्तरम्— पार्श्विकस्य।
314. प्रश्नः— ग्रिमनियमस्य प्रतिष्ठाता "याकोबग्रिम" कस्य देशस्य निवासी आसीत्?
उत्तरम्— जर्मन।
315. प्रश्नः— "ग्रिम" महोदयस्यानुसारं मूलभारोपीय घोष-महाप्राणस्य जर्मनिके किं परिवर्तनम्?
उत्तरम्— घोष-अल्पप्राणः।
316. प्रश्नः— "ग्रिम" महोदयस्यानुसारं मूलभारोपीयघोष-अल्पप्राणस्य जर्मनिके किं परिवर्तनम्?
उत्तरम्— अघोष-अल्पप्राणः।

317. प्रश्नः— "ग्रिम" महोदयस्यानुसारं निम्न जर्मन "क" उच्च जर्मने किं रूपम्?
उत्तरम्— ख्।

318. प्रश्नः—"ग्रिम" महोदयस्यानुसारं निम्न जर्मन "THREE" इत्यस्य उच्च जर्मने किं रूपम्?
उत्तरम्— DREI

319. प्रश्नः—माध्यन्दिन शाखानुसारं ट-वर्गीय ध्वनै भिन्नः "ष" इत्यस्य उच्चारणं कीदृशः?
उत्तरम्—ख्।

320. प्रश्नः—ब्राह्मी लिप्यै विकसिता शारदा लिपेः प्रचारः भारतस्य कस्मिन् प्रान्ते अभूत्?
उत्तरम्— पंजाब, कश्मीरे।



# 8

# कल्पशास्त्रम् ( हस्तौ कल्पोऽथ पठ्यते )

# The Science of Detailing of Religious Ceremonies

## ( क ) कल्पशास्त्रस्य परिचयः

विपुले वेदाङ्गसाहित्ये कल्पस्य द्वितीयं स्थानमस्ति। कल्पस्य वैदिकसाहित्येऽतिशयं महत्त्वपूर्णं स्थानमस्ति। "कल्पो वेदविहितानां कर्मणामानुपूर्व्येण कल्पनाशास्त्रम्" वेदेषु विस्तीर्णं कर्मकाण्डं सूत्रबद्धं कर्तुमेव कल्पस्याविर्भावः। अर्थात् वेदविहितानां कर्मणां व्यवस्थापकं शास्त्रं "कल्पः" इत्यभिधीयते। यथोक्तं विष्णुमित्रेण "कल्पो वेदविहितानां कर्मणामानुपूर्व्येण कल्पनाशास्त्रम्" इति। येषां यज्ञयागादिविहितानां विवाहोपनयनादिकर्मणाञ्च महत्त्वपूर्णं प्रतिपादनं वैदिकग्रन्थेषु कृतमस्ति तेषां सूत्रग्रन्थानामभिधानमस्ति कल्पः। ब्राह्मणकाले यागस्य तावान् प्रचारो जातो यत्तेषां यथावज्ज्ञानाय पूर्णपरिचयप्रदायकग्रन्थानामावश्यकताऽनुभूयते स्म। तामेवावश्यकतां स्वल्पेन शब्देन पूरयितुं कल्पसूत्राणि विरचितानि। कल्पसूत्राणि द्विविधानि—1. श्रौतसूत्राणि 2. स्मार्त्तसूत्राणि च। श्रुत्युक्तयागविधिप्रकाशकानि श्रौतसूत्राणि, अर्थात् श्रुत्युक्तदर्शपौर्णमासादियज्ञानां विधानबोधकानि श्रौतसूत्राणि। इत्थं श्रौतसूत्रेषु ब्राह्मणग्रन्थवर्णितानां दर्शपौर्णमासाग्निहोत्रादिश्रौताग्नियज्ञानां क्रमबद्धविवेचनमुपलभ्यते। स्मार्त्तसूत्राणि अपि द्विधा गृह्यसूत्राणि धर्मसूत्राणि च। धर्मसूत्रेषु धार्मिकनियमाः, प्रजानां राज्ञां च कर्तव्यानां वर्णनमस्ति। गृह्यसूत्रेषु त्रैवर्णिकैरवश्यानुष्ठेयानामनुष्ठानानां यागविशेषाणां वर्णनं विद्यते। षोडशसंस्काराणां विशिष्टं वर्णनं च वर्तते। वेदानां कल्पसूत्राणाम् आध्यात्मिकविचारधारायाः वर्णनं वर्तते। शुल्बसूत्रेषु तु वेदीनिर्माणप्रकारस्य एव प्राधान्यमस्ति। शुल्बसूत्राणि केवलं यजुर्वेद एव उपलभ्यन्ते। अर्थात् येषां यज्ञयागादिविहितानां विवाहोपनयनादिकर्मणाञ्च महत्त्वपूर्णं प्रतिपादनं वैदिकग्रन्थेषु कृतमस्ति, तेषां सूत्रग्रन्थानामभिधानमस्ति कल्पः। कल्पग्रन्था वेदाङ्गस्य प्राचीनतमा ग्रन्थास्सन्ति।

स्वल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः।।

उपर्युक्तेन सूत्रलक्षणेन विज्ञायते यत्—धर्मशास्त्रीयविधिविधानानां, कर्मानुष्ठानानां,

नीतिनियमानां, व्यवहृत-व्यवहाराणां धर्मस्य प्रवर्तनानाञ्च सङ्क्षेपतमं, सारयुतं, संशीतिरहितं कल्पसूत्रस्य विवेचनमिति।

## ( ख ) कल्पसूत्ररचनाया उद्देश्यानि

वैदिकवाङ्मयस्येतिहासे कल्पसूत्राणामाविर्भावो नव्ययुगस्य सूत्रपात इव लक्ष्यते। एतदपि विशिष्टमुद्देश्यमासीद्यत्—प्राक्तने वैदिके युगे तत्साहित्यस्य विस्तरत्वात्, दुर्गमत्वात् रहस्यमयत्वाच्च यथास्थितिबोधने दुस्तरं कार्यमासीत्। वशिष्टयश्चैषां न्यूनातिन्यूनशब्देषु—अधिकादधिकं भावप्रकटनमस्ति। तथाहि—भावस्य, भाषायाः, विचारस्य, शैल्याः, रचनाविधानस्य च दृष्ट्याऽपि परिवर्तनं दरीदृश्यते।

## ( ग ) कल्पसूत्रस्य मुख्यो विषयः, भेदः, विषयविभागश्च

कल्पसूत्रे वैदिककर्मणां प्रतिपादनं संस्काराणां व्याख्यानं यज्ञानाञ्च विधानवर्णनं प्राधान्यरूपेण विवेचितं विद्यते। यज्ञादीनां वैशिष्ट्यस्य प्रतिपादनं वेदेभ्यो ब्राह्मणेभ्यश्चोपलभ्यते। प्राचीन-कालादारभ्याधुनापर्यन्तं कल्पसूत्रस्येमे ग्रन्थाः कर्मकाण्डजुषां सामाजिकानां सात्त्विकजीवनस्य परिचायकाः सन्ति। कल्पसूत्राणां मुख्यतस्त्रयो भेदा भवन्ति। केषाञ्चन मते चतुर्भेदा भवन्ति। यथा—

1. श्रौतसूत्रम्, 2. गृह्यसूत्रम्, 3. धर्मसूत्रम्, 4. शुल्बसूत्रम्।

1. श्रौतसूत्रम्—श्रुतिप्रतिपादितदर्शपौर्णमासादियज्ञानां विधानबोधकानि श्रौतसूत्राणि। वेदोक्ते कर्मकाण्डे सनातनहिन्दूसमाजस्य सुदीर्घकालात् नैष्ठिकभावेन सुदृढो विश्वासः प्रचलति। वैदिकसंहितासु वर्णितानि यानि यज्ञ-यागादिविधानानि सन्ति तानि श्रौतसूत्रेषु साररूपेण सङ्कलितानि सन्ति। तेषां मुख्यं कार्यं वैदिकहविर्विधानस्य सोमयज्ञस्य च धार्मिकानुष्ठानानां प्रतिपादनमस्ति। आश्वलायनश्रौतसूत्रे द्वादशाध्यायाः सन्ति। शाङ्खायन-श्रौतसूत्रञ्चाष्टादशाध्यायेषु विभक्तं विविध-यज्ञ-यागादीनां प्रतिपादकमस्ति। समुपलब्धश्रौतसूत्रेषु—

(क) आश्वलायनश्रौतसूत्रम्, (ख) शाङ्खायनश्रौतसूत्रम्,
(ग) मानवश्रौतसूत्रम्, (घ) बौधायनश्रौतसूत्रम्,
(ङ) आपस्तम्बश्रौतसूत्रम्, (च) हिरण्यकेशीश्रौतसूत्रम्,
(छ) जैमिनीयश्रौतसूत्रम्, (ज) कात्यायनश्रौतसूत्रम्,
(झ) वैतानश्रौतसूत्रम्, (ञ) लाट्यायनश्रौतसूत्रम्,
(ट) द्राह्यायणश्रौतसूत्रम्,

## ( घ ) शुक्लयजुर्वेदीय-कल्पसूत्राणां वैशिष्ट्यम्

प्रथमाध्यायः कात्यायनस्य मूलभूतानां विचाराणां निर्देशकोऽस्ति। अपि च- द्वितीयाध्यायात्-एकविंशत्यध्यायपर्यन्तस्थिताः वर्ण्यविषयाः शतपथब्राह्मणस्य भिन्नभिन्नकाण्डानामाधारमाधृत्य विरचिताः सन्ति। द्वाविंशत्यध्यायात् चतुर्विंशत्यध्यायपर्यन्तानां वर्ण्यविषयाः—एकाह-अहीन-सत्रसम्बद्धाः सन्ति। इति तु सुविदितमस्ति यत् उत्पातानां शमने यज्ञे च विहितानां त्रुटीनां परिमार्जनं प्रायश्चित्तेनैव भवति। यद्यपि ब्राह्मणग्रन्थेष्वपि यज्ञ-यागादीनां विधानं समुपलब्धं भवति। श्रौतसूत्राणां मुख्यमुद्देश्यं श्रौतयागानां सङ्क्षेपेण सुव्यवस्थितं क्रमबद्धं प्रतिपादनमस्ति।

**1. कात्यायनश्राद्ध सूत्रम्**—प्रस्तुतमिदं सूत्रं श्राद्धविषयस्य वर्णनं विस्तरेण सम्पादयति। अस्मिन् सूत्रसंवलिताः नव कण्डिकाः सन्ति। अस्योपरि तिस्रष्टीकाः विद्यन्ते। यथा—कर्काचार्यस्य, गदाधरस्य, कृष्णमिश्रस्य च श्राद्धकाशिका।

अथर्ववेदस्यैकमात्रकल्पसूत्रं "वैतानश्रौतसूत्रम" स्ति, यद्धि गोपथब्राह्मणस्योपरि आधारित-मस्ति। अस्मिन् अष्टाध्यायाः सन्ति, ये कण्डिकासु विभक्ताः सन्ति। धर्मसूत्राणि कल्पस्याविभाज्यान्यङ्गानि सन्ति। संविधानतः प्रत्येकस्याः शाखायाः स्वविशिष्टं धर्मसूत्रं भवितव्यम्। धर्मसूत्रे विवाहोत्पन्नपुत्राणां मध्ये सम्पद्विभाजनस्य मुख्यः प्रश्नः। दायभागस्य विचारः, स्त्रीणां पारतन्त्र्यम्, व्यभिचाराय प्रायश्चित्तम्, नियोगस्य नियमः, गृहस्थस्य नित्य-नैमित्तिककर्मणां वर्णनं सर्वेषु धर्मसूत्रेषु नियमतः स्वल्पमात्रमथवाऽधिकमात्रमुपलभ्यते।

**2. गृह्यसूत्रम्**—गृह्यसूत्रेषु त्रैवर्णिकवैदिकवाङ्मये आश्वलायनगृह्यसूत्रस्य पारस्करगृह्यसूत्रस्य च प्रसिद्धिर्वर्तते। आश्वलायनगृह्यसूत्रं कारिकाबद्धमपि प्राप्यते। शाङ्खायनगृह्यसूत्रे षडध्यायाः सन्ति। तेषु विषयाणां समावेशः यथा—विविधसंस्काराणां वर्णनं, गृहनिर्माण-गृहप्रवेशयोश्च यथास्थानं वर्णनं विद्यते। कौषीतकिगृह्यसूत्रस्य च रचना शाम्भव्येन कृताऽस्ति। इदं सूत्रं शाम्भव्यगृह्यसूत्र-नाम्नाऽपि प्रख्यातमस्ति। अस्मिन् गृह्यसूत्रे पञ्चाध्यायाः सन्ति। येषु विवाहसंस्कारः, कृषिकर्मणः, शिशोः प्रारम्भिकसंस्काराणां सामान्यपरिचयः, श्राद्धवर्णनादिकञ्च विद्यते।

शुक्लयजुर्वेदस्य गृह्यसूत्रं पारस्करगृह्यसूत्रमिति नाम्ना जगति सुविख्यातमस्ति। अस्य त्रिषु काण्डेषु प्रथमे काण्डे—आवसथ्याग्नेराधानम्, विवाहकार्यम्, गर्भाधानादारभ्यान्नप्राशनं यावत् वर्णितमस्ति। द्वितीये काण्डे—चूडाकरणोपनयन-समावर्तन-पञ्चमहायज्ञ-श्रवणकर्म-सीता-यज्ञादीनां महत्त्वपूर्णं विवरणमस्ति। अन्तिमे तृतीये काण्डे च श्राद्धकृत्यानन्तरम् अवकीर्णि-प्रायश्चित्तादीनां विविधविधानानां गूढं प्रतिपादनमस्ति।

**3. धर्मसूत्रम्**—धर्मसूत्रेषु धार्मिकनियमाः, प्रजानां राज्ञां च कर्तव्यानां विस्तृततमं वर्णनम् उपलभ्यते। चतुर्णां वर्णानां चतुर्णाम् आश्रमाणाम् च पूर्णतया धार्मिकनिरूपणं वर्ततेऽस्मिन् कल्पप्रकारे। धर्मसूत्रग्रन्थेषु पारलौकिक-लौकिक-सामाजिक-नैतिकक्रियाणां सुष्ठुरूपेण प्रतिपादनं कृतमस्ति। आश्वलायनधर्मसूत्रमपि द्वाविंशत्यध्यायेषूपलब्धं भवति।

**1. गौतमधर्मसूत्रम्**—प्राप्तधर्मसूत्रेषु प्राचीनतमोऽयं ग्रन्थः स्वीक्रियते। यस्य सम्बन्धः कुमारिलभट्टस्य प्रामाण्ये सामवेदेन सह विद्यते। अनेनैव प्रकारेण वशिष्ठधर्मसूत्रस्य द्वादशाध्यायो गौतमस्यैकोनविंशतितमादध्यायात् गृहीतोऽस्ति।

**2. बौधायनधर्मसूत्रम्**—बौधायनधर्मसूत्रे चत्वारः प्रश्नाः खण्डानि वा सन्ति।

**3. आपस्तम्बकल्पसूत्रम्**—अस्य द्वौ प्रश्नौ आपस्तम्ब-धर्मसूत्रयोर्नाम्ना विख्यातौ स्तः। प्राचीनधर्मस्योपरि दशग्रन्थकाराणां नाम्नां मतानां च उल्लेखः कृतः। येषु काण्व-कुणिक-कुत्स-कौत्स-पुष्करसादिवार्ष्यायणि-श्वेतकेतु-हारीतादयो मुख्याः सन्ति।

**4. हिरण्यकेशिधर्मसूत्रम्**—धर्मसूत्रमापस्तम्बधर्मसूत्रस्यैव सङ्क्षिप्तं प्रवचनमस्ति। एभिः आपस्तम्बात् शतशः सूत्राणि अक्षरशः स्वग्रन्थे समुद्धृतानि सन्ति।

**5. वशिष्ठ-धर्मसूत्रम्**—रघुवंशकुलगुरोर्महर्षेर्वशिष्ठस्य धार्मिकजगति महत्त्वपूर्णं स्थानमस्ति। सुप्रसिद्धमीमांसकाः कुमारिलभट्टाः स्वीये तन्त्रवार्तिके वशिष्ठधर्मशास्त्रस्य सम्बन्धः ऋग्वेदेन सह कथयन्ति। वशिष्ठधर्मशास्त्रस्य अनेकानि सूत्राणि ऋग्वेदस्य त्रिभिर्गृह्यैः साङ्ख्यायन-आश्वलायन-कौषीतक्यादिभिः सहाश्चर्यजनिकां समतां स्थापयन्ति। त्रिंशत् अध्याययुक्तोऽयं ग्रन्थः अद्यत्वे प्रमाणभूतः सर्वत्रोपलब्धो भवति।

आचारः परमो धर्मः सर्वेषामिति निश्चयः।
हीनाचारपरीतात्मा प्रेत्य चेह च नश्यति।।

आचारहीनस्य तु ब्राह्मणस्य वेदाः षडङ्गास्त्वखिलाः सयज्ञाः।
कां प्रीतिमुत्पादयितुं समर्था अन्धस्य दारा इव दर्शनीयाः।।

वशिष्ठस्यैतत् कथनं समीचीनं वर्तते यत्—आचारहीनाय जनाय लोकद्वयं नष्टं भवति। चतुराश्रम-स्नातकानां गृहस्थानाञ्च नियमानां विवेचनमतिसरलतया कृतमस्ति। भारतीय-राजनीतेः मूलसिद्धान्तोऽस्ति यत्—राष्ट्रस्य परिचालने क्षात्रतेजसा सह ब्राह्मणत्वस्य पूर्णे सहयोगे प्राप्ते सति प्रदेशस्य राष्ट्रस्य च समृद्धिः सुनिश्चिता भवति। वशिष्ठस्य इयं शिक्षा समस्तमानवानां कल्याणाय प्रवर्तते।

**6. वैखानसधर्मसूत्रम्**—इदं धर्मसूत्रं वैखानस-स्मृतिसूत्रस्याष्टमो नवमो दशमश्च प्रश्नो विद्यते। वानप्रस्थ-संन्यास-गृहस्थाश्रमाणामवान्तरभेदानामियत् विशदं वर्णनमत्रोपलब्धं भवति यदितर-धर्मशास्त्रेषु प्राप्यं नास्ति।

**7. विष्णुधर्मसूत्रम्**—अत्र गद्यात्मक-सूत्राणां पद्यानाञ्चैकत्र सन्निवेशो विद्यते। अस्य धर्मसूत्रस्य 160 श्लोकाः "मनुस्मृतौ" अक्षरशः प्राप्यन्ते। तथा च अस्य अनेकानि सूत्राणि स्वविषयविवेचनस्य निमित्तं मनुस्मृति-पद्यैः साम्यं धारयन्ति।

## (ङ) कल्पशुल्बसूत्रम्

मापक्रियायाः सामान्य-नाम शुल्बम् अस्ति। अतः मापविषयकं वेदीनिर्माणप्रकारबोधकं शुल्बसूत्रम् इति बोधव्यम्। भारतवर्षे रेखागणितस्य प्राचीनेतिहासस्य ज्ञानाय शुल्बसूत्राणामध्ययनं नितान्तगावश्यकमस्ति। शुल्बसूत्रं वेदाङ्गान्तर्गतं कल्पसूत्रस्यान्यतममङ्गमस्ति। कल्पसूत्रस्य मुख्यो विषयो वैदिकं कर्मकाण्डम्। कर्मकाण्डस्य प्रधानतया द्वौ प्रकारौ स्तः—गृह्यसूत्रं, श्रौतसूत्रञ्च। द्वयोः सूत्रयोः मुख्यो विषयो विवाहादिसंस्काराणां विस्तृतं वर्णनम्। श्रौतसूत्रेषु श्रुतिप्रतिपादितानां विविधयज्ञ-यागानां विशदं विवरणं प्रस्तुतमस्ति। शुल्बसूत्रमेषां श्रौतसूत्राणां महत्त्वपूर्णः एकोंऽशो विद्यते। शुल्बशब्दस्यार्थोऽस्ति रज्जुः, अतो रज्जुना प्रमापिताया वेद्याः रचना शुल्बसूत्रस्य प्रतिपाद्यो विषयः। शुल्बसूत्रस्य त्रयः परिच्छेदाः सन्ति। तत्र प्रथमे परिच्छेदे 116 सूत्राणि सन्ति। द्वितीये परिच्छेदे 86 सूत्राणि सन्ति। तृतीय परिच्छेदे 323 सूत्राणि सन्ति।

(क) कात्यायनशुल्बसूत्रम्, (ख) मानवशुल्बसूत्रम्,
(ग) वाराहशुल्बसूत्रम्, (घ) बौधायनशुल्बसूत्रम्,
(ङ) आपस्तम्बशुल्बसूत्रम्, (च) मैत्रायणीशुल्बसूत्रम्,
(छ) वाधूलशुल्बसूत्रम्, इत्यादीनि प्रधानानि शुल्बसूत्राणि सन्ति।

## (च) कल्पशास्त्रस्य टीकाकाराः

**1. बौधायनशुल्बस्य टीकाकाराः—**

(क) द्वारकानाथयज्वा-इमे आर्यभट्टस्य पश्चाद्वर्तिनो निश्चितरूपेण प्रतीयन्ते।

(ख) वेङ्कटेश्वरदीक्षितः-अस्य टीकायाः नाम "शुल्बमीमांसा" विद्यते।

**2. आपस्तम्बशुल्बस्य टीकाकाराः—**

(क) **कपर्दिस्वामी**—अस्य ग्रन्थाः सन्ति—आपस्तम्बश्रौतसूत्रम्, आपस्तम्बसूत्रपरिभाषा, दर्शपौर्णमाससूत्रम्, भरद्वाजगृह्यसूत्रमित्यादि।

(ख) **करविन्दस्वामी**—एभिर्महाभागैः आपस्तम्बस्य सम्पूर्णे श्रौतसूत्रे स्वव्याख्या लिखिता।

(ग) **सुन्दरराजः**—अस्य टीकाया नाम "शुल्बप्रदीप" इत्यस्ति। अस्य कालः वै०सं० 1638 वर्तते।

(घ) **गोपालः**—अस्य व्याख्याया नाम विद्यते—आपस्तम्बीयशुल्बभाष्यम्। अस्य पितुर्नाम गातर्य नृसिंह सोमसुत्" विद्यते। इमे कर्मकाण्डदीक्षिते वैदिकपरिवारे समुत्पन्नाः कर्मकाण्डीयपरम्परातः पूर्णपरिचिताः आसन्।

कात्यायनशुल्बसूत्रस्य प्रसिद्धं नाम विद्यते—कात्यायनशुल्बपरिशिष्टम् अथवा कातीयशुल्बपरिशिष्टम्। इदं भागद्वये विभक्तमस्ति। तत्र प्रथमो भागः सूत्रात्मकः, सप्त कण्डिकासु च विभक्तेऽस्मिन् नवति (90) सूत्राणि सन्ति। कात्यायनेन वेदिनिर्माणस्यावश्यकानां समस्तानां रेखागणितीयविषयाणां विवरणं विशेषक्रमबद्धरूपेणात्र प्रस्तुतमस्ति। अस्योपरि टीकाद्वयमुपलभ्यते।

(ङ) **रामः रामवाजपेयो वा**—अस्य मुख्याः ग्रन्थाः सन्ति—क्रमदीपिका, कुण्डाकृतिः, शुल्बवार्तिकः, सांङ्खयायनगृह्यपद्धतिः, समरसारः, समरसारसङ्ग्रहः, शारदा-तिलकतंत्रस्य व्याख्या, कात्यायनशुल्बसूत्रस्य टीका च। अतः रामस्य आविर्भावकालः पञ्चदशशतकस्य मध्यभागः सिद्ध्यति।

(च) **महीधरः**—महीधरमहाशयाः काशीनिवासिनः प्रकाण्डवैदिका आसन्। वेदस्य तन्त्रस्य च विषये एषामनेकानि प्रौढग्रन्थरत्नानि अद्यापि प्राप्यन्ते। एभिः स्व "मन्त्रमहोदधेः" समापनं 1589 ईसवीये विष्णुभक्तिकल्पलताप्रकाशस्य च रचना 1597 ईसवीये वत्सरे कृतेति।

(छ) **महामहोपाध्याय-पण्डित-विद्याधरगौडेनापि** कात्यायनश्रौतसूत्रे कातीयशुल्बे च स्वसरलायाः सुबोधाया व्याख्याया रचनां विधायैतत्प्रमुखविषयान् साधारणजनानां कृतेऽपि बोधगम्यं कृतम्। विद्याधरगौडस्य कालः 1943 वैक्रमाब्देऽभूत्। विद्याधरगौडस्य रचना कात्यायनश्रौतसूत्राणां "सरला" नाम्नी व्याख्या अस्ति।

(ज) **कर्कः**—कात्यायनस्य श्रौतसूत्रे पारस्करस्य गृह्यसूत्रे चोभयत्रापि सारगर्भिता टीका वर्तते।

(झ) **जयरामः**—मेवारस्य निवासिनः, दामोदरस्य पौत्रः, बलभद्रस्य पुत्रः जयरामः आसीत्। एभिः कृतभाष्यस्य नाम—सज्जनवल्लभः विद्यते।

(ञ) **आचार्यो हरिहरः**—एषां समयो द्वादशशतकान्तरालवर्ती। गृह्यसूत्रस्य सर्वतोऽधिका लोकप्रिया व्याख्या "गृह्यसूत्रव्याख्यानम्" हरिहरस्य वर्तते।

(ट) **आचार्यो गदाधरः**—गदाधरस्याभिरुचिः ज्योतिषतत्त्वविषयेऽधिका विद्यते। एषां पितुर्नाम वामनदीक्षितः आसीत्। अस्य कालः पञ्चाशदुत्तरचतुर्दशशतकं विद्यते।

(ठ) **विश्वनाथः**—इमे नन्दपुरस्य काश्यपगोत्रिणो नागरब्राह्मणा आसन्। पितुर्नाम नरसिंहो मातुश्च गङ्गादेवी। एषां व्याख्यायाः नाम "गृह्यसूत्रप्रकाशिका" विद्यते। कालः षोडश-शताब्द्याः उत्तरार्धः सिद्ध्यति।

## 7. कल्पः ( हस्तौ कल्पोऽथ पठ्यते )

### ( छ ) कल्पशास्त्रस्य वस्तुनिष्ठप्रश्नोत्तराणि—

1. प्रश्नः— वेदपुरुषस्य हस्तरूपेण प्रशस्तं वेदांगं किम्?
उत्तरम्— कल्पवेदांगम्।

2. प्रश्नः— कल्पसूत्रं कतिविधं वर्तते? कानि च तानि?
उत्तरम्— चतुर्विधम्। 1. श्रौतसूत्रम्, 2. गृह्यसूत्रम्, 3. धर्मसूत्रम्, 4. शुल्बसूत्रञ्चेति।

3. प्रश्नः— कल्पवेदांगस्य कति विभागाः विद्यन्ते?
उत्तरम्— (04) चत्वारः।

4. प्रश्नः— धर्मसूत्रं कुत्र सम्बद्धम्?
उत्तरम्— कल्पे।

5. प्रश्नः— कल्पशास्त्रस्य प्रयोजनं किम्?
उत्तरम्—याज्ञिक-विधानानां प्रतिपादनम्।

6. प्रश्नः— कल्पशास्त्रं कस्मिन् साहित्ये आयाति?
उत्तरम्—सूत्र-साहित्ये।

7. प्रश्नः— कल्पसूत्राणि कानि, कानि च तानि?
उत्तरम्—चत्वारि, 1. श्रौतसूत्रम्, 2. गृह्यसूत्रम्, 3. धर्मसूत्रम्, 4. शुल्बसूत्रम्।

8. प्रश्नः— श्रौतसूत्राणां प्रतिपाद्यविषयः कोऽस्ति?
उत्तरम्—चतुर्दश वैदिक-यज्ञानां कर्त्तव्यविधानम्।

9. प्रश्नः— ऋग्वेदस्य श्रौतसूत्रं कतिविधम्?
उत्तरम्—द्विविधम्, 1. आश्वलायनश्रौतसूत्रम्, 2. शाङ्खायनश्रौतसूत्रम्।

10. प्रश्नः— आश्वलायनश्रौतसूत्रे कति अध्यायाः सन्ति?
उत्तरम्— (12) द्वादशाध्यायाः।

11. प्रश्नः— शाङ्खायनश्रौतसूत्रे कति अध्यायाः सन्ति?
उत्तरम्— (18) अष्टादशाध्यायाः।

12. प्रश्नः— शुक्लयजुर्वेदस्य कानि श्रौतसूत्राणि उपलब्धानि सन्ति?
उत्तरम्—कात्यायनश्रौतसूत्रम्।

13. प्रश्नः— कृष्णयजुर्वेदस्य कानि श्रौतसूत्राणि उपलब्धानि सन्ति?
उत्तरम्— (7 सप्त) 1. बौधायनः, 2. आपस्तम्ब, 3. सत्याषाढ, 4. मानवः, 5. वैखानसः, 6. भारद्वाजः, 7. वाराहः।
14. प्रश्नः— सामवेदस्य कति श्रौतसूत्राणि प्राप्यन्ते?
उत्तरम्— (द्वौ) 1. द्राह्यायण, 2. लाट्यायनः।
15. प्रश्नः— अथर्ववेदस्य श्रौत्रसूत्रं किमस्ति?
उत्तरम्— वैतान-सूत्रम्।
16. प्रश्नः— वैतानसूत्रस्य सम्बन्धः कया आथर्वणशाखया अस्ति?
उत्तरम्—शौनकशाखया।
17. प्रश्नः— वैतानसूत्रे कति अध्यायाः सन्ति?
उत्तरम्— (8) अष्टाध्यायाः।
18. प्रश्नः— ऋग्वेदीय-गृह्यसूत्रे आश्वलायने कति अध्यायाः सन्ति?
उत्तरम्— (4) चत्वारोऽध्यायाः।
19. प्रश्नः— ऋग्वेदीय-गृह्यसूत्र-शाङ्खायने कति अध्यायाः सन्ति?
उत्तरम्— (6) षष्ठाऽध्यायाः।
20. प्रश्नः— शुक्लयजुर्वेदीय-गृह्यसूत्राणि कति?
उत्तरम्—द्वे, 1. पारस्करगृह्यसूत्रम्, 2. बैजवापगृह्यसूत्रम्।
21. प्रश्नः— पारस्करगृह्यसूत्राणि केषु काण्डेषु विभक्तानि?
उत्तरम्— (3) त्रिषु काण्डेषु।
22. प्रश्नः— कृष्णयजुर्वेदस्य गृह्यसूत्राणि कानि?
उत्तरम्— (5 पञ्च) 1. बौधायनः, 2. आपस्तम्ब, 3. सत्याषाढ़ः, 4. मानवः, 5. काठकः।
23. प्रश्नः— सामवेदीयगृह्यसूत्राणि कानि?
उत्तरम्— (2) 1. खादिर, 2. गोभिलः।
24. प्रश्नः— कौशिक-गृह्यसूत्रस्य सम्बन्धः केन वेदेन अस्ति?
उत्तरम्— अथर्ववेदेन।
25. प्रश्नः— कौशिकगृह्यसूत्रे कति अध्यायाः सन्ति?
उत्तरम्— (14) चतुर्दशाध्यायाः।
26. प्रश्नः— कौशिकगृह्यसूत्रे कति कण्डिकाः सन्ति?
उत्तरम्— (141 कण्डिकाः)
27. प्रश्नः— द्वाविंशाति-अध्याय-युक्तानि आश्वलायनगृह्यसूत्राणि केन वेदेन सम्बद्धानि?
उत्तरम्— ऋग्वेदेन।
28. प्रश्नः— कात्यायनधर्मसूत्रं केन वेदेन सम्बन्धितम् अस्ति?
उत्तरम्— शुक्लयजुर्वेदेन।
29. प्रश्नः— कृष्णयजुर्वेदेन सम्बन्धित-धर्मसूत्राणि कानि?
उत्तरम्— त्रीणि1. बौधायनः, 2. आपस्तम्ब, 3. मानवः।

30. प्रश्नः— सामवेदीय-धर्मसूत्रं वर्तते?
उत्तरम्— गौतमधर्मसूत्रम्।

31. प्रश्नः— गौतम-धर्मसूत्रेषु कति अध्यायाः सन्ति?
उत्तरम्— (28) अष्टाविंशतिः।

32. प्रश्नः— शुल्बसूत्रस्य किं प्रयोजनम्?
उत्तरम्—यज्ञवेद्यादिनिर्माणस्य ज्यामितीयप्रक्रिया तथा तत्सम्बद्धं विवेचनम्।

33. प्रश्नः— कति कल्पाः सन्ति?
उत्तरम्— सप्त, 1. पार्थिव, 2. कौर्म, 3. अनन्त, 4. नृसिंह, 5. प्रिया, 6. श्वेतवराहः, 7. अमरः।

34. प्रश्नः— श्रौतसूत्रेषु श्रुतिप्रोक्तानां कानि षोडश यज्ञानि?
उत्तरम्—1. दर्शः, 2. पौर्णमासः, 3. पिण्डपितृयागः, 4. आग्रयणेष्टिः, 5. चातुर्मास्यः, 6. निरूढपशुः, 7. सोमयागः, 8. सत्रः, 9. गवामयनम्, 10. वाजपेयः, 11. राजसूयः, 12. सौत्रामणी, 13. अश्वमेधयागः, 14. पुरुषमेधः, 15. एकाहयागः, 16. अहीनयागश्च।

35. प्रश्नः— शौनकऋषेः शिष्यः कः आसीत्?
उत्तरम्— आश्वलायनः।

36. प्रश्नः— शाङ्खायन-श्रौतसूत्राणि कति अध्यायेषु विभक्तानि?
उत्तरम्— अष्टादश अध्यायेषु।

37. प्रश्नः— गृह्यसूत्रे कति अध्यायाः सन्ति?
उत्तरम्—चत्वारोऽध्यायाः।

38. प्रश्नः— कल्पे हरदत्तस्य का टीका वर्तते?
उत्तरम्— अनाविला टीका।

39. प्रश्नः— कौषीतक-गृह्यसूत्रे कति अध्यायाः सन्ति?
उत्तरम्— पञ्चाध्यायाः।

40. प्रश्नः— सौत्रसूत्रस्य रचनाकारः कः?
उत्तरम्— कात्यायनः।

41. प्रश्नः— श्रौत्रसूत्रे कति अध्यायाः सन्ति?
उत्तरम्—षड्विंशतिः।

42. प्रश्नः— श्रौतसूत्रस्योपरि कस्य सुविस्तृतं भाष्यं वर्तते?
उत्तरम्— कर्काचार्यस्य।

43. प्रश्नः— श्रौतसूत्रस्योपरि सरला वृत्तिः कस्य वर्तते?
उत्तरम्— म. म. विद्याधरगौडस्य।

44. प्रश्नः— शुक्लयजुर्वेदीय-गृह्यसूत्रस्य अपरं नाम किमस्ति?
उत्तरम्— पारस्कर-गृह्यसूत्रम्।

45. प्रश्नः— पारस्करगृह्यसूत्राणि कति काण्डेषु विभक्तानि?
उत्तरम्— त्रिषु काण्डेषु।

46. प्रश्नः— कात्यायन-श्राद्धसूत्रसंवलितायां कति कण्डिकाः वर्तन्ते?
उत्तरम्— नव कण्डिकाः।
47. प्रश्नः— कात्यायन-श्राद्धसूत्रोपरि तिस्रष्टीकाकाराः के सन्ति?
उत्तरम्— 1. कर्काचार्यः, 2. गदाधरः, 3. कृष्णमिश्रः।
48. प्रश्नः— पारस्कर-सूत्राणां टीकाकाराः के सन्ति?
उत्तरम्—1. कर्कः, 2. जयरामः, 3. हरिहरः, 4. गदाधरः, 5. विश्वनाथः।
49. प्रश्नः— कृष्णयजुर्वेदीय षट् श्रौतसूत्राणि कानि?
उत्तरम्—1. बौधायनश्रौतसूत्रम्, 2. आपस्तम्बः, 3. हिरण्यकेशी वा सत्याषाढः, 4. बैखानसः, 5. भारद्वाजः, 6. मानवश्रौतसूत्रम्।
50. प्रश्नः— कृष्णयजुर्वेदीयगृह्यसूत्राणि कानि?
उत्तरम्— नव, 1. बौधयनगृह्यसूत्रम्, 2. भारद्वाजगृह्यसूत्रम्, 3. आपस्तम्बगृह्यसूत्रम्, 4. हिरण्यकेशिगृह्यसूत्रम्, 5. वैखानसगृह्यसूत्रम्, 6. अग्निवेश्यं गृह्यसूत्रम्, 7. मानवगृह्यसूत्रम्, 8. वराहगृह्यसूत्रम्, 9. काठकगृह्यसूत्रम्।
51. प्रश्नः— सामवेदीय-कल्पसूत्राणि कानि?
उत्तरम्—1. गोभिलगृह्यसूत्रम्, 2. खादिरगृह्यसूत्रम्, 3. जैमिनीयगृह्यसूत्रम्।
52. प्रश्नः— सोमयागस्य कति प्रकाराः के च ते?
उत्तरम्— त्रयः, 1. एकाह, 2. अहीन, 3 सत्र।
53. प्रश्नः— एकाह इत्यस्य का परिभाषा?
उत्तरम्— यः यागः एकस्मिन् दिवसे एव सम्पन्नो भवति।
54. प्रश्नः— अहीन इत्यस्य का परिभाषा?
उत्तरम्— द्वाभ्यां दिवसाभ्यामारभ्यैकादशदिवसपर्यन्तं यावत् प्रचलति।
55. प्रश्नः— सत्र इत्यस्य का परिभाषा?
उत्तरम्—द्वादश-दिवसैः प्रारभ्य वर्षमेकं यावत् ततोऽप्यधिककालपर्यन्तं प्रचलन्ति यागाः।
56. प्रश्नः— अथर्ववेदीय-कल्पसूत्राणि कानि?
उत्तरम्— अथर्ववेदस्यैकमात्रं "वैतानश्रौतसूत्रमेव" कल्पसूत्रम्।
57. प्रश्नः— कल्पे कति धर्मसूत्राणि कानि च तानि?
उत्तरम्— सप्तसूत्रणि, 1. गौतमधर्मसूत्रम्, 2. बौधायनधर्मसूत्रम्, 3. आपस्तम्बधर्मसूत्रम्, 4. हिरण्यकेशिधर्मसूत्रम्, 5. वशिष्ठ-धर्मसूत्रम्, 6. वैखानसधर्मसूत्रम्, 7. विष्णुधर्मसूत्रम्।
58. प्रश्नः— शुल्बसूत्रे कति परिच्छेदाः सन्ति?
उत्तरम्— त्रयः परिच्छेदाः।
59. प्रश्नः— शुल्बसूत्रस्य प्रथमपरिच्छेदे कति सूत्राणि?
उत्तरम्—116 सूत्राणि।
60. प्रश्नः— शुल्बसूत्रस्य द्वितीयपरिच्छेदे कति सूत्राणि?
उत्तरम्— 86 सूत्राणि।

61. प्रश्नः— शुल्बसूत्रस्य तृतीयपरिच्छेदे कति सूत्राणि?
उत्तरम्— 323 सूत्राणि।
62. प्रश्नः— बौधायनशुल्बस्य टीकायाः शुल्बदीपिकायाः रचनाकारः कः?
उत्तरम्— द्वारकानाथयज्वा।
63. प्रश्नः— बौधायनशुल्बस्य टीका शुल्बमीमांसायाः रचनाकारः कः?
उत्तरम्— वेङ्कटेश्वरदीक्षितः।
64. प्रश्नः— कपर्दिस्वामी महोदयस्य विरचिताः ग्रन्थाः के सन्ति?
उत्तरम्—चत्वार, 1. आपस्तमबश्रौतसूत्रम्, 2. आपस्तम्बसूत्रपरिभाषा, 3. दर्शपौर्णमाससूत्रम्, 4. भरद्वाजगृह्यसूत्रमित्यादि।
65. प्रश्नः— शूलपाणेः समयः कः?
उत्तरम्—1950 ईसवीयः।
66. प्रश्नः— शुल्बप्रदीपिकायाः रचनाकारः कः?
उत्तरम्— करबिन्दस्वामी।
67. प्रश्नः— "शुल्बप्रदीप" इत्यस्य रचनाकारः कः?
उत्तरम्— सुन्दरराजः।
68. प्रश्नः— "आपस्तम्बीयशुल्बभाष्यम्" इत्यस्य रचनाकारः कः?
उत्तरम्— गोपालः।
69. प्रश्नः— रामवाजपेयेन कति ग्रन्थाः विरचिता?
उत्तरम्—सप्त, 1. क्रमदीपिका, 2. कुण्डाकृतिः, 3. शुल्बवार्तिकः, 4. सांखयायन-गृह्यपद्धतिः, 5. समरसारः, 6. समरसारसंग्रह, 6. शारदातिलकतन्त्रस्य व्याख्या, 7. कातीयशुल्बसूत्रस्य टीका च।
70. प्रश्नः— रामस्य समयः कोऽस्ति?
उत्तरम्— पञ्चदशशतकस्य मध्यभागः।
71. प्रश्नः— "मन्त्रमहोदधेः" इत्यस्य लेखकः कः?
उत्तरम्— महीधरः।
72. प्रश्नः— विद्याधरगौडस्य प्रमुखा रचना काः ?
उत्तरम्— कात्यायनश्रौत्रसूत्राणां "सरला" व्याख्या।
73. प्रश्नः— श्रीमता शिवदासेन विरचिता ग्रन्थाः के सन्ति?
उत्तरम्— मानव-मैत्रायणीशुल्बेषु टीका।
74. प्रश्नः— मैत्रायणीयशुल्बोपरि टीका केन विरचिता?
उत्तरम्— शिवदासस्यानुजेन शङ्करभट्टेन।
75. प्रश्नः— वशिष्ठ-धर्मसूत्रे कति अध्यायाः सन्ति?
उत्तरम्— द्वादशाध्यायाः।
76. प्रश्नः— गौतम-धर्मसूत्रे कति अध्यायाः सन्ति?
उत्तरम्— एकोनविंशतितमाध्यायाः।

TOTAL- 76



9

# दर्शनशास्त्रम्

# (Philosophical Treatise)

## (क) दर्शनशब्दस्यार्थः

दर्शन-शब्दोऽयं संस्कृतस्य प्रेक्षणार्थकाद् दृश् धातोः(दृशिर् प्रेक्षणे) ल्युट् प्रत्यये अनादेशे च कृते दर्शनम् इति सिद्धम्। "दृश्यते अनेन इति दर्शनम्" उपनिषत्सु सत्यस्य दर्शनाय दृश् धातोः प्रयोगोऽभवत्। अर्थात् ज्ञानचक्षुषा यद् आत्मेत्यादि अलौकिकं वस्तु गृह्यते तद् दर्शनम्। अलौकिकं आत्मादितत्त्वं (आत्मा, स्वर्ग, मुक्ति, प्रभृति वस्तु) येन तद् दर्शनम्।

(क) येन साधनेन इदं विश्वम्, इदं वस्तुजातम्, ब्रह्म, जीवात्मा, प्रकृतिश्च, याथातथ्येन दृश्यते निरीक्ष्यते परीक्ष्यते समीक्ष्यते विविच्यते च यत्र तद् दर्शनम्।

(ख) समग्रमपि आध्यात्मिकम् आधिभौतिकं च विवेचनं दर्शनशब्दान्तर्गतं भवति।

(ग) दर्शनम् इत्यस्य आङ्ग्लपदं भवति Philosophy इति। इदं च Philosophy इति पदं यूनानी (Greek) Philos, Sophia इति पदद्वयेन निष्पन्नम्। यस्य च अर्थः— Philos=Love,Sophia= Wisdom भवति। एवञ्च सारांशरूपेण वदामः चेत् "Love of Wisdom" "विद्यानुरागः" इति दर्शनस्य अर्थः भवति।

(घ) केचन दार्शनिकाः वदन्ति यत्—Philosophy इति पदं लैटिन (Latin) भाषातः Philosophy इति पदद्वयं स्वीकृत्य आगतम् अस्ति। यस्यार्थः—Phil= Principle तत्त्वम्, Sophy=Science शास्त्रम् इति भवति। एवञ्च Philosophy इत्यस्य अर्थः "तत्त्वशास्त्रम्/तत्त्वविज्ञानम् Principles of Science इति।

(ङ) दृश्यते तत्त्वम् आत्मरूपम्, ब्रह्मरूपं वा तत्त्वं येन तद् दर्शनम्। तच्चाऽऽत्मदर्शन-ब्रह्मदर्शनरूपतत्त्वदर्शनमध्यात्मदृष्ट्यैव भवितुमर्हति नातोऽन्यथा इति। यथोक्तम्—

आत्मा वाऽरे द्रष्टव्यः श्रोतव्यः मन्तव्यो निदिध्यासितव्यः
मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्

(बृहदारण्यकोप०)

तस्मादात्माऽक्षरः शुद्धो बुद्धो नित्यः सर्वगतोऽव्ययः।
उपासितव्यो मन्तव्यः श्रोतव्यश्च मुमुक्षुभिः।।
(अद्भुतरामा०)

1. किं ब्रह्म? 2. तस्य किं स्वरूपम्? 3. कः ईश्वरः? 4. के च तस्य प्राप्तेरुपायाः? 5. अस्मिन् जगति किं शाश्वतं तत्त्वम्? 6. इयं सृष्टिः कुतः आविर्बभूव? 7. जीवात्मनः किं स्वरूपम्? 8. कः पुनर्जायते? 9. किं लिङ्गशरीरम्?10. जीवनस्य कुत उद्भूतिः? 11. किं तस्य लक्ष्यम्? 12. कथं मोक्षावाप्तिः? 13. आत्मा चेतनोऽचेतनो वा? 14. कः सृष्टेः कर्ता? 15. किं जीवनस्य कर्त्तव्यम्? 16. कश्च जीवनस्य साधिष्ठः पन्थाः? 17. किं श्रेयः किञ्च प्रेय? इत्यादयोऽनुयोगाः सूक्ष्मातिसूक्ष्मेण यत्र विविच्यन्ते तद् दर्शनम्।

(च) ऋषयः स्वाऽलौकिकचक्षुभिरवलोकितानां तत्त्वानां यान् उपदेशग्रन्थान् निर्मिमिरे, तेषामेव नाम दर्शनम्।

(छ) दर्शनं सामाजिकचेतनायाः रूपमस्ति। अत्र व्यक्तित्वस्य बोधस्य च, साधारणविधीनां विषये, चिन्तनानां व्यक्तीनां च सम्बन्धे संकल्पाः सन्ति। इदं दर्शनम् एकप्रकारकं विज्ञानमस्ति, परमिदं विशिष्टप्रकारकं विज्ञानं वर्त्तते। यः प्रकृतेः समाजस्य च, विचारणीयविधीनाञ्च अध्ययनं करोति एतदर्थम् अस्य मुख्यानि सामाजिकप्रकरणानि, विशिष्टैः विज्ञानैः सह तुलनां कृत्वा सम्यक् प्रकारेण विचारणीयानि सन्ति।

(ज) दर्शनशास्त्रस्य अध्ययनेन जगतः ईश्वरस्य, जीवस्य, मायायाः प्रकृतेश्च ज्ञानं भवति। एतदतिरिक्तं सत्यासत्ययोः शरीरस्य, इन्द्रियसमूहस्यापि अनेन ज्ञानं भवति। एवं च पदार्थेषु संसारस्य मूर्ताऽमूर्तदृष्टाऽदृष्टादयः सर्वेऽन्तर्भवन्ति। इदं जगत् पदार्था वा जीवानां कृते दुःखानां कारणम् अस्ति। एभ्यो दुःखेभ्यो मोक्षो मुक्त्या सर्वदुःखनिवारणेन वा सम्भवति। कार्यकारणयोः तत्त्वज्ञानं दर्शनेनैव भवितुं शक्यते।

(झ) मनुष्यः स्वभावतो मननशीलः प्राणी विद्यते, मत्या कर्माणि सीव्यतीति तन्निरुक्तिरपि पूर्वोक्तानुकूला, सा हि कोऽहं कस्मादहमित्यादि समस्याः सततं भावयित्वा "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति दर्शनबीजमुद्भावितवती। दर्शनस्योदयो वेदकालाद् एव अजायत। दर्शनं द्विविधं आस्तिकं नास्तिकं चेति। (1) तत्र अस्ति दिष्टम्, अस्ति वेदप्रामाण्यम्, अस्ति ईश्वरो वा, इति मतिर्यस्य सः आस्तिकः। (2) नास्ति दिष्टम्, नास्ति वेदप्रामाण्यम्, नास्ति ईश्वरो वा, इति मतिर्यस्य सः नास्तिकः। आस्तिकविचारपराणि वैदिकानि दर्शनानि, नास्तिक-विचारपराणि अवैदिकानि दर्शनानि इति व्यवह्रियते।

### (ख) दर्शनशास्त्रस्य परिभाषा (Definition of Philosophy)

1. आत्मज्ञानसाधनं भवति दर्शनम्- साक्रेटिस्।
2. दर्शनशास्त्रं यथार्थस्य तत्त्वदर्शनं भवति।
   Philosophy is the mathephysics of things.
3. ज्ञानस्य विज्ञानं भवति दर्शनशास्त्रम्- फिक्टे।
   Philosophy is the Science of knowledge- Fichre.

4. समस्तवैज्ञानिकज्ञानस्य योगः भवति दर्शनशास्त्रम्-पॉल्सन्।
Philosophy is the sum total of all scientific knowledge- Paulsen.
5. विज्ञानानां विज्ञानं भवति दर्शनशास्त्रम्-कॉम्टे।
Philosophy is the Science of Sciences- Kamte.
6. यथार्थस्वरूपस्य तार्किकविवेचनं भवति दर्शनम्-एस्. राधाकृष्णन्।
Philosophy is a logical inguing in to the nature of reality
Dr. S.Radhakrishnan.

## ( ग ) दर्शनशास्त्रस्य प्रकाराः

**( 1 ) वैदिक ( आस्तिक ) दर्शनानि षट्**—(क) न्यायदर्शनम्, (ख) वैशेषिकदर्शनम्, (ग) सांख्य-दर्शनम्, (घ) योग-दर्शनम्, (ङ) पूर्वमीमांसा-दर्शनम्, (च) उत्तरमीमांसा-दर्शनम्।

**( 2 ) अवैदिक ( नास्तिक ) दर्शनानि त्रीणि**—(छ) चार्वाकदर्शनम्, (ज) बौद्धदर्शनम्, (झ) जैनदर्शनम्, (नास्तिको वेदनिन्दकः) तत्र नास्तिकेषु जैन्याश्चार्वाकाः ते मन्यन्ते-"त्रयो वेदस्य कर्तारो भण्ड-धूर्त-निशाचराः" (ञ) पाश्चात्यदर्शनम्।

## ( घ ) न्यायदर्शनम्

नीयते=प्राप्यते, अयनम्=मोक्षो, येनासौ न्यायः। अथवा नीयते=अधिगम्यते विवक्षितार्थ-सिद्धिरनेनाऽसौ न्यायः। तस्य न्यायस्य यद् दर्शनमनुभवस्तदेव न्यायदर्शनम्=न्यायशास्त्रमित्यर्थः। न्यायशास्त्रस्य महत्त्वन्तु सर्वशास्त्रोपकारकत्वेन सर्वत्रैव प्रसिद्धमस्ति। तथा चोक्तम्—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता।।
सम्यक् दर्शनसम्पन्नः कर्मभिर्न निबध्यते।
दर्शनेन विहीनस्तु संसारं प्रतिपद्यते।।

न्यायशास्त्रं अतिप्राचीनम्, अस्य प्रवर्त्तकः सूत्रकारः गौतमः 500 ई०पू० समयेऽजायत। अयञ्च महर्षिस्त्रेताकालीनः सन् प्रजापतेः श्रीमहर्षेरङ्गिरसः प्रपौत्रो दीर्घतमसः पुत्रो महान् तपस्वी, तेजस्वी चासीन्न्यायशास्त्रप्रणेता मनस्वी मनीषी। अस्य महर्षिगोतमस्य धर्मपत्नी "अहल्या" चासीत्। अस्य महर्षि गोतमस्य "शतानन्द" नामा पुत्रः श्रीमिथिलेश्वरस्य पुरोहितोऽप्यासीदिति श्रूयते। अयञ्च महर्षि-गोतमोऽष्टादशपुराणानां ब्रह्मसूत्राणाञ्च रचयितुः श्रीव्यासस्य समकालीन आसीत्। श्रीगौतमस्य अपरं नाम अक्षपादोऽप्यासीत्। गौतमप्रवर्तितं न्यायशास्त्रं पदार्थ-मीमांसाशास्त्रम्। षोडश-पदार्थाश्चाभ्युपगताः प्रमाणप्रमेयाद्याः। वात्स्यायनस्योदयकाले ब्राह्मणधर्म-बौधधर्मयोः सङ्घर्षस्य समयः आसीत्। वाचस्पतिमिश्रः न्यायवार्तिकतात्पर्ये तदीयमपि मतं विस्तरेण गर्हयामास। उदयनोऽपि "न्यायवार्तिकतात्पर्यपरिशुद्धि" नामकेन व्याख्याग्रन्थेन वाचस्पतेर्ग्रन्थं परिष्कृतवान्। तत्रप्रमाणप्रमेय-संशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्क-निर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति तत्सिद्धान्तः। वैशेषिकस्य समानतन्त्रत्वात् परमाणुकारणतावादोऽस्य विशिष्य ध्यानमाकर्षति दार्शनिकानाम्। सुखदुःखात्मकमनोवृत्त्योर्नाशे जाते मनः साम्यावस्थां

प्रतिपद्यते। तदा आत्यन्तिकदुःखनिवृत्तिर्भवति, सैव मुक्तिः। ईश्वरोऽनुमानगम्यः। जीवन्मुक्तिरपरनिःश्रेयसशब्द्. । विदेहमुक्तिश्च परनिःश्रेयसशब्देन प्रतिपाद्यते।

### न्यायशास्त्रस्य महत्त्वम्

"प्रमाणप्रमेयसंशयप्रयोजने"त्यारभ्य "हेत्वाभासाश्च यथोक्ताः" इत्येतत् पर्यन्तं तदिदं पञ्चाऽध्यायात्मकं न्यायशास्त्रम्। तत्र प्रत्यध्यायमाह्निकद्वयमस्ति। न्यायशास्त्रेतराणि यानि व्याकरण-वेदान्त-प्रभृतीनि शास्त्राणि तानि सर्वाण्येव शास्त्राणि सन्ति न्यायशास्त्रं समपेक्षमाणानीति तानि सर्वथोपकारकत्वेन न्यायशास्त्रमपेक्षन्ते इति। यथोक्तम्—

"कणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्"। (श्रुतमात्रम्)

"मानाधीना मेयसिद्धिः" एवम् "लक्षणप्रमाणाभ्यां वस्तुविनिर्णयः" इत्यनेनापि प्रमाणभूतेन वाक्यद्वयेन न्यायशास्त्रस्य महदेव महत्त्वं समुद्गीयमानं भवति। अत्र वाक्यद्वयघटकीभूतयोश्च मान-प्रमाण-पदयोरैक्येन अर्थात् एकार्थकत्वेन, समानार्थकत्वेनेत्यर्थः, न्यायशास्त्ररूपत्वम्। अतः न्यायशास्त्रमेव प्रमाणशास्त्रं मन्यते लोकैः।

आर्षं धर्मोपदेशञ्च वेदशास्त्राऽविरोधिना।
यस्तर्केणाऽनुसन्धत्ते स धर्मं वेद नेतरः।।

(श्रुतमात्रमेव)

## (ङ) वैशेषिकदर्शनम्

वैशेषिकदर्शनजन्मदातृत्वेन कणादेन पित्रा लालितं पालितं पुत्रवच्च परिवर्धितं वैशेषिकं दर्शनमिदं सर्वेभ्यो दर्शनेभ्योऽतीव श्रेष्ठं सर्वथा प्रशस्तं प्राचीनतमञ्चेति गीयते। प्रणेता कणादः कश्यपवंशोत्पन्नतया काश्यपशब्देनोक्तः। विशेषपदार्थस्वीकारमूलकमेवास्य दर्शनस्य वैशेषिकमिति नामकरणम्। वैशेषिके त्रयो हेत्वाभासाः स्वीकृताः। दश अध्यायैः 370 सूत्रैश्च निबद्धमिदं दर्शनम्। (1) प्रथमाऽध्याये समवेताशेषपदार्थकथनम्। (2) द्वितीये-द्रव्यम्, (3) तृतीये-आत्मान्तः-करणनिरूपणम्, (4) चतुर्थे-शरीरभेदनिरूपणम्, (5) पञ्चमे-कर्मनिरूपणम्, (6) षष्ठे-श्रौतधर्मनिर्वचनम्, (7) सप्तमे-गुणसमवायौ, (8) अष्टमे-ज्ञानोत्पत्ति-तन्निदाने। (9) नवमे-प्रागभावादिनिरूपणम्, (10) दशमे-आत्मगुणनिरूपणञ्च।

इदं दर्शनं सर्वशास्त्रोपकारकम्। अत्र दर्शने रावणेन भाष्यं प्रणीतम्, यन्नोपलभ्यते। तदनन्तरं भारद्वाजवृत्तिः, प्रशस्तपादभाष्यम्, शंकरमिश्रस्योपस्कारः। जगनारायणभट्टस्य काणादसूत्रवृत्तिः, चन्द्रकान्तभट्टस्य-वैशेषिकभाष्यञ्च। आदिमं सूत्रं—"धर्मविशेषप्रसूतात् द्रव्यगुणकर्मसामान्य विशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसाधिगमः।" अस्मिन् दर्शने परमात्मा तु ईश्वरापरनामा जीवात्मनो भिन्न एव। तत्त्वज्ञानेन मिथ्यावासनायां निवर्त्तितायां रागाभावात् प्रवृत्त्यभावे कर्माभावात् सुखदुःखापगमः, स एव च मोक्ष इति शास्त्रस्यास्य तत्त्वम्। शास्त्रं द्विविधम् 1. पदशास्त्रम्, 2. पदार्थशास्त्रञ्च। तत्र पदशास्त्रं व्याकरणशास्त्रम्, पदार्थशास्त्रं काणादशास्त्रम् (वैशेषिकशास्त्रम्, न्यायशास्त्रम्)। यद्यपि व्याकरण-वेदान्त-प्रभृतीनामन्येषामपि शास्त्राणां

विद्यमानत्वेन शास्त्रत्वकथनं साधु सङ्गच्छते। वैशेषिक-दर्शनस्य पदार्थशास्त्रत्वेन सप्तैव पदार्थाः। तथाहि—

द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम्।
समवायस्तथाऽभावः पदार्थाः सप्त कीर्तिताः।।

(भाषापरिच्छेदः)

इदमेव काणाददर्शनम् (वैशेषिकदर्शनम्) औलूक्यदर्शनमप्युच्यते। प्रमाणानां विचारचर्चाऽवसरे तत्र प्रमाणद्वयमेव मान्यं भवति। यतः "सर्वप्रमाणसिद्धत्वात्" अर्थात् सर्वेषां प्रत्यक्षाऽनुमान-प्रमाणातिरिक्तानां प्रमाणानाम्, अत्रैवानयोरेव प्रत्यक्षानुमानप्रमाणयोरन्तर्भावात्। तथा चोक्तम्—

शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते।
अनुमानगतार्थत्वादिति वैशेषिकं मतम्।।

(भाषापरिच्छेदः)

## (च) सांख्यदर्शनम्

सांख्यदर्शनस्याद्य आचार्यः कपिलः, सिद्धान्तस्तु प्रकृतिः पुरुषश्चेति द्वे मूलतत्त्वे, अनयोरेव सम्बन्धाज्जगदुत्पद्यते। प्रकृतिर्जडा, पुरुषश्चेतनः, पुरुषसम्बन्धात्प्रकृतौ क्रिया। सत्कार्यवादोऽत्र समर्थितः।

नास्ति सांख्यसमं ज्ञानं, नास्ति योगसमं बलम्।
अत्र वः संशयो मा भूत्, ज्ञानं सांख्यं परं स्मृतम्।।
संख्यां प्रकुर्वते चैव, प्रकृतिं च प्रचक्षते।
तत्त्वानि च चतुर्विंशत्, तेन सांख्यं प्रकीर्तितः।।

सम्यक्प्रकारेण क्रमपूर्वकं ख्यानं कथनं यस्याः सा "संख्या" क्रमपूर्वकविचारणा। पञ्चविंशतितत्त्वानां विचार एव सांख्यम्, तमधिकृत्य कृतो ग्रन्थः "सांख्यम्" इत्युच्यते। अर्थात् प्रकृतिपुरुषयोः पृथक्-पृथक् सं नम् एव सांख्यम्। "सांख्य" शब्दः सम् उपसर्गपूर्वकं "चक्षिञ्" ख्याञ् धातोः अण् प्रत्ययेन निष्पन्नः। अस्यार्थः सम्यक् ख्यानम् इति निश्चीयते। सत्त्वादिगुणानां महदादिकरणानां प्रकृतिपुरुषयोश्च वर्णनं उपनिषत्सु अनेकेषु स्थलेषु समुपलभ्यते, पुराणेतिहासादिषु च भूयोभूयः प्रशंसितमस्ति सांख्यदर्शनम्। अत्र मते पञ्चविंशतितत्त्वानि—

1. मूलप्रकृति, 2. महान्, 3. अहङ्कार, 4. रूप, 5. रस, 6. शब्द, 7. स्पर्श, 8. गन्ध इति पञ्चतन्मात्राणि तथा च पञ्चकर्मेन्द्रियाणि, पञ्च ज्ञानेन्द्रियाणि, एकं मनः, 8+11=19ए पञ्चमहाभूतानि-क्षिति, जल, पावक, गगन, समीर, 19+5=24+1 पुरुषश्च=25. वर्त्तते।

सृष्टिक्रममुपस्थापयन् आह श्रीमदीश्वरकृष्णः—

प्रकृतेर्महांस्ततोऽहंकारस्तस्माद् गणश्च षोडशकः।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूतानि।।




## (छ) योगदर्शनम्

अस्य प्रवर्त्तकः महर्षिपतञ्जलिः, योगदर्शनम् प्राचीनदर्शनम्, नानासिद्धीनां जनकमित्यत्रापि च नास्ति विवादः। अयञ्च महर्षिप्रवरः श्रीपतञ्जलिः शेषावतारभूतः विद्वान् व्याकरण-महाभाष्यकारश्चासीत्। षड्दर्शनाचार्यः श्रीवाचस्पतिमिश्रोऽपि योगभाष्यस्योपरि "तत्त्ववैशारदी"-ति नाम्नीं टीकां रचितवान्। एवं योगसूत्राणामुपरि चास्त्येका "राजमार्तण्डे"त्याख्या टीका श्रीभोजराजविरचिताऽतीव प्रशस्तेति गीयते। विज्ञानभिक्षुः 1600ईसवीये "योगवार्त्तिकम्" नामकं खल्वेकं योगदर्शनस्य ग्रन्थं लिखितवान्। तदनन्तरञ्च यतिप्रवरः श्रीरामानन्दः 1700 ईसवीये "मणिप्रभा" नाम्नीं टीकामकरोत्। "प्रदीपम्" इति च भावागणेशो विरचितवांस्तदुपरि टीकाम्। तथैव महापण्डितः श्रीनागेशोऽपि 1700 ईसवीये वर्षे योगसूत्रवृत्तिं लिखितवान्। तदनन्तरञ्च श्रीअनन्तदेवो महामनीषी 1800 ई०योगसूत्राणामुपरि "चन्द्रिका" नाम्नीं टीकां विहितवान्।

इदं योगदर्शनं पादचतुष्टयात्मकम्। यथा—

(1) प्रथमे पादे—योगस्वरूपस्य विस्तृतं निरूपणम्।

(2) द्वितीयपादे—क्रियायोगः तत्साधनानि यमादीनि च।

(3) तृतीये पादे—अन्तरङ्गं साधनजातं ध्यानधारणासमाधिरूपं संयमपदव्यपदेश्यम्।

(4) चतुर्थे च पादे—जन्मौषधिमन्त्रतपःसमाधिजसिद्धिपञ्चकं, तत्सम्बद्धं कैवल्यरूपं परमप्रयोजनं च निरूपितम्। षड्विंशतिस्तत्त्वानि-सांख्यस्य-25+ईश्वरः=26। स चायमीश्वरः—
"क्लेषकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषः।"

## ( ज ) पूर्वमीमांसादर्शनम्

वेदस्य पूर्वभागे योऽस्ति विषयो विचारितस्तादृशविषयको विचार एव "पूर्वमीमांसा"-शब्देनाऽभिधीयते। स च विचारः "कर्म"विषयको विचारः। यथोक्तम्—

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। (ईशोपनिषद्-2)

शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम्। (गीता-4/21)

पूर्वमीमांसादर्शनस्य कृते जन्मदातृजैमिनिनये कर्मणा एवाऽभ्युदयनिःश्रेयसयोः समवाप्ति-जनकत्वेव तस्यैव कर्मणः प्राधान्येन निरूपणीयत्वात् इति। मीमांसायाः चर्चा वेदस्य संहिताया-मुपनिषदि ब्राह्मणग्रन्थेषु च प्राप्यते। कुमारिलः श्लोकवार्तिके—"धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्" इति। वारदायणेन कर्मफलदातेश्वरो मन्यते। जैमिनिना कर्मण एव फलदातृत्वं प्रदर्शितम्। अतएव मीमांसका निरीश्वरवादिनो घुष्यन्ते। जैमिनिना 700 ई०पूर्व० समये मीमांसासूत्राणि प्रणीतानि। कुमारिलात् परतोजातः मण्डनमिश्रो विधिविवेकभावनाविवेकविभ्रमविवेकादीन् ग्रन्थान् जग्रन्थ। विधिविवेकस्य टीका वाचस्पतिमिश्रेण न्यायकणिका नाम्नी कृता। प्रभाकरेण "बृहती" नामकेन भाष्यव्याख्याग्रन्थेन स्वसिद्धान्तः प्रचारितः। गङ्गेशोपाध्यायेन न्यायतत्त्वचिन्तामणौ मुरारिमत-मुल्लिखितमतोऽयं द्वादशशतके ततः पूर्वं वा जातो मन्तुं शक्यते। "मुरारेस्तृतीयः पन्था" इति मिथिलायां प्रसिद्ध्यति, तेन मन्येऽयं मैथिलः आसीत्।

## ( झ ) उत्तरमीमांसादर्शनम् ( वेदान्तदर्शनम् )

वेदान्तो वेदस्य अन्तिमो भागः अवसानभागः इति विग्रहेण उपनिषद् उच्यते। उपनिषद एव प्राचीनैर्वेदान्तशब्देनोक्ताः। वेदान्तसारे वेदान्तो नाम उपनिषत्प्रमाणमित्युक्तम्। उपनिषदोऽनेकाः, तासु विरोधोऽपि प्रतिभासते। तस्यैव विरोधस्य दूरीकरणाय व्यासेन ब्रह्मसूत्राणि रचितानि। एतानि सूत्राणि पाणिनेरपि प्राचीनानि। इमे सर्वेऽपि वेदान्तसिद्धान्ताः। निम्नलिखितविषयेषु मतैक्यं धारयन्ति—

1. अनादिरनुवर्त्तमानोऽयं संसारोऽपास्य एव।
2. ज्ञानापेक्षया कर्मणो गौणत्वम्।
3. ब्रह्मादीन्द्रियातीतवस्तुनिरूपणे वेदाः प्रधानतया प्रमाणानि।
4. उपनिषदो गीता ब्रह्मसूत्राणि चेति प्रस्थानत्रयी मतसाधनायावलम्बनम्।
5. ब्रह्म व्यापकं नित्यञ्चेतनञ्च।
6. ब्रह्मैव जगज्जन्मस्थितिप्रलयकारणं नान्यदचेतनं प्रकृत्यादि।

तदेदं सङ्क्षिप्य वर्णितो वेदान्तसमुदायः। भारतीयं दर्शनं वेदान्तपर्यवसायि, यतोऽत्र सर्वत्र दर्शनेषु क्रमविकास इव प्रतीयते। प्रथमं कणादस्यारम्भवादः, तदनन्तरं गौतमस्य परमाणुवादः, तत्परोऽपि सांख्यस्य परिणामवादः, सर्वान्ते वेदान्तस्य विवर्त्तवादः। सोऽयं विकासो वेदान्त-पर्यवसायितां बोधयति दर्शनानाम्। अज्ञाननाशे सति सर्वं जगद् ब्रह्ममयं सदेवाऽनुभवगोचरीभूतं भवति। यथोक्तम्—

यथा रज्जुं परित्यज्य सर्पं गृह्णाति वै भ्रमात्।
तद्वत्सत्यमविज्ञाय जगत् पश्यति मूढधीः॥

रज्जुखण्डे परिज्ञाते सर्परूपं न तिष्ठति।
अधिष्ठाने तथा ज्ञाते प्रपञ्चे शून्यतां गते।।

(नादविन्दूपनिषद् 40/26.27)

## (ञ) चार्वाकदर्शनम्

चारु वाक् इति निर्वचनं चार्वाकशब्दस्य, बृहस्पतिप्रणीतमिदं दर्शनम्। चारुः (सुन्दरम्) वाको (वचनम्) यस्येति यौगिकव्युत्पत्त्या सुन्दरवचनप्रतिपादनपरं दर्शनमित्यर्थो लभ्यते इति। लोकायतदर्शनमप्यस्यास्ति नामान्तरम्, इदञ्चास्त्यन्वर्थकं नाम, यतो लोकेषु (जगत्सु) सर्वत्र आयतम् (विस्तीर्णम्) इति च तदर्थः। इदानीन्तनकालावच्छेदेन सर्वोऽपि लोकः चार्वाकमतं सिद्धान्तञ्चानुसरति। प्रमाणदृष्ट्या विचार्यमाणे प्रत्यक्षप्रमाणस्यैव प्रामाण्यं स्वीकरोति लोकोऽपि। व्यवहारदर्शनेन तु सर्वेऽपि सन्ति प्रायः चार्वाका एव, प्रतीयन्तेऽपि च तथैवेति। येषां पदार्थानां प्रत्यक्षप्रमाणातिरिक्ताऽनुमानशब्दादिभिः प्रमाणैः सिद्धिः क्रियते चार्वाकमते सन्ति ते पदार्था मिथ्याभूता स्वास्तित्वविहीनाश्चेति मन्तव्यम्। चार्वाकदर्शने पृथिवी-जल-तेजो-वायवश्चेति सन्ति केवलं चत्वारि द्रव्याणि प्रत्यक्षप्रमाणजन्यज्ञानविषयीभूतानि। प्रत्यक्षमेव केवलं प्रमाणम्, इन्दियार्थसन्निकर्षोत्पन्नं ज्ञानं हि तत्। शरीरमेव जीवः, सृष्टिः स्वभावत एष जायते। न तत्रेश्वरापेक्षा। ईश्वरो नास्त्येव। पतञ्जलिसमये अस्मिन् दर्शने ग्रन्थाः प्राप्यन्ते स्म, सम्प्रति नोपलभ्यन्ते। सम्प्रति तु दर्शनग्रन्थेषु यत्र तत्र उद्धरणमात्रं पूर्वपक्षरूपेण दृश्यते। यथा—

यावज्जीवेत्सुखं जीवेदृणं कृत्वा घृतं पिवेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः।।
त्रयो वेदस्य कर्तारो भाण्डधूर्तनिशाचराः।

प्रकृतिवादः (Naturalism)—यस्य अर्थः Nature= प्रकृतेः, Iism=वादः भवति। अस्य वादस्य प्रवर्त्तकाः रूसो (Rousseau) वर्त्तते। भारतीयमतानुसारं नायं अतिरिक्तः कश्चन वादः अपि तु चार्वाकदर्शनान्तर्भूतः जडवाद एव। जडतत्त्वस्य अधीनं मनः भवति। प्रकृतेः महत्त्वं यः वादः ददाति सः प्रकृतिवादः। अद्यतने दिने अस्य शाखात्रयं विद्यते। यथा—

1. भौतिकजगतः प्रकृतिवादः (Naturalism of physical world)
2. यान्त्रिकप्रकृतिवादः (Mechanical Naturalism)
3. जैविकप्रकृतिवादः (Biological Naturalism)

## (ट) बौद्धदर्शनम्

बौद्धदर्शनं जैनदर्शनादुत्तरकाले प्रचरितमभवत्। बौद्धदर्शनस्य भागद्वयं—

(1) धार्मिको भागः, धार्मिकभागे आध्यात्मिकतत्त्ववर्णनम् आचारनिरूपणं च प्रपञ्चितम्,

(2) दार्शनिको भागः, दार्शनिकभागे तु तार्किकदृष्ट्या बौद्धसिद्धान्तस्य सूक्ष्मं विवेचनं प्रस्तुतम्। बौद्धानां मते जीवो जगच्चेत्युभयमपि अनित्यं प्रतिक्षणपरिणामशालि च। बौद्धदर्शनस्य प्रस्थानं चतुर्धा विभज्यते—

(क) वैभाषिकाः—बाह्यार्थप्रत्यक्षमङ्गीकुर्वन्ति।

(ख) सौत्रान्तिकाः—बाह्याऽर्थमनुमेयमाहु।

(ग) योगचाराविज्ञानवादिनः।

(घ) माध्यमिकाः शून्यवादिनः।

(क) बौद्धदर्शने त्रीणि रत्नानि—शीलं, समाधिः, प्रज्ञा चेति।

(ख) बौद्धदर्शने पञ्च बोधिवृक्षम्—"क्षमा-रूपिणी-जटा, धैर्यरूपि-दृढ़मूलम्, चरित्र-रूपि-पुष्पम्, बुद्धिरूपिणी शाखा, धर्मरूपिफलम्।

(ग) बौद्धदर्शने पञ्च अविद्या—आलस्य, जन्म-मृत्यु, काम, क्रोध, विषादाः।

(घ) बौद्धदर्शने अष्टाङ्गमार्गाः—सम्यक्दृष्टिः-संकल्प-वाणी-कर्म-आजीविका-उद्योग-स्मृति-समाधिरिति।

(ङ) बौद्धदर्शने पञ्चशीलत्वम्—(1) जीवहिंसा न करणीया, (2) चौरकार्यात् विरक्तिः, (3) व्यभिचारात् विरक्तिः (4) असत्यभाषणात् विरक्तिः, (5) मद्यपानतः विरक्तिश्चेति।

## (ठ) जैनदर्शनम् (आर्हतदर्शनम्)

अर्हत इमे आर्हताः(जैनाः)। इमे चाऽऽर्हता जैनपदजन्यबोधविषयतावन्तः सन्तः "अर्हत्" पदसम्बोध्यं तं स्वीयं देवं समुपासते इति। तथा चोक्तम्—

अर्हन्नित्यथ जैनशासनरताः (सर्वद०सं०जैन प्रकरणे)

बौद्धदर्शनात् पूर्वतनम्। महावीरेण रागादिरिपवो जिता इत्यसौ जिन् शब्देनोक्तस्तदीयतया दर्शनमिदं जैनदर्शननाम्नाप्यभिहितम्। तीर्थङ्करेष्वाद्यः ऋषभदेवनामाऽऽसीत्, महावीरश्चान्तिमः। दिगम्बर-श्वेताम्बराख्यसम्प्रदायद्वयस्येदमेव बीजम्। तत्र "हेमचन्द्र"नामको जैनदार्शनिक आप्तनिश्चयाऽलङ्कारे आह—

सर्वज्ञः जितरागादिः सर्वथा लोकपूजितः।
यथास्थितार्थवादी च देवोऽर्हन् परमेश्वरः।।

(सर्वद०सं०आर्हतद०प्रकरणे)

केवलं "वेदानङ्गीकारात्" इत्यनेन हेतुना "नास्तिको वेदनिन्दकः" इति न्यायेन च "नास्तिक"-पदजन्यबोधविषयतावत्त्वेन नास्तिकता-"अर्हत" -निष्ठा सती, आर्हतमतनिष्ठा सती वा "नास्तिके"-ति शब्देन व्यपदिश्यमाना अवश्यमेव खलु भवन्ति जैनाश्चार्वाकबौद्धदार्शनिकवत्। जैनदर्शने "मा हिंस्यात् सर्वाभूतानि" इत्यनया श्रुत्या पुष्टीकृतः "अहिंसा परमो धर्मः"। अयमेवोपनिषत्सु वर्णितः सिद्धान्तः परमसिद्धान्तत्वेन मान्यत्वेन चाऽङ्गीकृतो वर्तते। अत एवाऽत्र दर्शने पिपीलिकाजीवमारणम्, पिपीलिकाण्डमारणम्, एवं तत्समवृश्चिकादिवधोऽपि तथाविध एवेति विचारयन्तु शास्त्रशास्त्रिण इति।

(क) जैनदर्शने नव तत्त्वानि—

जीवः, अजीवः, आस्रवः, बन्धः, संवरः, निर्ज्जरः, मोक्षः, पुण्यम् पापश्चेति।

**( ख ) जैनदर्शने त्रीणि रत्नानि—**

सम्यक् दर्शनम्, सम्यक् ज्ञानम्, सम्यक् चारित्रम्।

**( ग ) जैनदर्शने सदाचारस्य पञ्च नियमाः—**

अहिंसा, सत्यम्, अस्तेयम्, ब्रह्मचर्यम्, अपरिग्रहश्चेति।

## ( ङ ) पाश्चात्यदर्शनम्

इदं दर्शनं सर्वेष्वपि क्षेत्रेषु-Philosophy of biology, Education, History, Law, Religion, Science आदिषु व्याप्तमस्ति।

असंख्यानां दर्शनं निर्वचनं यद्यपि वर्तते, तथापि स्थालीपुलाकन्यायेन कानिचन अत्र प्रदर्शितानि।

डॉ० रामशकल पाण्डेयमहोदयानुसारं दर्शनस्य तिस्रः मुख्यशाखाः भवन्ति। ताः—

दर्शनम् (Philosophy)

| ( क ) तत्त्वज्ञानम् Metaphysics | ( ख ) ज्ञानशास्त्रम् Epistemology | ( ग ) मूल्यमीमांसा Axiology |
|---|---|---|
| 1. आत्मसम्बन्धितत्त्वज्ञानम् (Metaphysics of the soul) | | 1. नीतिशास्त्रम् (Ethics) |
| 2. ईश्वरसम्बन्धितत्त्वज्ञानम् (Theology) | | 2. सौन्दर्यशास्त्रम् (A esthetics) |
| 3. सृष्टिशास्त्रम् (Osmology) | | 3. तर्कशास्त्रम् (Logic) |
| 4. विश्वविज्ञानम्/सृष्टि-विज्ञानम् (Cosmology) | | |
| 5. सत्ताशास्त्रम् (Ontology) | | |

## ( ढ ) दर्शनशास्त्रस्य प्रयोजनानि

**1. आत्मसम्बन्धितत्त्वज्ञानम् (Metaphysics of the soul)**—अत्र आत्मविषये जीवविषये च विचारः भवति। पुनश्च कं नाम आत्मा? किं नाम जीवः? आत्मशरीरयोः सम्बन्धः कीदृशः? संकल्पः स्वतन्त्रः परतन्त्रो वा? इत्यादि विषये चर्चा भवति।

**2. ईश्वरसम्बन्धितत्त्वज्ञानम् (Theology)**—अत्र मुख्यरूपेण ईश्वरविषये विचारः क्रियते। ईश्वरः अस्ति न वा? यदि अस्ति तर्हि अस्तित्वे किं प्रमाणम्? ईश्वरः एकः उत अनेकः? ईश्वरस्वरूपम् कीदृशम्? इत्यादि विषये चर्चा क्रियते।

**3. सृष्टिशास्त्रम् (Osmology)**—अस्मिन् शास्त्रे सृष्टेः उत्पत्तिसम्बन्धिनां प्रश्नानां विचारो भवति, यथा सृष्टेः उत्पत्तिः अभवत् वा इयम् अनादिः अस्ति? सृष्टिनिर्माणस्य प्रक्रियायाः विवेचनमपि सृष्टिशास्त्रे एव भवति।

**4. विश्वविज्ञानम्/सृष्टिविज्ञानम् (Cosmology) (Origin, Development and Nature of Cosmos)**—अस्मिन् शास्त्रे सृष्टेः संरचना तथा तस्य विकासस्य विषये विचारः

भवति, यथा किं ब्रह्माण्डः एकः ? किं ब्रह्माण्डः अनेकः भवितुं शक्नोति ? ब्रह्माण्डस्य संरचना भौतिकतत्त्वानां योगेन जाता अथवा ब्रह्माण्डस्य संरचना आध्यात्मिकतत्त्वानां योगेन जाता इत्यादि।

**5. सत्ताशास्त्रम् (Ontology)**—सत्ताशास्त्रे ब्रह्माण्डस्य नश्वरतत्त्वानि कानि? ब्रह्माण्डस्य अक्षरतत्त्वं किं? ब्रह्माण्डस्य सादित्वं सान्ततत्त्वं च किमस्ति? ब्रह्माण्डे स्थितानां तत्त्वानां पारस्परिकः सम्बन्धः कीदृशः वर्त्तते इत्यादि विषये विचारः भवति।

**6. ज्ञानशास्त्रम् (Epistemology)**—अस्मिन् शास्त्रे ज्ञानस्य स्वरूपं ज्ञानस्य विवेचनं च मुख्यरूपेण क्रियते। तथाच ज्ञानसम्बन्धिनां प्रश्नानां विचारो भवति, यथा—किं मनुष्यस्य बुद्धिः वास्तविकं ज्ञानं प्राप्तुं शक्नोति? मनुष्यः कियत्पर्यन्तं परमसत्तायाः ज्ञानं प्राप्स्यति। ज्ञानप्राप्तेः साधनं किं? सत्यं किम्? असत्यं किम्? किं नाम प्रमा? भ्रमज्ञानं किम् इत्यादि।

**7. नीतिशास्त्रम् (Ethics)**—नीतिशास्त्रे मनुष्यस्य आचरणं विविच्यते। अत्र मानवः किं कुर्यात् किं न कुर्यात् इत्यादीनां विश्लेषणं क्रियते। इदं शास्त्रम् उचितम्, अनुचितं, शुभम् इत्यादीन् मानदण्डान् च विवेचयति।

**8. सौन्दर्यशास्त्रम् (Aesthetics)**—अस्मिन् शास्त्रे सुन्दरं किम्? असुन्दरं किं? सौन्दर्यस्य मानदण्डः कः? इत्यादि विषये च विचारः प्रचलति।

**9. तर्कशास्त्रम् (Logic)**—अस्मिन् शास्त्रे चिन्तनप्रक्रियायाः प्राधान्यं भवति। आगमननिगमनतर्कविधीनां च विश्लेषणं क्रियते। तर्कशास्त्रस्य वैज्ञानिकं रूपं कीदृशं भवति इति विषये प्रतिपादनं भवति। तथा च तर्कवादानां स्वरूपं तत् परिकल्पना, व्याख्या, परिभाषा इत्यादि विचाराणां मौलिकनियमानां विश्लेषणमेव अस्य शास्त्रस्य कार्यम् भवति।

## (ण) पदार्थनिरूपणम्

पदस्यार्थः पदार्थः इति व्युत्पत्त्या अभिधेयत्वं पदार्थसामान्यलक्षणम्। तत्र "द्रव्यगुणकर्म-सामान्यविशेषसमवायाभावाः सप्त पदार्थाः।" तेषां प्रतिपाद्यविषयाणां सम्यक् प्रकारेण ग्रहः ग्रहणं निश्चयात्मकं ज्ञानं यस्मादसौ तर्कसंग्रहः इति।

पदार्था रेखाचित्र (क्र० अग्रिम पृ०)......




## ( त ) दर्शनस्य प्रमुखग्रन्थाः, ग्रन्थकाराः समयश्च

| क्र. | ग्रन्थाः | ग्रन्थकाराः | समयः |
|---|---|---|---|
| 1. | (न्यायदर्शन) न्यायसूत्रम् | गौतमः(अक्षपाद) | वि. पूर्व चत्वारितम शतकम् |
| 2. | न्यायभाष्यम् | वात्स्यायनः | वि. पूर्व प्रथमशतकम् |
| 3. | न्यायवार्तिकम् | उद्योतकरः | षष्ठ शतकम् |
| 4. | तात्पर्यटीका | वाचस्पतिमिश्रः | नवम शतकम् |
| 5. | न्यायमञ्जरी | जयन्त भट्टः | |
| 6. | न्यायसारः | भासर्वज्ञः | |
| 7. | न्यायकुसुमाञ्जलिः | उदयनाचार्यः | दशम शतकम् |
| 8. | आत्मतत्त्वविवेकः | उदयनाचार्यः | दशम शतकम् |
| 9. | तात्पर्यपरिशुद्धिः | उदयनाचार्यः | दशम शतकम् |
| 10. | तत्त्वचिन्तामणिः | गंगेश उपाध्यायः | त्रयोदश शतकम् |
| 11. | दीधितिः | रघुनाथ शिरोमणिः | |
| 12. | शब्दशक्तिप्रकाशिका | जगदीश भट्टाचार्यः | |
| 13. | व्युत्पत्तिवादः | | |
| 14. | शक्तिवादः | गदाधर भट्टाचार्यः | |
| 15. | न्यायसिद्धान्तमुक्तावली | विश्वनाथ पञ्चानन भट्टाचार्यः | कारिकावली |

क्रमशः ..............

| क्र. | ग्रन्थाः | ग्रन्थकाराः | समयः |
|---|---|---|---|
| 16. | तर्कसंग्रहः | अन्नम्भट्टः | |
| 17. | तर्कामृतम् | श्री जगदीश तर्कालङ्कारः | |
| 18. | किरणावली | उदयनाचार्यः | |
| 19. | (वैशेषिक) कणादरहस्य | शंकर मिश्र | (15 शतकम्) |
| 20. | वैशेषिक भाष्य | आत्रेयः | |
| 21. | पदार्थधर्मसंग्रहः | प्रशस्तपादः | |
| 22. | न्यायकन्दली | श्रीधराचार्यः | |
| 23. | न्यायलीलावती | वल्लभाचार्यः। | |
| 24. | न्यायसूत्रवृत्तिः | विश्वनाथ पंचाननः | |
| 25. | न्यायबोधिनी | गोवर्द्धन मिश्रः। | |
| 26. | भारद्वाजवृत्तिभाष्यम् | गंगाधर कविरत्नः। | |
| 27. | (सांख्य) सांख्यसूत्रम् | कपिलः | (14) शतकम्। |
| 28. | तत्त्वसमासः | कपिलः | (14) शतकम्। |
| 29. | षष्टितन्त्रम् | पञ्चशिखः। | |
| 30. | सांख्यकारिका | ईश्वरकृष्णः | |
| 31. | सांख्यतत्त्वकौमुदी | वाचस्पति मिश्रः। | |
| 32. | सांख्यप्रवचनभाष्य/ योगवार्तिकम् | विज्ञानभिक्षुः | |
| 33. | (योग) योगसूत्रम् | पतंजलिः | |
| 34. | व्यासभाष्यम् | व्यासः। | |
| 35. | तत्त्ववैशारदी | वाचस्पति मिश्रः | |
| 36. | योगवार्तिकम् | विज्ञान भिक्षुः। | |
| 37. | राजमार्त्तण्डः | भोजराजः। | |
| 38. | (मीमांसा) शाबरभाष्यम् | शबरस्वामी | |
| 39. | श्लोकवार्तिकम् | कुमारिलभट्टः | |
| 40. | तन्त्रवार्तिकं/टुप्टीका | कुमारिलभट्टः | |
| 41. | बृहट्टीका | गुरु प्रभाकरः। | |
| 42. | न्यायरत्नाकरः/ शास्त्रदीपिका | पार्थसारथि मिश्रः | |
| 43. | जैमिनीयन्यायमाला | माधवाचार्यः | |
| 44. | मीमांसान्यायप्रकाशः | टापदेवः। | |
| 45. | अर्थसंग्रहः | लौगाक्षि भास्करः। | |

 क्रमशः ..............

| क्र. | ग्रन्थाः | ग्रन्थकाराः | समयः |
|---|---|---|---|
| 46. | नयविवेकः | भवनाथः (भवदेव) | |
| 47. | मीमांसापरिभाषा | कृष्ण यज्वा। | |
| 48. | विधिविवेकः, स्फोटसिद्धिः, विभ्रमविवेकः, भावनाविवेकः | मण्डन मिश्रः | |
| 49. | न्यायकणिका, तत्त्वबिन्दुः | वाचस्पति मिश्रः | |
| 50. | विधिरसायनम्, उपक्रमः पराक्रमः | अप्पय दीक्षितः | |
| 51. | भावचिन्तामणिः | विश्वेश्वर भट्टः | |
| 52. | भाट्टकौस्तुभः | खण्डदेव मिश्रः | |
| 53. | (वेदान्त) ब्रह्मसूत्रम्, गीताभाष्यम्, उपनिषद्भाष्यम् | शंकराचार्यः | |
| 54. | ब्रह्मसिद्धिः | मण्डन मिश्रः | |
| 55. | पञ्चीकरणवार्तिक | सुरेश्वराचार्यः | |
| 56. | सर-संग्रहः | मधुसूदन सरस्वती | |
| 57. | भामती | वाचस्पति मिश्रः | |
| 58. | खण्डनखण्डनखाद्य | महाकवि श्रीहर्षः | |
| 59. | न्यायमकरन्द | आनन्दबोधः | |
| 60. | पञ्चदशी | माधवाचार्यः | |
| 61. | अद्वैतसिद्धिः | मधुसूदन सरस्वती | |
| 62. | वेदान्तपरिभाषा | धर्मराजाध्वरीन्द्रः | |
| 63. | वेदान्तसार | सदानन्दः। | |
| 64. | (विशिष्टाद्वैत) श्रीभाष्य, वेदान्तसार, वेदार्थसंग्रहः, | रामानुजाचार्यः | |
| 65. | न्यायपरिशुद्धिः, तत्त्वटीका | वेदान्ताचार्य वेंकटनाथः | अधिकरण सारावली (द्वैत) माध्वमत |
| 66. | ब्रह्मसूत्रभाष्य, प्रपञ्चमिथ्यात्वनिर्णयः | मध्वाचार्यः | |
| 67. | वदावली तत्त्वप्रकाशिका | जयतीर्थः | |
| 68. | न्यायामृत | व्यासतीर्थः | |
| 69. | मध्वसिद्धान्तसारः | पद्मनाभः | |

क्रमशः ..............

| क्र. | ग्रन्थाः | ग्रन्थकाराः | समयः |
|---|---|---|---|
| 70. | (द्वैताद्वैत) वेदान्त-पारिजात सौरभ | निम्बाचार्यः | निम्बार्कमत(द्वैताद्वैत) |
| 71. | वेदान्तरत्नमञ्जूषा | श्री पुरुषोत्तमाचार्यः | |
| 72. | (शुद्धाद्वैत) ब्रह्मसूत्र (अणुभाष्य) | वल्लभाचार्यः | |
| 73. | शुद्धाद्वैतमार्तण्ड | विट्ठलनाथः | |
| 74. | प्रमेयरत्नार्णव | वलकृष्णभट्टः | |
| 75. | (जैन) तत्त्वार्थसूत्र | उमा स्वातिः | |
| 76. | सरचतुष्टय | कुन्दकुन्दाचार्यः | |
| 77. | आत्ममीमांसा | समन्तभद्रः | |
| 78. | न्यायावतारः | सिद्धसेन दिवाकरः | |
| 79. | प्रमाणनयतत्त्वालोकालंकारः | देवसूरिः। | |
| 80. | प्रमाणमीमांसा | हेमचन्द्रः | |
| 81. | (बौद्ध) अभिधर्मज्ञान प्रस्थान शास्त्र | कात्यायनीपुत्रः | |
| 82. | अभिधर्मकोशः | वसुवन्धुः। | |
| 83. | कल्पना मण्डितिका | कुमारलातः | (प्रवर्त्तक सौत्रान्तिक) |
| 84. | मध्यान्त विभागः | मैत्रेयः | |
| 85. | महायान सूत्रालंकारः | असङ्गः | |
| 86. | प्रमाणसमुच्चयः | दिङ्नागः | |
| 87. | प्रमाणवार्तिकम् | धर्मकीर्तिः | |
| 88. | माध्यमिक-शास्त्रम् | नागार्जुनः। | |
| 89. | तत्त्वसंग्रहः | शान्तरक्षितः | |
| 90. | शारीरिकभाष्यम् | शंकरः(778-820 ई.) | अद्वैतनिर्विशेषाद्वैत |
| 91. | भास्करभाष्यम् | भास्करः (1000) | भेदाभेद |
| 92. | श्रीभाष्यम् | रामानुजः(1140) | विशिष्टाद्वैत |
| 93. | पूर्णप्रज्ञभाष्यम् | माध्वाचार्यः(1238) | द्वैत |
| 94. | वेदान्तपारिजातः | निम्बार्काचार्यः(1250) | द्वैताद्वैत |
| 95. | शैवभाष्यम् | श्रीकण्ठः(1270) | शैव-विशिष्टाद्वैत |
| 96. | श्रीकरभाष्यम् | श्रीपतिः (1400) | बीरशैव विशिष्टाद्वैत |
| 97. | अणुभाष्यम् | वल्लभाचार्यः(1479-1544) | शुद्धाद्वैत |
| 98. | विज्ञानामृतम् | विज्ञानभिक्षुः(1600) | अविभागाद्वैत |



क्रमशः ..............

| क्र. | ग्रन्थाः | ग्रन्थकाराः | समयः |
|---|---|---|---|
| 99. | गोविन्दभाष्यम् | बलदेवः(1725) | अनित्य भेदाभेद |
| 100. | श्रीवैष्णवसम्प्रदायः | रामानुज | विशिष्टाद्वैत |
| 101. | ब्रह्मसम्प्रदायः | माध्वाचार्यः(आनन्दतीर्थः) | द्वैत |
| 102. | रुद्रसम्प्रदायः | विष्णु स्वामी/वल्लभाचार्यः | शुद्धाद्वैत |
| 103. | स्नक सम्प्रदायः | निम्बार्कः | द्वैताद्वैत |

**( थ ) तालिका द्वारा आस्तिक/नास्तिकदर्शनस्य प्रमाण/पदार्थ/द्रव्यनिरूपणम्**

| क्र. सं. | प्रमाणम् | पदार्थः | द्रव्यम् |
|---|---|---|---|
| 1. | जैन-3 | जैन-7 | |
| 2. | बौद्ध-3 | बौद्ध-1 | |
| 3. | वैशेषिक-3 | वैशेषिक-6 | |
| 4. | सांख्य-3 | सांख्य-25 | |
| 5. | योग-3 | योग-26 | |
| 6. | मध्व-3 | मध्व-10 | मध्व-20 |
| 7. | चार्वाक-1 | चार्वाक-4 | |
| 8. | न्याय-4 | न्यायसूत्र-16 | न्याय-9 |
| 9. | प्रभाकर-5 | | |
| 10. | कुमारिल-6 | कुमारिल-5 | कुमारिल-11 |
| 11. | वेदान्त-6 | वेदान्त-1 | |
| 12. | पुराण-8 | प्रशस्तपाद-7 | |
| 13. | तन्त्र (आगम) -8 | तन्त्र आगम-36 | |

आत्मा सर्वेषां भूतानां स्वामी वर्तते, एष एव सर्वेषां भूतानां पालकोऽस्ति, एष एव भवसागरतस्तारकः सेतुः, एष एव लोकानां संरक्षणाय तेषां धारकः, अत एव ब्रह्मजिज्ञासवो मुमुक्षवो ब्राह्मणा अनाशकेन, यज्ञेन, दानेन, तपसा, वेदानुवचनेन ( ज्ञानद्वारा) ब्रह्मलक्षणलक्षितमात्मानं विविदिषन्ति अर्थात् आत्मदर्शनं विधातुमिच्छन्ति, इदमस्ति सर्वं दर्शनस्यैव माहात्म्यम् इति निश्चप्रचं विज्ञेयम्। दर्शनदृष्टिस्वरूपज्ञानप्लवेनैव भवसागरं सन्तरन्तीत्यत्र नास्ति लेशतोऽपि सन्देहाध्यवसायावसरः।

**( द. न्यायदर्शन, ध. वैशेषिकदर्शन, न. सांख्य-योगदर्शन, प. मीमांसादर्शन, फ. वेदान्तदर्शन, ब. चार्वाकदर्शन, भ. बौद्धदर्शन, म. जैनदर्शन, य. दर्शनग्रन्था: ग्रन्थकाराश्च।)**

## (द) न्यायदर्शनस्य वस्तुनिष्ठप्रश्नोत्तराणि—

1. प्रश्नः— चत्वारि प्रमाणानि कस्मिन् दर्शने अङ्गीकृतानि?
 उत्तरम्— न्यायदर्शने।
2. प्रश्नः— "नाग-कूर्म-कृकल-देवदत्त-धनञ्जय" इति केषां नामान्तराणि?
 उत्तरम्— पञ्चवायूनाम्।
3. प्रश्नः— नव्यन्यायप्रवर्तकोऽस्ति?
 उत्तरम्— गङ्गेशोपाध्यायः।
4. प्रश्नः— प्राचीनन्यायदर्शने कति पदार्थाः प्रतिपादिताः?
 उत्तरम्— षोडश पदार्थाः।
5. प्रश्नः— "परमार्थसारः" इति ग्रन्थस्य लेखकः कः?
 उत्तरम्— अभिनवगुप्ताचार्यः।
6. प्रश्नः— क्षर-अक्षर-अव्ययपुरुषा इति त्रयः पुरुषाः कुत्र प्रतिपादिताः?
 उत्तरम्— विज्ञानविद्युदि।
7. प्रश्नः— न्यायदर्शनस्य उपज्ञाता कः?
 उत्तरम्— गौतमः।
8. प्रश्नः— महर्षेः गौतमस्य अपरं नाम किम्?
 उत्तरम्— अक्षपादः।
9. प्रश्नः— परामर्शजन्य-ज्ञानस्य का संज्ञा?
 उत्तरम्— अनुमितिः।
10. प्रश्नः— "अनुमितेः" किं कारणम्?
 उत्तरम्— अनुमानम्।
11. प्रश्नः— चक्षुः श्रोत्रघ्राणरसनत्वगाख्यानि कानि सन्ति?
 उत्तरम्— ज्ञानेन्द्रियाणि।
12. प्रश्नः— वाक्पाणिपादपायूपस्थानि कानि सन्ति?
 उत्तरम्— कर्मेन्द्रियाणि।
13. प्रश्नः— संकल्पमिन्द्रियं किमस्ति?
 उत्तरम्— मनः।
14. प्रश्नः— आलोचनमात्रं वृत्तिः कुत्रास्ति?
 उत्तरम्— ज्ञानेन्द्रियेषु।
15. प्रश्नः— प्रत्ययसर्गः मूलतः कतिविधः?
 उत्तरम्— (04) चतुर्विधः।
16. प्रश्नः— भेदोपभेदपूर्वकः प्रत्ययसर्गः कति?
 उत्तरम्— (50) पञ्चाशत्।
17. प्रश्नः— विपर्ययस्य कति भेदाः सन्ति?
 उत्तरम्— (05) पञ्च।

18. प्रश्नः— अशक्तिः कतिविधा?
उत्तरम्— (28) अष्टाविंशतिः।
19. प्रश्नः— तुष्टेः कति भेदाः सन्ति?
उत्तरम्— (09) नव।
20. प्रश्नः— सिद्धेः कति भेदाः सन्ति?
उत्तरम्— (08) अष्टौ।
21. प्रश्नः— भेदोपभेदपूर्वकः विपर्ययः कतिविधः?
उत्तरम्— (62) द्विषष्टिविधः।
22. प्रश्नः— तमसः कति भेदाः भवन्ति?
उत्तरम्— (08) अष्टौ।
23. प्रश्नः— मोहस्य कति भेदाः सन्ति?
उत्तरम्— (08) अष्टौ।
24. प्रश्नः— महामोहस्य कति भेदाः सन्ति?
उत्तरम्— (10) दश।
25. प्रश्नः— तामिस्रः कतिधा भवन्ति?
उत्तरम्— (18) अष्टादश।
26. प्रश्नः— अन्धतामिस्रः कतिविधः?
उत्तरम्— (18) अष्टादश।
27. प्रश्नः— "ईश्वरसिद्धिः" कस्य दर्शनस्य प्रतिपाद्यो विषयः?
उत्तरम्— न्यायदर्शनस्य।
28. प्रश्नः— न्यायसूत्रे कियन्तोऽध्यायाः?
उत्तरम्— (5) पञ्च।
29. प्रश्नः—"गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति" इत्यत्र "अगुणस्य" इति पदेन कस्य संकेतग्रहः भवति?
उत्तरम्— पुरुषस्य।
30. प्रश्नः— "दृष्टाऽस्मीति" मत्वा का पुरुषस्य दर्शनं पुनर्न उपैति?
उत्तरम्— प्रकृतिः।
31. प्रश्नः— पीलुपाकवादिनः के सन्ति?
उत्तरम्— नैयायिकाः।
32. प्रश्नः— कारणभावाच्च इत्यनेन कः वादः पुष्यते?
उत्तरम्— सत्कार्यवादः।
33. प्रश्नः— कार्यं किं भवति?
उत्तरम्— प्रकृतिसरूपमपि प्रकृतिविपर्ययमपि।
34. प्रश्नः— अकर्तृत्वं कस्य धर्मः?
उत्तरम्— पुरुषस्य।

146. प्रश्नः—वायौ पंचीकरणप्रक्रियायां वाय्वतिरिक्तानां चतुर्णां भूतानां सम्मिलितमात्रा कति प्रतिशतं यावत् भवति?
उत्तरम्— (50:)
147. प्रश्नः— स्थूलशरीराणि कतिविधानि?
उत्तरम्— (04) चतुर्विधानि।
148. प्रश्नः— जरायुजानि भवन्ति?
उत्तरम्— मनुष्यपश्वादीनि।
149. प्रश्नः— अण्डजानि भवन्ति?
उत्तरम्— पक्षिपन्नगादीनि।
150. प्रश्नः— उद्भिजानि भवन्ति?
उत्तरम्— कल्पवृक्षादीनि।
151. प्रश्नः— स्वेदजानि (स्वेदेभ्यो जातानि) भवन्ति?
उत्तरम्— यूकमशकादीनि।
152. प्रश्नः— सतत्त्वतोऽन्यथा प्रथा उच्यते?
उत्तरम्— विकारः।
153. प्रश्नः— अतत्त्वतोऽन्यथा प्रथा उच्यते?
उत्तरम्— विवर्तः।
154. प्रश्नः— ब्रह्माण्डेऽस्मिन् कति भुवनानि विद्यन्ते?
उत्तरम्— (14) चतुर्दश।
155. प्रश्नः— अज्ञानादनुपहितं चैतन्यरूपं तुरीयं तत्त्वं भवति?
उत्तरम्— ब्रह्म।
156. प्रश्नः— "तत्त्वमसि" इति महावाक्ये अखण्डार्थप्रतीतिः कया लक्षणया सम्भवति?
उत्तरम्— जहदजहल्लक्षणया।
157. प्रश्नः— तत्त्वमसीति महावाक्ये अखण्डार्थप्रतीतिबोधिका का नास्ति?
उत्तरम्— जहल्लक्षणा।
158. प्रश्नः— "गंगायां घोषः" अत्र का लक्षणा?
उत्तरम्— जहल्लक्षणा।
159. प्रश्नः— "शोणो धावति" इत्यत्र का लक्षणा?
उत्तरम्— अजहल्लक्षणा।
160. प्रश्नः— षड्विधैर्लिंगैरशेषवेदान्तानामद्वितीये वस्तुनि तात्पर्यावधारणं भवति?
उत्तरम्— श्रवणम्।
161. प्रश्नः— श्रुतस्याद्वितीयवस्तुनो वेदान्तानुगुणयुक्तिभिरनवरतमनुचिन्तनम् उच्यते ?
उत्तरम्— मननम्।
162. प्रश्नः— विजातीयदेहादिप्रत्ययरहिताद्वितीयवस्तुसजातीयप्रत्ययप्रवाहो भवति?
उत्तरम्— निदिध्यासनम्।

163. प्रश्नः— उपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्याख्यानि भवन्ति?
उत्तरम्— लिंगानि।
164. प्रश्नः— योगस्य समाधेः वा कति अंगानि सन्ति?
उत्तरम्— (08) अष्टौ।
165. प्रश्नः— अहिंसा-सत्यास्तेयब्रह्मचर्यापरिग्रहाः कथ्यन्ते?
उत्तरम्— यमाः।
166. प्रश्नः— शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि भवन्ति?
उत्तरम्— नियमाः।
167. प्रश्नः— करचरणादिसंस्थानविशेषलक्षणानि पद्मस्वस्तिकासनादीनि कथ्यन्ते?
उत्तरम्— आसनानि।
168. प्रश्नः— रेचक-पूरक-कुंभकलक्षणाः भवन्ति?
उत्तरम्— प्राणायामाः।
169. प्रश्नः— इन्द्रियाणां स्वविषयेभ्यः प्रत्याहरणं भवति?
उत्तरम्— प्रत्याहारः।
170. प्रश्नः— अद्वितीयवस्तुनि अन्तरिन्द्रियधारणमुच्यते?
उत्तरम्— धारणा।
171. प्रश्नः— अद्वितीयवस्तुनि विच्छिद्य-विच्छिद्य अन्तरिन्द्रियप्रवृत्तिप्रवाहो भवति?
उत्तरम्— ध्यानम्।
172. प्रश्नः— साध्यभूतस्य योगस्य निर्विकल्पकसमाधेः वा साधनस्वरूपात्मिका समाधिः कथ्यते?
उत्तरम्— सविकल्पकसमाधिः।
173. प्रश्नः— समाधिविघ्नस्य कति भेदाः भवन्ति?
उत्तरम्— (04) चत्वारः।
174. प्रश्नः— अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेर्निद्रा उच्यते?
उत्तरम्— लयः।
175. प्रश्नः— अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेरन्यावलम्बनं भवति?
उत्तरम्— विक्षेपः।
176. प्रश्नः— लयविक्षेपाभावे चित्तवृत्तेः रागादिवासनया स्तब्धीभावादखण्डवस्त्वनवलम्बनम् कथ्यते?
उत्तरम्— रसास्वादः।
177. प्रश्नः— यदा चित्तं निर्वातदीपवदचलं सदखण्डचैतन्यमात्रमवतिष्ठते तदा भवति?
उत्तरम्— निर्विकल्पकसमाधिः।
178. प्रश्नः—भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे।। इत्यत्र कस्य लक्षणम् उक्तम्?
उत्तरम्— जीवन्मुक्तस्य।

179. प्रश्नः— वेदान्तशब्दस्य पर्यायः कोऽस्ति?
उत्तरम्— उत्तरमीमांसा।
180. प्रश्नः—योगीन्द्रसदानन्दस्य जन्मकालः अस्ति?
उत्तरम्— (1510 A.D.)
181. प्रश्नः— वेदान्तसारस्य सुबोधिनी-टीकायाः प्रणेता कः?
उत्तरम्— नृसिंहसरस्वती।
182. प्रश्नः— अखिलबन्धरहितो ब्रह्मनिष्ठः कः?
उत्तरम्— जीवन्मुक्तः।
183. प्रश्नः— समष्ट्युपहितचैतन्यं किमस्ति?
उत्तरम्— ईश्वरः।
184. प्रश्नः— व्यष्ट्युपहितचैतन्यं किमस्ति?
उत्तरम्— प्राज्ञः।
185. प्रश्नः— समष्टिव्यष्ट्यभिप्रायेण एकमनेकमिति किं भवति?
उत्तरम्— अज्ञानम्।
186. प्रश्नः— आवरण-विक्षेपौ कस्य शक्ती स्तः?
उत्तरम्— अज्ञानस्य।
187. प्रश्नः— अज्ञानस्य शक्तिः कथ्यते?
उत्तरम्— विक्षेपः।
188. प्रश्नः— हेमवत्या उपाख्यानं कुत्र उपलभ्यते?
उत्तरम्— केनोपनिषदि।
189. प्रश्नः— रथरूपकं कुत्र विद्यते?
उत्तरम्— कठे।
190. प्रश्नः— "न वै स्त्रैणानि सख्यानि सन्ति" इयमुक्तिर्भवति?
उत्तरम्— उर्वश्याः।
191. प्रश्नः— अहङ्कारः कतिविधो भवति?
उत्तरम्— त्रिविधः।
192. प्रश्नः— समन्वयात् किं भवति?
उत्तरम्— प्रकृतिः।
193. प्रश्नः— वैराग्यात् किं भवति?
उत्तरम्— प्रकृतिलयः।
194. प्रश्नः— विवर्तवादस्य समर्थकः कः?
उत्तरम्— शंकरः।
195. प्रश्नः— केवलं शब्दादिगुणत्रयं कुत्र अभिव्यज्यते?
उत्तरम्— पंचीकृततेजसि।

196. प्रश्नः— लिङ्गशरीरस्य कति अवयवाः सन्ति वेदान्तदर्शने?
उत्तरम्— (17) सप्तदश।
197. प्रश्नः— अद्वैतवेदान्तमते मुक्तिः उच्यते?
उत्तरम्— ब्रह्मभावः।
198. प्रश्नः— विशेषगुणः कस्मिन् द्रव्ये नास्ति?
उत्तरम्— आकाशे।
199. प्रश्नः— लौकिकसन्निकर्षः कतिविधः?
उत्तरम्— षड्विधः।
200. प्रश्नः— अज्ञाने कति गुणाः?
उत्तरम्— त्रयः।
201. प्रश्नः— "मैत्रेयी-याज्ञवल्क्य-संवादः" कस्यामुपनिषदि उपलभ्यते?
उत्तरम्— बृहदारण्यकोपनिषदि।
202. प्रश्नः— कस्य देवस्य धारा प्रसिद्धाः?
उत्तरम्— वरुणस्य।
203. प्रश्नः— वेदान्तो नाम भवति?
उत्तरम्— उपनिषत्प्रमाणम्।
204. प्रश्नः— अद्वैतवेदान्ते जीवब्रह्मणोः स्वरूपं किम्?
उत्तरम्— जीवब्रह्मैक्यम्।
205. प्रश्नः— अद्वैते सुषुप्तेः देवता कः?
उत्तरम्— प्राज्ञः।
206. प्रश्नः— शांकर-वेदान्तानुसारं साक्षी कः?
उत्तरम्— आत्मा।
207. प्रश्नः— शांकर-वेदान्तानुसारं मोक्षः कथ्यते?
उत्तरम्— आत्मानुभूतिः।
208. प्रश्नः— "अन्विताभिधानवादः" इति कस्य मतम्?
उत्तरम्— गुरुप्रभाकरस्य।
209. प्रश्नः— रामानुजानुसारं चिरन्वितो ईश्वरस्य मध्ये कः सम्बन्धः?
उत्तरम्— अपृथक्सिद्धिसम्बन्धः।
210. प्रश्नः— रामानुजानुसारं ईश्वरकृपाप्राप्तये सर्वश्रेष्ठसाधनं किम्?
उत्तरम्— पूर्णसमर्पणम्।
211. प्रश्नः— शंकरस्य "मायावाद"सम्बन्धे रामानुजस्य मतं किम्?
उत्तरम्— तार्किकाधारेण मायावादास्वीकारः।
212. प्रश्नः— परमसद्रूपेण शांकरवेदान्तानुसारं किं स्वीकृतम्?
उत्तरम्— पारमार्थिक-सत्तारूपम्।

213. प्रश्नः— "साधन-चतुष्टय-सम्पन्नः" कः भवति ?
उत्तरम्— अधिकारी।
214. प्रश्नः— रामानुजानुसारं मोक्षस्य चरमसाधनं किम्?
उत्तरम्— भक्तिः प्रपत्तिश्च।
215. प्रश्नः— शंकरानुसारं माया का?
उत्तरम्— ब्रह्मणः उपाधिः।
216. प्रश्नः— शांकरमतानुसारं ब्रह्म किम्?
उत्तरम्— सत्यं ज्ञानमनन्तम्।
217. प्रश्नः— "वेदार्थसंग्रह" ग्रन्थस्य कः रचनाकारः?
उत्तरम्— रामानुजः।
218. प्रश्नः— कस्मिन् आश्रमे त्रिवर्गस्य प्राप्तिः भवति?
उत्तरम्— गृहस्थाश्रमे।
219. प्रश्नः— अद्वैतदर्शनस्य प्रमुखपक्षधरः कः?
उत्तरम्— शंकराचार्यः।
220. प्रश्नः— "विशिष्टाद्वैत" इत्यस्य प्रवर्तकः कः?
उत्तरम्— रामानुजाचार्यः।
221. प्रश्नः— "अयमात्मा ब्रह्म" इति कस्य विचारः?
उत्तरम्— अद्वैतवेदान्तस्य।
222. प्रश्नः— "ब्रह्म सदा विशिष्टः" अस्य मतस्य समर्थकः कः?
उत्तरम्— रामानुजः।
223. प्रश्नः— "ब्रह्म सत्यं जगन्मिथ्या" अस्य मतस्य समर्थकः कः?
उत्तरम्— शंकरः।
224. प्रश्नः— ब्रह्म परिणामवादस्य सिद्धान्तः कस्य वर्तते?
उत्तरम्— रामानुजस्य।
225. प्रश्नः— "सर्वं खलु इदं ब्रह्म", इति वाक्यं वर्तते?
उत्तरम्— छान्दोग्य-उपनिषद् वाक्यम्।
226. प्रश्नः— "अनिर्वचनीयख्यातिः" इति कस्य मतम्?
उत्तरम्— अद्वैतवेदान्तस्य।
227. प्रश्नः— चातुर्वर्ण्यव्यवस्था केन स्वीकृता?
उत्तरम्— शंकरेण।
228. प्रश्नः— द्वैताद्वैतस्य प्रतिपादनं केन क्रियते?
उत्तरम्— निम्बार्केण।
229. प्रश्नः— द्वैतवादस्य प्रतिपादनं केन क्रियते?
उत्तरम्— मध्वाचार्येण।

230. प्रश्नः— शंकरानुसारं ब्रह्मणः स्वरूपलक्षणं किम्?
उत्तरम्— सत्यं ज्ञानम् अनन्तं ब्रह्म।
231. प्रश्नः— सत्, चित्-आनंद इति कस्य स्वरूपलक्षणम्?
उत्तरम्— निर्गुण, निराकार, विज्ञानमय ब्रह्मस्वरूपलक्षणम्।
232. प्रश्नः— त्रिविध-सत्ता कथ्यते?
उत्तरम्— 1. प्रातिभासिकः, 2. व्यावहारिकः, 3. पारमार्थिकः।
233. प्रश्नः— ईश्वरस्य पञ्चरूपाणि सन्ति?
उत्तरम्— 1. पर, 2. व्यूह, 3. विभव, 4. अन्तर्यामी, 5. अर्चावतारः।
234. प्रश्नः— पंचपादिका ग्रन्थस्य लेखकः कः?
उत्तरम्— पद्मपादाचार्यः।
235. प्रश्नः— पञ्चीकरण-प्रक्रिया कुत्र प्रस्तुतः?
उत्तरम्— वेदान्तसारे।
236. प्रश्नः— नचिकेतुः पिता कस्य यज्ञस्य अनुष्ठानं कृतवान्?
उत्तरम्— विश्वजित्-यज्ञस्य।
237. प्रश्नः— शंकराचार्यस्य भाष्येण युक्तः उपनिषदि का संख्या?
उत्तरम्— (10) दश।
238. प्रश्नः— नासदीय-सूक्तस्य का प्रकृतिः?
उत्तरम्— दार्शनिकसूक्तम्।
239. प्रश्नः— "नासदासीन्नो सदासीत्तदानीं नासीद्रजो" इयं ऋचा कस्य सूक्तस्य?
उत्तरम्— नासदीयसूक्तस्य।
240. प्रश्नः— "कामस्तदग्रे समवर्तताधि मनसो रेतः" इयं ऋचा कस्य सूक्तस्य?
उत्तरम्— नासदीयसूक्तस्य।
241. प्रश्नः— शुद्धाद्वैतवादस्य प्रवर्तकः कः?
उत्तरम्— वल्लभाचार्यः।
242. प्रश्नः— "अथातो ब्रह्मजिज्ञासा" इदं मङ्गलवाक्यं कस्य सूत्रग्रन्थस्य वर्तते?
उत्तरम्— ब्रह्मसूत्रग्रन्थस्य।
243. प्रश्नः— शङ्कराचार्यस्य ब्रह्मसूत्रे किं भाष्यम्?
उत्तरम्— शारीरकभाष्यम्।
244. प्रश्नः— प्रस्थानत्रयी इत्यनेन किं ज्ञायते?
उत्तरम्— 1. उपनिषद, 2. गीता, 3. ब्रह्मसूत्रम् इति त्रितयम्।
245. प्रश्नः— ब्रह्म द्वे लक्षणे के?
उत्तरम्— 1. स्वरूपलक्षणम्, 2. तटस्थलक्षणम्।
246. प्रश्नः— कानि चत्वारि महावाक्यानि सन्ति?
उत्तरम्— 1. तत्वमसि, 2. अहं ब्रह्मास्मि, 3. प्रज्ञानं ब्रह्मं, 4. अयमात्मा ब्रह्म।

247. प्रश्नः— जीवस्य तिस्रः अवस्था कथ्यते?
उत्तरम्— 1. जाग्रत्, 2. स्वप्न, 3. सुषुप्तिः।

248. प्रश्नः— जीवस्य कानि त्रीणि शरीराणि सन्ति?
उत्तरम्— 1. कारणशरीरम्, 2. सूक्ष्मशरीरम्, 3. स्थूलशरीरम्।

249. प्रश्नः— ब्रह्मः पञ्चकोशाः के सन्ति?
उत्तरम्—1. प्राणमय, 2. विज्ञानमय, 3. आनन्दमय, 4. व्यष्टिरूप शरीर, 5. समष्टिरूप शरीरम्।

250. प्रश्नः— आत्मानः चतस्रः अवस्था काः?
उत्तरम्— 1. जाग्रत्, 2. स्वप्न, 3. सुषुप्तिः, 4. तुरीया चेति।

251. प्रश्नः— वेदानि मते कानि षट् प्रमाणानि?
उत्तरम्— 1. प्रत्यक्षः, 2. अनुमान, 3. शब्द, 4. उपमान, 5. अर्थापत्तिः, 6. अनुपलब्धिः।

252. प्रश्नः— ज्ञानमार्गस्य त्रीणि सोपानानि कथ्यते?
उत्तरम्— 1. श्रवण, 2. मनन, 3. निदिध्यासनानि।

253. प्रश्नः— साधनचतुष्टयं किम्?
उत्तरम्— 1. नित्यानिन्यवस्तुविवेकः, 2. इहामुत्रार्थफलभोगविराग, 3. शम, दम, उपरति, तितिक्षा, श्रद्धा, समाधान, 4. मुमुक्षत्वम्।

254. प्रश्नः— वेदान्तसूत्रस्य भाष्यकाराः कति आसन्?
उत्तरम्— अष्टौ।

255. प्रश्नः— मीमांसादर्शनं कतिषु अध्यायेषु विभक्तमस्ति?
उत्तरम्— द्वादशाध्यायेषु।

256. प्रश्नः— अद्वैतवेदान्तस्य प्रमुखा आचार्याः कतिसंख्याकाः सन्ति?
उत्तरम्— अष्टौ।

257. प्रश्नः— अद्वैतवादस्थापनं कः कृतवान्?
उत्तरम्— श्रीगौडपादाचार्यः।

258. प्रश्नः— विशिष्टाद्वैतमतस्य प्रवर्तकः कः आसीत्?
उत्तरम्— रामानुजाचार्यः।

259. प्रश्नः—वेदान्तदर्शने कियन्तोऽध्यायाः सन्ति?
उत्तरम्— (4) चत्वारः।

260. प्रश्नः— वेदान्तस्य अपरं नाम किम्?
उत्तरम्— उपनिषद्।

261. प्रश्नः— प्रणववाचकः कोऽस्ति?
उत्तरम्— ईश्वरः।

262. प्रश्नः— पाशानां संख्या कति सन्ति?
उत्तरम्— 4 चतस्रः।

263. प्रश्नः— यामलशब्दस्यार्थः किं भवति?
उत्तरम्— भुक्ति-मुक्ती।
264. प्रश्नः— अभिहितान्वयवादस्य प्रवर्त्तकः कोऽस्ति?
उत्तरम्— कुमारिलः।
265. प्रश्नः— अन्विताभिधानवादस्य प्रवर्त्तकः कोऽस्ति?
उत्तरम्— प्रभाकरगुरुः।
266. प्रश्नः— आगमे मोक्षस्य स्वरूपं किमस्ति?
उत्तरम्— आत्मस्वरूपशिवत्वप्राप्तिभवनम्।
267. प्रश्नः— विपर्ययः कति सन्ति?
उत्तरम्— 4 चत्वारः।
268. प्रश्नः— "भेदस्तु पदार्थ-स्वरूपमेव" इति कस्य मतम्?
उत्तरम्— माध्वमतम्।
269. प्रश्नः— माध्वमतानुसारं जीव-ब्रह्मयोः मध्येः कोऽस्तिं?
उत्तरम्— भेदः।
270. प्रश्नः— स्वतः प्रमाणवादं केन मन्यते?
उत्तरम्— माध्वाचार्यः।
271. प्रश्नः— माध्वमतानुसारं वेदः कोऽस्ति?
उत्तरम्— अपौरुषेयः।
272. प्रश्नः— माध्वमतानुसारं जीव-ब्रह्मयोः मध्येः कः सम्बन्धः?
उत्तरम्— बिम्ब-प्रतिबिम्बवादः।
273. प्रश्नः— मध्वे विख्यातटीकाकारः कोऽस्ति?
उत्तरम्— जयतीर्थः।
274. प्रश्नः— माध्वमतानुसारमयं जगत् किमस्ति?
उत्तरम्— सत्यमस्ति।
275. प्रश्नः— "ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः" इयं सूक्तिः केन सम्बद्धा?
उत्तरम्— शङ्कराचार्येण।
276. प्रश्नः— माध्ववेदान्ते परमतत्त्वः कः?
उत्तरम्— विष्णुः।
277. प्रश्नः— माध्वस्य मते को भेदः?
उत्तरम्— भेदस्तु पदार्थस्वरूपमेव।
278. प्रश्नः— अभिनवान्यथाख्यातिवादकः कः?
उत्तरम्— मध्वः।
279. प्रश्नः— कपिलस्य प्रथमः शिष्यः कः आसीत्?
उत्तरम्— आसुरीः।

280. प्रश्नः—योगस्य वक्ता कोऽस्ति?
उत्तरम्— हिरण्यगर्भः।
281. प्रश्नः— मीमांसादर्शनं कतिविधम्?
उत्तरम्— द्विविधम्।
282. प्रश्नः— वर्तमाने भारतीयदर्शनस्य प्रतिनिधिदर्शनं किमस्ति?
उत्तरम्— गीतादर्शनम्।
283. प्रश्नः— गीतादर्शनस्य आचार्यः कः?
उत्तरम्— श्रीकृष्णः।
284. प्रश्नः— उपनिषदानां काः संख्या मन्यन्ते?
उत्तरम्— (108)
285. प्रश्नः— प्रसिद्ध-उपनिषदाः कैः सन्ति?
उत्तरम्— ईश-केन-कठ-प्रश्नः-मुण्ड-माण्डूक्य-तित्तिरि।
ऐतरेयञ्च छान्दोग्यं बृहदारण्यकं तथा।।
286. प्रश्नः— "सत्यमेव जयते" कस्मिन् उपनिषदि अस्ति?
उत्तरम्— मुण्डकोपनिषदि।
287. प्रश्नः— उपनिषदोपरि शाङ्करभाष्यं कः रचितवान्?
उत्तरम्— आचार्यशङ्करः।
288. प्रश्नः— "असतो मा सद्गमय ... " कस्मिन् उपनिषदि वर्तते?
उत्तरम्— बृहदारण्यकोपनिषदि।
289. प्रश्नः—उत्तरमीमांसायाः प्रवर्तकः कः?
उत्तरम्— महर्षिबादरायणः।
290. प्रश्नः— "प्रमाता" कस्य विशेषणम्?
उत्तरम्— अधिकारी इत्यस्य।
291. प्रश्नः— "बोध्यबोधकभावलक्षणः" कया दिशा संकेतयति?
उत्तरम्— सम्बन्ध-दिशा।
292. प्रश्नः— "समष्टिव्यष्ट्यभिप्रायेण एकमनेकमिति च" इति केन सम्बद्धः?
उत्तरम्— अज्ञानेन।
293. प्रश्नः— केषु पञ्चीकृत-पदार्थेषु पञ्चगुणाः उपलभ्यन्ते?
उत्तरम्— पृथिव्याम्।
294. प्रश्नः— पञ्चीकरणेन वायोः अन्तर्गताः के उपलभ्येते?
उत्तरम्— शब्द-स्पर्शौ।
295. प्रश्नः— "रज्जु" इत्यस्मिन् "सर्प" इत्यस्यारोपः कः?
उत्तरम्— अध्यारोपः।
296. प्रश्नः— "प्रायश्चित्त-कर्म" किमस्ति?
उत्तरम्— चान्द्रायण-व्रतम्।

297. प्रश्नः— "प्रयोजनम्" परिभाषितं कारयितुं वाक्यांशः कः?
उत्तरम्— स्वस्वरूपानन्दावाप्तिः।
298. प्रश्नः— "पञ्चीकृतभूतेन उत्पन्नः कः?
उत्तरम्— भ्वादिलोकः।
299. प्रश्नः— "द्विधाविराम चैकैकं चतुर्धा प्रथमं पुनः" अनेन कस्याः दिशि संकेतयति?
उत्तरम्— पञ्चीकरण-दिशि।
300. प्रश्नः— सूक्ष्मशरीरतः स्थूलब्रह्माण्डपर्यन्तं समस्त-जगत् कया शक्त्या उत्पन्नमस्ति?
उत्तरम्— विक्षेपेण।
301. प्रश्नः— "वस्तुन्यवस्त्वारोपः" केन परिभाषितोऽस्ति?
उत्तरम्— अध्यारोपेण।
302. प्रश्नः— संज्ञा-संज्ञि-सम्बन्धज्ञानस्य का संज्ञा?
उत्तरम्— उपमितिः।
303. प्रश्नः— "अभाव" इत्यस्य कति रूपाणि?
उत्तरम्— (4) चत्वारि।
304. प्रश्नः— "परिणामः" कीदृशः पदार्थः?
उत्तरम्— गुणः।
305. प्रश्नः— लिङ्ग-परामर्शः कः?
उत्तरम्— अनुमानम्।
306. प्रश्नः— काम्यानि कर्माणि भवन्ति?
उत्तरम्— स्वर्गादीष्टसाधनानि।

## (ब) चार्वाकदर्शनस्य वस्तुनिष्ठप्रश्नोत्तराणि—

1. प्रश्नः— "यावज्जीवेत्सुखं जीवेदृणं कृत्वा घृतं पिवेत्" इति कस्य दर्शनस्योक्तिः?
उत्तरम्— चार्वाकदर्शनस्य।
2. प्रश्नः— लोकायतमिति कस्य दर्शनस्य नामान्तरम्?
उत्तरम्— चार्वकदर्शनस्य।
3. प्रश्नः— अनुबन्ध-चतुष्टये कस्य गणना नास्ति?
उत्तरम्— ईश्वरस्य।
4. प्रश्नः— "तत्वोपप्लवासिंह" इति रचनायाः सम्बन्धः केन मतेन वर्तते?
उत्तरम्— चार्वाकमतेन।
5. प्रश्नः— चार्वाक-मतानुसारं सुख-दुःखस्य कारणं किम्?
उत्तरम्— स्वभावः।
6. प्रश्नः— चार्वाकदर्शनानुसारं चैतन्यः कस्य गुणः अस्ति?
उत्तरम्— भौतिक-शरीरस्य।
7. प्रश्नः— चार्वाक-दार्शनिकाः कं युग्मं स्वीकुर्वन्ति?
उत्तरम्— अर्थकामौ।

8. प्रश्नः— चार्वाकविचारकाः कस्य आधारस्योपरि अनुमानं न मन्यन्ते?
उत्तरम्— हेतु-साध्ययोः अविनाभावसम्बन्धः न दृश्यन्ते।
9. प्रश्नः— चार्वाकसम्प्रदायानुसारं किं तत्त्वं न वास्तविकम्?
उत्तरम्— आकाशतत्त्वम्।
10. प्रश्नः— चार्वाकसम्प्रदायानुसारं कानि तत्त्वानि वास्तविकानि?
उत्तरम्— पृथिव्यापस्तेजोवायुः (पृथ्वी, जल, अग्नि, वायु)।
11. प्रश्नः— चार्वाकसम्प्रदायानुसारं समस्तज्ञानप्राप्तिः केन भवति?
उत्तरम्— प्रत्यक्षेण।
12. प्रश्नः— "देहात्मवादः" कः स्वीकरोति ?
उत्तरम्— चार्वाकः।
13. प्रश्नः— चार्वाकदर्शनस्य प्रमुखग्रन्थः कः?
उत्तरम्— बार्हस्पत्य-सूत्रम्।
14. प्रश्नः—एकं प्रत्यक्षम् एव प्रमाणं कः स्वीकरोति ?
उत्तरम्— चार्वाकदर्शनम्।
15. प्रश्नः— भारतीयदर्शनानां कः सम्प्रदायः भौतिकवादस्य (जड़वादस्य) संस्थापकः?
उत्तरम्— चार्वाकः।
16. प्रश्नः— भारतीयदर्शनानां कति नास्तिकसम्प्रदायाः?
उत्तरम्— त्रयः, चार्वाक-जैन-बौद्धाश्च।
17. प्रश्नः— भारतीयदर्शने सुखवादस्य समर्थकः कः?
उत्तरम्— चार्वाकः।
18. प्रश्नः— "चतुर्भूतानि" कः स्वीकरोति ?
उत्तरम्— चार्वाकः।
19. प्रश्नः— "इन्द्रियात्मवादः" कः स्वीकरोति ?
उत्तरम्— चार्वाकः।
20. प्रश्नः— कतमं भारतीयदर्शनानुसारं शरीरेण सह आत्मनः अन्तो भवति?
उत्तरम्— चार्वाकदर्शनानुसारम्।
21. प्रश्नः— "देहात्मवादः" कस्य विचारः?
उत्तरम्— चार्वाकदर्शनस्य।
22. प्रश्नः— "मरणमेव मोक्षः" अस्य मतस्य समर्थकः कः?
उत्तरम्— चार्वाकः।
23. प्रश्नः— "जड़वादः" केन दर्शनेन सम्बद्धः?
उत्तरम्— लोकायतेन (चार्वकेण)।
24. प्रश्नः— केवलं "अर्थकामौ पुरुषार्थौ" इति कः स्वीकरोति ?
उत्तरम्— चार्वाकः।

25. प्रश्नः— "पुनर्जन्म न भवति" इति कः स्वीकरोति?
उत्तरम्— चार्वाकः।
26. प्रश्नः— "चैतन्यविशिष्टदेह एव आत्मा" इति कः स्वीकरोति?
उत्तरम्— चार्वाकः।
27. प्रश्नः— "सुखं जीवनस्य परमलक्ष्यः" इति कः स्वीकरोति?
उत्तरम्— चार्वाकः।
28. प्रश्नः— "सुखमेव स्वर्गम्, दुःखमेव नरकम्" इति केन मन्यते?
उत्तरम्— चार्वाकदर्शनेन।
29. प्रश्नः— "जलबुद्बुद्वज्जीवा" इति कः स्वीकरोति ?
उत्तरम्— चार्वाकः।
30. प्रश्नः— "दण्डनीतिरेव विद्या" इति कः स्वीकरोति ?
उत्तरम्— चार्वाकः।
31. प्रश्नः— कः नास्तिकः?
उत्तरम्— वेदनिन्दकः।
32. प्रश्नः— चार्वाकदर्शनस्य प्रवर्तकः कः?
उत्तरम्— देवगुरुः बृहस्पतिः।
33. प्रश्नः— चार्वाक शब्दस्य मुख्यार्थः कः?
उत्तरम्— चारु वाक्(मधुर वाणी)।
34. प्रश्नः— नास्तिकाः कांस्कान् पदार्थान् न स्वीकुर्वन्ति?
उत्तरम्— वेदम्, ईश्वरम्, आत्मानम्, परलोकाँश्च।
35. प्रश्नः— चार्वाकमतेन कियन्ति तत्त्वानि?
उत्तरम्— (4) चत्वारि।
36. प्रश्नः— चार्वाकदर्शने प्रत्यक्षप्रमाणस्य कति भेदाः, के च ते?
उत्तरम्—पञ्च। (रासन, चाक्षुष, घ्राण, श्रोत्र, स्पर्शनानि)
37. प्रश्नः— चार्वाकसम्प्रदायानुसारं "सत् तत्त्वं" किम्?
उत्तरम्— दृश्यमान-जड़ः अथवा भौतिकतत्त्वम्।
38. प्रश्नः— देहात्मवादः वर्तते?
उत्तरम्— चैतन्यविशिष्टकायः पुरुषः।
39. प्रश्नः— स्वभाववादस्य समर्थकः कः?
उत्तरम्— चार्वाकदर्शनम्।
40. प्रश्नः— यदृच्छवादस्य समर्थकः कः?
उत्तरम्— चार्वाकदर्शनम्।
41. प्रश्नः— चार्वाकसम्प्रदायानुसारं परमपुरुषार्थः कः?
उत्तरम्— कामः।

42. प्रश्नः— चार्वाकदर्शने आत्मसम्बन्धि मतानि कानि?
उत्तरम्— चत्वारि। (देहात्मवादः, इन्द्रियात्मवादः, प्राणात्मवादः, मन आत्मवादः)
43. प्रश्नः— चार्वाकदर्शने आत्मानः स्वरूपं किम्?
उत्तरम्— 1. चेतनायुक्तः, 2. संघटनात्मकः, 3. स्वतंत्रः, 4. कर्ता।
44. प्रश्नः— भौतिकवादी दर्शनं कं कथ्यते?
उत्तरम्— चार्वाकः।
45. प्रश्नः— कानि नास्तिकदर्शनानि सन्ति?
उत्तरम्— 1. चार्वाक, 2. जैन, 3. बौद्ध।
46. प्रश्नः— कस्मिन् दर्शने "मरणमेवापवर्गः" कथ्यते?
उत्तरम्— चार्वाकदर्शने।
47. प्रश्नः— चार्वाकः वेदस्य कर्तृत्वविषये किं कथ्यते?
उत्तरम्—त्रयो वेदस्य कर्त्तारो धूर्त्तभण्डनिशाचराः।जर्मरीतुकेरीत्यादि पण्डितानां वचः स्मृतम्।।
48. प्रश्नः— चार्वाकदर्शनं कैः नामभिः ज्ञायन्ते?
उत्तरम्— 1. लोकायत, 2. बार्हस्पत्यदर्शनम्।
49. प्रश्नः— चार्वाकानुसारं कति पुरुषार्थाः सन्ति?
उत्तरम्— काम एवैकः पुरुषार्थः।
50. प्रश्नः— चार्वाकदर्शनस्य प्रतिनिधिः श्लोकः कः?
उत्तरम्— यावज्जीवेत् सुखं जीवेद् ऋणं कृत्वा घृतं पिवेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः।।
51. प्रश्नः— "अङ्गनाद्यालिङ्गनादिजन्यं सुखमेव पुरुषार्थ" इदं कस्य मतम्?
उत्तरम्— चार्वाकस्य।

## (भ) बौद्धदर्शनस्य वस्तुनिष्ठप्रश्नोत्तराणि—

1. प्रश्नः— बौद्धदर्शनस्य अष्टाङ्गिकमार्गेषु वर्तते अयमप्येकः?
उत्तरम्— सम्यगाजीवः।
2. प्रश्नः— "प्रतीत्यसमुत्पादसिद्धान्तः" कस्य दर्शनस्य विद्यते?
उत्तरम्— बौद्धदर्शनस्य।
3. प्रश्नः— बौद्धधर्मस्य पवित्रग्रन्थः कः?
उत्तरम्— त्रिपिटकम्।
4. प्रश्नः— "त्रिशरणं" के सततं पठन्ति?
उत्तरम्— बौद्धाः।
5. प्रश्नः— कः धर्मः वैदिककर्मकाण्डं, ब्रह्मण्यवादं च विरुध्य अहिंसामार्गे प्रवर्तते?
उत्तरम्— बौद्धधर्मः।
6. प्रश्नः— "उपसम्पदासंस्कारः" कस्मिन् धर्मे भवति?
उत्तरम्— बौद्धधर्मे।

7. प्रश्नः— पबज्जासंस्कारेण संस्कृतः बौद्धधर्मे किमिति कथ्यते?
उत्तरम्— सामनेर्।
8. प्रश्नः— बौद्धमतप्रचाराय "अशोकः" कं श्रीलङ्कां प्रेषयत्?
उत्तरम्— महेन्द्रम्।
9. प्रश्नः— प्रमाणं द्विविधमिति कस्य मतम्?
उत्तरम्— बौद्धस्य।
10. प्रश्नः— अष्टांगमार्गस्य कानि चरणानि सन्ति?
उत्तरम्— प्रज्ञा, शीलम्, समाधिः इति त्रितयानि।
11. प्रश्नः— "अहिंसा दुःखनिरोधस्य मार्गः" इति कस्य दर्शनस्य उक्तिः?
उत्तरम्— बौद्धदर्शनस्य।
12. प्रश्नः— "आत्मदीपो भव" इति कस्योक्तिः?
उत्तरम्— बुद्धस्य।
13. प्रश्नः— चतुर्थ आर्य-सत्यं किमस्ति?
उत्तरम्— अष्टांगिक-मार्गः।
14. प्रश्नः— बौद्धदर्शने कानि संघातानि?
उत्तरम्— त्रीणि, 1. क्षणिकवादः, 2. अनात्मवादः, 3. प्रतीत्यसमुत्पादः।
15. प्रश्नः— बौद्ध-अनात्मवादः किं मन्यते?
उत्तरम्— पञ्चस्कन्धात् भिन्नम् आत्मा नास्ति।
16. प्रश्नः— बौद्धदर्शनानुसारं निर्माणस्य कोऽर्थः?
उत्तरम्— समस्तदुःखानां निरोधः।
17. प्रश्नः— "बहुजनहिताय बहुजनसुखाय" इति कस्य आचरणम्?
उत्तरम्— बोधिसत्वस्य।
18. प्रश्नः— बौद्धदर्शने बाह्यार्थानुमेयवादस्य प्रतिपादकः कः?
उत्तरम्— सौत्रान्तिकः।
19. प्रश्नः— बुद्धानुसारं दुःखानां सर्वाधिक-महत्त्वपूर्ण-कारणं किम्?
उत्तरम्— अविद्या।
20. प्रश्नः— बौद्ध-पंचशीलः कुत्र चरितार्थो भवति?
उत्तरम्— सदैव-सर्वेषु जनेषु, सर्वेषु स्थानेषु।
21. प्रश्नः— प्रतीत्य-समुत्पादानुसारं "तृष्णा" किम् उत्पादयति?
उत्तरम्— उपादानम्।
22. प्रश्नः— महात्माबुद्धानुसारं निर्माण-प्राप्तिकरणस्य साधनं किम्?
उत्तरम्— अष्टांगमार्गः।
23. प्रश्नः— सम्यक् व्यायामस्य किं तात्पर्यम्?
उत्तरम्— अशुभविचारस्य त्यागः।

24. प्रश्नः— धर्मी-धर्ममुभयं कः स्वीकरोति?
    उत्तरम्— सौत्रान्तिकः।
25. प्रश्नः— बोधिसत्वस्य अवधारणां कः स्वीकरोति?
    उत्तरम्— योगाचारः।
26. प्रश्नः— शून्यवादस्य संस्थापकः कः?
    उत्तरम्— नागार्जुनः।
27. प्रश्नः— अनात्मवाद-सिद्धान्तस्य प्रवर्तकः कः?
    उत्तरम्— महात्माबुद्धः।
28. प्रश्नः— केन अष्टांग-मार्गाः त्रिचरणेषु विभाजिताः?
    उत्तरम्— बुद्धेन (1. प्रज्ञा, 2. शीलः, 3. समाधिः)
29. प्रश्नः— ऋतस्य अवधारणा कुत्र प्रदत्तः?
    उत्तरम्— वेदे।
30. प्रश्नः— बौद्धदर्शनस्य कियन्तो भेदाः सन्ति?
    उत्तरम्— (4) चत्वारः।
31. प्रश्नः— "अष्टांगमार्गः" कस्य दर्शनस्य प्रतिपाद्यविषयः?
    उत्तरम्— बौद्धदर्शनस्य।
32. प्रश्नः— "द्वादशनिदानानि" कस्य दर्शनस्य प्रतिपाद्यविषयः?
    उत्तरम्— बौद्धदर्शनस्य।
33. प्रश्नः— "विज्ञानवादः" कस्य दर्शनस्य प्रतिपाद्यविषयः?
    उत्तरम्— बौद्धदर्शनस्य।
34. प्रश्नः— "योगाचारः" कस्य दर्शनस्य प्रतिपाद्यविषयः?
    उत्तरम्— बौद्धदर्शनस्य।
35. प्रश्नः— प्रतीत्यसमुत्पाद-सिद्धान्तस्य सम्बन्धः केन दर्शनेन वर्तते?
    उत्तरम्— बौद्धदर्शनेन।
36. प्रश्नः— बौद्धदर्शने कः नैतिकनियमः मन्यते?
    उत्तरम्— परार्थोन्मुख आदर्शः।
37. प्रश्नः— "सर्वे क्षणिका, सर्वे दुःखमयाः" अस्य मतस्य समर्थकः कः?
    उत्तरम्— बौद्धः।
38. प्रश्नः— अपोहवादस्य सिद्धान्तः कस्य दर्शनस्य विषयः?
    उत्तरम्—बौद्धदर्शनस्य।
39. प्रश्नः— "आत्मख्यातिवादः" कस्य मतं वर्तते?
    उत्तरम्— योगाचारस्य।
40. प्रश्नः— "असत्-ख्यातिवादः" कस्य मतं वर्तते?
    उत्तरम्— माध्यमिकस्य।

41. प्रश्नः— "त्रिपिटकः" अस्य प्रवर्तकः कः?
उत्तरम्— बौद्धः।
42. प्रश्नः— जातकशब्दस्य प्रयोगः कस्मिन् दर्शने दृश्यते?
उत्तरम्— बौद्धदर्शने।
43. प्रश्नः— बौद्धदर्शने के मार्गाः प्रतिपादिताः?
उत्तरम्—अष्टांगमार्गाः, 1. सम्यक् दृष्टिः, 2. सम्यक् संकल्प, 3. सम्यक् वाक्, 4. सम्यक् कर्मान्त, 5. सम्यक् आजीवका, 6. सम्यक् व्यायाम, 7. सम्यक् स्मृतिः, 8. सम्यक् समाधिः।
44. प्रश्नः— मोक्षं कः निर्वाणं मन्यते?
उत्तरम्— बौद्धः।
45. प्रश्नः— बौद्धदर्शने भावना कतिविधा?
उत्तरम्— चतुर्विधा।
46. प्रश्नः— बौद्धदर्शने नागार्जुनस्य रचना वर्तन्ते?
उत्तरम्— 1. माध्यमिक त्रीणि कारिका, 2. शून्यप्राप्तिः।
47. प्रश्नः— बौद्धदर्शने शान्तिदेवस्य कानि रचनाकार्याणि?
उत्तरम्—1. शिक्षासमुच्चयः, 2. सूत्रसमुच्चयः, 3. बोधिचर्यावतारः।
48. प्रश्नः— ज्ञानस्य कियन्ति कारणानि?
उत्तरम्— (4) चत्वारि।
49. प्रश्नः— बौद्धदर्शनानुसारेण व्याप्तिज्ञानं सुगममस्ति न वा?
उत्तरम्— सुगमम्।
50. प्रश्नः— स्कन्धः कतिविधः?
उत्तरम्— (5) पञ्चविधः।
51. प्रश्नः— बौद्धदर्शनस्य जनकः कः?
उत्तरम्— भगवान् बुद्धः।
52. प्रश्नः— अर्थः कतिविधः?
उत्तरम्— द्विविधः।
53. प्रश्नः— "त्रिपिटक" इति पदेन कः गृह्यते?
उत्तरम्— 1. विनयपिटक, 2. सुत्तपिटक, 3. अभिधम्मपिटक।
54. प्रश्नः— हीनयानस्य चरमलक्ष्यः कः?
उत्तरम्— अर्हत्।
55. प्रश्नः— हीनयानस्य सम्प्रदायः कः?
उत्तरम्— वैभाषिकः सौत्रान्तिको वा।
56. प्रश्नः— महायानस्य चरमलक्ष्यः कः?
उत्तरम्— बोधिसत्वः।

57. प्रश्नः— महायानस्य कः सम्प्रदायः?
उत्तरम्— विज्ञानवादः शून्यवादो वा।

58. प्रश्नः— वैभाषिकमतस्य कः प्रवर्तकः?
उत्तरम्— कात्यायनीपुत्रः।

59. प्रश्नः— सौत्रान्तिकमतस्य प्रवर्तकः कः?
उत्तरम्— कुमारलातः।

60. प्रश्नः—योगाचारमतस्य प्रवर्तकः कः?
उत्तरम्— मैत्रेयनाथः।

61. प्रश्नः— कानि द्वादश निदानानि?
उत्तरम्—1. अविद्या, 2. संस्कारः, 3. विज्ञानम्, 4. षडायतनं, 5. स्पर्श, 6. वेदना, 7. तृष्णा, 8. उपादान, 9. भव, 10. जाति, 11. नामरूप, 12. जरामरण।

62. प्रश्नः— के पञ्च स्कन्धाः?
उत्तरम्— 1. रूपम्, 2. वेदना, 3. संज्ञा, 4. संस्कार, 5. विज्ञानम्।

63. प्रश्नः— कानि त्रिरत्नानि सन्ति?
उत्तरम्— 1. शीलः, 2. प्रज्ञा, 3. समाधिः।

64. प्रश्नः— संज्ञायाः के त्रयो भेदाः सन्ति?
उत्तरम्— 1. श्रुतमयी, 2. चिन्तामयी, 3. भावनामयी।

65. प्रश्नः— बौद्धानां किं पञ्चशीलत्वम्?
उत्तरम्— 1. अहिंसा, 2. सत्यम्, 3. अस्तेजः, 4. ब्रह्मचर्य, 5. मद्यपाननिषेधः।

66. प्रश्नः— "सत्" इत्यस्य का परिभाषा?
उत्तरम्— अर्थक्रियाकारित्वम्।

67. प्रश्नः— बौद्धदर्शने कति कर्माणि कानि च तानि?
उत्तरम्— त्रीणि, 1. कायिकः, 2. वाचिकः, 3. मानसिकः।

68. प्रश्नः— बौद्धदर्शने कति प्रत्यक्षप्रमाणानि, कानि च तानि?
उत्तरम्—चत्वारि, 1. इन्द्रियज्ञानम्, 2. मनोविज्ञानम्, 3. स्वसंवेदनम्, 4. योगिज्ञानम्।

69. प्रश्नः— श्रावकस्य काः चतस्रः अवस्था?
उत्तरम्— 1. सोतापन्नः, 2. सकदागामी, 3. अनागामी, 4. अर्हत्।

70. प्रश्नः— बौद्धदर्शने त्रिकायवादाः के सन्ति?
उत्तरम्— 1. धर्मकायः, 2. निर्माणकायः, 3. सम्भोगकायः।

71. प्रश्नः— प्रवृति विज्ञानस्य के सप्तभेदाः सन्ति?
उत्तरम्—1. चक्षुविज्ञानम्, 2. श्रोत्रविज्ञानम्, 3. घ्राणविज्ञानम्, 4. रसनाविज्ञानम्, 5. कायविज्ञानम्, 6. मनोविज्ञानम्, 7. क्लिष्टमनोविज्ञानम्।

72. प्रश्नः— महात्मा बुद्धस्य जीवनपरिचयः कः?
उत्तरम्— 563ई० पूर्वं, लुम्बिनी ग्रामे, शाक्यवंशे बुद्धो जातः।

73. प्रश्नः—बौद्धदर्शने अभिधम्मपिटकाणां के भागाः सन्ति?
उत्तरम्—(7 सप्त) 1. धम्म संगाणि, 2. विभंगः, 3. कथावस्तुः, 4. पुग्गल पंजातिः, 5. धातुकथा, 6. यमकः, 7. पठ्ठानः।
74. प्रश्नः— तृष्णायाः कति प्रभेदाः सन्ति?
उत्तरम्— त्रयः, 1. कामतृष्णा, 2. भवतृष्णा, 3. विभवतृष्णा।
75. प्रश्नः— ज्ञानं कस्य धर्मः?
उत्तरम्— बुद्धेः।
76. प्रश्नः— बौद्धदर्शने पञ्च बोधिवृक्षानि कानि सन्ति?
उत्तरम्—"क्षमा-रूपिणी-जटा, धैर्यरूपि-दृढ़मूल, चरित्र-रूपि-पुष्पम्, बुद्धिरूपिणीशाखा, धर्मरूपि फलम्।
77. प्रश्नः— बौद्धदर्शने पञ्च अविद्या काः सन्ति?
उत्तरम्— आलस्य, जन्म-मृत्यु, काम, क्रोध, विषादाः।
78. प्रश्नः— बौद्धदर्शने अष्टाङ्गमार्गाः के सन्ति?
उत्तरम्—सम्यक्दृष्टिः-संकल्प-वाणी-कर्म-आजीविका-उद्योग-स्मृति-समाधिरिति।
79. प्रश्नः— बौद्धदर्शनस्य कति भेदाः?
उत्तरम्— द्वौ भेदौ।
80. प्रश्नः— निर्माणमार्गस्य कति अङ्गानि?
उत्तरम्— अष्टौ अङ्गानि।
81. प्रश्नः— बौद्धसम्प्रदाये कियन्ति आर्यतत्त्वानि?
उत्तरम्— (4) चत्वारि।
82. प्रश्नः— बौद्धसम्प्रदाये कति वादाः?
उत्तरम्— द्वौ वादाः।
83. प्रश्नः—यानरूपेण बौद्धसम्प्रदायो कतिविधः?
उत्तरम्— द्विविधः।
84. प्रश्नः— कति मतानि बौद्धसम्प्रदाये निर्दिष्टानि?
उत्तरम्— चत्वारि।
86. प्रश्नः— प्रारम्भिकबौद्धदर्शने भगवतो बुद्धस्य कियन्ति आर्यसत्यानि?
उत्तरम्— बौद्धदर्शनस्याधारभूतानि चत्वारि आर्यसत्यानि सन्ति।
87. प्रश्नः— बौद्धदर्शनस्य आधारः"चतुर्आर्यसत्यं" कानि सन्ति?
उत्तरम्—1. दुःखम्, 2. दुःखसमुदायः, 3. दुःखनिरोधः, 4. दुःखनिरोध-गामिनि-प्रतिपत्।
88. प्रश्नः— बौद्धः मोक्षाय कस्य शब्दस्य प्रयोगः अकुर्वत्?
उत्तरम्— निर्वाणशब्दस्य।
89. प्रश्नः— बौद्धदर्शनः कस्मिन् पिटके अस्ति?
उत्तरम्— अभिधम्मपिटके।

90. प्रश्नः— अभिधम्मपिटकः कस्मिन् भाषायां अस्ति?
उत्तरम्— पालि-भाषायाम्।
91. प्रश्नः—बुद्धस्य आत्मायाः नित्यताविषये किं मन्यते?
उत्तरम्— आत्मायाः अनित्यता।
92. प्रश्नः— कः मीमांसकः बौद्धाचार्यस्य शिष्यत्वं स्वीकृत्वा तं पराजितः?
उत्तरम्— कुमारिलभट्टः।
93. प्रश्नः— बौद्धदर्शनस्य प्रथम-आचार्यः कः आसीत्?
उत्तरम्— महात्माबुद्धः।
94. प्रश्नः— बौद्धदर्शनस्य प्रसिद्ध-नाम किम्?
उत्तरम्— शून्यवादः।
95. प्रश्नः— बौद्धस्य कौ द्वौ उपसम्प्रदायौ?
उत्तरम्— 1. हीनयानः, 2. महायानः।
96. प्रश्नः— विज्ञानवाद-शून्यवादे च काभ्यां नामभ्यां ज्ञायन्ते?
उत्तरम्— क्रमशः योगाचारः एवं च माध्यमिकनामभ्याम्।
97. प्रश्नः— शून्यवादी-माध्यमिक-सम्प्रदायस्य मूलप्रवर्तकः कोऽस्ति?
उत्तरम्— आचार्य अश्वघोषः।
98. प्रश्नः— माध्यमिक-सम्प्रदायं सम्प्रदायस्य रूपं कः प्रदत्तः?
उत्तरम्— आचार्यनागार्जुनः।
99. प्रश्नः— महात्मा-बुद्धस्य जन्म कदा कुत्र च अभवत्?
उत्तरम्— ई०पू० 581 वर्षाणि, कपिलवस्तुनगरे।
100. प्रश्नः— बुद्धस्य बाल्यकाले किन्नाम?
उत्तरम्— सिद्धार्थः।
101. प्रश्नः— सिद्धार्थस्य वंशनाम किम्?
उत्तरम्— शाक्यवंशः।
102. प्रश्नः— सिद्धार्थस्य का पत्नी?
उत्तरम्— यशोधरा।
103. प्रश्नः— सिद्धार्थस्य पुत्रनाम किम्?
उत्तरम्— राहुलः।
104. प्रश्नः— सिद्धार्थस्य घोटकस्य किन्नाम?
उत्तरम्— छन्दकः।
105. प्रश्नः— बुद्धस्य ज्ञानप्राप्तिस्थानं किम्?
उत्तरम्— बोधगया।
106. प्रश्नः— बुद्धस्य अपरं नाम किम्?
उत्तरम्— शाक्यमुनिः।

107. प्रश्नः— बुद्धस्य प्रथमोपदेशः कुत्र अभवत्?
उत्तरम्— सारनाथे।
108. प्रश्नः— बौद्धधर्मस्य प्रमुखाः सिद्धान्ताः कियन्तः सन्ति?
उत्तरम्— (5) पञ्च।
109. प्रश्नः— बौद्धमन्दिरस्य किन्नाम?
उत्तरम्— चैत्य-मण्डपम्।
110. प्रश्नः— अष्टाङ्गमार्गस्य उपदेशकः कः?
उत्तरम्— बुद्धः।
111. प्रश्नः— स्त्रीणां कृते समानाऽधिकारस्य उद्घोषकौ कौ?
उत्तरम्— बुद्धाऽऽनन्दौ।

## (म) जैनदर्शनस्य वस्तुनिष्ठप्रश्नोत्तराणि—

1. प्रश्नः— "षट्खण्डागमः" इति कस्य दर्शनस्य प्राचीनतमः ग्रन्थः?
उत्तरम्— जैनदर्शनस्य।
2. प्रश्नः— जैनदर्शनं कति व्रतानि प्रतिपादयति?
उत्तरम्— द्वादश।
3. प्रश्नः— रत्नत्रयं कस्मिन् धर्मे विश्रुतमस्ति?
उत्तरम्— जैनधर्मे।
4. प्रश्नः— "मानवीयज्ञानम् आंशिकं सापेक्षं वा" इति कस्य दर्शनस्य मतम्?
उत्तरम्— जैनदर्शनस्य।
5. प्रश्नः— जैनदर्शनानुसारं सर्वोच्च-सद्गुणः कः?
उत्तरम्— अहिंसा।
6. प्रश्नः— "अहिंसा परमो धर्मः" इति के मन्यन्ते?
उत्तरम्— जैनाः।
7. प्रश्नः—जैनदर्शनानुसारं "सप्तभंगीनय" सिद्धान्ते स्याद् अस्ति घटः इति निर्णयस्य कोऽर्थः?
उत्तरम्— सम्भवतः घटस्य अस्तित्वमस्ति।
8. प्रश्नः— जैनदर्शनानुसारं द्रव्यं किम्?
उत्तरम्— नित्यं परिवर्तनशीलं च वस्तु।
9. प्रश्नः— जैनदर्शनं नास्तिकः कथं मन्यते?
उत्तरम्— वेदनिन्दकत्वात्।
10. प्रश्नः— जैनधर्मे गुण-स्थानस्य किमर्थः?
उत्तरम्— आत्मविकासस्य अवस्था।
11. प्रश्नः— जैनधर्माणां "मोक्षमार्गः" कः?
उत्तरम्— त्रयाणां समन्वयः।
12. प्रश्नः— जैनदर्शनानुसारं किं द्रव्यं नास्ति?
उत्तरम्— संख्या।

13. प्रश्नः— जैनदर्शनस्य अपरं नाम किम्?
उत्तरम्— आर्हत-दर्शनम्।

14. प्रश्नः— जैन-नैतिक-व्यवस्थायां कः वर्जितः?
उत्तरम्— अतिसारः।

15. प्रश्नः— जैन-महाव्रतेषु कः सम्मिलितः न भवति?
उत्तरम्— बन्धः।

16. प्रश्नः— "अणुव्रत आचार संहिता" इति केषां कृते वर्तते?
उत्तरम्— श्रावकानां कृते।

17. प्रश्नः— जैनदर्शनानुसारं जीवः कोऽस्ति?
उत्तरम्— स्वदेहपरिणामः।

18. प्रश्नः— जैनदर्शने बाधक-कर्म किं कथ्यते?
उत्तरम्— ज्ञानावरणम्।

19. प्रश्नः— स्याद्वादस्य सिद्धान्तः कस्मिन् दर्शने वर्तते?
उत्तरम्— जैनदर्शने।

20. प्रश्नः— जैनदर्शने मोक्षप्राप्तव्यक्तिः किं कथ्यते?
उत्तरम्— कैवल्यम्।

21. प्रश्नः— जैनदर्शने के पंचशीलसिद्धान्ताः?
उत्तरम्— 1. ब्रह्मचर्यः, 2. सत्यः, 3. अहिंसा, 4. अचौर्य, 5. अपरिग्रहः।

22. प्रश्नः— जैनदर्शनस्य कति सम्प्रदायाः के च ते?
उत्तरम्— द्वौ, 1. दिगम्बरः, 2. श्वेताम्बरः।

23. प्रश्नः— जैनदर्शने मोक्षस्य कानि त्रीणि रत्नानि?
उत्तरम्— 1. सम्यक् दर्शनम्, 2. सम्यक् ज्ञानम्, 3. सम्यक् चारित्रम्।

24. प्रश्नः— "अनेकान्तवादः" कस्य दर्शनस्य विषयः?
उत्तरम्— जैनदर्शनस्य।

25. प्रश्नः— "सप्तभंगीन्यायः" कस्य दर्शनस्य विषयः?
उत्तरम्— जैनदर्शनस्य।

26. प्रश्नः— "प्रत्येकज्ञानं सापेक्षमस्ति" अस्य मतस्य समर्थकः कः?
उत्तरम्— जैनः।

27. प्रश्नः— अणुव्रतं तथा महाव्रतं च" कः स्वीकरोति?
उत्तरम्— महावीरः।

28. प्रश्नः— जैनदर्शनस्य प्रवर्तकः कः?
उत्तरम्— ऋषभदेवः।

29. प्रश्नः— जैनदार्शनिकमते तत्त्वानि कियन्ति?
उत्तरम्— (7) सप्त।

30. प्रश्नः— महावीरस्य जन्मस्थानं किम्?
उत्तरम्— कुन्दग्रामः।
31. प्रश्नः— भङ्गीन्यायः कतिविधः?
उत्तरम्— सप्तविधः।
32. प्रश्नः— बन्धः कतिविधः?
उत्तरम्— चतुर्विधः।
33. प्रश्नः— महावीरस्य पितुः किन्नाम?
उत्तरम्— सिद्धार्थः।
34. प्रश्नः— सिद्धसेनस्य वार्तिककारानुसारेण कियन्तस्तर्काः?
उत्तरम्— (5) पञ्च।
35. प्रश्नः— महावीरस्य मातुर्नामधेयं किम्?
उत्तरम्— त्रिशला।
36. प्रश्नः— महावीरस्य भार्यायाः नाम किम्?
उत्तरम्— यशोदा।
37. प्रश्नः— अर्हत् कस्य उपाधिः?
उत्तरम्— जैनस्य (निर्माण-प्राप्ति जनानाम्)
38. प्रश्नः— कियन्ति सम्यग् ज्ञानानि?
उत्तरम्— (5) पञ्च।
39. प्रश्नः— जैनदर्शने कति तीर्थंकराः सन्ति?
उत्तरम्— (24) चतुर्विंशतिः।
40. प्रश्नः— जैनदर्शने मूलसाहित्यस्य भाषा का?
उत्तरम्— प्राकृतभाषा।
41. प्रश्नः— जैनदर्शने ज्ञानस्यं कति भेदाः? के च ते?
उत्तरम्— द्वौ, 1. निराकारज्ञानम्, 2. साकारज्ञानम्।
42. प्रश्नः— निराकारज्ञानस्य कति भेदाः? के च ते?
उत्तरम्— चत्वारः, 1. चक्षुः, 2. अचक्षुः, 3. अवधिः, 4. केवलम्।
43. प्रश्नः— साकारज्ञानस्य कति भेदाः? के च ते?
उत्तरम्— द्वौ, 1. प्रत्यक्षम्, 2. परोक्षञ्च।
44. प्रश्नः— "परोक्षज्ञानस्य कति भेदाः? के च ते?
उत्तरम्— द्वे, 1. मतिः, 2. श्रुतः।
45. प्रश्नः— जैनदर्शने कति प्रमाणानि स्वीकृतानि?
उत्तरम्— त्रीणि, 1. प्रत्यक्षम्, 2. अनुमानम्, 3. शब्दः।
46. प्रश्नः— प्रत्यक्षप्रमाणस्य कति भेदाः?
उत्तरम्— द्वौ, 1. पारमार्थिकप्रत्यक्षम्, 2. व्यावहारिकप्रत्यक्षम्।

47. प्रश्नः— अनुमानस्य कति भेदाः?
उत्तरम्— द्वौ, 1. स्वार्थानुमानम्, 2. परार्थानुमानम्।
48. प्रश्नः— शब्दस्य कति भेदाः?
उत्तरम्— द्वौ, 1. लौकिकः, 2. शास्त्रजः।
49. प्रश्नः— जैनदर्शने ज्ञानस्य किं स्वरूपम्?
उत्तरम्— स्वपरभासित्वम्।
50. प्रश्नः— विकलज्ञानस्य कति भेदाः, के च ते?
उत्तरम्— द्वौ, 1. अवधिज्ञानम्, 2. मनःपर्यायज्ञानम्।
51. प्रश्नः— परार्थानुमानस्य के पञ्चावयवाः?
उत्तरम्— 1. प्रतिज्ञा, 2. हेतुः, 3. दृष्टांतः, 4. उपनयः, 5. निगमनम्।
52. प्रश्नः— नयस्य कति भेदाः के च ते?
उत्तरम्— द्वौ, 1. निश्चयनयः, 2. व्यवहारनयः।
53. प्रश्नः— निक्षेपस्य कति प्रकाराः के च ते?
उत्तरम्— चत्वारः, 1. नामनिक्षेपः, 2. स्थापनानिक्षेपः, 3. द्रव्यनिक्षेपः, 4. भावनिक्षेपः।
54. प्रश्नः— जैनदर्शने कानि सप्त तत्त्वानि?
उत्तरम्— 1. जीवः, 2. अजीवः, 3. आस्रवः, 4. संवरः, 5. निर्जराः, 6. बन्धः, 7. मोक्षः।
55. प्रश्नः— जैनदर्शने कानि षड् द्रव्यानि?
उत्तरम्— 1. जीवः, 2. धर्मः, 3. अधर्मः, 4. पुद्गलः, 5. आकाशः, 6. कालः।
56. प्रश्नः— जीवस्य कति भेदाः के च ते?
उत्तरम्— द्वौ, 1. बद्धः, 2. मुक्तः।
57. प्रश्नः— द्रव्यस्य कति भेदाः के च ते?
उत्तरम्— द्वौ, 1. अस्तिकायः, 2. अनस्तिकायः।
58. प्रश्नः— कर्मणः कति भेदाः के च ते?
उत्तरम्— द्वौ, 1. भावकर्म, 2. द्रव्यकर्म।
59. प्रश्नः— कर्मणः अष्ट प्रकृतयः काः?
उत्तरम्—1. दर्शनावरणीयः, 2. मोहनीयअन्तराय, 3. ज्ञानावरणीयः, 4. वेदनीयः, 5. नाम, 6. गोत्रः, 7. आयुरूपम्, 8. अविद्या।
60. प्रश्नः— बन्धस्य कानि पञ्च कारणानि?
उत्तरम्— 1. मिथ्यादर्शनम्, 2. अविरति, 3. प्रमादः, 4. कषायः, 5. योगः।
61. प्रश्नः— के चत्वारः काषायाः ?
उत्तरम्— 1. लोभः, 2. मानः, 3. माया, 4. क्रोधः।
62. प्रश्नः—योगस्य कति भेदाः के च ते?
उत्तरम्— त्रयः, 1. काययोगः, 2. वाग्योगः, 3. मनोयोगः।
63. प्रश्नः— बन्धनस्य कौ द्वौ भेदौ?
उत्तरम्— 1. भावबन्धनम्, 2. द्रव्यबन्धनम्।

64. प्रश्नः— मोक्षस्य कौ द्वौ भेदौ?
उत्तरम्— 1. भावमोक्षः, 2. द्रव्यमोक्षः।

65. प्रश्नः— कानि पञ्च महाव्रतानि?
उत्तरम्—1. अहिंसा, 2. सत्यम्, 3. अस्तेयः, 4. अपरिग्रहः, 5. ब्रह्मतेजः।

66. प्रश्नः— पञ्चसमितिः का?
उत्तरम्—1. ईर्ष्या, 2. भाषा, 3. एषणा, 4. आदाननिक्षेपणा, 5. प्रतिस्थापनासमितिः।

67. प्रश्नः— के च दश धर्मा?
उत्तरम्—1. क्षमा, 2. मार्दवम्, 3. आर्जवम्, 4. सत्य, 5. शौचम्, 6. संयम, 7. तपः, 8. अकिंचनम्, 9. ब्रह्मचर्यः, 10. त्यागः।

68. प्रश्नः— जैनदर्शने अनुप्रेक्षायाः संख्या काः, काः च ताः?
उत्तरम्—द्वादश, 1. अनित्यत्वम्, 2. अशरणत्वम्, 3. संसारः, 4. एकत्वम्, 5. अन्यत्वम्, 6. अशुचिः, 7. आस्रवः, 8. संवरः, 9. निर्जरा, 10. लोकः, 11. बोधि, 12. दुर्लभत्वम्, 13. धर्मानुप्रेक्षा।

69. प्रश्नः— जैनदर्शने चारित्राणां संख्या काः, काश्च ताः?
उत्तरम्—पञ्च, 1. सामयिकः, 2. छेदोपस्थापना, 3. परिहारः, 4. विशुद्धिः, 5. सूक्ष्म संपरायः, 6. यथाख्यात्।

70. प्रश्नः— जैनदर्शनस्य प्रवर्तकः कः?
उत्तरम्— महावीर स्वामी।

71. प्रश्नः— स्याद्वादः कस्य दर्शनस्य अस्ति?
उत्तरम्— जैनदर्शनस्य।

72. प्रश्नः— जैनदर्शने कति अस्तिकायः अस्ति?
उत्तरम्— 5 पञ्च।

73. प्रश्नः— नास्तिकदर्शनानि कति संख्याकानि?
उत्तरम्— षट्।

74. प्रश्नः— जैनाः कतिविधाः?
उत्तरम्— द्विविधाः।

75. प्रश्नः— जैनशब्दस्य किं तात्पर्यम्?
उत्तरम्— विकारानां जेता। (विजेता)

76. प्रश्नः— प्रथमजैनतीर्थङ्करः कः?
उत्तरम्— ऋषभदेवः।

77. प्रश्नः— अन्तिमजैनतीर्थङ्करः कः?
उत्तरम्— चतुर्विंशः तीर्थङ्करो महावीरः।

78. प्रश्नः— जैनदर्शनस्य अनेकान्तवादः किमस्ति?
उत्तरम्— वस्तूनां अनन्तरूपं एवं अनन्तधर्मश्च।

79. प्रश्नः— "आर्हत्" केषामीश्वरः?
उत्तरम्— जैनानाम्
80. प्रश्नः— जैनीनां महाविशालं केन्द्रं किम्?
उत्तरम्— चम्पानगरी।
81. प्रश्नः— महावीरस्य प्रथमा शिष्या का?
उत्तरम्— पद्मावती।
82. प्रश्नः— महावीरस्य कुत्र प्रथमोपदेशः?
उत्तरम्— राजगृहे।
83. प्रश्नः— पञ्चानां जैनमन्दिराणां निर्माता कः?
उत्तरम्— चन्देल राजा।
84. प्रश्नः— जैन-धर्मस्य उदयः कदा जातः?
उत्तरम्— ई० पूर्वम्-षष्ठ-शताब्द्याम्।
85. प्रश्नः— महावीरस्य बाल्यकाले नाम किम्?
उत्तरम्— वर्द्धमानः।
86. प्रश्नः— महावीरस्य निर्वाणम्(मृत्युः) कदा कुत्र चाऽभवत्?
उत्तरम्— ई० पूर्वम्-468 ई० वर्षे, पावापुरीस्थाने।

## (य) दर्शनस्य परिचयात्मकानि वस्तुनिष्ठप्रश्नोत्तराणि— (दर्शनग्रन्थाः ग्रन्थकाराश्च)

1. प्रश्नः— भारते कतिविधानि दर्शनानि सन्ति?
उत्तरम्— द्वादशविधानि।
2. प्रश्नः— कारिकावली केन निर्मिता?
उत्तरम्— विश्वनाथपञ्चाननेन।
3. प्रश्नः— ब्रह्मसूत्रस्य रचयिता कः आसीत्?
उत्तरम्— वेदव्यासः।
4. प्रश्नः— न्यायसूत्रस्य लेखकः कः?
उत्तरम्— गौतमः।
5. प्रश्नः—योगसूत्रस्य लेखकः कः?
उत्तरम्— पतंजलिः।
6. प्रश्नः— न्यायभाष्यस्य लेखकः कः?
उत्तरम्— वात्स्यायनः।
7. प्रश्नः— न्यायदर्शने उदयनाचार्यस्य कानि रचनाकार्याणि?
उत्तरम्— 1. न्यायकुसुमांजलिः, 2. परिशुद्धिः, 3. आत्मतत्त्वविवेकः।
8. प्रश्नः— तात्पर्यटीका कस्य वर्तते?
उत्तरम्— वाचस्पतिमिश्रस्य।

9. प्रश्नः— तत्त्वचिन्तामणेः ग्रन्थस्य लेखकः कः?
उत्तरम्— गङ्गेशोपाध्यायः।
10. प्रश्नः— न्यायमञ्जरी इत्यस्य लेखकः कः?
उत्तरम्— जयन्तभट्टः।
11. प्रश्नः— उद्योतकरस्य का टीका वर्तते?
उत्तरम्— न्यायवार्तिकम्
12. प्रश्नः— "न्यायसिद्धान्तमुक्तावली" इत्यस्य लेखकः कः?
उत्तरम्— विश्वनाथपंचाननः।
13. प्रश्नः— न्यायतर्कभाषायाः रचनाकारः कः?
उत्तरम्— केशवमिश्रः।
14. प्रश्नः— प्रत्यभिज्ञाहृदयस्य लेखकः कः?
उत्तरम्— क्षेमराजः।
15. प्रश्नः— शिवदृष्टिः इति कस्य रचनाकार्यः ?
उत्तरम्— सोमानन्दस्य।
16. प्रश्नः— न्यायामृत इत्यस्य लेखकः कः?
उत्तरम्— व्यासतीर्थः।
17. प्रश्नः— दीधिति इत्यस्य लेखकः कः?
उत्तरम्— रघुनाथशिरोमणिः।
18. प्रश्नः— प्रामाण्यवार्तिकस्य लेखकः कः?
उत्तरम्— धर्मकीर्तिः।
19. प्रश्नः— प्रमाणनिर्णय इत्यस्य लेखकः कः?
उत्तरम्— धर्मकीर्ति।
20. प्रश्नः— तन्त्रसारस्य रचनाकारः कः?
उत्तरम्— अभिनवगुप्तः।
21. प्रश्नः— श्लोकवार्तिक इत्यस्य लेखकः कः?
उत्तरम्— कुमारिलः।
22. प्रश्नः— तत्वचिन्तामणि इत्यस्य लेखकः कः?
उत्तरम्— गङ्गेशोपाध्यायः।
23. प्रश्नः— तत्त्वप्रकाशिकायाः लेखकः कः?
उत्तरम्— जयतीर्थः।
24. प्रश्नः— प्रकरणपञ्जिकायाः लेखकः कः?
उत्तरम्— शालिकनाथः।
25. प्रश्नः— न्यायसिद्धान्तमञ्जरी इत्यस्य लेखकः कः?
उत्तरम्— जयन्तभट्टः।

26. प्रश्नः— परमार्थसारस्य रचनाकारः कः?
उत्तरम्— अभिनवगुप्तः।
27. प्रश्नः— न्यायवार्तिकटीका कस्य वर्तते?
उत्तरम्— वाचस्पतिमिश्रस्य।
28. प्रश्नः— "किरणावली" कस्य रचना वर्तते?
उत्तरम्— उदयनाचार्यस्य।
29. प्रश्नः— "न्यायकन्दली" इत्यस्य लेखकः कः?
उत्तरम्— श्रीधराचार्यः।
30. प्रश्नः— "न्यायलीलावती" कस्य रचना वर्तते?
उत्तरम्— वल्लभाचार्यस्य।
31. प्रश्नः— "न्यायमुक्तावली" अस्य ग्रन्थस्य रचनाकारः कः?
उत्तरम्— विश्वनाथभट्टाचार्यः।
32. प्रश्नः— वैशेषिक-भाष्यकारः कः?
उत्तरम्— आत्रेयः, प्रशस्तमतिः।
33. प्रश्नः— परमाणुवादस्य स्थापकः कः?
उत्तरम्— कणादः।
34. प्रश्नः— "तर्कभाषा" इति ग्रन्थस्य प्रणेता कः?
उत्तरम्— केशवमिश्रः।
35. प्रश्नः— तर्कसंग्रहस्य प्रणेता कः?
उत्तरम्— अन्नंभट्टः।
36. प्रश्नः— तर्कसंग्रहस्य "दीपिका" टीकायाः प्रणेता कोऽस्ति?
उत्तरम्— अन्नंभट्टः।
37. प्रश्नः—योगवार्तिकस्य रचनाकारः कः?
उत्तरम्— विज्ञानभिक्षुः।
38. प्रश्नः— "योगसूत्रस्य लेखकः कः?
उत्तरम्— पतञ्जलिः।
39. प्रश्नः— सांख्यसूत्रस्य कः लेखकः?
उत्तरम्— महर्षिकपिलः।
40. प्रश्नः— सांख्यतत्त्वकौमुदी अस्य ग्रन्थस्य कः लेखकः?
उत्तरम्— वाचस्पतिमिश्रः।
41. प्रश्नः— सांख्यप्रवचनभाष्यस्य रचनाकारः कः?
उत्तरम्— विज्ञानभिक्षुः।
42. प्रश्नः— सांख्यसार इत्यस्य लेखकः कः?
उत्तरम्— विज्ञानभिक्षुः।

43. प्रश्नः— सांख्यवृत्तिसारस्य लेखकः कः?
उत्तरम्— महादेव वेदान्ती।

44. प्रश्नः— तत्त्वसमासस्य कः रचनाकारः?
उत्तरम्— महर्षिकपिलः।

45. प्रश्नः— प्रकृति-पुरुषयोः रचयिता कः?
उत्तरम्— ईश्वरः।

46. प्रश्नः— ब्रह्मसूत्रशारीरकभाष्यस्य प्रणेता कः?
उत्तरम्— शंकराचार्यः।

47. प्रश्नः— ब्रह्मसूत्रस्य प्रणेता कः?
उत्तरम्— कृष्णद्वैपायनः।

48. प्रश्नः— सांख्यकारिकायाः प्रणेता कः?
उत्तरम्— ईश्वरकृष्णः।

49. प्रश्नः— भाट्टदीपिका अस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— खण्डदेवः।

50. प्रश्नः— बृहती अस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— प्रभाकरमिश्रः।

51. प्रश्नः— मिताक्षराकारः कोऽस्ति?
उत्तरम्— हरदत्तः।

52. प्रश्नः— वेदान्तकामधेनुः ग्रन्थस्य कर्ता कः आसीत्?
उत्तरम्— निम्बार्काचार्यः।

53. प्रश्नः— भामतीटीका कस्य रचना वर्तते?
उत्तरम्— वाचस्पतिमिश्रस्य।

54. प्रश्नः— सुरेश्वराचार्यस्य कानि रचनाकार्याणि वर्तन्ते?
उत्तरम्— 1. नैष्कर्म्यसिद्धिः, 2. बृहदारण्यकोपनिषद्भाष्यवार्तिक।

55. प्रश्नः— संक्षेपशारीरक अस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— सर्वज्ञात्ममुनिः।

56. प्रश्नः— खण्डनखण्डखाद्य इत्यस्य कः रचनाकारः?
उत्तरम्— श्रीहर्षः।

57. प्रश्नः— विद्यारण्यस्य कानि रचनाकार्याणि वर्तन्ते?
उत्तरम्— 1. पंचदशी, 2. विवरणप्रमेयसंग्रहः।

58. प्रश्नः— शंकराचार्यस्य कानि रचनाकार्याणि वर्तन्ते?
उत्तरम्— 1. शारीरकभाष्य, 2. गीताभाष्य, 3. उपदेशसाहस्री।

59. प्रश्नः— माण्डूक्यकारिका कस्य रचना वर्तते?
उत्तरम्— गौड़पादाचार्यस्य।

60. प्रश्नः— अद्वैतसिद्धिः अस्य ग्रन्थस्य कः लेखकः?
उत्तरम्— मधुसूदनसरस्वती।
61. प्रश्नः— वेदान्त-सिद्धान्तमुक्तावली कस्य रचना वर्तते?
उत्तरम्— प्रकाशानन्दस्य।
62. प्रश्नः— वेदान्तसार अस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— धर्मराजाध्वरीन्द्रः।
63. प्रश्नः— ब्रह्मसूत्रस्य प्रणेता कः?
उत्तरम्— बादरायणः।
64. प्रश्नः— वेदान्तसार-ग्रन्थस्य प्रणेता कः?
उत्तरम्— योगीन्द्र-सदानन्दः।
65. प्रश्नः— वेदान्तसारस्य "प्रज्ञा" नाम्नी टीकायाः प्रणेता कः?
उत्तरम्— मिथिलेशपाण्डेयः।
66. प्रश्नः— "सिद्धान्तविन्दुः" इति वेदान्तग्रन्थस्य लेखकः कः?
उत्तरम्— मधुसूदनसरस्वती।
67. प्रश्नः— ब्रह्मसूत्रस्य कर्ता कः?
उत्तरम्— बादरायणः।
68. प्रश्नः— "वेदान्तपारिजातसौरभमित्यस्य" ग्रन्थस्य कः रचनाकारः?
उत्तरम्— निम्बाकाचार्यः।
69. प्रश्नः— "वेदान्तसारः" कस्य कृतिरस्ति?
उत्तरम्— सदानन्दयोगीन्द्रस्य।
70. प्रश्नः— "चतुःशतकम्" कस्य रचना वर्तते?
उत्तरम्— आर्यदेवस्य।
71. प्रश्नः— बौद्धदर्शने "चन्द्रकीर्ति" लेखकस्य रचना का?
उत्तरम्— 1. मध्यमकावतारः, 2. प्रसन्नपदा, चतुःशतक व्याख्या।
72. प्रश्नः— बौद्धदर्शने शान्तिरक्षितस्य रचनाकार्याणि कानि?
उत्तरम्— 1. तत्त्वसंग्रहः, 2. माध्यमिकालंकारः।
73. प्रश्नः— कमलशीलस्य ग्रन्थः कः?
उत्तरम्— तत्त्वसंग्रहव्याख्या।
74. प्रश्नः— असंगस्य कति रचनाः?
उत्तरम्—पञ्च, 1. अभिधर्मसमुच्चयः, 2. पंचभूमि, 3. महायानसंग्रहः, 4. प्रकरण-आर्यावाचा, 5. वज्रच्छेदिका।
75. प्रश्नः— कणाद-भाष्यस्य रचयिता कः?
उत्तरम्—प्रशस्तपादः।
76. प्रश्नः— सांख्यप्रवचनस्य रचना केन कृता?
उत्तरम्— भगवता पतञ्जलिना।

77. प्रश्नः— शालिकनाथमिश्रस्य कानि रचनाकार्याणि?
उत्तरम्— 1. दीपशिखा, 2. ऋजुविमलापंचिका।

78. प्रश्नः— मीमांसासूत्राणि केन महर्षिणा रचितानि?
उत्तरम्— जैमिनिमहर्षिणा।

79. प्रश्नः— "अद्वैतसिद्धिः" इत्यस्य लेखकः कः?
उत्तरम्— मधुसूदनसरस्वती।

80. प्रश्नः— "तत्त्वोपप्लवसिंह" इति ग्रन्थस्य कः रचनाकारः?
उत्तरम्— जयराशिभट्टः।

81. प्रश्नः— "सर्वदर्शनसंग्रह" इति ग्रन्थस्य प्रणेता कः?
उत्तरम्— माधवाचार्यः।

82. प्रश्नः— "प्रमाणमीमांसा" ग्रन्थस्य कः रचनाकारः?
उत्तरम्— हेमचन्द्रः।

83. प्रश्नः— "जैनतर्कभाषा" ग्रन्थस्य कः रचनाकारः?
उत्तरम्— यशोविजयः।

84. प्रश्नः— "सन्मतितर्कः" अस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— सिद्धसेनदिवाकरः।

85. प्रश्नः— तत्त्वार्थवार्तिक ग्रन्थस्य कः रचनाकारः?
उत्तरम्— अकलंकः।

86. प्रश्नः— राजवार्तिकम् ग्रन्थस्य कः रचनाकारः?
उत्तरम्— अकलंकः।

87. प्रश्नः— "षड्दर्शनसमुच्चयः" इति ग्रन्थस्य लेखकः कः?
उत्तरम्— हरिभद्रसूरिः।

88. प्रश्नः— "शास्त्रवार्तासमुच्चयः" अस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— हरिभद्रसूरिः।

89. प्रश्नः— "तत्त्वार्थाधिगमसूत्रम्" अस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— उमास्वामी।

90. प्रश्नः— "न्यायावतारः" अस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— सिद्धसेनदिवाकरः।

91. प्रश्नः— "द्रव्यसंग्रहः" अस्य ग्रन्थस्य प्रणेता कः?
उत्तरम्— नेमिचन्द्रः।

92. प्रश्नः— "अभिधर्मकोश" अस्य ग्रन्थस्य कः रचनाकारः?
उत्तरम्— वसुबन्धुः।

TOTAL- 1151



# 10
# पुराणेतिहासौ

## (क) पुराणानामुद्भवः

पुराणशब्दो हि अथर्ववेदे ब्राह्मणेषु च सर्गं-विद्येत्यर्थे पठ्यते। महाभारते तु शब्दोऽयं पुरातनोपाख्यानबोधकत्वेन प्रयुज्यमानो दृश्यते। विष्णु-वायु-ब्रह्माण्ड-पुराणेभ्यो वयं सर्वपुराणेषु प्राचीनतमस्य पुराणस्य जन्मकथां विद्मः। "व्यासो हि वेदान् चतुर्धा विभज्य तानात्मनः चतुरः शिष्यानुपदिष्टवान्। धर्म्यान् मन्त्रान् संगृह्य पुराणनिर्माणम् अभवत्। पुराणानां धार्मिकदृष्ट्या महत्त्वमधिकम्। वेदविहितानां धर्माणां सरलसुबोधभाषायां वर्णनायैव पुराणानि विरचितानि। पुराणशब्दो हि अथर्ववेदे ब्राह्मणेषु च सर्गं-विद्येत्यर्थे पठ्यते। व्यासो हि वेदान् चतुर्धा विभज्य तानात्मनः चतुरः शिष्यान् उपदिष्टवान्। ततश्चासौ कथाः आख्यायिकाः उपाख्यानानि, गीतानि, लोकवादांश्च संगृह्य पुराणं नाम ग्रन्थविशेषं ग्रथितवान्, "इतिहासेन च साकममुं ग्रन्थं रोमहर्षणं(लोमहर्षणं वा) नाम पञ्चमं स्वशिष्यं पाठयामास।

## (ख) पुराणसंवृद्धिः

व्यासप्रोक्तां पुराणसंहितां षोढा विभज्य रोमहर्षणः तासां षण्णां संहितानां प्रत्येकं क्रमेणात्मनः षट्शिष्यान् पाठयामास। तेषु च शिष्येषु त्रयः पृथक् पृथक् तिस्रः संहिताः सम्पादयामासुः, याः खलु स्वस्वकर्तृनाम्ना प्रसिद्धिं जग्मुः, रोमहर्षणीयसंहितया च सार्द्धं मूलसंहिता इति लोके विदिताः बभूवुः। एताः सर्वाः चतुर्भिश्चतुर्भिः पादैः विभक्ताः, प्रतिपाद्येऽर्थे समानाः सन्त्योऽपि वचोभङ्ग्या विभिन्नाः आसन्।

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
विभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति।।

यदा वेदोक्ता अर्थाः लोकानां बुद्धौ नारोढुं प्रवृत्तास्तदा वेदोक्तार्थस्य ज्ञानं सुलभं कर्त्तुं पुराणानि विरच्यन्ते स्म। समाजस्य तात्कालिकस्वरूपबोधनायापि पुराणानां महानुपयोगः। पुराणेषु प्राचीनभारतीयेतिहासो निहितः। इतिहासा यदि राज्ञां वृत्तं प्राधान्येन बोधयन्ति तदा पुराणानि राज्ञां वृत्तैः सह ऋषीणामपि वृत्तं बोधयन्तीति परमोपयोगित्वं पुराणानाम्। पुराणानि भौगोलिकसामग्रीमपि प्रस्तुवन्ति। अतिशयोक्तिप्रणाली पुराणेषु आदृता। अस्यां प्रणाल्यां वर्णिता अर्था यथामति विविच्य

गृहीतव्या भवन्ति। पुराणानां तुलनात्मकमध्ययनं तदन्तस्तले प्रवेशनं च यदि क्रियेत तदा तत्रत्य-इतिहासभागः समाजिकवर्णनारहस्यं च स्पष्टमवभासेत इति विदुषां विचारः। पुराणं पुरातनमाख्यानमुच्यते। संस्कृते पुराणशब्दः चिरन्तनपर्यायः। पुराणेषु भूत-वर्तमान-भविष्यतश्चार्था वर्ण्यन्ते।

## ( ग ) पुराणानां प्रतिपाद्यार्थाः

आख्यानानि, उपाख्यानानि, गाथाः, कल्पवाक्यानि च उपादाय पुराणानां सर्गः संजात इति पूर्वोक्तं स्मृत्वा प्राचीनतम पुराणविषयः अनुमातुं न अशक्यः। पुराणस्य पञ्चलक्षणमित्थमुक्तम्—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितं चैव पुराणं पञ्च लक्षणम्।।

इति श्लोकेन पुराणविषयो यो निर्देशितः स केवलं आदिमपुराणसम्बन्धको ज्ञेयः, यदा धर्मसिद्धान्ताः तीर्थमाहात्म्यानि धर्माङ्गान्तराणि चेति बहुविधं अर्थजातं न खलु पुराणनिक्षिप्तमभूत्। इदानीं तु पुराणेषु उपदेशप्रकरणानि सङ्ख्यया इतिहासप्रकरणानि अपि वर्तमानानि पश्यामः। तत्र च अनैतिहासिक्यः कथाः, विष्णुदशावतारवर्णनानि, देवपूजाविधयः, पर्वव्रतनियमाश्चेति नाना-विषयाः उपलभ्यन्ते। वेदप्रामाण्येन पुराणप्रामाण्यं खलु प्रख्यायते। वायुपुराणे च वेदपुराणत्वमात्मनः उद्दिष्टम्। पुराणसंख्याविषये मतभेदो नास्ति, सर्ववादिसिद्धं तेषां अष्टादशत्वम्। कस्यापि मानवसमाजस्य इतिहासः तावन्न पूर्णो मन्यते, यावत्तस्य सृष्टेः प्रारम्भकालत इतिहासो न प्रस्तूयते। पाश्चात्त्य- शिक्षाप्रभाविता विद्वांसो नैतदनुमोदयन्ति स्म, अत एव ते पुराणानि सत्यानि न स्वीकुर्वन्ति स्म, परं सम्प्रति दृष्टिकोणपरिवर्तनं जातम्। सुसंस्कृतया दृष्ट्या भारतीयमितिहासं जिज्ञासमानानां कृते पुराणानि निधय इव। बहुषु पुराणेषु वेदसंहितानाम्ना तेषां व्यवहारो दृश्यते, वेदाध्ययनेन च यत् फलं तदेव, तदपि अतिशयानं वा, फलं पुराणाध्ययनेन निगदितम्।

## ( घ ) पुराणेष्वितिहासांशः

मत्स्य-वायु-ब्रह्माण्डानि अस्याः पुराणत्रय्याः कथावर्णनेषु अद्भुतं खलु साम्यमालोक्यते। वायु-ब्रह्माण्डयोर्वर्णनेषु महासाम्यबलात् तयोरेकस्यैव पुराणस्य शाखाभेदेन द्विरूपत्वमनुमीयते। विष्णु-भागवते एतत्पुराणद्वयं संक्षिप्ततरं वर्तते। गरुडपुराणम् इक्ष्वाकूणां बृहद्रथानां च नृपाणां चरितैर्निबद्धभागवतापेक्षया संक्षिप्ततरं पुराणमेतत् पुराणानां परम्परायां चिरेण लब्धसत्ताकं प्रतीयते। भविष्यत्-पुराणे निबद्धानि चरितानि प्रायोऽतिशयोक्तिरञ्जितानि सन्ति। एषां पुराणानां वर्णनानि मुख्यतया भविष्यपुराणस्यापि उपजीव्यस्य कस्यचित् पुरातनस्य पुराणस्य वर्णनेभ्यो गृहीतानीत्यनुमीयते। अष्टादशसु पुराणेषु केवलं सप्तसु-वंश-वंशानुचरिते तावद् उपलभ्येते। अवशिष्टानि एकादशपुराणानि भारतीयराजनीतीतिहासानुध्यायिनां निष्प्रयोजनानि एव खलु भवन्ति। साम्प्रतं तु न हि पुराणगतः सर्वोऽपि इतिहासांशो मिथ्या भवितुमर्हति। प्राचीनानां सूर्याचन्द्रमसौ द्वौ पुरुषौ सर्वेषां भारतीयक्षत्रियवंशानां मूलप्रवर्तकत्वेन तावत् प्रसिद्धौ। अर्वाचीनानां शिशुनागानां, नन्दानां, शुङ्गानां, कण्वानाम्, आन्ध्राणां च वर्णनस्योपलम्भात्, महत् तेषां गौरवमनुपश्यामः।

## (ङ) पुराणरचनाकालः

"वेदेभ्यो ब्राह्मणेभ्यश्च तं तमंशं सञ्चित्य तदा वै पुराण-पुनर्निर्माणमजायत यदा हि वेदाः ब्राह्मणानि च अनैतिहासिकग्रन्थतया प्रसिद्धिम् आयन्" इति। तदिमानि सर्वाणि तत्त्वानि पुराणानां वैदिककालेऽप्यस्तित्वं समर्थयन्ते। ईसवीयशतकात् षट्शतक (600) पूर्वतनकाले पुराणानामस्तित्व-मासीदिति कल्पनाऽपि सत्यानुमोदिता। पुराणं कदाचिदेकत्र समये नारच्यत, समये समये तत्राध्याया योजिताः गुप्तकालपर्यन्तं तेषां वर्तमानरूपमुपपन्नमासीत्। विष्णु-वायु-ब्रह्माण्ड-भागवतपुराणानि इतिहासधारामिमाम् अग्रे गुप्तानामभ्युदयं यावन् नयन्ति।

**निर्माणकालमधिकृत्य तथ्यानि—**

1. अथर्ववेदे पुराणस्य उल्लेखो दृश्यते (11.7.24)
2. गोपथब्राह्मणे पुराणानि स्मर्यन्ते।
3. बाणभट्टरचितहर्षचरिते वायवीयपुराणानां चर्चा दृश्यते। (620तमे खीष्टाब्द)
4. धर्मसूत्रेषु पुराणानि स्मर्यन्ते। कौटिल्यकृतमर्थशास्त्रं पुराणानि निर्दिशति।
5. आपस्तम्बधर्मसूत्रे पुराणस्योल्लेखः दृश्यते।
6. 475 तमे खीष्टाब्दनिकटं सम्पादितेषु राज्ञां भूदानपत्रेषु केचित् तादृशाः श्लोका लभ्यन्ते।
7. खूष्टतृतीयशताब्द्यां भविष्यपुराणं विद्यमानं बभूव इति। वायुब्रह्माण्डपुराणयोस्तु चतुर्थशताब्द्याम्।
8. शाङ्खायनश्रौतसूत्रे आश्वलायनसूत्रे च पुराणोल्लेख उपलभ्यते।
9. शतपथे ब्राह्मणे अन्वहम् इतिहासपुराणाध्ययनं विहितं विलोक्यते।
10. मत्यपुराणो आन्ध्राणां तत्पतनपर्यन्तं (236 ख्री०) तदनन्तरभाविनां किलकिलवंश्यनृपाणां च इतिहासो लभ्यते।
11. विष्णु-वायु-ब्रह्माण्ड-भागवतपुराणानि इतिहासधारामिमाम् अग्रे गुप्तानामभ्युदयं यावन् नयन्ति, समुद्रगुप्तस्य दिग्विजयवर्णनं तु तत्र नोपलभ्यते। इत्थमधिकाधिकं धारा एषा 330 तमं ख्रीष्टाब्दं यावत् प्रवर्तमाना सिध्यति।
12. चिन्तामणि-विनायकवैद्यमहाशया नवमशताब्दीभवात्, श्रीशंकराचार्याद् (1164 तमे ख्रीष्टाब्दे वर्तमानात्) मन्यन्ते।

## (च) पुराणानां नामानि तत्प्रमाणञ्च

मद्वयं भद्वयं चैव व्रत्रयं वचतुष्टयम्।
अनापलिङ्गकुस्कानि पुराणानि प्रचक्षते।।

पुराणानि अष्टादश सन्ति, उपपुराणानि अपि अष्टादश सन्ति, अनन्तरमष्टादश उपोपपुराणान्यपि सन्ति। अतः तेषां संख्या 18×3=54 सन्ति। एतान्यपि शास्त्रभागेऽन्तर्भवन्ति। "पुराणं सर्वशास्त्राणां प्रमाणं ब्रह्मणा स्मृतम्" इति मत्स्यपुराणवाक्यमत्र प्रमाणम्।

## (छ) पुराणानां श्लोकसंख्या—

1. मत्यपुराणे-14000 श्लोकाः, 2. मार्कण्डेयपुराणे-9000 श्लोकाः,

3. भविष्यपुराणे-24,500 श्लोकाः, 4. भागवतपुराणे-18,000 श्लोकाः,
5. ब्रह्माण्डपुराणे-12,200 श्लोकाः, 6. ब्रह्मपुराणे-13,000 श्लोकाः,
7. ब्रह्मवैवर्त्तपुराणे-18,000 श्लोकाः, 8. वामनपुराणे-10,000 श्लोकाः,
9. वराहपुराणे-24,000 श्लोकाः, 10. विष्णुपुराणे-23,000 श्लोकाः,
11. वायुपुराणे-24,000 श्लोकाः, 12. अग्निपुराणे-16,000 श्लोकाः,
13. नारदपुराणे-25,000 श्लोकाः, 14. पद्मपुराणे-55,000 श्लोकाः,
15. लिङ्गपुराणे-11,000 श्लोकाः, 16. गरुडपुराणे-18,000 श्लोकाः,
17. कूर्मपुराणे-18,000 श्लोकाः, 18. स्कन्दपुराणे-81,100 श्लोकाः,

## (ज) अष्टादश-उपपुराणानि

1. सनत्कुमार, 2. नारसिंह, 3. स्कान्द, 4. शिवधर्म, 5. आश्चर्य, 6. नारदीय, 7. कापिल, 8. वामन, 9. औशनस, 10. ब्रह्माण्ड, 11. वारुण, 12. कालिका, 13. माहेश्वर, 14. साम्ब, 15. सौर, 16. पराशर, 17. मारीच, 18. भार्गव।

## (झ) ज्योतिर्लिंगविवरणी-

## (ञ) एकादश रुद्र-रुद्राणीनां नामावली-

| ज्योतिर्लिंगानां नाम | स्थानस्य नाम | रुद्रस्य नाम | रुद्राणीनाम |
|---|---|---|---|
| 1. सोमनाथः | सोमनाथ (गुजरात) | 1. मन्युः | धी |
| 2. भल्लिकार्जुनः | श्रीशैल (आन्ध्र) | 2. मनुः | वृत्तिः |
| 3. महाकालेश्वरः | उज्जैन (मध्यप्रदेशः) | 3. महिनसः | उशना |
| 4. ओंकारेश्वरः | अमलेश्वरः(मध्यप्रदेशः) | 4. महानः | डमा |
| 5. केदारनाथः | हिमालयः(उत्तरांचल) | 5. शिवः | नियुति |
| 6. भीमशंकरः | डाकिनी (महाराष्ट्र) | 6. ऋतध्वजः | सर्पिः |
| 7. विश्वनाथः | वराणसी (उत्तरप्रदेशः) | 7. उग्रेरेता | ठला |
| 8. त्र्यम्बकेश्वरः | गोतमीतट (नासिक महाराष्ट्र) | 8. भवः | अम्बिका |
| 9. वैद्यनाथः | वैद्यनाथधाम (झारखण्डः) | 9. कालः | इरावती |
| 10. नागेश्वरः | दारुकावने (गुजरातः) | 10. वामदेवः | सुधा |
| 11. रामेश्वरः | सेतुबन्धे (तमिलनाडु) | 11. धृतव्रतः | दीक्षा |
| 12. घुश्मेश्वरः | शिवालये (महाराष्ट्र) | | |

## (ट) दशावतारः एवं चतुर्विंशतिः अवताराणां विवरणम्

1. मत्स्यः, 2. कच्छपः, 3. वाराहः, 4. नृसिंहः, 5. वामनः, 6. परशुरामः, 7. रामः, 8. कृष्णः, 9. बुद्धः, 10. कल्किः। 11. ब्रह्मा, 12. नारदः, 13. नरनारायणः, 14. कपिलः, 15. दत्तात्रेयः, 16. यज्ञः, 17. ऋषभः, 18. पृथुः, 19. धन्वन्तरिः, 20. मोहिनी, 21. वेदव्यासः, 22. बलरामः, 23. हंसः, 24. हयग्रीवः।

## (ठ) चतुर्युगानां चतुर्दशमन्वन्तराणां विवरणी-

| | |
|---|---|
| 1. सत्ययुग-अवधिः-17,28,000 वर्षाणि। | 2. त्रेतायुगः-अवधिः-12,96,000 वर्षाणि। |
| 3. द्वापरयुगः-अवधिः-8,64,000 वर्षाणि। | 4. कलियुगः-अवधिः-4,32,000 वर्षाणि। |
| 1. स्वायम्भुव मन्वन्तरः | 2. स्वारोचिष मन्वन्तरः |
| 3. उत्तम मन्वन्तरः | 4. तमस मन्वन्तरः |
| 5. रैवत मन्वन्तरः | 6. चाक्षुष मन्वन्तरः |
| 7. वैवस्वत मन्वन्तरः | 8. सावर्णिकमन्वन्तरः |
| 9. दक्षसावर्णिकमन्वन्तरः | 10. ब्रह्मसावर्णिकमन्वन्तरः |
| 11. धर्मसावर्णिकमन्वन्तरः | 12. रुद्रसावर्णिकमन्वन्तरः |
| 13. देवसावर्णिकमन्वन्तरः | 14. इन्द्रसावर्णिकमन्वन्तरः |

## (ड) रामायणम्

संस्कृतसाहित्ये रामायणपदेन वाल्मीकिविरचितं रामायणमेव प्रसिद्ध्यति। भारतीयै रामायणम् आदिकाव्यं वाल्मीकिश्च तत्प्रणेतृतयाऽऽदिकविः अभिधीयते। रामायणं महाभारतात् प्राचीनम्। रामायणस्य रचनाकालः खीष्टपूर्वपञ्चमशतकात्पूर्वमेव मन्यते। भारतस्य काप्येतादृशी भाषा नास्ति यत्र रामायणस्यानुवादो न जातः स्यात्। वैदेशिक्यो भाषा अपि रामायणस्यानुवादेनात्मानं धन्यं मन्यते। श्रीरामचन्दः आदर्शभ्राता आदर्शपतिः आदर्शपुत्रः आदर्शशासकः आदर्शमनुष्यश्चासीदिति समर्थयितुमेव रामायणं निरमीयत, यत्र लक्ष्ये तत्सफलमभूत्। रामायणे चतुर्विंशतिसहस्राणि श्लोकानामिति तत् चतुर्विंशतिसाहस्री संहितापदेनाभिधीयते। यावत् पर्यन्तं कवेः समक्षं वर्णनीयं वस्तु नागतं तावदयं मौनमादधौ, यदैव क्रौञ्चवधं करुणरसं दृष्टवान्, तदैवाकस्मादेवास्य मुखात् काव्यप्रवाहो निर्गतः, तदस्य काव्ये करुण रस एव प्रधानत्वं भजते। कविताया लोकहितमुद्देश्यं स्यादिति वाल्मीकिना कदापि न विस्मृतम्। अत एव चरित्रसृष्टौ वर्णने वा सर्वत्र कविरुच्चमादर्शं विचारं च व्यञ्जितवान्।

## (ढ) महाभारतम्

इदं प्रायः सर्वे भारतीया विद्वांसो मन्यन्ते यत् महाभारतं प्राग् जयनाम्ना ततो भारतनाम्ना ततः परतश्च महाभारतनाम्ना प्रसिद्धम्। प्रथमं महाभारतमितिहासः पुराणमाख्यानकञ्चेति नामभिराख्यायते स्म। साम्प्रतिकास्तु महाभारतम् आचारशास्त्रं नीतिशास्त्रं धर्मार्थकाममोक्षाख्यचतुर्वर्गसाधनं चामनन्ति। भारतं पञ्चमो वेदः इति सर्वत्र प्रचारितम्। एतत्प्रणेत्रा महर्षिणा व्यासेन अस्य "जयो" नामेतिहासोऽयम्" इति नाम चक्रे इति प्रबलं सम्भाव्यते। महाभारते 24,000 चतुर्विंशतिसहस्रश्लोकानासीत्। प्रथमं हि महाभारतम् इतिहास इति पुराणमिति आख्यानमिति च आख्यायते स्म। भारतीयानां मतेन पर्यायवाचिनः खल्वेते त्रयः शब्दाः। नीतिविद्यायाश्च महान् आकारः धर्मार्थकाममोक्षचतुर्वर्गस्य प्राप्तिसाधनं खलु महाभारतमिति आशास्यते। अनेन गीताज्ञानेन विश्वस्य भृशमुपकृतमिति सर्वसम्मतम्।

वासुदेवस्य माहात्म्यं पाण्डवानाञ्च सत्यताम्।
दुर्वृत्तं धार्तराष्ट्रानाम्, उक्तवान् भगवानृषिः।।

कथावस्तु-आदि-सभा-वन-विराट्-उद्योग-भीष्म-द्रोण-कर्ण-साल्व-सौप्तिक-स्त्री-शान्ति-अनुशासनाऽश्वमेधाऽऽश्रमवासि-मौसल-महाप्रस्थानिक-स्वर्गारोहणाख्यानि अष्टादशपर्वाणि।

महाभारतस्य रचनाकालस्तु 500 ई. पू. समयतः परतो न निर्मितं किन्तु कदाचित् पूर्वमेव निर्मितमिति प्रतीयते। व्यासस्य लक्ष्यं भौतिकजीवनस्यासारतां प्रकाश्य प्राणिनां मोक्षमार्गे प्रवर्त्तनमेव व्यासस्य महाभारतप्रणयने उद्देश्यमासीत्। अत एवात्र शान्तो रसः प्रधानभूतः, वीरस्तु रसोऽङ्गभावं गतः।

चिन्तामणि-विनायकवैद्यमहाशया विस्तरेण भागवतनिर्माणकालं विचारयन्तः पर्यवसाययन्ति यत्—भागवतं नाम पुराणं (नवमशताब्दीभवात्) श्रीशङ्कराचार्यात् (1164 तमे ख्रीष्टाब्दे वर्तमानात्) उर्ध्वं गीतगोविन्दकृतः जयदेवाच्च पूर्वं प्रायेण ख्रीष्टदशमशतके रचितम् आसीत्। पुराणमेतत् लोकप्रसिद्धतया पुराणान्तराणि अतिवर्तते, सर्वासु च आधुनिकीषु भारतीयभाषासु अनूदितञ्चास्ति।

महाभारतस्य रचयिता कृष्णद्वैपायनवेदव्यासः आसीत्। अस्मिन् ग्रन्थे सर्वेषामादिकारणमहति अन्तर्यामी नियन्ता विश्वरूपो भगवान् विष्णुः वर्णनमतिप्रसिद्धं वर्तते। यस्य देवस्यावाहनयज्ञादि कर्मणि तदुद्देश्येन हवनादिः हेतु भवति। यस्य ब्रह्मणः अनेकपुरुषै अनेकनामभिः स्तुतिः कृता, यद् ऋतम्-पदवाच्यम् एकाक्षरब्रह्म, व्यक्ताव्यक्तस्वरूपं सनातनः अस्ति। असत् सत् इत्युभयरूपेण यः स्वयं विराजमानः वर्तते। तथापि यस्य वास्तविकं स्वरूपं सदसद्भ्यां विलक्षणः अस्ति। विश्वोऽयं येन अभिन्नः वर्तते, यः सम्पूर्णजगतः स्रष्टा, पुराणपुरुषः सर्वोत्कृष्टपरमेश्वरः एव वृद्धि-क्षयादिविकारैः रहितः वर्तते। यं कदापि पापः न स्पृशति यः सहज शुद्धः अस्ति, स ब्रह्मरूप एव मङ्गलकारी मङ्गलमयः विष्णुः वर्तते। तं चराचरगुरुं हृषीकेशं श्रीहरिं नमस्कृत्य सर्वलोकपूजितः अद्भुतकर्मा महात्मा महर्षि-व्यासदेवः अस्य अन्तःकरणशोधकामृतस्य वर्णनं कृतवान्।

अस्य महाभारतग्रन्थस्य त्रिषु लोकेषु परज्ञाननिधिरूपे प्रतिष्ठा विद्यते। अयं शुभ-शब्दविन्यासेनालंकृतः वर्तते तथा लौकिक-वैदिकसंस्कृतप्राकृतसंकेतैः सुशोभितोऽयं महाभारतः। अनुष्टुप्-इन्द्रवज्रादि अनेकप्रकारकैः छन्दोभिरावृत्तः अतः ग्रन्थोऽयं विदुषः अतिप्रियः वर्तते। महाभारते अनेकाः कथाः ग्रन्थिता सन्ति, यथा समस्तपञ्चकक्षेत्रस्य वर्णनं, जनमेजयं सरमायाः शापवर्णनं, आरुणिगुरुभक्तिकथा, उपमन्युकथा, वेद, वेदोक्त तथा उत्तङ्कस्य गुरुभक्तिः उत्तङ्कस्य सर्पयज्ञस्य कृते जनमेजयम् प्रोत्साहनस्य चर्चा कौरवपाण्डवयोः मध्ये प्रचलितयुद्धस्य वर्णनम् एतादृशानि अनेकानि आख्यानान्युपाख्यानानि सन्ति महाभारते।

अनेन प्रकारेण बहवः वीराः, नीतिज्ञाः सज्जनजनाः अपि नायकः-खलनायकस्य अभिनय-कर्तृः रूपे समाहिताः सन्ति। पञ्चकन्यकायाः अपि वर्णनं अस्मिन् महाभारते वर्तते।

## (ण) पुराणानां वस्तुनिष्ठप्रश्नोत्तराणि—

1. प्रश्नः— पुराणानां संख्या कियती?

उत्तरम्— अष्टादश।

2. प्रश्नः— कति उपपुराणानि, कानि च तानि ?

उत्तरम्— 18-अष्टादश। 1. सनत्कुमारः, 2. नरसिंहः, 3. नन्दः, 4. शिवधर्मः, 5. दुर्वासाः,

6. नारदीयः, 7. कपिलः, 8. वामनः, 9. उशनसः, 10. मानवः, 11. वरुणः, 12. कलिः, 13. महेश्वरः, 14. साम्बः, 15. सौरः, 16. पराशरः, 17. मारीचः, 18. भार्गवः।

3. प्रश्नः— "व" चतुष्टयं किम्?
उत्तरम्— वामनपुराणम्, वराहपुराणम्, विष्णुपुराणम्, वायुपुराणम्।

4. प्रश्नः— "म" द्वयं किम्?
उत्तरम्— मत्स्यपुराणम्, मार्कण्डेयपुराणम्।

5. प्रश्नः— "भ" द्वयं किम्?
उत्तरम्—भविष्यपुराणम्, भागवतपुराणम्।

6. प्रश्नः— "ब्र" त्रयं किम्?
उत्तरम्— ब्रह्माण्डपुराणम्, ब्राह्मपुराणम्, ब्रह्मवैवर्त्तञ्च।

7. प्रश्नः— "अ" एकं किम्?
उत्तरम्— अग्निपुराणम्।

8. प्रश्नः— "ना" एकं किम्?
उत्तरम्—नारदपुराणम्।

9. प्रश्नः— "प" एकं किम्?
उत्तरम्— पद्मपुराणम्।

10. प्रश्नः— "लिं" एकं किम्?
उत्तरम्— लिङ्गपुराणम्।

11. प्रश्नः— "ग" एकं किम्?
उत्तरम्— गरुड़पुराणम्।

12. प्रश्नः— "कू" एकं किम्?
उत्तरम्— कूर्मपुराणम्।

13. प्रश्नः— "स्क" एकं किम्?
उत्तरम्— स्कन्दपुराणम्।

14. प्रश्नः— सर्वशास्त्राणां प्रथमं ब्रह्मणा किं स्मृतम्?
उत्तरम्— पुराणम्।

15. प्रश्नः— "द्वादशस्कन्धाः" कस्मिन् पुराणे सन्ति?
उत्तरम्— श्रीमद्भागवतपुराणे।

16. प्रश्नः—कस्मिन् पुराणे "ब्राह्म-वैष्णव-शैव-सौर-प्रतिसर्ग" इति पञ्च पर्वाणि सन्ति?
उत्तरम्— भविष्यपुराणे।

17. प्रश्नः—ब्रह्म-प्रकृति-गणेश-श्रीकृष्णजन्मखण्डाश्चेति चत्वारः खण्डाः कस्य पुराणस्य सन्ति?
उत्तरम्— ब्रह्मवैवर्तपुराणस्य।

18. प्रश्नः— सृष्टिः कतिविधा? कास्ताः?
उत्तरम्— चतुर्विधा। प्राकृतिकी, ब्राह्मी, मानसी, मैथुनी सृष्टिः।

19. प्रश्नः— प्रलयः कतिविधः इति विष्णुपुराणं निर्दिशति?
उत्तरम्— चतुर्विधः प्रलयः। (नित्यः, नैमित्तिकः, प्राकृतः आत्यन्तिकश्च।)

20. प्रश्नः— भक्तिः कतिधा भवति?
उत्तरम्— नवधा।

21. प्रश्नः— ऋषीणां सप्त भेदाः के?
उत्तरम्— ब्रह्मर्षिः, देवर्षिः, महर्षिः, परमर्षिः, काण्डर्षिः, श्रुतर्षिः, राजर्षिः।

22. प्रश्नः— "कालमाधवः" इति कस्य शास्त्रस्य ग्रन्थः?
उत्तरम्— धर्मशास्त्रस्य।

23. प्रश्नः—श्रीमद्गीतायाः अनुसारं बुद्धेः परतः कः?
उत्तरम्— आत्मा।

24. प्रश्नः— भगवद्गीतायां श्लोकसङ्ख्या कति?
उत्तरम्— 700 सप्तशतानि।

25. प्रश्नः— महाभारतस्य कस्मिन् पर्वणि भगवद्गीताऽस्ति?
उत्तरम्— भीष्मपर्वणि।

26. प्रश्नः— वैजयन्तीकोशग्रन्थस्य अपरं प्रसिद्धं नाम किम्?
उत्तरम्— यादवकोषः।

27. प्रश्नः— अमरकोशस्य अपरं नाम किम्?
उत्तरम्— नामलिङ्गानुशासनम्।

28. प्रश्नः— विष्णुसहस्रनामस्तोत्रं कुत्र वर्तते?
उत्तरम्— महाभारते।

29. प्रश्नः— व्यासस्य पितामहः कः?
उत्तरम्— शक्तिः।

30. प्रश्नः— "परोपकारः पुण्याय पापाय परपीडनम्" इति कस्य वचनद्वयम्?
उत्तरम्— व्यासस्य।

31. प्रश्नः— "प्रस्थानत्रयम्" इति प्रसिद्धे ग्रन्थत्रये कोऽयं ग्रन्थः नान्तर्भवति?
उत्तरम्— श्रीमद्भागवतम्।

32. प्रश्नः— पुराणेषु "लक्ष्मीः" कतिभिः नामभिः वर्णिता?
उत्तरम्— 8 अष्टाभिः।

33. प्रश्नः— भगवतः विष्णोः कति अवताराः प्रसिद्धाः?
उत्तरम्— 10 दश।

34. प्रश्नः— मत्स्यावतारे "भगवान् विष्णुः" कं राक्षसम् हतवान्?
उत्तरम्— हयग्रीवम्।

35. प्रश्नः— भगवान् विष्णुः कच्छपरूपं धृत्वा कम् अचलम् उत्थापितवान्?
उत्तरम्— मन्दराचलम्।

36. प्रश्नः— समुद्रमन्थनात् कः मणिः उद्गतः?
उत्तरम्— कौस्तुभमणिः।
37. प्रश्नः— समुद्रमन्थनात् उद्गतस्य अश्वस्य किं नाम?
उत्तरम्— उच्चैःश्रवा।
38. प्रश्नः— जले निमग्नां पृथ्वीमुद्धर्तुं "भगवान् विष्णुः" कम् अवतारम् अजृजत्?
उत्तरम्— वराहावतारम्।
39. प्रश्नः— वराहावतारे "भगवान् विष्णुः" कम् अहन्?
उत्तरम्— हिरण्याक्षम्।
40. प्रश्नः— स्तम्भमध्यात् कोऽयं भगवान् प्रकटोऽभूत्?
उत्तरम्— नृसिंहः।
41. प्रश्नः— रेणुका-जमग्न्योः ऋषिदम्पत्योः पुत्रः कः?
उत्तरम्— परशुरामः।
42. प्रश्नः— इन्द्रस्य वाहनं किं तस्य नाम च किम्?
उत्तरम्— गजः-ऐरावतः।
43. प्रश्नः— नलकूबेरः कस्य पुत्रः?
उत्तरम्— कुबेरस्य।
44. प्रश्नः— अलकापुरी कस्य राजधानी?
उत्तरम्— कुबेरस्य।
45. प्रश्नः—यमधर्मराजस्य पितरौ कौ?
उत्तरम्— संज्ञा-सूर्यौ।
46. प्रश्नः— जीवानां शुभाशुभकर्मणोरङ्कनं कः करोति?
उत्तरम्— चित्रगुप्तः।
47. प्रश्नः— देवचिकित्सकौ सूर्यपुत्रौ कौ?
उत्तरम्— अश्विनीकुमारौ।
48. प्रश्नः— देवसेनापतिः स्कन्दपुराणोपदेष्टा च कः?
उत्तरम्— कार्तिकेयः।
49. प्रश्नः— शाल्वदेशस्य राज्ञः सत्यवतः पत्नी का?
उत्तरम्— सावित्री।
50. प्रश्नः— "सत्यवान्" कस्य पुत्रः?
उत्तरम्— द्युमत्सेनस्य।
51. प्रश्नः— यमराजं प्रसाद्य स्वपत्युः प्राणान् का पुनः प्राप्तवती?
उत्तरम्— सावित्री।
52. प्रश्नः— कोऽयं महर्षि यः ब्रह्मा-विष्णु-महेश्वराणां चरित्रं परीक्षितुं गतः?
उत्तरम्— भृगुमहर्षिः।

53. प्रश्नः— प्रसिद्धः "त्रिशङ्कुपुत्रः" कः?
उत्तरम्— हरिश्चन्द्रः।
54. प्रश्नः— "कुम्भयोनिः, कुम्भजन्मा, घटोद्भवः, कलशयोनिः" इति कं कथयन्ति?
उत्तरम्— अगस्त्यमहामुनिम्।
55. प्रश्नः— विदर्भराजपुत्री अगस्त्यमुनेश्च पत्नी का?
उत्तरम्— लोपामुद्रा।
56. प्रश्नः— "दम-दान्त-दमन" इति त्रयः कस्याः भ्रातरः?
उत्तरम्— दमयन्त्याः।
57. प्रश्नः— दमयंती पत्नीत्वेन प्राप्तुं के देवाः नलं दूतरूपेण विदर्भदेशं प्रेषितवन्तः?
उत्तरम्— इन्द्रः वरुणः यमः अग्निः इति चत्वारः।
58. प्रश्नः— श्रीमद्भगवद्गीतायाः एकादशाध्यायस्य नाम किम्?
उत्तरम्— विश्वरूपदर्शनयोगः।
59. प्रश्नः— "शर्मिष्ठा" कस्य पुत्री?
उत्तरम्— वृषपर्वणः।
60. प्रश्नः— कार्तवीर्यः कस्य देशस्य राजा बभूव?
उत्तरम्— हैहयदेशस्य।
61. प्रश्नः— कार्तवीर्यार्जुनं कः अहनत्?
उत्तरम्— परशुरामः।
62. प्रश्नः— कोऽयं सूर्यवंशीयो राजा, येन षष्टिसहस्रं पुत्रा उत्पादिता?
उत्तरम्— सगरः।
63. प्रश्नः— कोऽयं प्रयत्नः सगरस्य प्रपौत्रनाम्ना अद्यापि प्रसिद्धः?
उत्तरम्— भगीरथप्रयत्नः।
64. प्रश्नः— रेणुका कस्य माता आसीत्?
उत्तरम्— परशुरामस्य।
65. प्रश्नः— "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" पंक्तिरियं कुत्र लभ्यते?
उत्तरम्— वैशेषिकसूत्रसारे।
66. प्रश्नः—"काम्यानां कर्मणां न्यासं संन्यासकवयो विदुः" इति श्लोकवाक्यं केन कथितम्?
उत्तरम्— भगवता श्रीकृष्णेन।
67. प्रश्नः— आचार्यः स्ववादानुगुणम् योजयन्-?
उत्तरम्—अद्वैतवादः-शङ्कराचार्यः, विशिष्टाद्वैतवादः-रामानुजाचार्यः, द्वैतवादः-मध्वाचार्यः, द्वैताद्वैतवादः-निम्बार्काचार्यः, शुद्धाद्वैतवादः-वल्लभाचार्यः।
68. प्रश्नः— स्वकनिष्ठिकाङ्गुल्या भगवान् श्रीकृष्णः कं पर्वतम् उद्धृतवान्?
उत्तरम्— गोवर्धनपर्वतम्।
69. प्रश्नः— अहिंसायाः अवतारः कः?
उत्तरम्— बुद्धः।

70. प्रश्नः— धर्मशास्त्रेषु भगवतो विष्णोः दशमावतारः कः वर्णितः?
उत्तरम्— कल्कि-अवतारः।
71. प्रश्नः— विश्वामित्रस्य तपस्याभङ्गं का कृतवती?
उत्तरम्— मेनका।
72. प्रश्नः— समुद्रमन्थनात्परं विष्णुः किं रूपं धृत्वा अमृतं पायितवान्?
उत्तरम्— मोहनीरूपम्।
73. प्रश्नः— भगवतः कृष्णस्य मातुः नाम किम्?
उत्तरम्— देवकी।
74. प्रश्नः— "सूर्यदेवः" कतिभिः नामभिः पूज्यते?
उत्तरम्— 108 नामभिः।
75. प्रश्नः— विष्णोः कति नामानि प्रसिद्धानि?
उत्तरम्— 1000 नामानि।
76. प्रश्नः— हस्तस्य भूषणं किम्?
उत्तरम्— दानम्।
77. प्रश्नः— केन शुद्धिः?
उत्तरम्— स्नानेन।
78. प्रश्नः— केन तृप्तिः?
उत्तरम्— भोजनेन।
79. प्रश्नः— केन मुक्तिः?
उत्तरम्— ज्ञानेन।
80. प्रश्नः— परोपकाराय के फलन्ति?
उत्तरम्— वृक्षाः।
81. प्रश्नः— कानि अष्टगन्धानि?
उत्तरम्—1. अगरः, 2. तगरः, 3. चन्दनम्, 4. कस्तूरी, 5. रक्तचन्दनम्, 6. कुङ्कुमः, 7. देवदारु, 8. केसरः।
82. प्रश्नः— के सप्तर्षयः सन्ति?
उत्तरम्—1. मरीच, 2. अंगिरा, 3. अत्रिः, 4. पुलस्त्य, 5. पुलहः, 6. क्रतुः, 7. वशिष्ठः।
83. प्रश्नः— का अष्टसिद्धयः सन्ति?
उत्तरम्—1. अणिमा, 2. महिमा, 3. गरिमा, 4. लघिमा, 5. प्राप्तिः, 6. प्राकाम्य, 7. ईशित्व, 8. वशित्व।
84. प्रश्नः— काः सप्तमृत्तिकाः सन्ति?
उत्तरम्—1. घोटकशाला, 2. गजशाला, 3. बांबी, 4. सरित्सङ्गमः, 5. तड़ाग, 6. राजद्वारः, 7. वेश्यालयः।
85. प्रश्नः— कानि सप्तधान्यानि सन्ति?
उत्तरम्— 1. यवः, 2. धान्यम्, 3. तिलः, 4. कंगनी, 5. मुद्गः, 6. चणकः, 7. साँवा।

86. प्रश्नः— के नवनिधयः सन्ति?

उत्तरम्—1. महापद्मः, 2. पद्म, 3. शङ्खः, 4. कच्छपः, 5. मुकुन्दः, 6. कुन्दः, 7. खर्वः,

87. प्रश्नः— के पञ्चवायवः सन्ति?

उत्तरम्— 1. प्राणः, 2. अपानः, 3. व्यानः, 4. उदानः, 5. समानः।

88. प्रश्नः— कामस्य के पञ्चशराः सन्ति?

उत्तरम्—1. अरविन्दपुष्पम्(उन्मादक बाण) 2. अशोकपुष्पम् (तापक बाण) 3. चूतपुष्पम् (शोषकबाण) 4नवमल्लिका(स्तम्भकबाण) 5नीलोत्पलपुष्पम् (सम्मोहकबाण)

89. प्रश्नः— के पञ्चदेवाः (वृक्षाः) सन्ति?

उत्तरम्—1. आम्रम्, 2. जम्बू, 3. कपित्थः, 4. वटः, 5. बिल्वः।

90. प्रश्नः— के सन्ति षोडशोपचाराः?

उत्तरम्—1. पाद्यम्, 2. अर्घ्यम्, 3. आचमनम्, 4. स्नानम्, 5. वस्त्रम्, 6. आभूषणम्, 7. गन्धः, 8. पुष्पः, 9. धूपः, 10. दीपः, 11. नैवेद्यम्, 12. आचमनम्, 13. ताम्बूलम्, 14. स्तवपाठः, 15. तर्पणम्, 16. नमस्कारः।

100. प्रश्नः— देवानां पञ्चवृक्षाः के सन्ति?

उत्तरम्—मन्दारः, 2. पारिजातः, 3. सन्तानः, 4. कल्पवृक्ष, 5. हरिचन्दनम्।

101. प्रश्नः— के षड्रसाः सन्ति?

उत्तरम्— 1. मधुरम्, 2. लवणम्, 3. कटुः, 4. तिक्तः, 5. कषायः, 6. अम्लः।

102. प्रश्नः— के सप्त स्वराः?

उत्तरम्— सा रे ग म प ध नि(संक्षेपाक्षर) 1. षड्जः, 2. ऋषभः, 3. गान्धारः, 4. मध्यमः, 5. पञ्चमम्, 6. धैवतः, 7. निषदः।

103. प्रश्नः— कानि चतुर्विधवाद्यानि सन्ति?

उत्तरम्— 1. ततः, आनद्धः, 3. सुषिरः, 4. घनः।

104. प्रश्नः— के द्विविधनृत्ये स्तः?

उत्तरम्— 1. लास्यः, 2. ताण्डवः।

105. प्रश्नः— के नवरसाः सन्ति?

उत्तरम्—1. शृंगारः, 2. वीरः, 3. करुणः, 4. हास्यः, 5. रौद्रः, 6. वीभत्सः, 7. भयानकः, 8. अद्भुतः, 9. शान्तः।

106. प्रश्नः— के चतुर्दश-मन्वन्तराः सन्ति?

उत्तरम्—1. स्वायम्भुवः, 2. स्वारोचिषः, 3. औत्तमि, 4. तामसि, 5. रैवतः, 6. आयुषः, 7. वैवस्वतः, 8. सावर्णि, 9. दक्षसावर्णि, 10. ब्रह्मसावर्णि, 11. धर्मसावर्णि, 12. रौद्रसावर्णि, 13. रौच्यसावर्णि, 14. भौत्यसावर्णि।

107. प्रश्नः— के सप्तसमुद्राः सन्ति?

उत्तरम्—1. क्षीरसागरः, 2. लवणसागरः, 3. दधिसागरः, 4. घृतसागरः, 5. मद्यसागरः, 6. इक्षुसागरः, 7. स्वादुसागरः।

108. प्रश्नः— जम्बूद्वीपस्य नववर्षाः के?
उत्तरम्—1. भारतवर्षः, 2. किम्पुरुषः, 3. हरिवर्षः, 4. रम्यवर्षः, 5. हिरण्यवर्षः, 6. कुरुवर्षः, 7. भद्राश्ववर्षः, 8. केतुमालवर्षः, 9. इलावृत्तवर्षः।

109. प्रश्नः— के पञ्चमहायज्ञाः सन्ति?
उत्तरम्—1. ब्रह्मयज्ञः, 2. देवयज्ञः, 3. अतिथियज्ञः, 4. पितृयज्ञः, 5. भूतयज्ञः।

110. प्रश्नः— के त्रयः अग्नयः सन्ति?
उत्तरम्— दक्षिणाग्निः, 2. गार्हपत्याग्निः, 3. आहवनीयाग्निः।

111. प्रश्नः— जपस्य का भेदत्रयी अस्ति?
उत्तरम्— 1. वाचिकजपः, 2. उपांशुजपः, 3. मानसिकजपः।

112. प्रश्नः— काः षाड्गुण्यनीतयः?
उत्तरम्— 1. सन्धिः, 2. विग्रहः, 3. यानः, 4, आसनः, 5. द्वैधी, 6. आश्रयः।

113. प्रश्नः— के चत्वारोपायाः सन्ति?
उत्तरम्— 1. सामः, 2. दामः, 3. दण्डम्, 4. भेदः।

114. प्रश्नः— काः अक्षौहिणी सेना सन्ति?
उत्तरम्—गजाः–21, 870, रथिनः–21, 870, अश्वारोहिणः–65, 610, पदातयः–1, 09, 350, सर्वसैनिकाः=2,17,700,

115. प्रश्नः— काः दशदिशः सन्ति?
उत्तरम्— 1. प्राची, 2. आग्नेयी, 3. अवाची, 4. नैर्ऋत्यम्, 5. प्रतीची, 6. वायव्यम्, 7. उदीची, 8. ऐशानम्, 9. ऊर्ध्वं, 10. अधोदिशः।

116. प्रश्नः— कति पञ्चरत्नानि?
उत्तरम्— 1. सुवर्णम्, 2. हीरकम्, 3. सौकिकम्, 4. पद्मरागः, 5. नीलरागः।

117. प्रश्नः— "दुर्गासप्तशती" इत्यस्य वर्णनं कस्मिन् पुराणे वर्तते?
उत्तरम्— मार्कण्डेय-पुराणे।

118. प्रश्नः— यज्ञस्य कति प्रकाराः के च ते?
उत्तरम्—5 पञ्चप्रकाराः (1. ऋषियज्ञः, 2. देवयज्ञः, 3. भूतयज्ञः, 4. अतिथियज्ञः, 5. पितृयज्ञः।)

119. प्रश्नः— "तमसो मा ज्योतिर्गमय" इदं वाक्यं कस्याम् उपनिषदि?
उत्तरम्— बृहदारण्यकोपनिषदि।

120. प्रश्नः— काः सन्ति चतुर्दशविद्याः?
उत्तरम्— अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश।। (वि. पु.)

121. प्रश्नः— काः सन्ति अष्टादशविद्याः?
उत्तरम्— आयुर्वेदो धनुर्वेदो गान्धर्वश्चेत्यनुक्रमात्।
अर्थशास्त्रं परं तस्मात् विद्याह्यष्टादश स्मृताः।। (वि. पु. 9.28, 29)

122. प्रश्नः— कलाः कतिप्रकारकाः भवन्ति?
उत्तरम्— 64 चतुष्षष्टिप्रकारकाः।

123. प्रश्नः— शिल्पम् कति प्रकारकम् भवति?
उत्तरम्— 18 अष्टादशप्रकारकम्।
124. प्रश्नः— ब्रह्मकर्म कति प्रकारकं भवति?
उत्तरम्— 9 नवप्रकारकम्।
125. प्रश्नः— क्षात्रकर्म कतिविधम् भवति?
उत्तरम्— 7 सप्तविधम्।
126. प्रश्नः— प्राचीन-भारते काः तिस्रः लिपयः आसन्?
उत्तरम्—1. ब्राह्मीलिपिः, 2. खरोष्ठीलिपिः, 3. सिन्धुलिपिः।
127. प्रश्नः— प्राचीन-भारते जातेः आधारः कः आसीत्?
उत्तरम्— गुणः कर्म च।
128. प्रश्नः— "पञ्चमवेदः" कं कथ्यते?
उत्तरम्— महाभारतम्।
129. प्रश्नः— महाभारतस्य काभ्यां नामभ्यां प्रसिद्धिरभूत्?
उत्तरम्— प्रथमम् जयः, द्वितीयम् भारतम्।
130. प्रश्नः— कुम्भकेतुं कः हतवान्?
उत्तरम्— प्रद्युम्नः।
131. प्रश्नः— कुम्भकेतुदैत्यस्य पत्नी का?
उत्तरम्— कामिनी।
132. प्रश्नः— मायावती कस्य पत्नी आसीत्?
उत्तरम्— शमरासुरस्य।
133. प्रश्नः— यदुवंशविनाशाय कृष्णं का पतिव्रता नारी शापं प्रदत्तवती?
उत्तरम्— कुम्भकेतोः पत्नी कामिनी।
134. प्रश्नः— महाभारतस्य खिलपर्वं किं कथ्यते?
उत्तरम्— हरिवंशम्।
135. प्रश्नः— विष्णु-विषयक-पुराणं किं कथ्यते?
उत्तरम्— सात्विकम्।
136. प्रश्नः— ब्रह्मविषयक-पुराणं किं कथ्यते?
उत्तरम्— राजसम्।
137. प्रश्नः— शिवविषयकपुराणं किं कथ्यते?
उत्तरम्— तामसम्।
138. प्रश्नः— अष्टादशपुराणेषु सर्वदीर्घः पुराणः कः, तस्मिन् कति श्लोकाः सन्ति?
उत्तरम्— स्कन्दपुराणः-81, 100 श्लोकाः।
139. प्रश्नः— अष्टादशपुराणेषु सर्वलघु पुराणः कः, तस्मिन् कति श्लोकाः सन्ति?
उत्तरम्— मार्कण्डेयपुराणः-9000श्लोकाः।

140. प्रश्नः— पुराणस्य कानि पञ्चलक्षणानि?

उत्तरम्— 1. सर्गः, 2. प्रतिसर्गः, 3. वंशः, 4. मन्वन्तरः, 5. वंशानुचरितम्।

141. प्रश्नः— पुराणेषु पंचदेवानां कानि नामानि सन्ति?

उत्तरम्— 1. ब्रह्मा, 2. विष्णुः, 3. शिवः, 4. गणेशः, 5. सूर्यः।

142. प्रश्नः— कानि दशावतारनामानि सन्ति?

उत्तरम्— 1. मत्स्यः, 2. कच्छपः, 3. वराहः, 4. नृसिंहः, 5. वामनः, 6. परशुरामः, 7. रामः, 8. बलरामः, 9. बुद्धः, 10. कल्किः।

143. प्रश्नः— कानि नवदुर्गानामानि सन्ति?

उत्तरम्—1. शैलपुत्री, 2. ब्रह्मचारिणी, 3. चन्द्रघण्टा, 4. कूष्माण्डा, 5. स्कन्दमाता, 6. कात्यायनी, 7. कालरात्रिः, 8. महागौरी, 9, सिद्धिदात्री।

144. प्रश्नः— कानि पञ्चपाण्डवनामानि सन्ति?

उत्तरम्— 1. युधिष्ठिरः, 2. भीमः, 3. अर्जुनः, 4. नकुलः, 5. सहदेवः।

145. प्रश्नः— भानामती कस्य धात्री-माता आसीत्?

उत्तरम्— प्रद्युम्नस्य।

146. प्रश्नः— कानि द्वादशज्योतिर्लिङ्गनामानि सन्ति?

उत्तरम्—1. सोमनाथः, 2. मल्लिकार्जुनः, 3. महाकालेश्वरः, 4. ओङ्कारेश्वरः, 5. वैद्यनाथः, 6. भीमशङ्करः, 7. रामेश्वरः, 8. नागेश्वरः, 9. विश्वनाथः, 10. त्र्यम्बकेश्वरः, 11. केदारनाथः, 12. घुश्मेश्वरः।

147. प्रश्नः— पुराणानां रचनाकारः कोऽस्ति?

उत्तरम्— वेदव्यासः।

148. प्रश्नः—देवी-संतोषी कस्य पुत्री आसीत्?

उत्तरम्— गणेशस्य।

149. प्रश्नः— गीतायां कति अध्यायाः सन्ति?

उत्तरम्— 18 अष्टादशाध्यायाः।

150. प्रश्नः— श्रीमद्भागवतपुराणे कति स्कन्धाः सन्ति?

उत्तरम्— 12 द्वादश स्कन्धाः।

151. प्रश्नः— धनं गृहीत्वा कृतो विवाहः कः कथ्यते?

उत्तरम्— प्राजापत्यः।

152. प्रश्नः— अभिचाराः कति सन्ति?

उत्तरम्— चत्वारः।

153. प्रश्नः— निर्णयसिन्धु इत्यस्य रचनाकारः कः?

उत्तरम्— कमलाकरः।

154. प्रश्नः—गोयुग्मं दत्वा कः विवाहः भवति?

उत्तरम्— आर्ष-विवाहः।

155. प्रश्नः— उपाकर्म कस्मिन् कार्ये भवति?
उत्तरम्— वेदारम्भे।
156. प्रश्नः— धर्मशास्त्रस्य सामग्री कस्मिन् पुराणे अस्ति?
उत्तरम्— ब्रह्मपुराणे।
157. प्रश्नः— राजा कः भवति?
उत्तरम्— क्षत्रियः।
158. प्रश्नः— पुत्राः कति सन्ति?
उत्तरम्— 12 द्वादशः।
159. प्रश्नः— मन्त्री कः भवति?
उत्तरम्— ब्राह्मणः।
160. प्रश्नः— निम्बार्कमते एकादश्यां वेधः कदा भवति?
उत्तरम्— 52 घड़ी।
161. प्रश्नः— "राजा कालस्य कारणम्" कस्मिन् ग्रन्थे कथितमस्ति?
उत्तरम्— महाभारते।
162. प्रश्नः— राक्षसमाता का आसीत्?
उत्तरम्— दिति।
163. प्रश्नः— "मामेकं शरणं व्रज" इति कस्मिन् ग्रन्थे अस्ति?
उत्तरम्— गीतायाम्।
164. प्रश्नः— कस्मिन् पुराणे अलंकारस्य वर्णनमस्ति?
उत्तरम्— अग्निपुराणे।
165. प्रश्नः— अग्निपुराणस्य रचनाकारः कः?
उत्तरम्— व्यासः।
166. प्रश्नः— "योगः कर्मसु कौशलम्" इति कस्मिन् ग्रन्थे अस्ति?
उत्तरम्— गीतायाम्।
167. प्रश्नः— भागवत-पुराणस्य रचनाकारः कः?
उत्तरम्— व्यासः।
168. प्रश्नः— देवमाता का आसीत्?
उत्तरम्— अदितिः।
169. प्रश्नः— गीतायाः उपदेशः कुत्र प्रदत्तवान्?
उत्तरम्— कुरुक्षेत्रे।
170. प्रश्नः— काव्यशास्त्रस्य वर्णनं कस्मिन् पुराणे वर्तते?
उत्तरम्— अग्निपुराणे।
171. प्रश्नः— "कर्मण्येवाधिकारस्ते" कस्य ग्रन्थस्य अस्ति?
उत्तरम्— गीतायाः।

172. प्रश्नः— देवीभागवते कति स्कन्धाः सन्ति?
उत्तरम्— 12 द्वादश स्कन्धाः।
173. प्रश्नः— विष्णुपुराणे कति अध्यायाः कति श्लोकाश्च विद्यते?
उत्तरम्— 126 अध्यायाः, 23ए000 श्लोकाः।
174. प्रश्नः— श्रीमद्भगवद् गीतायां कति अध्यायाः सन्ति?
उत्तरम्— 18 अष्टादशाध्यायाः।
175. प्रश्नः— नारदपुराणानुसारेण अध्यात्मरामायणस्य उपजीव्य-ग्रन्थः कः?
उत्तरम्— ब्रह्माण्डपुराणम्।
176. प्रश्नः— भागवतपुराणस्य प्रवक्ता कोऽस्ति?
उत्तरम्— शुकदेवः।
177. प्रश्नः— नाट्यशास्त्रस्य सामग्री कुत्र अस्ति?
उत्तरम्— अग्निपुराणे।
178. प्रश्नः— रामानुजसम्प्रदायस्य सामग्री कुत्र प्राप्यते?
उत्तरम्— विष्णुपुराणे।
179. प्रश्नः— मतान्तरेण नारदपुराणस्य स्थाने कस्य पुराणस्य गणना भवति?
उत्तरम्— शिवपुराणस्य।
180. प्रश्नः— उद्धव-गीतायाः प्रवक्ता कोऽस्ति?
उत्तरम्— वेदव्यासः।
181. प्रश्नः— आत्मनः अनश्वरवादस्य वर्णनं कुत्र अस्ति?
उत्तरम्— गीतायाम्।
182. प्रश्नः— अष्टादश-पुराणानां लेखकः कः?
उत्तरम्— वेद-व्यासः।
183. प्रश्नः— श्रीमद्भागवतपुराणे कियन्तः श्लोकाः सन्ति?
उत्तरम्— 18,00 अष्टादशसहस्राणि।
184. प्रश्नः— "विद्यावतां भागवते परीक्षा" इति केन सम्बद्धोऽस्ति?
उत्तरम्— श्रीमद्भागवतेन।
185. प्रश्नः— "रास-पञ्चाध्यायी" इति कस्य पुराणस्य विषयः?
उत्तरम्— श्रीमद्भागवतस्य।
186. प्रश्नः— "शोकः श्लोकत्वमागतः" इयं सूक्तिः केन सम्बद्धा?
उत्तरम्— महर्षिणा वाल्मीकिना।
187. प्रश्नः— "ज्ञानकर्मसन्न्यासयोगः" इति भगवद्गीतायाः कस्याध्यायस्य नाम?
उत्तरम्— चतुर्थोऽध्यायस्य।
188. प्रश्नः— भक्तराजस्य प्रह्लादस्य पुत्रः कः?
उत्तरम्— विरोचनः।

189. प्रश्नः— श्रीमद्भगवद्गीतायाः अनुसारम् आत्मा कुतः श्रेष्ठः?

उत्तरम्— बुद्धेः।

190. प्रश्नः— गृह्यसूत्रेषु कति संस्काराणां वर्णनं विद्यते?

उत्तरम्— 42 द्विचत्वारिंशत्।

191. प्रश्नः— कानि सन्ति सुभाषितानि/सूक्तानि वा?

उत्तरम्— पुराणेष्वितिहासेषु तथा रामायणादिषु।
वचनं सारभूतं यत् तत् सुभाषितमुच्यते।।

193. प्रश्नः— स्वर्गीयाः देवाः के सन्ति?

उत्तरम्— द्यौः, वरुणः, मित्रः, आदित्यः, सूर्यः, सविता, पूषा, विष्णुः, अश्विन्, उषा, रात्र्यादिश्च।

194. प्रश्नः— वायवीयाः देवाः के सन्ति?

उत्तरम्— इन्द्रः, रुद्रः, मरुतः, वायुः, अपानपात्, पर्जन्यः, आप आदयः।

195. प्रश्नः— के सन्ति पार्थिवदेवाः?

उत्तरम्— पृथिवी, अग्निः, बृहस्पतिः, सोमादयश्च।

196. प्रश्नः— व्यासाऽनुसारेण पुण्यं किम्?

उत्तरम्—परोपकारः।

197. प्रश्नः— पापम् किम् भवति?

उत्तरम्— परपीडनम्।

198. प्रश्नः— सतां विभूतयः किमर्थं भवन्ति?

उत्तरम्— परोपकाराय।

199. प्रश्नः— भारतीय-संस्कृतौ जनानां मध्ये समन्वयः कथं विलोक्यते?

उत्तरम्— आचारेण, व्यवहारेण, शीलेन, संस्कारादिना च।

200. प्रश्नः—स्नानावसरे मानसपटले भारतवर्षस्य अखण्डरूपस्य चित्रं कस्मिन् मन्त्रे प्रस्तुतं भवति?

उत्तरम्— गङ्गे च यमुने चैव गोदावरि सरस्वति।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु।। इति मन्त्रे।

201. प्रश्नः— "गुरूणां चैव सर्वेषां मातैव परमो गुरुः" इत्ययं विचारः कस्य विद्यते?

उत्तरम्— व्यासस्य।

202. प्रश्नः— सत्ययुगस्य परिमाणं किमस्ति?

उत्तरम्— 4800 दिव्यवर्षम्, मानवस्य-1728000।

203. प्रश्नः— त्रेतायुगस्य परिमाणं किमस्ति?

उत्तरम्— 3600 दिव्यवर्षम्, मानवस्य-1296000।

204. प्रश्नः— द्वापरयुगस्य परिमाणं किमस्ति?

उत्तरम्— 2400 दिव्यवर्षम्, मानवस्य-864000।

205. प्रश्नः— कलियुगस्य परिमाणं किमस्ति?
उत्तरम्— 1200 दिव्यवर्षम्, मानवस्य-432000।
206. प्रश्नः— नरकासुरः कस्याः कुण्डलम् अपहृतवान्?
उत्तरम्— देवमातुः अदियेः।
207. प्रश्नः— नरकासुरं कंः अमारयत्?
उत्तरम्— कृष्णः।
208. प्रश्नः— नरकासुरस्य हननसमये कृष्णेन सह का आसीत्?
उत्तरम्— सत्यभामा।
209. प्रश्नः— पाण्डवानां राजपुरोहितस्य किं नाम आसीत्?
उत्तरम्— धौम्यः।
210. प्रश्नः— सर्वाधिक-दीर्घकालीन-युगः कः?
उत्तरम्— सत्ययुगः।
211. प्रश्नः— गीतायां "ज्ञान-कर्म-भक्तिः" समन्वये कृष्णस्य का उक्तिः?
उत्तरम्— मन्मना भव मद् भक्तो मद्याजी मां नमस्तुतः।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः।।
212. प्रश्नः— तन्त्रशास्त्रानुसारं यन्त्रः कतिविधम्?
उत्तरम्— 2 द्विविधम्, 1. नित्य-यन्त्रम्, 2. भाव-यन्त्रम्।
213. प्रश्नः— महापुराणस्य कानि दश लक्षणानि?
उत्तरम्— 1. सर्गः, 2. विसर्गः, 3. कृतिः, 4. रक्षा, 5. मन्वन्तरः, 6. वंशः, 7. वंशानुचरितम्, 8. संस्था, 9. हेतुः, 10. अपाश्रयः।
214. प्रश्नः— मत्स्यपुराणे वास्तुशास्त्रस्य अष्टादश-उपदेष्टारः के सन्ति?
उत्तरम्— 1. भृगुः, 2. अत्रिः, 3. वसिष्ठः, 4. विश्वकर्मा, 5. मयः, 6. नारदः, 7. नग्नजितः, 8. शंकरः, 9. इन्द्रः, 10. ब्रह्मा, 11. कुमारः, 12. नन्दीश्वरः, 13. शौनकः, 14. गर्गः, 15. वासुदेवः, 16. अनिरुद्धः, 17. शुक्रः, 18. बृहस्पतिः।
215. प्रश्नः— पद्मपुराणस्य चतुर्थे खण्डे कस्य लोकस्य वर्णनमस्ति?
उत्तरम्— पाताललोकस्य।
216. प्रश्नः— चतुर्दशभुवनेषु पृथिव्या उपरि सप्तलोकाः
उत्तरम्— ऊर्ध्वलोके।
217. प्रश्नः— "ब्रह्मपुराणस्य" अपरं नाम किम्?
उत्तरम्— आदिपुराणम्।
218. प्रश्नः— मार्कण्डेय-पुराणे कति अध्यायाः सन्ति?
उत्तरम्— 138 अध्यायाः।
219. प्रश्नः— कस्य पुराणस्य उत्तरखण्डं प्रेतखण्डं कथ्यते?
उत्तरम्— गरुड़पुराणस्य।

220. प्रश्नः— कस्मिन् पुराणे रत्नस्य परीक्षणविधिः कथ्यते?
उत्तरम्— गरुड़पुराणे।
221. प्रश्नः— कस्मिन् पुराणे सर्वेषां पुराणानां विषयसूचिः प्राप्यते?
उत्तरम्— नारदपुराणे।
222. प्रश्नः— सूर्यस्य प्रथमकिरणं कस्या उन्नतेः विधायकं भवति?
उत्तरम्— भौतिक-उन्नतेः।
223. प्रश्नः— सूर्यस्य सप्ततिकिरणानि कस्या उन्नतेः विधायकानि सन्ति?
उत्तरम्— आध्यात्मिक-उन्नतेः।
224. प्रश्नः— सूर्यः अश्वस्य रूपं गृहीत्वा याज्ञवल्क्यं कस्य उपदेशं दत्तवान्?
उत्तरम्— शुक्ल-यजुर्वेदस्य।
225. प्रश्नः— उज्जैने प्रकट-ज्योतिर्लिङ्गस्य किं नाम?
उत्तरम्— महाकालेश्वरः।
226. प्रश्नः— शिवस्य मुख्य-उपासनाविग्रहः अस्ति?
उत्तरम्— लिङ्गमूर्तिः।
227. प्रश्नः— सम्पूर्णजलराशिः केन प्रकटीभूतः?
उत्तरम्— विष्णुना।
228. प्रश्नः— विष्णोः निःश्वासेन प्रकटनम् कस्य अभूत्?
उत्तरम्— श्रुतेः।
229. प्रश्नः— विष्णोः लोकस्य किं नाम?
उत्तरम्— वैकुण्ठः।
230. प्रश्नः— गणेशस्य भार्याः कति ?
उत्तरम्— 2 द्वे।
231. प्रश्नः— गणेशस्य वाहनः क?
उत्तरम्— मूषकः।
232. प्रश्नः— पितुराज्ञया परशुरामः केषां शिरश्छेदनं कृतवान्?
उत्तरम्— मातुः रेणुकायाः, ज्येष्ठत्रिभ्रातृणाम् च।

## (त) रामायणस्य वस्तुनिष्ठप्रश्नोत्तराणि

1. प्रश्नः— रामनवमी कस्मिन् मासे कस्यां च तिथौ भवति?
उत्तरम्— चैत्रशुक्लनवम्याम्।
2. प्रश्नः— इक्ष्वाकुवंशस्य "राजगुरुः" कः?
उत्तरम्— वसिष्ठः।
3. प्रश्नः— उर्मिला-लक्ष्मणयोः कति पुत्राः?
उत्तरम्— द्वौ।
4. प्रश्नः— रावणस्य मातुलः लङ्काद्वीपस्य प्रथमः पालकश्च कः?
उत्तरम्— माल्यवान्।

5. प्रश्नः— रामायणे सञ्जीवनौषधिना को वैद्यः लक्ष्मणं पुनरुज्जीवितवान्?
उत्तरम्— सुषेणः।
6. प्रश्नः— "एडम्सब्रिज्" इत्यस्य रामायणे केन नाम्ना प्रसिद्धिरासीत्?
उत्तरम्— रामसेतुनाम्ना।
7. प्रश्नः— सीता "लवकुशौ" कुत्र प्रसूतवती?
उत्तरम्— वाल्मीकेराश्रमे।
8. प्रश्नः— इन्द्रजित् मायया केनं अस्त्रेण वानरप्रमुखान् रामलक्ष्मणौ च मूर्छितवान्?
उत्तरम्— ब्रह्मास्त्रेण।
9. प्रश्नः— सीतामपहृत्य गच्छता रावणेन सह प्रथमं कः युद्धमकरोत्?
उत्तरम्— जटायुः।
10. प्रश्नः— वाल्मीकेः पूर्वतनं नाम किमासीत्?
उत्तरम्— रत्नाकरः।
11. प्रश्नः— दशरथस्य पुत्र्याः नाम किम्?
उत्तरम्— शान्ता।
12. प्रश्नः— दशरथस्य तृतीयायाः पुत्रवध्वाः नाम किम्?
उत्तरम्— माण्डवी।
13. प्रश्नः— दशरथः कस्यां पत्न्यां पुत्रद्वयं प्राप्तवान्?
उत्तरम्— कनिष्ठायाम्(सुमित्रा)।
14. प्रश्नः— अशोकवनविध्वंसकः कः?
उत्तरम्— हनुमान्।
15. प्रश्नः— कुम्भनिकुम्भौ कस्य पुत्रौ?
उत्तरम्— कुम्भकर्णस्य।
16. प्रश्नः— कुम्भः केन हतः?
उत्तरम्— सुग्रीवेण।
17. प्रश्नः— निकुम्भः केन हतः?
उत्तरम्— हनुमता।
18. प्रश्नः— ऋष्यशृङ्गमहर्षिः कस्य जामाता?
उत्तरम्— दशरथस्य।
19. प्रश्नः— कैकश्याः कति पुत्राः, के च ते?
उत्तरम्— त्रयः, 1. रावणः, 2. कुम्भकर्णः, 3. विभीषणः।
20. प्रश्नः— कैकश्याः ज्येष्ठपुत्रवधूः का?
उत्तरम्— मन्दोदरी।
21. प्रश्नः— "रावणस्य नाभिमण्डले अमृतभाण्डोऽस्ति" इति कः कथयति?
उत्तरम्— विभीषणः।

22. प्रश्नः— सीताप्रतिकृत्या रामः कं यज्ञं करोति?
उत्तरम्— अश्वमेधयज्ञम्।

23. प्रश्नः— आदिकविः कः?
उत्तरम्— वाल्मीकिः।

24. प्रश्नः— कस्य महर्षेः पत्न्यां "इन्द्र" आसक्तः?
उत्तरम्— गौतमपत्न्याम् "अहल्यायाम्"।

25. प्रश्नः— इन्द्रं कः राक्षसपुत्रो जितवान्?
उत्तरम्— मेघनादः।

26. प्रश्नः— दशरथस्य कुलगुरुः कः आसीत्?
उत्तरम्— वशिष्ठः।

27. प्रश्नः— रामायणे कति स्कन्धाः सन्ति?
उत्तरम्— 7 सप्त।

28. प्रश्नः— वाल्मीकि-रामायणे कस्य रसस्य प्रधानता वर्तते?
उत्तरम्— करुण-रसस्य।

29. प्रश्नः— लौकिकसंस्कृत-साहित्यस्य आदिकाव्यं किम्?
उत्तरम्— वाल्मीकिकृतं रामायणम्।

30. प्रश्नः— वाल्मीकिकृतरामायणे कति श्लोकाः सन्ति?
उत्तरम्— 24, 000 श्लोकाः।

31. प्रश्नः— रामायणस्य रचनाकालः कोऽस्ति?
उत्तरम्— 500 ई. पूर्वम्।

32. प्रश्नः— श्रीरामः कस्य महर्षेः यज्ञम् अरक्षत्?
उत्तरम्— विश्वामित्रमहर्षेः।

33. प्रश्नः— "वानरसेना" कस्मिन् अवतारे विष्णोः आसीत्?
उत्तरम्— श्रीरामावतारे।

34. प्रश्नः— कुञ्जरस्य पुत्री, केसरीनाम्नः पत्नी, हनुमतः माता च का?
उत्तरम्— अञ्जना।

35. प्रश्नः— "अयोनिजा" इति कस्याः प्रातःस्मरणीयायाः विशेषणम्?
उत्तरम्— सीतायाः।

36. प्रश्नः— शची-इन्द्रयोः पुत्रस्य नाम किम्?
उत्तरम्— जयन्तः।

37. प्रश्नः— "अरुन्धती" कस्य ऋषेः पत्नी?
उत्तरम्— वशिष्ठस्य।

38. प्रश्नः— विश्वजित् यज्ञमसौ कृतवान्—
उत्तरम्— रघुः।

39. प्रश्नः— प्रहस्तः केन हतः?
उत्तरम्— लक्ष्मणेन।

40. प्रश्नः— मकराक्षं कः हतवान्?
उत्तरम्— श्रीरामः।
41. प्रश्नः— रामायणस्य रचनाकारः कः?
उत्तरम्— वाल्मीकिः।
42. प्रश्नः— कानि नृपदशरथपुत्र-पुत्रवधूनामानि सन्ति?
उत्तरम्—1. राम-सीता, 2. लक्ष्मण-उर्मिला, 3. भरत-माण्डबी, 4. शत्रुघ्नः-श्रुतिकीर्तिः।
43. प्रश्नः—अतिकायः केन हतः?
उत्तरम्— लक्ष्मणेन।
44. प्रश्नः— केन अस्त्रेन लक्ष्मणः अतिकायं अमारयत्?
उत्तरम्— ब्रह्मास्त्रेण।
45. प्रश्नः— कुम्भकर्णं कः अमारयत्?
उत्तरम्— श्रीरामः।
46. प्रश्नः— रावणं कः अमारयत्?
उत्तरम्— श्रीरामः।
47. प्रश्नः— मेघनादः केन हतः?
उत्तरम्— लक्ष्मणेन।
48. प्रश्नः— दारुकं कः अमारयत्?
उत्तरम्— लक्ष्मणः।
49. प्रश्नः— नरान्तकः केन हतः?
उत्तरम्— अंगदेन।
50. प्रश्नः— देवान्तकः केन हतः?
उत्तरम्— हनुमता।
51. प्रश्नः— अकम्पनं कः अमारयत्?
उत्तरम्— सुग्रीवः।
52. प्रश्नः— अक्षयकुमारं केन हतः?
उत्तरम्— हनुमता।
53. प्रश्नः— मारीचः केन हतः?
उत्तरम्— श्रीरामेण।
54. प्रश्नः— अहल्यायाः उद्धारः केन कृतः?
उत्तरम्— श्रीरामेण।
55. प्रश्नः— दशरथस्य चतुर्थपुत्रशत्रुघ्नस्य पत्नी नाम किम्?
उत्तरम्— श्रुतकीर्ति।
56. प्रश्नः— दशरथस्य प्रथमपुत्ररामस्य भार्यायाः किं नाम?
उत्तरम्— सीता।
57. प्रश्नः— वशिष्ठस्य पितुर्नाम किम्?
उत्तरम्— मित्रावरुणौ।

58. प्रश्नः— दशरथस्य द्वितीयायाः पुत्रवध्वाः नाम किम्?
उत्तरम्— उर्मिला।
59. प्रश्नः— अहल्या कस्य पुत्री आसीत्?
उत्तरम्— मुद्गलस्य।
60. प्रश्नः— अगस्त्यः कस्य पुत्रः आसीत्?
उत्तरम्— मित्रवर्णस्य।
61. प्रश्नः— अगस्त्यस्य अपरं नाम किम्?
उत्तरमं— कुम्भजः, घटोद्भवः।
62. प्रश्नः— बालिः कस्य राज्यस्य राजा आसीत्?
उत्तरम्— पंपापुरस्य।
63. प्रश्नः— बालिं कः अमारयत्?
उत्तरम्— रामः।
64. प्रश्नः— हनुमतः मातुर्नाम किमासीत्?
उत्तरम्— अंजनी।
65. प्रश्नः— दशरथं कौ अशपताम्?
उत्तरम्— श्रवणस्य पितरौ।
66. प्रश्नः— दशरथस्य पत्नीनां कानि नामानि?
उत्तरम्— कौशल्या, कैकेयी, सुमित्रा।
67. प्रश्नः— जनकपुरे शिवधनुः कः खण्डितवान्?
उत्तरम्— श्रीरामः।
68. प्रश्नः— सीता रामं सर्वप्रथमं कुत्र अपश्यत्?
उत्तरम्— पुष्पवाटिकायाम्।
69. प्रश्नः— रामायणे कियन्ति काण्डानि?
उत्तरम्— (7) सप्त।
70. प्रश्नः— "शोकः श्लोकत्वमागतः" इयं सूक्तिः केन सम्बद्धा?
उत्तरम्— महर्षिणा वाल्मीकिना।
71. प्रश्नः— सुग्रीवस्य भार्या नाम किम्?
उत्तरम्— लोमा।
72. प्रश्नः— महावलि-वालेः पत्नी नाम किम्?
उत्तरम्— तारा।
73. प्रश्नः— अंगदः कस्य पुत्रः आसीत्?
उत्तरम्— वालेः।
74. प्रश्नः— जामवन्तः कस्य मंत्री आसीत्?
उत्तरम्— सुग्रीवस्य।

75. प्रश्नः— सुग्रीवस्य राजधानी कुत्रासीत्?
उत्तरम्— किष्किन्धायाम्।
76. प्रश्नः— वालिं कः अमारयत्?
उत्तरम्— श्रीरामः।
77. प्रश्नः— हनुमान कस्य अवतारः मन्यते?
उत्तरम्— रुद्रस्य।
78. प्रश्नः— वाल्मीकि-रामायणस्य प्रथम-सप्तमकाण्डे किं मन्येते?
उत्तरम्— प्रक्षिप्तकाण्डम्।
79. प्रश्नः— "चतुर्विंशतिसाहस्त्री संहिता" कथ्यते—
उत्तरम्— रामायणम्।
80. प्रश्नः— रामायणकारः कः?
उत्तरम्— वाल्मीकिः।
81. प्रश्नः— रामायणे मुख्यरूपेण प्रयुक्तं छन्दः किमस्ति?
उत्तरम्— अनुष्टुप्।
82. प्रश्नः— रामायणस्य अङ्गीरसः कः?
उत्तरम्— करुणः।
83. प्रश्नः— रघुवंशस्य उपजीव्यं काव्यं किमस्ति?
उत्तरम्— रामायणम्।
84. प्रश्नः— रामायणे कति सर्गाः विद्यन्ते?
उत्तरम्— 500 सर्गाः।
85. प्रश्नः— आर्षकाव्येषु "चतुर्विंशतिसाहस्त्री" संज्ञकं किमस्ति?
उत्तरम्— रामायणम्।
86. प्रश्नः— आर्षकाव्यस्य उदाहरणं किमस्ति?
उत्तरम्— रामायणम्।

### (थ) महाभारतस्य वस्तुनिष्ठप्रश्नोत्तराणि

1. प्रश्नः— गङ्गा शान्तनोः अष्टौ पुत्राः समुत्पन्नाः, तत्र भीष्मः कतमः?
उत्तरम्— अष्टमः।
2. प्रश्नः— महाभारते कः पुत्रानुमत्या दौत्येन च वृद्धावस्थायां विवाहमकरोत्?
उत्तरम्— शान्तनुः।
3. प्रश्नः— वेदव्यासस्य माता का?
उत्तरम्— सत्यवती।
4. प्रश्नः— पाण्डु-धृतराष्ट्र-विदुराणां जनकः कः?
उत्तरम्— कृष्णद्वैपायनः(व्यासः)।
5. प्रश्नः— श्रीमद्भगवद्गीता महाभारतस्य कस्मिन् पर्वणि उपलभ्यते?
उत्तरम्— भीष्मपर्वणि।

6. प्रश्नः— धृतराष्ट्र-पाण्डु-विदुरेषु त्रिषु कः "शूद्रायाम्" उत्पन्नः?
उत्तरम्— विदुरः।
7. प्रश्नः— व्यासस्य सम्मुखं का नेत्रे पिधाय गतवती?
उत्तरम्— अम्बिका।
8. प्रश्नः— कस्य महर्षेः शापवशात् यमधर्मराजः शूद्ररूपेण अवतरितः?
उत्तरम्— माण्डव्यमहर्षेः।
9. प्रश्नः— कुन्त्याः देवरः कः?
उत्तरम्— विदुरः।
10. प्रश्नः— नकुलसहदेवौ कस्याः पुत्रौ?
उत्तरम्— माद्र्याः।
11. प्रश्नः— गान्धारी कस्य पुत्री?
उत्तरम्— गान्धारनरेश-सुबलस्य।
12. प्रश्नः—राजापाण्डुः हरिणवेषेण स्वपत्न्या सह विहरन्तं मुनिं मारितवान्, तस्य मुनेः नाम किम्?
उत्तरम्— किन्दममुनिः।
13. प्रश्नः— दुर्योधनप्रभृतीनां कौरवाणां भगिनी का?
उत्तरम्— दुःशला।
14. प्रश्नः—हिडिम्बायां राक्षस्यां भीमसेनादुत्पन्नः पुत्रः कः?
उत्तरम्— घटोत्कचः।
15. प्रश्नः—विराटराजसभायां पाण्डवाः कति वर्षाणि अवसन्?
उत्तरम्— एकवर्षकालम्।
16. प्रश्नः—विराटराज्ये पाण्डवानां कानि नामानि?
उत्तरम्— युधिष्ठिरः-वैयाघ्रपद्यम्, भीमसेनः-वल्लवः, अर्जुनः-बृहन्नला, नकुलः-ग्रन्थिकः, सहदेवः-अरिष्टनेमिः।
17. प्रश्नः—अज्ञातवाससमये पाण्डवपत्न्याः द्रौपद्याः नाम किमासीत्?
उत्तरम्— सैरन्ध्री।
18. प्रश्नः—विराटराज्ञः सेनापतिः कः आसीत्?
उत्तरम्— कीचकः।
19. प्रश्नः—कीचकः कस्याः भ्राता?
उत्तरम्— सुदेष्णायाः।
20. प्रश्नः—उत्तरकुमारस्य रथसारथिः कः आसीत्?
उत्तरम्— बृहन्नला।
21. प्रश्नः—महाभारतयुद्धे भीष्मः कतमदिवसे बाणैः प्रसाधिताङ्गो निपपात?
उत्तरम्— दशमे दिवसे।

22. प्रश्नः—धृष्टद्युम्नशिखण्डी द्रौपदेयान् पञ्चपुत्रान् च कः जघान?
उत्तरम्— अश्वत्थामा।
23. प्रश्नः—श्रीकृष्णस्य ज्येष्ठपुत्रस्य नाम किम्?
उत्तरम्— प्रद्युम्नः।
24. प्रश्नः—श्रीकृष्णस्य निर्वाणे कस्य व्याधस्य कर्तृत्वमासीत्?
उत्तरम्— जरसस्य।
25. प्रश्नः—बभ्रुवाहनेन कः पाण्डवः निपातितः?
उत्तरम्— अर्जुनः।
26. प्रश्नः—बभ्रुवाहनस्य माता का?
उत्तरम्— उलूपी।
27. प्रश्नः— "इरावतः बभ्रुवार्हनः अभिमन्युः"—इत्येते त्रयः कस्य पुत्राः?
उत्तरम्— अर्जुनस्य।
28. प्रश्नः—निषादराजस्य हिरण्यधनुनामकस्य पुत्रः गुरुभक्तश्च कः?
उत्तरम्— एकलव्यः।
29. प्रश्नः—क्रमशः दशदिनानि कौरवसेनापतिः कः आसीत्?
उत्तरम्— भीष्मः।
30. प्रश्नः—अष्टादश दिनानि यावत् प्रवृत्ते कुरुक्षेत्रमहासंग्रामे कति सेनापतय आसन्?
उत्तरम्— चत्वारः।
31. प्रश्नः—आत्मनो वधोपायं कः स्वयमसूचयत्?
उत्तरम्— भीष्मः।
32. प्रश्नः—महाप्रस्थानसमये धर्मराजं(युधिष्ठिरं) कः पशुः अनुगतवान्?
उत्तरम्— श्वा(कुक्कुरः)।
33. प्रश्नः— "नपुंसको भव" इति अर्जुनं का शप्तवती?
उत्तरम्— उर्वशी।
34. प्रश्नः— पञ्चपाण्डवेषु कः हस्तिनापुरात् बहिः द्वादशवर्षाण्यवसत्?
उत्तरम्— अर्जुनः।
35. प्रश्नः— धृतराष्ट्रस्य मन्त्री कः?
उत्तरम्— सञ्जयः।
36. प्रश्नः— कयोः गुरुशिष्ययोर्मध्ये त्रयोविंशतिदिनानि युद्धमभवत्?
उत्तरम्— परशुरामभीष्मयोः।
37. प्रश्नः— के सन्ति सप्त चिरजीविनः?
उत्तरम्— अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः।
कृपः परशुरामश्च सप्तैते चिरजीविनः।।
38. प्रश्नः— महाभारते कानि सन्ति अष्टादश पर्वाणि?
उत्तरम्—आदि-सभा-वन-विराट्-उद्योग-भीष्म-द्रोण-कर्ण-साल्व-सौप्तिक-स्त्री-शान्ति-

अनुशासनाऽश्वमेधा-ऽऽश्रमवासि-मौसल-महाप्रस्थानिक-स्वर्गारोहणाख्यानि अष्टादश-पर्वाणि।

39. प्रश्नः— अम्बाकारणात् भीष्मः केन गुरुश्रेष्ठेन सह युद्धं अकुर्वत्?
उत्तरम्— गुरु-परशुरामेण सह।

40. प्रश्नः—महाभारतमतानुसारेण अक्षौहिणीसेनायां अश्वानां संख्या का भवति?
उत्तरम्— 65, 610

41. प्रश्नः—"समन्तपञ्चक" इति पदेन कस्य बोधो जायते?
उत्तरम्— कुरूक्षेत्रस्य।

42. प्रश्नः—महाभारतमतानुसारेण उत्तङ्कः कोऽस्ति?
उत्तरम्— गुरुभक्तः।

43. प्रश्नः—जनमेजयः कस्य विदुषः पुरोहितपदे अलंकृतम्?
उत्तरम्— सोमश्रणस्य।

44. प्रश्नः—महाभारतमतानुसारेण "ऋचीक" शब्दस्य कोऽर्थः?
उत्तरम्— सूर्यः।

45. प्रश्नः—"मगधराज-शिरोमणि" इत्युपाधिना कस्य बोधो जायते?
उत्तरम्— जरासन्धस्य।

46. प्रश्नः—महर्षिच्यवनस्य पितुः नाम किमासीत्?
उत्तरम्— भृगुः।

47. प्रश्नः—श्रीकृष्णद्वैपायनस्य पितुः नाम किमस्ति?
उत्तरम्— पराशरः।

48. प्रश्नः—विचित्रवीर्यस्य पत्नी का आसीत्?
उत्तरम्— अम्बिका।

49. प्रश्नः— श्रीकृष्णद्वैपायनस्य मातुः नाम किमस्ति?
उत्तरम्— सत्यवती।

50. प्रश्नः—गान्धारप्रदेशस्य राजा कः आसीत्?
उत्तरम्— शकुनी।

51. प्रश्नः—मधुवंशस्य राजकुमारी का आसीत्?
उत्तरम्— सुभद्रा।

52. प्रश्नः—पाञ्चालीशब्दस्य कोऽर्थः?
उत्तरम्— पाण्डवः।

53. प्रश्नः—उत्तरायाः पितुः नाम किम्?
उत्तरम्— मत्स्यराजो विराट्।

54. प्रश्नः—भीष्मपितामहस्य पितुः नाम किमस्ति?
उत्तरम्— शान्तनुः।

55. प्रश्नः—वीर अभिमन्योः माता नाम किम्?
उत्तरम्— सुभद्रा।
56. प्रश्नः—नकुलस्य मातुः नाम किम्?
उत्तरम्— माद्री।
57. प्रश्नः—सूतवंशशिरोमणिः कोऽस्ति?
उत्तरम्— लोकहर्षणः।
58. प्रश्नः—नृलोके महाभारतस्य कः प्रवचनकर्त्ता?
उत्तरम्— व्यासः।
59. प्रश्नः— महर्षि च्यवनस्य मातुः नाम किमासीत्?
उत्तरम्— पुलोमा।
60. प्रश्नः—कति प्रजापतयः प्रभवन्?
उत्तरम्— पञ्च।
61. प्रश्नः—जनमेजयः कस्य पुत्रः?
उत्तरम्— परीक्षितस्य।
62. प्रश्नः—सारमेयः कस्य पुत्रः?
उत्तरम्— सरमायाः।
63. प्रश्नः—अरुणः गरुड़स्य कः?
उत्तरम्— अग्रजः।
64. प्रश्नः—शेषनागस्य माता का आसीत्?
उत्तरम्— कद्रू।
65. प्रश्नः—जरात्काः कस्य भगिनी?
उत्तरम्— वासुकेः।
66. प्रश्नः—परीक्षितस्य पिता कः?
उत्तरम्— अभिमन्युः।
67. प्रश्नः—"गीता" महाभारतस्य कस्मिन् पर्वणि वर्णितः?
उत्तरम्— भीष्मपर्वणि।
68. प्रश्नः— उत्तरा का आसीत्?
उत्तरम्— अभिमन्योः पत्नी।
69. प्रश्नः— महाभारतस्य लेखकः कः?
उत्तरम्— कृष्णद्वैपायनव्यासः वेदव्यासः।
70. प्रश्नः— सुभद्रा कस्य पत्नी आसीत्?
उत्तरम्— अर्जुनस्य।
71. प्रश्नः— द्रौपदी का आसीत्?
उत्तरम्— पाण्डवानां पत्नी।

72. प्रश्नः— महाभारतः कीदृशः ग्रन्थः अस्ति?
उत्तरम्— ऐतिहासिकः।
73. प्रश्नः— महाभारते कस्य रसस्य प्रधानता वर्तते?
उत्तरम्— शान्त-रसस्य।
74. प्रश्नः— महाभारतग्रन्थे कति श्लोकाः सन्ति?
उत्तरम्— 1, 00, 000 एकलक्षं श्लोकाः।
75. प्रश्नः— महाभारतग्रन्थे कति पर्वाणि सन्ति?
उत्तरम्— 18 अष्टादश पर्वाणि।
76. प्रश्नः— "यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्" इति कस्य ग्रन्थस्योक्तिः?
उत्तरम्— महाभारतस्य।
77. प्रश्नः—भीष्म-पितामहस्य युधिष्ठिरं प्रति मोक्षधर्म-राजधर्मविषयकोपदेशः कस्मिन् पर्वणि उपलभ्यते?
उत्तरम्— शान्तिपर्वणि।
78. प्रश्नः— सत्यभामायाः पिता "सत्रजित्" सूर्यात् कं मणिं प्राप्तवान्?
उत्तरम्— स्यमन्तकमणिम्।
79. प्रश्नः— "पञ्चमो वेदः" कः कथ्यते?
उत्तरम्— महाभारतम्।
80. प्रश्नः— "हरिवंश-पुराणम्" कस्य काव्यस्याङ्गम्?
उत्तरम्— महाभारतस्य।
81. प्रश्नः— "हरिवंश-पुराणम्" कियत्सु भागेषु विभक्तम्?
उत्तरम्— (3) त्रिषु भागेषु।
82. प्रश्नः— "विष्णुसहस्रनामस्तोत्रम्" कस्यांशः?
उत्तरम्— महाभारतस्य।
83. प्रश्नः— "गजेन्द्र-मोक्षः" कस्यांशः?
उत्तरम्— महाभारतस्य।
84. प्रश्नः— "धर्मे ह्यर्थे च कामे च मोक्षे च भरतर्षभ। यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्।।" इदं पद्यं केन ग्रन्थेन सम्बद्धम्?
उत्तरम्— महाभारतेन।
85. प्रश्नः— श्रीकृष्ण-शंखस्य किं नाम?
उत्तरम्— पाञ्चजन्यः।
86. प्रश्नः— श्रीकृष्णस्य गुरोर्नाम किम्?
उत्तरम्— सान्दीपनि।
87. प्रश्नः— सान्दीपनस्य पुत्रनाम किम्?
उत्तरम्— पुरन्दरः।

88. प्रश्नः— विराट-राजकुमार-उत्तरः कः अमारयत्?
उत्तरम्— शल्यः।
89. प्रश्नः—घटोत्कचं कः अमारयत्?
उत्तरम्— कर्णः।
90. प्रश्नः— कर्णः केन अस्त्रेण घटोत्कचं हतवान्?
उत्तरम्— इन्द्रप्रदत्तशक्त्यास्त्रेण।
91. प्रश्नः— दुःशलायाः पति कः आसीत्?
उत्तरम्— जयद्रथः।
92. प्रश्नः— मुचकुन्दः कस्य वंशस्य राजा आसीत्?
उत्तरम्— इक्ष्वाकुवंशस्य राजा।
93. प्रश्नः— मुचकुन्दस्य पितुर्नाम किम्?
उत्तरम्— मान्धाता।
94. प्रश्नः— कालयवनं कः दग्धवान्?
उत्तरम्— मुचकुन्दः।
95. प्रश्नः— उग्रश्रवा कस्य पुत्रः आसीत्?
उत्तरम्— लोमहर्षस्य।
96. प्रश्नः— युयुधानः कस्य वंशस्य योद्धा आसीत्?
उत्तरम्— वृष्णिवंशस्य।
97. प्रश्नः— द्रोणाचार्यस्य महान्तः सैन्यसमूहान् कः भूमिगतं कृतवान्?
उत्तरम्— युयुधानः।
98. प्रश्नः— काः सन्ति पञ्चकन्यकाः?
उत्तरम्— अहल्या द्रौपदी तारा कुन्ती मन्दोदरी तथा। पञ्चकन्या स्मरेन्नित्यंमहापातक नाशनम्।।
99. प्रश्नः— "अवश्यमेव भोक्तव्यं कृत कर्म शुभाशुभम्" कस्येयमुक्तिः?
उत्तरम्— संजयस्य।
100. प्रश्नः— राज्ञः परीक्षितस्य कति पुत्राः आसन्, के च ते?
उत्तरम्— चत्वारः, 1. जनमेजयः, 2. श्रुतसेनः, 3. उग्रसेनः, 4. भीमसेनः।
101. प्रश्नः— च्यवनपुत्रस्य किं नाम आसीत्?
उत्तरम्— प्रभति।
102. प्रश्नः— प्रभतेः भार्या नाम किमस्ति?
उत्तरम्— घृताची नामिका अप्सरा।
103. प्रश्नः— प्रभति-घृताच्योः पुत्रनाम किम्?
उत्तरम्— रूरूः।
104. प्रश्नः—रूक्मदस्य भगिनी का आसीत्?
उत्तरम्— रूक्मिणी।

105. प्रश्नः— रूक्मिणी-विवाहं रूक्मदः केन सह निश्चितवान्?
उत्तरम्— शिशुपालेन सह।
106. प्रश्नः— रूक्मिणी कं पण्डितं कृष्णपार्श्वे प्रेषितवती?
उत्तरम्— सतानन्दपुरोहितम्।
107. प्रश्नः— रूक्मिणी कस्य राज्यस्य राजकुमारी आसीत्?
उत्तरम्— कुण्डीनपुरस्य।
108. प्रश्नः— भोजस्य दत्तकपुत्री का?
उत्तरम्— कुन्ती।
109. प्रश्नः— कुन्ती कस्या आत्मजा आसीत्?
उत्तरम्— सुरसेनस्य।
110. प्रश्नः— कुन्ती वशीकरणमन्त्रं कस्मात् प्राप्तवती?
उत्तरम्— दुर्वाससः।
111. प्रश्नः— गंगापुत्रः कः आसीत्?
उत्तरम्— भीष्मः।
112. प्रश्नः— द्रोणाचार्यस्य पत्नी का आसीत्?
उत्तरम्— कृपी।
113. प्रश्नः— द्रोणाचार्यः कस्य पिता आसीत्?
उत्तरम्— अश्वत्थाम्नः।
114. प्रश्नः— कीचकं कः अमारयत्?
उत्तरम्— भीमसेनः।
115. प्रश्नः— कीचकः कस्य राज्यस्य सेनापतिः आसीत्?
उत्तरम्— मत्स्यराज्यस्य।
116. प्रश्नः— उत्तरा कस्य पत्नी आसीत्?
उत्तरम्— अभिमन्योः।
117. प्रश्नः— छद्मवेशधारी वासुदेवः कः?
उत्तरम्— पाण्डकः।
118. प्रश्नः— पाण्डकस्य पत्नी नाम का?
उत्तरम्— तारा।
119. प्रश्नः— विष्णोः भार्यायाः किं नाम?
उत्तरम्— लक्ष्मी।
120. प्रश्नः— सूर्यस्य भार्यायाः किं नाम?
उत्तरम्— संज्ञा।
121. प्रश्नः— गणेशस्य प्रियभोज्यपदार्थं किम्?
उत्तरम्— मोदकम्।

122. प्रश्नः— दशावतारक्रमे विष्णोः प्रथमावतारः कः?
उत्तरम्— मत्स्यः।
123. प्रश्नः— संस्काराणां का संख्या कथ्यते?
उत्तरम्— 16 षोडश।
124. प्रश्नः— सत्यवत्याः पत्युर्नाम किम्?
उत्तरम्— शान्तनुः।
125. प्रश्नः— नर्मदा-नदीं धरायां कः आनीतवान्?
उत्तरम्— व्यासः।
126. प्रश्नः— "महाभारते" कस्य वंशस्य इतिहासस्य वर्णनम् अस्ति?
उत्तरम्— चन्द्रवंशस्य।
127. प्रश्नः— सत्यवती कस्य धीवरस्य पुत्री आसीत्?
उत्तरम्— वासुराजस्य।
128. प्रश्नः— भीष्मस्य अपरं नाम किम्?
उत्तरम्— देवव्रतः।
129. प्रश्नः— कुंती कस्य पुत्री आसीत्?
उत्तरम्— शूरसेनयादवस्य।
130. प्रश्नः— द्रौपदी कस्य पुत्री आसीत्?
उत्तरम्— राज्ञः द्रुपदस्य।
131. प्रश्नः— अभिमन्यु कस्य पुत्रः आसीत्?
उत्तरम्— अर्जुनस्य।
132. प्रश्नः— अभिमन्युमातुर्नाम किम्?
उत्तरम्— सुभद्रा।
133. प्रश्नः— अश्वत्थामा कस्य पुत्रः आसीत्?
उत्तरम्— द्रोणाचार्यस्य।
134. प्रश्नः— कृपाचार्यः कस्य पुत्रः आसीत्?
उत्तरम्— शरद्वानस्य।
135. प्रश्नः— कृपाचार्यः कस्य पौत्रः आसीत्?
उत्तरम्— गौतमस्य।
136. प्रश्नः— विदुरः कस्य पुत्रः आसीत्?
उत्तरम्— व्यासस्य।
137. प्रश्नः— व्यासः दिव्यदृष्टिं कस्यै प्रदत्तवान्?
उत्तरम्— संजयाय।
138. प्रश्नः— जयद्रथः कस्य देशस्य राजा आसीत्?
उत्तरम्— सिन्धुदेशस्य।

139. प्रश्नः— दुर्योधनस्य भगिन्या दुःशलायाः भर्ता कः आसीत्?
उत्तरम्— जयद्रथः।
140. प्रश्नः— जयद्रथं कः अमारयत्?
उत्तरम्— अर्जुनः।
141. प्रश्नः— उल्लुकः कस्य पुत्रः आसीत्?
उत्तरम्— शकुनेः।
142. प्रश्नः— बलरामस्य पितरौ कौ स्तः?
उत्तरम्— रोहिणी-वासुदेवौ।
143. प्रश्नः— अर्जुनं गीतायाः उपदेशं कः दत्तवान्?
उत्तरम्— श्रीकृष्णः।
144. प्रश्नः— कृष्णद्वैपायनः कः?
उत्तरम्— वेदव्यासः।
145. प्रश्नः— "जय" नामके ग्रन्थे कति श्लोकाः?
उत्तरम्— 8800,
146. प्रश्नः— महाभारते कति श्लोकाः सन्ति?
उत्तरम्— लक्षसंख्यकाः।
147. प्रश्नः— "शतसाहस्त्री संहिता" का अस्ति?
उत्तरम्— महाभारतम्।
148. प्रश्नः— "भारत" नामके महाकाव्ये कति श्लोकाः आसन्?
उत्तरम्— चतुर्विंशतिसहस्राणि।
149. प्रश्नः— महाभारतस्य प्रमुखं छन्दः किम्?
उत्तरम्— अनुष्टुप्।
150. प्रश्नः— महाभारते अङ्गीरसः कः?
उत्तरम्— वीरः।
151. प्रश्नः— अभिज्ञानशाकुन्तलस्य उपजीव्यं काव्यं किमस्ति?
उत्तरम्— महाभारतम्।
152. प्रश्नः— महाभारतयुद्धं कति दिनानि यावत् प्राचलत्?
उत्तरम्— (18) अष्टादशदिनानि।
153. प्रश्नः— "श्रीमद्भगवद्गीता" महाभारतस्य कस्मिन् पर्वणि विद्यते?
उत्तरम्— भीष्मपर्वणि।
154. प्रश्नः— "जयाख्यम्" काव्यं किमस्ति?
उत्तरम्— महाभारतम्।
155. प्रश्नः— ऐतिहासिकं आर्षकाव्यं किमस्ति?
उत्तरम्— महाभारतम्।
156. प्रश्नः— उपजीव्यकाव्येषु केषां प्रमुख-स्थानं वर्तते?
उत्तरम्— रामायण-महाभारतयोः।

# 11
# धर्मशास्त्रं कर्मकाण्डञ्च

## (क) धर्मशास्त्रम् The Science of Jurisprudence

वेदः सर्वासां विद्यानां मूलभूतः। धर्मस्य मूलं वेद एव। धर्मो विश्वस्य जगतः प्रतिष्ठा। शुक्लयजुर्वेदे—"यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्" इत्यनेन "धर्मो रक्षति रक्षितः" इति मनुवचनेन च धर्मपालनार्थं धर्मरक्षणार्थं च उपदिशन्ति। धर्मार्थकाममोक्षाख्येषु चतुर्षु पुरुषार्थेषु धर्मः प्रधानः विद्यते। धर्मप्रतिपादकं शास्त्रं धर्मशास्त्रमुच्यते। धर्मशास्त्रं मुख्यतः पुरुषार्थचतुष्टयं प्रतिपादयति। तेषु सर्वेषु पुरुषार्थेषु मनुष्यजीवनस्य मार्गप्रवर्त्तकरूपेण तथा नियंत्रकरूपेण धर्मस्य प्राधान्यं स्वीक्रियते। जीवनस्य सर्वेषु कालेषु धर्मस्य प्रभावः साक्षात् परम्परया वा विद्यते। धर्मेणोपार्जितोऽर्थः मनुष्यं सर्वविधानन्देन संयोज्य परवर्त्तिजीवनमपि सुखमयं करोति धर्मशास्त्रम्। धर्मशास्त्राणि पुराणानि अपि शास्त्रकोट्यवन्तर्भूतानि भवन्ति। धर्मशास्त्राणि एव स्मृतय इति व्यवह्रियते। वेदे विद्यमानाः धर्माः पुनः धर्मशास्त्रेषु स्मृताः। अतस्ताः स्मृतयः इति ख्याताः। मनुस्मृतिः समाजशास्त्रस्य अद्वितीया कृतिरस्ति। मन्वत्रिविष्णुहारीतादि स्मृतयः विंशतिः सन्ति। देवल-चन्द्रायण-कपिलादिभिश्च विरचिताः स्मृतयः पञ्चाशत् सन्ति। आहत्य सप्तति स्मृतयस्सन्ति। मनुस्मृत्यादि ग्रन्थेषु धर्मविषयकचर्चा, आध्यात्मिक-चर्चा कारणात् धर्मशास्त्रमपि शास्त्ररूपेण गृहीतानि भवन्ति।

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत।।

"चोदनालक्षणोऽर्थो धर्मः" "स्वर्गसाधनस्य शास्त्रैकसमधिगम्यातिशयस्य धर्मत्वेन सर्वसम्प्रतिपत्तेः" इति धर्मस्य परिभाषा कृता स्मृतिकारैः। मनुयाज्ञवल्क्यादिभिः महर्षिभिः प्रणीतमिदं धर्मशास्त्रं समाजस्योपकारायैव प्रवर्त्तते। सर्वेषां धर्मशास्त्रग्रन्थानां प्रवर्त्तनं धर्ममार्गस्य प्रतिपादनार्थमेव। अतः प्रतिवेदं प्रतिशाखं प्रतिप्रान्तमपि धर्मशास्त्राणि विरचितानि सन्ति।

सर्वेषां प्रणिनां प्रवृत्तिः सुखार्था न तु दुःखार्था। किन्तु कानि सुखोपकरणानीति यथार्थ-तयाऽजानन्तो यथेष्टमीहमानाः पुनः पुनः संसरन्ति तान् उद्धर्तुकामो भगवान्परमेष्ठी शतसहस्र-श्लोकात्मकं धर्मशास्त्रं विरचय्य भगवते मनवे प्रोवाच। भगवान् स्वायंभुवो मनुश्च संक्षिप्य तद्भगवे प्रोवाच। या च लोके मनुस्मृतिनाम्ना प्रथिमस्ति। अस्मिन् मानवे धर्मशास्त्रे भगवता मनुना "वर्णधर्मः

आश्रमधर्मो, वर्णाश्रमधर्मो, गुणधर्मो, निमित्तधर्मः सामान्यधर्मश्चेति" षड्विधो धर्मः प्रतिपादितः। यद्यपि पत्युपगमादिरूपः कामोऽप्यत्राभिहितस्तथापि "ऋतुकालाभिगामी स्यात्" इति ऋतुकालादि-नियमेन सोऽपि धर्म एव।

एवमर्थार्जनमपि "ऋतामृताभ्यां जीवेत" इत्यादिनियमेन धर्म एवेत्यवगन्तव्यम्। मोक्षोपायत्वेनैभिर्महात्मभिर्हितस्यात्मज्ञानस्यापि धर्मत्वाद्धर्मविषयत्वं मोक्षोपदेशष्टत्वं चास्य शास्त्रस्योपपन्नम्। किं च धर्मशास्त्रप्रणेतृभिः पराशरवशिष्ठप्रभृतिभिर्महात्मभिरसकृत् प्रमाणतया स्वीकृतत्वात्, "यन्मनुरवदत्तद्भेषजं भेषजतायाः" इति श्रुत्युपग्रहाच्च धर्मशास्त्रे महामहिमवतीयं धर्मं जिज्ञासमानानां परमप्रमाणरूपा मनुस्मृतिरिति बहुभिः पण्डितैः व्याकृतास्ति। धर्मशास्त्रस्य वाङ्मयः विशालं रूपं धारयति। धर्मशास्त्रस्य विषयाः आचार-व्यवहार-प्रायश्चित्तभेदेन त्रिधा विभज्यन्ते।

स्त्रीधर्मप्रकारेणोक्तेनाचार्येण पतिशुश्रूषा भर्त्रव्यभिचारादिना मनोवाक्कायसंयता स्त्री इह लोके प्रकृष्टां कीर्तिं परत्रत्वत्या सहार्जितं च स्वर्गादिलोकं प्राप्नोतीति।

## (ख) धर्मशास्त्रस्य परिचयः

"धर्मो विश्वस्य जगतः प्रतिष्ठा" विश्ववासिनां जनानामभ्युदयनिःश्रेयससिद्ध्यर्था।

जगति विराजमानस्य धर्मस्य महती प्रतिष्ठा। स्वावयवार्थप्रतिपादकत्वेऽपि धर्मसूत्रं भारतीयानां प्राणभूतवेदस्य बहुत्र बहुष्वर्थेषु प्रयुक्तम्। भारतीयाः सनातनधर्मं दृढं विश्वसन्ति। तदनुसारं वेद एव हिन्दूसंस्कृतेः प्राचीनप्रमाणरूपेण स्वीकृतः। वेदस्य परमं प्रामाण्यं सर्वैः स्मृतिकारैः मन्वादिभिरपि स्वीकृतमस्ति।

1. ऋग्वेदे—धारणार्थे पालनार्थे च पुंलिङ्गे एव प्रयुक्तः।
2. यजुर्वेदे—धारणार्थे धारकार्थे च प्रयुक्तः।
3. अथर्ववेदे—धार्मिकक्रियाजनितगुणार्थे दृश्यते।
4. तैत्तिरीयोपनिषदि—नियमाचरणाय निर्दिष्टः।
5. ऐतरेयब्राह्मणे—सकलधार्मिककृत्येषु व्यवहृतः।
6. छान्दोग्योपनिषदि—यज्ञाध्ययनदानार्थेष्वभिहितः।
7. मनुस्मृतौ—धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
   धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।।
8. याज्ञवल्क्यस्मृतौ—श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
   सम्यक् संकल्पजः कामो धर्ममूलमिदं स्मृतम्।।
9. वशिष्ठ, आपस्तम्ब, बौधायन, गौतम, हारीतादयः—श्रुतेः प्राथम्यं स्वीकृत्यानन्तरं स्मृतेः प्रामाण्यं स्वीकृतवन्तः।

एते धर्मस्य गुणाः खलु मानवसमाजस्य विकासस्य बीजम् अस्ति। अन्येऽपि शास्त्रकाराः "वैदिकमन्त्रोपदेशानुष्ठितकर्मभिरुत्पादितं पुण्यमेव धर्मः" इति स्वीकृतवन्तः। वैशेषिकशास्त्रमपि

"येन कर्मणा ऐहलौकिक-पारलौकिककल्याणसिद्धिः भवति स एव धर्मः" इति। अमरसिंहस्तु विश्वं धर्मः धारयति, जनाः धर्मं धारयन्तीति धर्मशब्दं व्युत्पादितवान्। मेदनी-हेमकोषयोस्तु "पुण्यार्थे धर्मशब्दः प्रयुक्तः"।

## (ग) धर्मभेदाः

मत्यपुराणे एवं च माधवीयादिषु श्रौतस्मार्त्तभेदेन धर्मः द्विधा विभक्तः। तत्र श्रौतधर्मः त्रिविधः— इष्टिः, पशुयागः, सोमयागश्चेति। स्मार्तधर्मे विशेषतः स्मृतिप्रतिपादितान् वर्णाश्रमसम्बन्धि-शौचाचमननियमानन्तर्भावयन्ति। बौधायनधर्मसूत्रम्-अनुशासनपर्वशान्तिपर्वादिषु च धर्मः वेदस्मृतिशिष्टागमप्रतिपाद्यरूपेण त्रिधा वर्णितः। हेमाद्रि-विज्ञानेश्वरादयः धर्मं भविष्यपुराणदृष्ट्या षोढा विभाजयन्ति। यथा—वर्णधर्मः, आश्रमधर्मः, वर्णाश्रमधर्मः, गुणधर्मः, निमित्तधर्मः, साधारणधर्मश्च।

1. इष्टिः—औषधिप्रधानयागः इष्टिः।
2. पशुयागः—पशुयागे प्रधानतः पशुः।
3. सोमयागः-सोमयागे च सोम एव समर्प्यते।
4. वर्णधर्मः—ब्राह्मणो नित्यं सुरां विवर्जयेत्।
5. आश्रमधर्मः—ब्रह्मचारी नित्यं दण्डं गृह्णीयात्।
6. वर्णाश्रमधर्मः—ब्राह्मणः ब्रह्मचारी पलाशदण्डं गृह्णीयात्।
7. गुणधर्मः—राज्ञः प्रजापालनम्।
8. निमित्तधर्मः—विहितस्याननुष्ठाने प्रतिषिद्धकर्मकरणे च प्रायश्चित्तम्।
9. साधारणधर्मः—अस्तेयाहिंसादयः।

मनुस्मृति-आनुशासनिकपर्व-देवीभागवत-पराशरमाधवीयादिषु देशधर्म-जातिधर्म-कुलधर्म-गुणधर्म-वयोधर्म-शरीरधर्म-कालधर्म-आपद्धर्म-ग्राम्यधर्म-युगधर्मादीनां विभागा. दर्शिताः। एते धर्माः कदाचिदपि परिवर्त्तिताः सन्तः युगधर्मादिवत् वैरूप्यं धारयन्ति।

## (घ) धर्मस्य मुख्यपुरुषार्थत्वम्

धर्मार्थकाममोक्षभेदेन चतुर्धा प्रतिपादिताः। अपौरुषेयस्य वेदस्यानुमापकतया स्मृत्यादीनामपि वेदानुकरणेन धर्मे प्रामाण्याद् धर्मशास्त्रं पुरुषार्थचतुष्टयस्य प्रमुखं प्रतिपादकम्। अतः पुरुषार्थचतुष्टयेषु धर्मस्य श्रेष्ठत्वं सर्वैः स्वीक्रियते। एतेषां धर्मार्थकामानां पुरुषार्थत्रयाणां विशुद्धाचरणे मोक्षप्राप्तिर्नाम चतुर्थः पुरुषार्थः सिद्ध्यति। चतुर्वर्गेऽर्थकाममोक्षाणां पुरुषार्थानां मूलः धर्मः। धर्मपालनं ब्रह्मचर्याश्रमे मुख्यतया विहितम्। गृहस्थाश्रमे धर्म्योपायेनार्थकामयोरर्जनं सेवनञ्च विहितम्। धर्मः रक्षितो रक्षकं रक्षति। यः धर्महानिं करोति धर्मोऽपि तं नाशयति।

## (ङ) धर्मशास्त्रस्योत्पत्तिः विकाशश्च

धर्मस्य मूलं वेद एव। स च वेदः सर्वासां विद्यानां मूलभूतः। वेदवृक्षमाश्रित्य सर्वाणि

शास्त्राणि प्रभवन्ति। तस्यैव वेदस्य षडङ्गानि सन्ति। एतेषु वेदाङ्गेषु कल्पभागे एव धर्मशास्त्रस्यान्तर्भावः। अतः कल्पभागादेव धर्मशास्त्रस्योत्पत्तिः समभूत्। कल्पसूत्रं चतुर्विधं—

1. श्रौतसूत्रं, 2. शुल्बसूत्रं, 3. धर्मसूत्रं, 4. गृह्यसूत्रञ्चेति। महाभारत-रामायणादिषु मनूक्त-धर्मशास्त्रस्य बहूनि प्रमाणवचनानि दृश्यन्ते। पतञ्जलेः व्याकरणमहाभाष्येऽपि धर्मशास्त्रीय-ग्रन्थानामुदाहरणानि इतस्तत उद्धृतानि। सर्वे वेदगताः विषयाः धर्मशास्त्रेऽस्मिन् प्रतिपादिताः। वेदस्तु 1. कर्मकाण्ड-2. ज्ञानकाण्ड-भेदेन द्विधा विभज्यते। वेदेषु विवाह-वर्णाश्रम-पुत्रभेद-उत्तराधि-कारिनिर्णय-धनविभाग-श्राद्धादिविषयकाः बहवः प्रसङ्गा उपलभ्यन्ते। ते प्रसङ्गाश्च कालक्रमेण धर्मशास्त्रस्य विषयीभूताः। प्राधान्येन धर्मप्रतिपादकान्येव शास्त्राणि स्मृतिपदेनोच्यन्ते। याज्ञवल्क्यस्य चतुर्दशविद्याव्याख्यानावसरे विष्णुपुराणे धनुर्वेदायुर्वेदादीनामपि विद्यात्वं स्वीकृत्याष्टादशत्वं साधयति। यथा—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश।।
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः।
अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव ताः।।

## (च) धर्मशास्त्रवाङ्मयस्य परिचयः

श्रुत्यनुमापकत्वेन प्रमाणभूतस्य धर्मशास्त्रस्य निखिलाः विषयाः सामान्यतः त्रिधा विभज्यन्ते। धर्मस्य वेद-स्मृति-सदाचारात्मतुष्ट्यादि लक्षणानि। तस्यैव धर्मवृषस्य त्रयः पादाः। ते च—1. आचारः, 2. व्यवहारः, 3. प्रायश्चित्त-काण्डत्रयरूपाः। अतः धर्मशास्त्रस्य विषयाः—1. आचारः, 2. व्यवहारः, 3. प्रायश्चित्तभेदैः विभज्यन्ते। स्मार्त्तधर्मः धर्मशास्त्रस्य विषयीभूतः। वर्णाश्रमधर्म-षोडशसंस्कार-गार्हस्थ्यधर्म-पञ्चमहायज्ञ-भक्ष्याभक्ष्यनिरूपण-द्रव्यशुद्धि-जनन-मरणाशौचनिरूपण-श्राद्ध-राजधर्म-ऋणादानाद्यष्टादशव्यवहारपद-आपद्धर्मप्रकरण-प्रायश्चित्त-निरूपण-कृच्छ्रचान्द्रायण- व्रतोत्सर्ग-प्रतिष्ठा-तीर्थयात्रादयः विषयाः धर्मशास्त्रे सन्निविष्टाः। अत एव धर्मस्य तत्त्वं मानवस्य समग्रजीवनमभिव्याप्योपदिष्टम्।

## (छ) धर्मसूत्रस्य परिचयः

धर्मसूत्रं वेदाङ्गभूतस्य कल्पसूत्रस्यांगविशेषः। धर्मसूत्राणि वेदैः सह संपृक्तत्वाद् वैदिकशाखासु प्रामाणिकतया व्यवह्रियन्ते स्म। धर्मसूत्राण्यपि बहूनि रचितानि सन्ति। तेषु गौतम-आपस्तम्ब-बौधायन-वशिष्ठ-विष्णु-हारीत-शंखलिखित-वैखानस-हिरण्यकेशिप्रभृतीनां धर्मसूत्राणि प्रमुखानि। धर्मसूत्रस्य मुख्यप्रतिपाद्यविषयो भवति मनुष्यजीवनस्याचारकर्त्तव्ययोर्वर्णनम्। प्राचीनधर्मसूत्राणां कालः 500 ई.पू. तः 100 ई.पू. मध्ये निश्चीयते। धर्मसूत्रे मुख्यतः वर्णानामाश्रमाणाञ्च नियमाः, द्विजानां दैनिककृत्यं, गृह्ययज्ञः, पाकयज्ञः, गर्भाधान-पुंसवनादयः षोडशसंस्काराः, ब्रह्मचारि-स्नातकादीनां नियमाः, मधुपर्कः, श्राद्धकर्म, धर्मस्योपादेयता, वर्णधर्माः, वर्णानां जीवनवृत्तयः, आश्रमधर्माः, जाति-अनुलोम-प्रतिलोम-वर्णसंकरधर्माः, सपिण्डसगोत्रादिनिरूपणं, पाप-प्रायश्चित्त-व्रत-अशौचादि, प्रमाणानि, ऋणादानादीनि विवादपदानि, राजधर्मः, स्त्रीपुंधर्मः, पुत्रभेदाः, उत्तराधिकारादयश्च विषयाः वर्णिताः।

## (ज) धर्मशास्त्रकाराणां संक्षिप्तपरिचयः

| क्र. सं. | धर्मशास्त्रकाराः | कृतयः( ग्रन्थाः ) | समयः ( कालः ) |
|---|---|---|---|
| 1. | (सूत्रकाराः) गौतमः | गौतमधर्मसूत्रम् | 600 खी. पूर्व-400 खी. पूर्व |
| 2. | वौधायनः | बौधायनधर्मसूत्रम् | 500खी. पूर्व-200खी. पूर्व |
| 3. | आपस्तम्बः | आपस्तम्बधर्मसूत्रम् | 600खी. पूर्व-300खी. पूर्व |
| 4. | वशिष्ठः | वशिष्ठधर्मसूत्रम् | 300खी. पूर्व-100खी. पूर्व |
| 5. | विष्णुः | विष्णुधर्मसूत्रम् | 300खी. पूर्व-100खी. पूर्व |
| 6. | हारीतः | हारीतधर्मसूत्रम् | 500खी. पूर्व-300खी. पूर्व |
| 7. | शङ्खलिखितौ | शङ्खलिखितधर्मसूत्रम् | 300खी. पूर्व-100खी. पूर्व |
| 8. | देवलः | देवलधर्मसूत्रम् | खी. पू. 200 तः परः |
| 9. | हिरण्यकेशी | हिरण्यकेशिधर्मसूत्रम् | 100 खी. 300खी. |
| 10. | वैखानसः | वैखानसधर्मसूत्रम् | 400 खीष्टपरः |
| 11. | (स्मृतिकाराः) मनुः | मनुस्मृतिः | 300खी. पूर्व. 100खी- पूर्व |
| 12. | याज्ञवल्क्यः | याज्ञवल्क्यस्मृतिः | 100खी. पूर्व. 100खी-पूर्व |
| 13. | शङ्खः | शङ्खस्मृतिः | 300खी. पूर्व. 100खी-पूर्व |
| 14. | लिखितः | लिखितस्मृतिः | 300खी. पूर्व. 100खी-पूर्व |
| 15. | कात्यायनः | कात्यायनस्मृतिः | 100खी. पूर्व. 100खी-पूर्व |
| 16. | अङ्गिराः | अङ्गिरास्मृतिः | 100खी. पूर्व. 100खी-पूर्व |
| 17. | दक्षः | दक्षस्मृतिः | 100खी. पूर्व. 100खी-पूर्व |
| 18. | पराशरः | पराशरस्मृतिः | 100खी. पूर्व. 100खी-पूर्व |
| 19. | नारदः | नारदस्मृतिः | 100खी. पूर्व. 300खी-पूर्व |
| 20. | बृहस्पतिः | बृहस्पतिस्मृतिः | 100 खी. |
| 21. | व्यासः | व्यासस्मृतिः | 100खी. पूर्व. 300खी-पूर्व |
| 22. | हारीतः | हारीतस्मृतिः | 100 खी- |
| 23. | संवर्त्तः | संवर्त्तस्मृतिः | 100 खी- |
| 24. | अत्रिः | अत्रिस्मृतिः | 100 खी- |
| 25. | शातातपः | शातातपस्मृतिः | 100 खी- |
| 26. | उशनाः | उशनास्मृतिः | 100 खी- |
| 27. | पैठीनसिः | पैठीनसिस्मृतिः | 100 खी- |
| 28. | जतूकर्ण्यः | जतूकर्ण्यस्मृतिः | 100 खी- |
| 29. | पुलस्त्यः | पुलस्त्यस्मृतिः | 400खी-700खी. |
| 30. | पितामहः | पितामहस्मृतिः | 400खी-700खी. |

क्रमशः .............

| क्र. सं. | धर्मशास्त्रकाराः | कृतयः( ग्रन्थाः ) | समयः ( कालः ) |
|---|---|---|---|
| 31. | (भाष्यनिबन्धकाराः) असहायः | नारदस्मृतेः भाष्यम्, मनुस्मृतेः भाष्यम्, गौतमधर्मसूत्रभाष्यम्, | 700खी–750खी. |
| 32. | भर्त्तृयज्ञः | गौतमधर्मसूत्रभाष्यम्, कात्यायनश्रौत्रसूत्रे भाष्यम् | 800खी–850खी. |
| 33. | विश्वरूपः | याज्ञवल्क्यस्मृतेः बालक्रीडा, विश्वरूपसमुच्चयः | 800खी–825खी. |
| 34. | मेधातिथिः | मनुभाष्यम् | 825खी. 900खी. |
| 35. | भारुचिः | मनुस्मृतिटीका, विष्णुधर्मसूत्रटीका | 900खी. 1000खी. |
| 36. | श्रीकरः | धर्मनिबन्धः | 800खी. 900खी. |
| 37. | धारेश्वरभोजदेवः | सरस्वतीकण्ठाभरणम्, शृङ्गारप्रकाशः, राजमृगाङ्कः, भू ालपद्धतिः, भुजबल-निबन्धः, तत्त्वप्रकाशः | 950खी. 1062खी. |
| 38. | देवस्वामी | आश्वलायनश्रौतसूत्रम् गृह्यसूत्रभाष्यम्, स्मृतिसमुच्चयः | 1000खी. 1100खी. |
| 39. | जितेन्द्रियः | व्यवहारविधिः | 1000खी.–1100खी. |
| 40. | शतानन्दमिश्रः | शतानन्दसंग्रहः, भास्वती, शतानन्दरत्नमाला, | 1000खी.– 1100खी. |
| 41. | बालरूपः | निबन्धग्रन्थः | 1000खी.– 1100खी. |
| 42. | योग्लोकः | बृहद्योग्लोकः, स्वल्पयोग्लोकः, | 1000खी.– 1050खी. |
| 43. | कामधेनुः | निबन्धग्रन्थः | 1050खी.– 1100खी. |
| 44. | बल्लालसेनः | आचारसागरः, प्रतिष्ठासागरः, दानसागरः, अद्भुतसागरः | 1000खी.– 1175खी. |
| 45. | बालकः | व्यवहारनिबन्धः | 1100खी.– 1150खी. |
| 46. | प्रकाशः | महार्णवप्रकाशः | 1100खी.– 1150खी. |
| 47. | परिजातः | निबन्धग्रन्थः | 1100खी.– 1150खी. |
| 48. | विज्ञानेश्वरः | याज्ञवल्क्यस्मृतौ मिता-क्षराटीका, अशौचदशकश्च | 1050खी.– 1120खी. |



क्रमशः ..............

| क्र. सं. | धर्मशास्त्रकाराः | कृतयः( ग्रन्थाः ) | समयः ( कालः ) |
|---|---|---|---|
| 49. | गोविन्दराजः | मनुस्मृतौ मनुटीका, स्मृतिमञ्जरी च। | 1050खी.- 1100खी. |
| 50. | भवदेवभट्टः | व्यवहारतिलकम्, कर्मानुष्ठानद्धतिः, प्रायश्चित्तनिरूपणम्, तौतातितमततिलकञ्च | 1100खी.-1150खी. |
| 51. | अपरार्कः | याज्ञवल्क्यस्मृतौ अपरार्क-धर्मनिबन्धः | 1125खी . 1200खी |
| 52. | प्रदीपः | निबन्धग्रन्थः | 1100खी . 1150खी |
| 53. | कविकान्तसरस्वती | विश्वादर्शः | 1100खी . 1150खी |
| 54. | लक्ष्मीधरः | कृत्यकल्पतरुः | 1100खी . 1150खी |
| 55. | जीमूतवाहनः | धर्मरत्नम् | 1125खी . 1200खी |
| 56. | हलायुधः | ब्राह्मणसर्वस्वम्, वैष्णवसर्वस्वम्, पण्डितसर्वस्वम्, कर्मोपदेशिनी च। | 1150खी . 1200खी |
| 57. | हरिहरः | व्यवहारोपरि निबन्धः, पारस्करगृह्यसूत्रभाष्यम् | 1150खी . 1250खी |
| 58. | श्रीधरः | स्मृत्यर्थसारः | 1150खी . 1200खी |
| 59. | अनिरुद्धभट्टः | दानसागरः, हारलता-पितृदयिता च | 1150खी . 1200खी |
| 60. | देवणभट्टः | स्मृतिचन्द्रिका | 1160खी . 1225खी |
| 61. | हेमाद्रिः | चतुर्वर्गचिन्तामणिः, शौनकप्रणवकल्पभाष्यम्, कात्यायनीयश्राद्धकल्पश्च। | 1200खी . 1300खी |
| 62. | कुल्लूकभट्टः | मनुस्मृतौ मन्वर्थमुक्ता-वलीटीका, स्मृतिसागरश्च | 1200खी . 1300खी |
| 63. | श्रीदत्तोपाध्यायः | आचारादर्शः, पितृभक्तिः छन्दोगाह्निकं, श्राद्धकल्पः, समयप्रदीपश्च | 1200खी . 1313खी |
| 64. | शम्भुकरमिश्रवाजपेयी | श्राद्धपद्धतिः, विवाहपद्धतिः, स्मार्त्तरत्नावली, शम्भुकरपद्धतिश्च। | 1260खी . 1330खी |

क्रमशः ..............

| क्र. सं. | धर्मशास्त्रकाराः | कृतयः( ग्रन्थाः ) | समयः ( कालः ) |
|---|---|---|---|
| 65. | विद्याकरमिश्रवाजपेयी | नित्याचारप्रदीपः, क्रम-दीपिका, दिनकृत्यदीपिका, मोक्षपरीक्षा च। | 1285खी . 1350खी |
| 66. | अल्लाडनाथसूरिः | निर्णयामृतम् | 1250खी . 1500खी |
| 67. | हरिनाथः | स्मृतिसारः | 1300खी . 1400खी |
| 68. | माधवाचार्यः | कालमाधवः, सर्वदर्शन-संग्रहः, पराशरमाधवीय-टीका, जैमिनीयन्याय-मालाविस्तरादयः। | 1296खी . 1386खी |
| 69. | चण्डेश्वरः | स्मृतिरत्नाकरः, कृत्यचिन्तामणिः, राजनीतिरत्नाकरः, शिववाक्या-वलिः, दशवाक्यावलिश्च। | 1300खी . 1370खी |
| 70. | मदनपालः | मदनपारिजातः, स्मृतिमहार्णवः, तिथिनिर्णयसारः, स्मृतिकौमुदी, सूर्यसिद्धान्तविवेकः, मदन-विनोदनिघण्टुः, आनन्द-संजीवनश्च। | 1300खी . 1400खी |
| 71. | शूलपाणिः | याज्ञवल्क्यस्मृतौ दीपकलिका-टीका, स्मृतिविवेकः | 1350खी . 1450खी |
| 72. | विद्यापतिः | वर्षकृत्यम्, दानवाक्यावली, विभागसागरः | 1360खी . 1448खी |
| 73. | मदनसिंहः | मदनरत्नम्, मदनरत्नप्रदीपश्च | 1350खी-1500खी |
| 74. | बृहस्पतिः | कृत्यकौमुदी | 1400खी-1500खी |
| 75. | हरदत्तः | आपस्तम्बधर्मसूत्रे उज्ज्वलाटीका, गौतमधर्मसूत्रे मिताक्षराटीका, आपस्तम्बगृह्यसूत्रे अनाकुलाटीका, आश्वलायनगृह्यसूत्रे अनाविलाटीका, आपस्तम्बमन्त्रपाठभाष्यञ्च | 1400खी . 1500खी |
| 76. | पृथ्वीचन्द्रः | पृथ्वीचन्द्रोदयः | 1400खी . 1500खी |
| 77. | मिसरुमिश्रः | विवादचन्द्रः, पदार्थचन्द्रिका, | 1400खी . 1450खी |
| 78. | रुद्रधरः | शुद्धिविवेकः, श्राद्धविवेकः, वर्षकृत्यञ्च, | 1425खी . 1475खी |
| 79. | वाचस्पतिमिश्रः | तिथिनिर्णयः, विवादनिर्णयः, द्वैतनिर्णयः, महादाननिर्णयः, | 1425खी . 1540खी |



क्रमशः ..............

| क्र. सं. | धर्मशास्त्रकाराः | कृतयः( ग्रन्थाः ) | समयः ( कालः ) |
|---|---|---|---|
| | | शुद्धिनिर्णयः, आचारचिन्तामणिः, शुद्धिचिन्तामणिः, कृत्यचिन्तामणिः, तीर्थचिन्तामणिः, तिथिचिन्तामणिः, द्वैतचिन्तामणिः, सम्बन्धचिन्तामणिः, विवादचिन्तामणिः, नीतिचिन्तामणिः, व्यवहारचिन्तामणिः, शूद्राचार-चिन्तामणिः, आह्निकचिन्तामणिः, श्राद्धचिन्तामणिः, कृत्यमहार्णवः | |
| 80. | वर्द्धमानः | दण्डविवेकः | 1425खी . 1500खी |
| 81. | नृसिंहप्रसादः | नृसिंहप्रसादः | 1430खी . 1530खी |
| 82. | प्रतापरुद्रदेवः | सरस्वतीविलासः | 1460खी . 1550खी |
| 83. | गोदावरमिश्रः | नीतिचिन्तामणि, आचारचिन्ता-मणिः, जयचिन्तामणिः | 1460खी . 1590खी |
| 84. | अचलद्विवेदी | निर्णयदीपकः, आह्निकदीपकः | 1450खी . 1550खी |
| 85. | श्रीनाथाचार्यचूडामणिः | कृत्यतत्त्वार्णवः, गूढार्थदीपिका, श्राद्धदीपिका, विवेकार्णवः, शुद्धितत्त्वार्णवः, विवाहतत्त्वार्णवः, आचारचन्द्रिका, श्राद्धचन्द्रिका, दानचन्द्रिका, दुर्गोत्सवविवेकः, शुद्धिविवेकः, नारायणकृत-छन्दोग्यकृत्यं, परिशिष्टस्य सारमञ्जरी, तिथिविवेकस्य तात्पर्यदीपिका, जीमूतवाहनस्य दायभागटीका। | पञ्चदशशताब्दी |
| 86. | गोविन्दानन्दः | दानक्रियाकौमुदी, श्राद्धक्रियाकौमुदी, शुद्धिक्रियाकौमुदी, वर्षक्रियाकौमुदी, श्रीनिवासकृत-शुद्धिदीपिकाभाष्यम्, शूलपाणिकृतप्रायश्चित्तविवेके तत्त्वार्थकौमुदीटीका च | 15500खी 1560खी |
| 87. | महेश्वरः | माधवप्रकाशः, | |
| | | | 1500खी . 1581खी |
| 88. | टोडरमल्लः | टोडरानन्दः | |
| | | | 1490खी . 1570खी |
| 89. | रघुनन्दनः | स्मृतितत्त्वम्, गयाश्राद्धपद्धतिः, तीर्थतत्त्वम्, रासयात्रापद्धतिः, त्रिपुष्करशान्तितत्त्वम्, | |

क्रमशः ...............

| क्र. सं. | धर्मशास्त्रकाराः | कृतयः( ग्रन्थाः ) | समयः ( कालः ) |
|---|---|---|---|
| | | द्वादशयात्रातत्त्वम्, जीमूतवाहनकृत-दायभागोपरि टीका | |
| 90. | नरायणभट्टः | अन्त्येष्टिपद्धतिः, प्रयोगरत्नम्, त्रिस्थलीसेतुः, तिथिनिर्णयश्च। | 1513खी . 1600खी |
| 91. | नरसिंहमिश्रवाजपेयी | चयनप्रदीपः, भक्तिप्रदीपः, वर्षप्रदीपः, प्रायश्चित्तप्रदीपः, श्राद्धप्रदीपः, प्रतिष्ठाप्रदीपः, शावरभाष्यप्रदीपः, शान्तिप्रदीपः, समयप्रदीपः, व्यवस्थाप्रदीपः, नित्याचारप्रदीपः | 1520खी . 1580खी |
| 92. | खण्डेरायः | परशुरामप्रकाशः, | 1400खी . 1600खी |
| 93. | विश्वनाथमिश्रः | स्मृतिसारसंग्रहः | 1550खी . 1600खी |
| 94. | नन्दपण्डितः | विज्ञानेश्वरकृतमिताक्षरायां प्रमिताक्षराटीका, विष्णुधर्मसूत्रे केशववैजयन्तीटीका, पराशरस्मृतौ विद्वन्मनोहराटीका, श्राद्धकल्पलता, शुद्धिचन्द्रिका, दत्तकमीमांसा च। | 1560खी . 1630खी |
| 95. | वरदराजः | व्यवहारनिर्णयः | 1550खी . 1620खी |
| 96. | भट्टरामः | अनूपविवेकः, अमृतमञ्जरी | 1550खी . 1625खी |
| 97. | कमलाकरभट्टः | निर्णयसिन्धुः, शान्तिरत्नम्, दानकमलाकरः, पूर्तकमलाकरः, व्रतकमलाकरः, प्रायश्चित्तरत्नम्, विवादताण्डवः, बह्वृचाह्निकम्, गोत्रप्रवरदर्पणः, कर्मविपाकरत्नम्, शूद्रकमलाकरः, सर्वतीर्थविधिश्च। | 1570खी . 1640खी |
| 98. | नागोजिभट्टः | आचारेन्दुशेखरः, प्रायश्चित्तेन्दुशेखरः, तीर्थेन्दुशेखरः, श्राद्धेन्दुशेखरः, प्रायश्चित्तसारसंग्रहः, सापिण्ड्यनिर्णयः, अशौचनिर्णयः, सपिण्डमञ्जरी च। | 1575खी . 1675खी |
| 99. | लक्ष्मणभट्टः | आचाररत्नम्, गोत्रप्रवररत्नम्, द्वैतनिर्णयश्च। | 1580खी . 1640खी |
| 100. | मणिरामदीक्षितः | अनूपविलासः, गयायात्राप्रयोगादयश्च, | 1600खी . 1700खी |

क्रमशः ..........

| क्र. सं. | धर्मशास्त्रकाराः | कृतयः( ग्रन्थाः ) | समयः ( कालः ) |
|---|---|---|---|
| 101. | विप्रमिश्रः | श्राद्धप्रदीपः, | 1600खी . 1650खी |
| 102. | विश्वम्भरत्रिवेदी | स्मृतिसारोद्धारः | 1600खी . 1650खी |
| 103. | भट्टोजिदीक्षितः | धर्मशास्त्रसर्वस्वम्, तिथिनिर्णयः, प्रायश्चित्तनिर्णयः, आचार-प्रदीपादयश्च। | 1600खी . 1650खी |
| 104. | दिवाकरभट्टः | कालनिर्णयचन्द्रिका, आचारार्कः, तिथ्यर्कः, आह्निकचन्द्रिका | 1600खी . 1680खी |
| 105. | नीलकण्ठभट्टः | भगवन्तभास्करः, व्यवहारतत्त्वम्, दत्तकनिर्णयश्च। | 1600खी . 1680खी |
| 106. | मित्रमिश्रः | वीरमित्रोदयः, याज्ञवल्क्यस्मृतौ-वीरमित्रोदयटीका च। | 1600खी . 1650खी |
| 107. | दिव्यसिंहमहापात्रः | कालदीपः, श्राद्धदीपश्च। | सप्तदशशताब्दी |
| 108. | शङ्करभट्टः | व्रतार्कः, सदाचारसंग्रहः, कर्मविपाकादय। | 1620खी . 1675खी |
| 109. | गदाधरराजगुरुः | गदाधरपद्धतिः | 1650खी . 1735खी |
| 110. | रघुनाथदासः | कालनिर्णयः, श्राद्धनिर्णयश्च | 1685खी . 1775खी |
| 111. | अनन्तदेवः | स्मृतिकौस्तुभः, | 1670खी . 1700खी |
| 112. | दिवाकरभट्टः | श्राद्धसुधानिधिः | 1686खी खीष्टाब्दात्परम् |
| 113. | गोपालन्यायपञ्चाननः | तिथिनिर्णयः, आचारनिर्णयः, श्राद्धनिर्णयादयः। | 1683खीष्टाब्दात्परम् |
| 114. | जगन्नाथतर्कपञ्चाननः | विवादभङ्गार्णवः | 1615खी . 1805खी |
| 115. | काशीनाथोपाध्यायः | धर्मसिन्धुः, (धर्माब्धिसारः) प्रायश्चित्तशेखरादयः। | 1730खी . 1805खी |
| 116. | कृष्णमिश्रः | कालसर्वस्वं, शुद्धिसर्वस्वं, भक्तिसर्वस्वादयः | 1746खी . 1826खी |
| 117. | बालकृष्णभट्टः | विज्ञानेश्वरकृतमिताक्षरायां बालम्भटीगोत्रनिर्णयः, तिथिनिर्णयादयः | 1740खी . 1830खी |
| 118. | त्र्यम्बकभट्टः | आचारेन्दुः, प्रतिष्ठेन्दुः, आशौचनिर्णयादयः। | 1760खी . 1850खी |
| 119. | पं. कुलमणिमिश्रः | धर्मशास्त्रकोशः, पारस्करगृह्यसूत्रे मार्गदर्शिनीटीका, वसिष्ठस्मृतौ तत्त्वप्रकाशिकाटीका, गौतमधर्मसूत्रे सूक्ष्माटीका, कालदीपे तेजनीटीका, दर्शदीपिकायां वर्त्तिकाटीका च। | 1918खी . 1990खी |

## ( झ ) एकादशीव्रतविवरणी

| एकादशीनाम | तिथिः | विशेषकृत्य | विशेषफल | विहितविधान |
|---|---|---|---|---|
| 1. पापमोहिनी | चैत्रकृष्ण एकादशी | जितेन्द्रिय | पापानांमुक्तिः | विभिन्नपुराणम् |
| 2. कामदा | चैत्रशुक्ल एकादशी | जपहवनपाठादि | कामनायाः पूर्तिः | पुराणस्मृतौ |
| 3. वरुथनी | वैशाख कृष्ण एकादशी | निद्रात्यागादि | अनन्तशान्तिः | विभिन्नस्मृतिः |
| 4. मोहिनी | वैशाख शुक्ल एकादशी | मूर्तिपार्श्वे रात्रि-शयनम् | मोहजालात् मुक्तिः | कूर्मपुराणम् |
| 5. अचला/ अपरा | ज्येष्ठकृष्ण एकादशी | फलाहारैव करणम् | परा-पापात् मुक्तिः | ब्रह्माण्डपुराणम् |
| 6. निर्जला | ज्येष्ठशुक्ल एकादशी | निर्जलैव | आरोग्य-वृद्धिः | महाभारत |
| 7. योगिनी | आषाढ़ कृष्ण एकादशी | रात्रि-जागरणम् | कुष्ठादि विमुक्तिः | ब्रह्मवैवर्तपुराणम् |
| 8. देवशयनी | आषाढ़शुक्ल एकादशी | रुचि-स्वादयोः त्यजनम् | मनोकामनायाः पूर्तिः | भविष्योत्तर |
| 9. कामिका | श्रावणकृष्ण एकादशी | मानसिकतपः | अनन्तफलप्राप्तिः | ब्रह्मवैवर्तपुराणम् |
| 10. पवित्रा | श्रावणशुक्ल एकादशी | भजनकीर्तनम् | संतानबाधामुक्तिः | भविष्यपुराणम् |
| 11. अजा | भाद्र कृष्ण एकादशी | कर्मकाण्डकरणम् | पुनर्जन्मात् मुक्तिः | ब्रह्मवैवर्तपुराणम् |
| 12. पद्मा | भाद्रशुक्ल एकादशी | लक्ष्म्याः पूजनम् | अभीष्ट-सिद्धिः | ब्रह्माण्डपुराणम् |
| 13. इंदिरा | आश्विनकृष्ण एकादशी | शालिग्रामपूजनम् | पितृणां सद्गतिः | ब्रह्मवैवर्तपुराणम् |
| 14. पापांकुशा | आश्विनशुक्ल एकादशी | दिने विष्णुपूजनम् | पापवृद्धोपरिविराम | पद्मपुराणम् |
| 15. रंभा/रमा | कार्तिक कृष्ण एकादशी | केशवपूजनम् | दिव्यसुखप्राप्तिः | ब्रह्मवैवर्तपुराणम् |
| 16. देवोत्थान | कार्तिक शुक्ल एकादशी | भगवतःरथयात्रा | ज्ञानस्य प्राप्तिः | वाराहपुराणम् |
| 17. उत्पन्ना | मार्गशीर्ष कृष्ण एकादशी | फलभोगः | दैविकतापात् मुक्तिः | भविष्योत्तर |
| 18. मोक्षदा | मार्गशीर्षशुक्ल एकादशी | गीतापाठः | मोक्षप्रति उन्मुखता | ब्रह्मांडपुराणम् |
| 19. सफला | पौष कृष्ण एकादशी | रात्रिजागरणम्, कीर्तनम् | बाधानिराकरणम् | पद्मपुराणम् |
| 20. पुत्रदा | पौषशुक्ल एकादशी | विष्णु-पूजनम्. | पुत्रप्राप्तिः | ब्रह्मवैवर्तपुराणम् |
| 21. षट्तिला | माघ कृष्ण एकादशी | तिलसेवनम् | सद्गतिप्राप्तिः | हेमाद्री |
| 22. जया | माघशुक्ल एकादशी | कृष्णस्य गंधित-पूजनम् | पिशाचपराजयः | पद्मपुराणम् |
| 23. विजया | फाल्गुन कृष्णएकादशी | दिन-रात्रिकीर्तनम् | व्रत्याःजयः | स्कंदपुराणम् |
| 24. आमलकी | फाल्गुनशुक्ल एकादशी | आंवलावृक्षपूजनम् | जटिलपापात् मुक्तिः | ब्रह्माण्डपुराणम् |

## (ञ) प्रमुखव्रतानि-

| व्रतम् | तिथिः | धर्मग्रन्थः | व्रतम् | तिथिः | धर्मग्रन्थः |
|---|---|---|---|---|---|
| गौरीव्रतम् | चैत्रकृष्णप्रतिपदा | व्रतविज्ञान | नागव्रतम् | कार्तिकशुक्ल 4 | कूर्मपुराण |
| भवानीव्रतम् | चैत्रशुक्लाष्टमी | भविष्यपुराण | नवमीव्रतम् | कार्तिकशु.9 | देवीपुराण |
| मातृकाव्रतम् | चैत्रशुक्लनवमी | विष्णुधर्म | भीष्मपंचक | कार्तिकशु.11 | पद्मपुराण |
| कामदेवव्रतम् | वैशाखशुक्ल-13 | मदनरत्न | गौरीतपव्रतम् | मार्गशीर्ष अमावास्या | अंगिरा |
| वटसावित्री | ज्येष्ठ अमावस्या | निर्णयामृत | यमव्रतम् | माघशुक्ल 4 | हेमाद्रि |
| स्कंद षष्ठी | आषाढ़शुक्लषष्ठी | वराहपुराणम् | जानकीव्रतम् | फाल्गुनकृष्ण 8 | निर्णयसिन्धु |
| पापनाशिनी | श्रावणशुक्लसप्तमी | हेमाद्रि | पयोव्रतम् | फाल्गुनशु01 12 | श्रीमद्भागवत |
| मंगलागौरी | श्रावणे प्रतिमंगलवार | व्रतराज | मधुकतृतीया | फाल्गुनशु03 | पुराणसमुच्चय |
| कज्जलीतृतीया | भाद्रपदकृष्णतृतीया | कृत्यरत्नावली | अविघ्नकर-व्रतम् | फाल्गुनशु04 | वाराहपुराण |
| पुत्रव्रतम् | भाद्रपदकृष्णसप्तमी | वाराहपुराण | महेश्वरव्रतम् | फाल्गुनशु014 | विष्णु धर्मोत्तर |
| उमा-महेश्वरव्रत | भाद्रपदकृष्णाष्टमी | हेमाद्रि | वृषदानव्रतम् | फाल्गुनशु014 | वीरमित्रोदय |
| हरितालिका | भाद्रपदकृष्णतृतीया | भविष्योत्तर | सर्वार्तिहरव्रतम् | फाल्गुनशु014 | सनत्कुमार-संहिता |
| दशावतारव्रतम् | भाद्रपदशुक्लदशमी | भविष्योत्तर | होली | चैत्रकृष्ण 1 | |
| अनन्तव्रतम् | भाद्रपदशुक्लचतुदर्शी | स्कंन्द-ब्रह्मपुराण | रामनवमी | चैत्रशु० 9 | |
| जीवित्पुत्रिकाव्रतम् | आश्विनकृष्णाष्टमी | हेमाद्रि | अक्षयतृतीया | वैशाखशु०3 | |
| पुत्रप्राप्तिव्रतम् | आश्विनशुक्लएकादशी | भविष्योत्तर | रक्षाबन्धन | श्रावणपूर्णिमा | |
| कोजागराव्रतम् | आश्विन पूर्णिमा | कृत्यनिर्णय | जन्माष्टमी | भाद्रपदकृ०8 | |
| राधाष्टमी- | भाद्रशुक्लाष्टमी | छठ | कार्तिक शुक्ल 6 | शारदीयनवरात्र | आश्विनशुक्ल 1-9 |
| विजयादशमी- | आश्विनशुक्ल 10 | मौनी अमावास्या | माघ अमावास्या | करवाचौथ | कार्तिककृष्ण 4 |
| शरत्पूर्णिमा | आश्विन अमावास्या | महाशिवरात्रि | फाल्गुनकृष्ण 14 | धनतेरस | कार्तिककृष्ण 13 |
| दीपावली | कार्तिक अमावास्या | होलिकादहन | फाल्गुन पूर्णिमा | चित्रगुप्तपूजा | कार्तिकशुक्ल 2 |
| अन्नकूट | कार्तिक शुक्ल-प्रतिपदा | पितृपक्ष | आश्विनकृष्ण 1-15 | वसंतपञ्चमी | माघशुकल 5 |
| भैयादूज | कार्तिक शुक्ल 2 | मातृनवमी | आश्विन-कृष्णनवमी | माघी | मघपूर्णिमा |

## (त) धर्मशास्त्रकर्मकाण्डयोः वस्तुनिष्ठप्रश्नोत्तराणि-

1. प्रश्नः— धर्मशास्त्रे कति श्लोकाः सन्ति?
   उत्तरम्— लक्षम् (1,00,000)
2. प्रश्नः— ब्रह्मा कस्मै धर्मशास्त्रम् उपदिष्टवान्?
   उत्तरम्— स्वायम्भुवमनवे।
3. प्रश्नः— मनुस्मृति इति ग्रन्थस्य/प्रवर्त्तकः कः?
   उत्तरम्— स्वायम्भुवमनुः।
4. प्रश्नः— कति अध्यायाः सन्ति मनुस्मृतौ?
   उत्तरम्— 12 द्वादश।
5. प्रश्नः— स्मृतिशास्त्रं किमस्ति?
   उत्तरम्— धर्मशास्त्रम्।
6. प्रश्नः— मनुः कियतः ऋषीन् धर्मशास्त्रं श्रावयामास?
   उत्तरम्— (10) दश।
7. प्रश्नः— प्राचीनाः स्मृतिकाराः कियन्त आसन्?
   उत्तरम्—(21) एकविंशतिः।
8. प्रश्नः— मनुस्मृतिग्रन्थे विचारः कः?
   उत्तरम्— धर्मशास्त्र-सम्बन्धि-विचारः।
9. प्रश्नः— मनुस्मृतिग्रन्थे विवेचितः धर्मः कः?
   उत्तरम्— श्रुतिप्रमाणको धर्मः।
10. प्रश्नः— गोविन्दराजस्य धर्मलक्षणं किम्?
    उत्तरम्— वेदविद्भिरनुष्ठितः संशयरहितश्च धर्मः।
11. प्रश्नः— संस्काराः कति सन्ति, येषु मुख्याः संस्काराः कति सन्ति?
    उत्तरम्— 48 संस्काराः, 16 षोडश मुख्याः संस्काराः।
12. प्रश्नः— प्रथम-श्राद्धाधिकारी कः भवति?
    उत्तरम्— ज्येष्ठपुत्रः।
13. प्रश्नः— स्मृति-कल्पतरु इत्यस्य लेखकः कः?
    उत्तरम्— भक्तहलायुधः।
14. प्रश्नः— धर्मस्य लक्षकः कोऽस्ति?
    उत्तरम्— वेदः-स्मृतिः।
15. प्रश्नः— वेदः अखिल-धर्मस्य मूलोऽस्ति इति कस्य कथनम्?
    उत्तरम्—मनुमहोदयस्य।
16. प्रश्नः— प्रथम-स्मृतिकारः कोऽस्ति?
    उत्तरम्— मनुः।
17. प्रश्नः— नान्दी-श्राद्धः कस्मिन् समये भवति?
    उत्तरम्— उपनयनादि-समये।

18. प्रश्नः— अशौचस्य पूर्णावधिः कियत् काल-पर्यन्तं भवति?
उत्तरम्— एक-मासपर्यन्तम्।
19. प्रश्नः— सर्वोत्तमः विवाहः कोऽस्ति?
उत्तरम्— ब्राह्म-विवाहः।
20. प्रश्नः— सपिण्डतायाः निवृत्तिः कदा भवति?
उत्तरम्— (8) अष्टपुरुषे।
21. प्रश्नः— धर्मशास्त्रे कति आश्रमाः स्वीकृता सन्ति?
उत्तरम्—चत्वारः, 1. ब्रह्मचर्याश्रमः, 2. गृहस्थाश्रमः, 3. वानप्रस्थाश्रमः, 4. संन्यासाश्रमः।
22. प्रश्नः— मनुस्मृतौ के अष्ट-प्रकारकाः विवाहाः स्वीकृताः?
उत्तरम्—1. ब्राह्म, 2. प्राजापत्यः, 3. आर्षः, 4. दैवः, 5. गान्धर्वः, 6. आसुरः, 7. पैशाचः, 8. राक्षसः।
23. प्रश्नः— कति महापातकाः भवन्ति?
उत्तरम्— (5) पञ्च।
24. प्रश्नः— मानवजातेः आदि-पुरुषः कः?
उत्तरम्— मनुः।
25. प्रश्नः— धर्मसूत्रम् इत्यस्य रचनाकारः कः?
उत्तरम्— वशिष्ठः।
26. प्रश्नः— सामाजिक-व्यवस्थामाधृत्य प्राचीनभारतस्य कानि त्रीणि ऋणानि?
उत्तरम्—1. पितृऋणम्, 2. ऋषिऋणम्, 3. देवऋणम्।
27. प्रश्नः— मनुस्मृति ग्रन्थे कति अध्यायाः सन्ति?
उत्तरम्— (12) द्वादश अध्यायाः।
28. प्रश्नः— कति उपस्मृतिग्रन्थाः सन्ति?
उत्तरम्— (16) षोडश।
29. प्रश्नः— मनुस्मृतौ धर्मस्य लक्षणं कतिविधं निर्दिष्टम्?
उत्तरम्— (10) दशविधम्।
30. प्रश्नः— कति सन्ति स्मृति-ग्रन्थाः?
उत्तरम्—1. महर्षि याज्ञवल्क्यानुसारम्-20 विंशतिः, 2. भविष्यपुराणानुसारम्-33 त्रयस्त्रिंशत्, 3. भगवान् मनु अनुसारम्-18 अष्टादश।
31. प्रश्नः— स्मृतिग्रन्थेषु "कस्य" महती प्रसिद्धि?
उत्तरम्— मनुस्मृतेः।
32. प्रश्नः— चातुर्वर्ण्ये पञ्चसामान्यधर्मा इमे—
उत्तरम्—अहिंसा, अस्तेयम्, सत्यम्, शौचं, इन्द्रियनिग्रहः।
33. प्रश्नः— प्रसिद्धेषु धर्मसूत्रेषु इदमप्येकम्—
उत्तरम्— आपस्तम्बः।

34. प्रश्नः— वैश्यस्त्रियां क्षत्रियादुत्पन्नमपत्यं किमिति कथयन्ति?
उत्तरम्— माहिष्यः।
35. प्रश्नः— वैश्यस्त्रियां ब्राह्मणादुत्पन्नं सन्तानं किमिति उच्यते?
उत्तरम्— अम्बष्ठः।
36. प्रश्नः— षोडशसंस्कारेषु कः सप्तमः संस्कारः?
उत्तरम्— अन्नप्राशनम्।
37. प्रश्नः— गृहस्थैः क्रियमाणेषु पञ्चयज्ञेषु अयमन्यतमः—
उत्तरम्— बलिवैश्वदेवयज्ञः।
38. प्रश्नः— विवाहः कतिविधः स्मृतिग्रन्थेषु प्रतिपादितः?
उत्तरम्— अष्टविधः।
39. प्रश्नः— "धर्म एव ततो हन्ति धर्मो रक्षति रक्षितः" इयमुक्तिः कुत्रोपलभ्यते?
उत्तरम्— मनुस्मृतौ।
40. प्रश्नः— ब्रह्मा कस्मै धर्मशास्त्रम् उपदिष्टवान्?
उत्तरम्— स्वायम्भुवमनवे।
41. प्रश्नः— ब्राह्मणानामुपनयनकालाः कति सन्ति?
उत्तरम्— (3) त्रयः।
42. प्रश्नः— धर्मशास्त्रानुसारं विवाहः कतिविधः?
उत्तरम्— (8) अष्टविधः।
43. प्रश्नः— नीतयः कतिविधाः?
उत्तरम्— (4) चतुर्विधाः।
44. प्रश्नः— स्मृत्यनुसारं राज्यानां कियन्ति अङ्गानि?
उत्तरम्— 7 सप्त।
45. प्रश्नः— मनुस्मृतिग्रन्थस्य प्रथमेऽध्याये विचार कः?
उत्तरम्— विश्वसृष्टिसम्बन्धि-विचारः।
46. प्रश्नः— धर्मस्य प्रतिपाद्यविषयः कस्मिन् अध्याये वर्तते?
उत्तरम्— द्वितीयेऽध्याये।
47. प्रश्नः— मनुस्मृतेः तृतीयाध्यायस्य विवेच्यविषयः कः?
उत्तरम्— समावर्तक-संस्कारः।
48. प्रश्नः— मनुस्मृतेः चतुर्थाध्यायस्य विवेच्यविषयः कः?
उत्तरम्— जीविकायाः नियमः।
49. प्रश्नः— मनुस्मृतेः पञ्चमाध्यायस्य विवेच्यविषयः कः?
उत्तरम्— स्त्रीधर्मयोगः।
50. प्रश्नः— मनुस्मृतेः षष्ठाध्यायस्य विवेच्यविषयः कः?
उत्तरम्— वानप्रस्थ-संन्यासादिधर्मः।

51. प्रश्नः— मनुस्मृतेः सप्तमाऽध्यायस्य प्रधानविषयः कः वर्तते?
उत्तरम्— राजधर्मः।
52. प्रश्नः— मनुस्मृतेः अष्टमाध्यायस्य मुख्यविषयः कः?
उत्तरम्— नीतिपरकज्ञानम्।
53. प्रश्नः— मनुस्मृतेः नवमाऽध्यायस्य मुख्यविषयः कः?
उत्तरम्— स्त्रीपुरुषसंयोगवियोगस्य नित्यधर्मः।
54. प्रश्नः—मनुस्मृतौ ब्राह्मणादिवर्णानां विशेषाधिकारकर्त्तव्यवर्णनं कस्मिन् अध्याये अस्ति?
उत्तरम्— दशमेऽध्याये।
55. प्रश्नः— मनुस्मृतौ एकादशाध्यायस्य विवेच्यविषयः कः?
उत्तरम्— प्रायश्चित्तविधिः।
56. प्रश्नः— मनुस्मृतौ वेदस्तुतिः कस्मिन् अध्याये विद्यते?
उत्तरम्— द्वादशेऽध्याये।
57. प्रश्नः— मनुस्मृतौ दशमाऽध्यायस्य विवेच्यविषयः कः?
उत्तरम्— वैश्यशूद्रोपचार-धर्मानुष्ठानम्।
58. प्रश्नः— मनुस्मृतौ द्वादशाध्यायस्य विवेच्यविषयः कः?
उत्तरम्— त्रिविधकर्मणां गुण-दोष-विवेचनम्।
59. प्रश्नः—याज्ञवल्क्यस्मृतौ कियन्ति काण्डानि, कानि च तानि?
उत्तरम्—3 त्रीणि काण्डानि, 1. आचारः, 2. व्यवहारः, 3. प्रायश्चित्तम्।
60. प्रश्नः— शुक्ल-यजुर्वेदेन सम्बद्धा स्मृतिः का?
उत्तरम्— याज्ञवल्क्यस्मृतिः।
61. प्रश्नः—याज्ञवल्क्यस्मृतेः चतुर्दशविद्यानां चर्चा कस्मिन् काण्डे अस्ति?
उत्तरम्— प्रथमे काण्डे।
62. प्रश्नः— स्मृत्यनुसारं कति महायज्ञाः?
उत्तरम्— (5) पञ्च।
63. प्रश्नः— स्मृत्यनुसारं सदाचारस्य कियन्तो नियमाः?
उत्तरम्— (10) दश नियमाः।
64. प्रश्नः— याज्ञवल्क्यस्मृतेः द्वितीयखण्डे कस्य सम्बन्धिविचारः प्राप्यते?
उत्तरम्— धर्मशास्त्र-अर्थशास्त्रयोः।
65. प्रश्नः—याज्ञवल्क्यस्मृतौ कतिविधाः पुत्राः वर्णिताः?
उत्तरम्— (12) द्वादशविधाः।
66. प्रश्नः— स्मृत्यनुसारं नरकाः कतिविधाः?
उत्तरम्— (21) एकविंशतिविधाः।
67. प्रश्नः— स्मृत्यनुसारं महापातकानि कानि?
उत्तरम्— (5) पञ्च।

68. प्रश्नः— आचारादर्शस्य लेखकः कः?
उत्तरम्— श्रीदत्तोपाध्यायः।
69. प्रश्नः— "कृत्यसारसमुच्चयः" अस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— म. म. अमृतनाथ झा।
70. प्रश्नः— "तिथिनिर्णयः" इत्यस्य लेखकः कः?
उत्तरम्— म. म. रुज्जे मिश्रः।
71. प्रश्नः— "तिथितत्त्वचिन्तामणिः" अस्य ग्रन्थस्य लेखकः कः?
उत्तरम्— म. म. महेशठक्कुरः।
71. प्रश्नः— वाचस्पतिमिश्ररचितधर्मशास्त्रग्रन्थः कः?
उत्तरम्— तिथिनिर्णयः।
72. प्रश्नः— तिथिचन्द्रिकायाः रचनाकारः कः?
उत्तरम्— पक्षधरमिश्रः।
73. प्रश्नः— निर्णयसिन्धोः इत्यस्य लेखकः कः?
उत्तरम्— कमलाकरभट्टः।
74. प्रश्नः— दण्डः कं विनाशयति?
उत्तरम्— धर्मभ्रष्टनृपम्।
75. प्रश्नः— दूतः किं करोति?
उत्तरम्— सन्धिकार्यम्।
76. प्रश्नः— पुराणानां संख्या का?
उत्तरम्— अष्टादश।
77. प्रश्नः— पिता कन्यां कस्मिन् समये रक्षति?
उत्तरम्— बाल्ये।
78. प्रश्नः— पुत्रेषु कः सर्वश्रेष्ठः?
उत्तरम्— गूढोत्पन्नः।
79. प्रश्नः— विनयात् ब्राह्मणत्वं कः प्राप्तवान्?
उत्तरम्— पृथुः।
80. प्रश्नः— राज्ञः गुणानां संख्या कति?
उत्तरम्— षट्।
81. प्रश्नः— भवति दायादबान्धवानां संख्या का?
उत्तरम्— चतस्रः।
82. प्रश्नः— कः पुंनाम नरकात् पितरं त्रायते?
उत्तरम्— पुत्रः।
83. प्रश्नः— प्रजापालनं कः करोति?
उत्तरम्— राजा।

84. प्रश्नः— श्रुतयः कतिविधः, के च ते?
उत्तरम्— द्विविधः, 1. वैदिकी, 2. तान्त्रिकी च।

85. प्रश्नः— मनस्मृतेः मतानुसारं कतिप्रकारकाः दण्डः भवन्ति?
उत्तरम्— चतुःप्रकारकाः।

86. प्रश्नः— धर्मशास्त्रानुसारं कति दुर्गाणि सन्ति?
उत्तरम्— (3) त्रीणि।

87. प्रश्नः— मनुमतानुसारं कति विद्याः भवन्ति?
उत्तरम्— चतस्रः।

88. प्रश्नः— धर्मविषये किं प्रमाणम्?
उत्तरम्— मन्वादीनां च वेदविदां स्मृतिधर्मे प्रमाणम्।

89. प्रश्नः— गर्गानुसारेण धर्मविषये किं प्रमाणम्?
उत्तरम्— वैकल्पिकेः आत्मतुष्टिः प्रमाणम्।

90. प्रश्नः— कः धर्मः अनुष्ठेयः?
उत्तरम्— श्रुति-स्मृत्युदितं धर्ममनुतिष्ठेत्।

91. प्रश्नः— मनुमतानुसारम् अग्नि, वायु, सूर्य, चन्द्रमा, यम, कुवेर, वरुण, महेन्द्रादिप्रभृति कः भवति?
उत्तरम्— राजा।

92. प्रश्नः— स्मृतिग्रन्थे कतिविधो धर्मः प्रतिपादितः? के च ते?
उत्तरम्—षड्विधो धर्मः प्रतिपादितः, 1. वर्णधर्मः, 2. आश्रमधर्मो, 3. वर्णाश्रमधर्मो, 4. गुणधर्मो, 5. निमित्तधर्मः 6. सामान्यधर्मश्चेति।

93. प्रश्नः—मीमांसा-वार्तिककार-कुमारिलभट्टः स्ववार्तिके धर्मप्रमाणे कं प्रमाणं मण्डयति?
उत्तरम्— प्रत्यक्षप्रमाणम्।

94. प्रश्नः— "चोदनालक्षणोऽर्थो धर्मः" इति कस्य लक्षणम्?
उत्तरम्— धर्मस्य।

95. प्रश्नः— मनुस्मृतौ वेदविषये किमुक्तमस्ति?
उत्तरम्— वेदोऽखिलो धर्ममूलम्।

96. प्रश्नः— धर्मस्यार्थः किम्?
उत्तरम्—धार्यते-अवलम्बते-पाल्यते इति वा धर्मः।

97. प्रश्नः— मनुस्मृतौ धर्मस्य का परिभाषा?
उत्तरम्—श्रुतिप्रमाणको धर्मः।

98. प्रश्नः— स्मृतिकारानुसारेण धर्मस्य कानि स्वरूपाणि, कानि च तानि?
उत्तरम्—(5) पञ्च, 1. वर्णधर्मः, 2. आश्रमधर्मः, 3. वर्णाश्रमधर्मः, 4. नैमित्तिकधर्मः, 5. गुणधर्मश्च।

99. प्रश्नः— नैमित्तिकधर्मः कः भवति?
उत्तरम्—प्रायश्चित्त-विधानम्।

100. प्रश्नः— गुणधर्मः कः भवति?
उत्तरम्—अभिषिक्त-राज्ञः संरक्षणात्मकः।
101. प्रश्नः— भगवान् इति शब्दस्य कोऽर्थः?
उत्तरम्— समग्रैश्वर्यवान्। ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः।
ज्ञान-वैराग्ययोश्चैव षण्णां भग इतीरणाः।।
इति विष्णुपुराणे उक्तम्, मतुबन्तेन संबोधनं भगवन्निति।
102. प्रश्नः—स्मृतिकारानुसारेण धर्मस्य किम् दश-लक्षणम्?
उत्तरम्—धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।।
103. प्रश्नः— वेदानां देवता काः?
उत्तरम्— अग्नेर्ऋग्वेदः, वायोर्यजुर्वेदः, 3. आदित्यात्सामवेदः।
104. प्रश्नः-- के दश प्रजापतयः?
उत्तरम्—1. मरीचि, 2. अत्रिः, 3. अङ्गिरः, 4. पुलस्त्यः, 5. पुलहः, 6. क्रतुः, 7. प्रचेतसः, 8. वसिष्ठः, 9. भृगुः, 10. नारदः इति दश प्रजापतयः।
105. प्रश्नः— स्मृतिकारानुसारेण कालनिर्णयस्य समीक्षा का?
उत्तरम्— मनुष्याणां मासः, पितृणां अहोरात्रः, मनुष्याणां वर्षः-देवानां दिवारात्रिः, 1. सतयुगस्य चत्वारि वर्षसहस्राणि-ब्राह्मणाः(तपः), 2. त्रेतायाः-त्रीणि वर्षसहस्राणि-क्षत्रिय (आत्मज्ञानम्) 3. द्वापरस्य-द्वे वर्षसहस्रे-वैश्यः(यज्ञः), 4. कलियुगस्य-वर्षसहस्रम्-शूद्रः (दानम्)।
106. प्रश्नः— स्मृतिग्रन्थे ब्रह्मोत्पत्तिविषये किं कथनम्?
उत्तरम्— तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।
तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः।। 9।।
107. प्रश्नः—स्मृतिग्रन्थे ब्रह्मस्वरूपविषये किं कथनम्?
उत्तरम्—यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम्।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते।।
108. प्रश्नः— कानि पञ्च ज्ञानेन्द्रियाणि?
उत्तरम्—!. श्रोत्रः, 2. त्वक्, 3. चक्षुः, 4. जिह्वा, 5. नासिकाश्च।
109. प्रश्नः— कानि पञ्च कर्मेन्द्रियाणि?
उत्तरम्—1. पायु(गुदा), 2. उपस्थ(शिश्न/योनी), 3. हस्त, 4. पाद, 5. वाणी।
110. प्रश्नः— स्मृतिग्रन्थे ब्राह्मणेषु कथं ब्रह्मवेदिनः श्रेष्ठः?
उत्तरम्— ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः।
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनः।।
111. प्रश्नः— स्मृत्यनुसारं प्रधानधर्मः कः?
उत्तरम्—आचारः परमो धर्मः।

112. प्रश्नः— धर्मस्य सामान्यलक्षणं किम्?
उत्तरम्— विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत।।

113. प्रश्नः— श्रुतिशब्देन गृह्यन्ते / बुध्यन्ते?
उत्तरम्— (4) चत्वारो वेदाः।

114. प्रश्नः— स्मृतिशब्देन किं ज्ञेयम्?
उत्तरम्— धर्मशास्त्रम्।

115. प्रश्नः— कः वेदनिन्दकः?
उत्तरम्— नास्तिको वेदनिन्दकः।

116. प्रश्नः— धर्मस्य साक्षात् लक्षणं किम्?
उत्तरम्— वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्।। मनु- 2/12।।

117. प्रश्नः— धर्मस्य कति प्रमाणानि, कानि च तानि?
उत्तरम्— चत्वारि प्रमाणानि, 1. वेदः, 2. स्मृतिः, 3. सदाचारः, 4. प्रियमात्मनः।

118. प्रश्नः— मनुस्मृतौ आर्यावर्तस्य का सीमा वर्णिताऽस्ति?
उत्तरम्— आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात्।
तयोरेवान्तरं गिर्योरार्यावर्त्तं विदुर्बुधाः।। मनु- 2/22।।

119. प्रश्नः— मनुस्मृतौ ब्राह्मणस्य उपनयन-संस्कारस्य उत्कृष्टसमयः कः?
उत्तरम्— गर्भाष्टमवर्षः। गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः।। मनु-2/36।।

120. प्रश्नः— ब्रह्मचारिणं प्रथमां भिक्षां का ददाति?
उत्तरम्— माता, मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम्।
भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत्।। मनु- 2/50।।

121. प्रश्नः— पूर्वाभिमुखभोजनेन किं फलं प्राप्नोति?
उत्तरम्— आयुः।

122. प्रश्नः— दक्षिणाभिमुखभोजनेन किं फलं प्राप्नोति ?
उत्तरम्—यशः।

123. प्रश्नः— पश्चिमाभिमुखभोजनेन किं फलं प्राप्नोति ?
उत्तरम्— श्रियम् (धनम्)।

124. प्रश्नः— उत्तराभिमुखभोजनेन किं फलं प्राप्नोति ?
उत्तरम्— सत्यस्य-इच्छाम्।

125. प्रश्नः— स्त्रीणां वैदिक-संस्कारः कदा भवति?
उत्तरम्— विवाहसमये।

126. प्रश्नः— कः प्रणवः?
उत्तरम्— (अ उ म्) ॐ।

127. प्रश्नः— मौनात् किं विशिष्यते?
उत्तरम्— सत्यम्।
128. प्रश्नः— "परं ब्रह्म" इत्यनेन किं ज्ञायते?
उत्तरम्— एकाक्षरमोंकारः।
129. प्रश्नः— परं तपः कः?
उत्तरम्— प्राणायामः।
130. प्रश्नः— मन्त्रेषु श्रेष्ठः कः?
उत्तरम्— गायत्री-मन्त्रः।
131. प्रश्नः— केन नित्यवन्दनेन पापनाशो भवति?
उत्तरम्— सन्ध्यावन्दनेन।
132. प्रश्नः— अभिवादन-शीलस्य कानि चत्वारि वर्धन्ते?
उत्तरम्— आयुर्विद्यायशोबलम्।
133. प्रश्नः— कानि मान्य-(सम्मान) स्थानानि?
उत्तरम्— (5) पञ्च, 1. धनम्, 2. कुटुम्बः, 3. आयुः, 4. कर्म, 5. विद्या।
134. प्रश्नः— मनुस्मृतौ कः आचार्यः कथितः?
उत्तरम्— उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते।। मनु- 2/140।।
135. प्रश्नः— मनुस्मृत्यनुसारं कः उपाध्यायः?
उत्तरम्—एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते।। मनु- 2/141।।
136. प्रश्नः— मनुस्मृतौ अध्यापकस्य का प्रशंसा?
उत्तरम्— य आवृणोत्यवितथं ब्राह्मणा श्रवणावुभौ।
स माता स पिता ज्ञेयस्तं न द्रुह्येत्कदाचन।। मनु- 2/144।।
137. प्रश्नः— मनुस्मृतौ गुरुनिन्दाश्रवणनिषेधविषये किं कथितम्?
उत्तरम्— गुरोर्यत्र परीवादो निन्दा वाऽपि प्रवर्तते।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः।। मनु- 2/200।।
138. प्रश्नः— मनुस्मृतौ गुरुशुश्रूषाफलं किम्?
उत्तरम्—यथा खनन्खनित्रेण नरो वार्यधिगच्छति।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति।। मनु- 2/218।।
139. प्रश्नः— त्रिवर्गस्य (धर्मार्थकाम) अनुकूलतया किं भवति?
उत्तरम्— कल्याणं भवति।
140. प्रश्नः— मनुस्मृतौ अष्टविवाहप्रकाराः के सन्ति?
उत्तरम्— 1. ब्राह्मः 2. दैवः 3. आर्षः 4. प्राजापत्यः 5. आसुरः 6. गान्धर्वः 7. राक्षसः 8. पैशाच इति अष्टौ।

141. प्रश्नः— अतिथिपूजनेन किं प्राप्नोति?

उत्तरम्— 1. धनम्, 2. यशः, 3. आयुः, 4. स्वर्गम्।

142. प्रश्नः— पिण्डान्वाहार्यकश्राद्धः कस्मिन् तिथौ भवति?

उत्तरम्— अमावास्यायाम्।

143. प्रश्नः— पुण्यार्थाय कान् भोजयेत्?

उत्तरम्— मातामहं मातुलं च स्वस्त्रीयं श्वशुरं गुरुम्।
दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत्।। मनु- 3/148।।

144. प्रश्नः— के सर्वे नरकं यान्ति?

उत्तरम्— परिवित्तिः परिवेत्ता यथा च परिविद्यते।
सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः।। मनु-3/172।।

145. प्रश्नः— ऋषिभ्यः के जाताः?

उत्तरम्— पितरः।

146. प्रश्नः— पितृभ्यो के जाताः?

उत्तरम्— देवमानवाः।

147. प्रश्नः— देवेभ्यो के जाताः?

उत्तरम्— चराचरसम्पूर्णजगत्।

148. प्रश्नः— श्राद्धे कानि श्रावयेत्?

उत्तरम्— स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैव हि।
आख्यानानीतिहासांश्च पुराणान्यखिलानि च।। मनु- 3/232।।

149. प्रश्नः— धर्मशास्त्रग्रन्थानां निर्माणकालः कः?

उत्तरम्— ईसवी पूर्व-600-300।

150. प्रश्नः— के सन्ति अष्टादश-मुख्य-स्मृतिकाराः?

उत्तरम्—1. मनुः, 2. दक्षः, 3. वृहस्पतिः, 4. गौतमः, 5. यमः, 6. अंगिरा, 7. योगीश्वरः, 8. प्रचेता, 9. शातातपः, 10, पराशरः, 11. संवर्तः, 12. उशना, 13. शंखः, 14. लिखितः, 15. अत्रिः, 16. विष्णुः, 17. आपस्तम्बः, 18. हारीतः।

151. प्रश्नः— रामायण-महाभारत-पुराणादि-ग्रन्थेषु कस्य महत्त्वपूर्णं योगदानं वर्तते?

उत्तरम्— धर्मशास्त्रस्य।

152. प्रश्नः— के सन्ति प्रमुखाः "धर्मसूत्र"रचनाकाराः?

उत्तरम्— नव 1. गौतमः, 2. वशिष्ठः, 3. शंखः, 4. गोभिलः, 5. आपस्तम्बः, 6. बौधायनः, 7. विष्णुः, 8. हारीतः, 9. मनुः।

153. प्रश्नः— प्राचीनधर्मसूत्रकारः कः?

उत्तरम्— गौतमः।

154. प्रश्नः— बौधायनः कस्य वेदस्य आचार्यः?

उत्तरम्— कृष्णयजुर्वेदस्य।

155. प्रश्नः— धर्मशास्त्रान्तर्गतमेव राजनीति-लक्षणमर्थशास्त्रं किम्?
उत्तरम्— कौटिल्य-अर्थशास्त्रम्।
156. प्रश्नः— कौटिल्य-अर्थशास्त्रे कति अधिकरणानि?
उत्तरम्— (15) पञ्चदश।
157. प्रश्नः— कौटिल्य-अर्थशास्त्रे कति अध्यायाः सन्ति?
उत्तरम्— (150) पञ्चाशताधिकशतम्।
158. प्रश्नः— के सन्ति अष्टादश-उपस्मृतिकाराः?
उत्तरम्— 1. नारदः, 2. पुलहः, 3. गार्ग्यः, 4. पुलस्त्यः, 5. शौनकः, 6. क्रतुः, 7. बौधायनः, 8. जातुकर्णः, 9. विश्वामित्रः, 10. पितामहः, 11. जाबालिः, 12. नचिकेता, 13. स्कन्धः, 14. लौगाक्षिः, 15. कश्यपः, 16. व्यासः, 17. सनत्कुमारः, 18. शन्तनुर्जनकः।
159. प्रश्नः— के सन्ति एकविंशति-अन्य-स्मृतिकाराः?
उत्तरम्— वशिष्ठो नारदश्चैव सुमन्तुश्च पितामहः।
विष्णुः कार्ष्णाजिनिः सत्यव्रतो गार्ग्यश्च देवलः।।
जमदग्निर्भरद्वाजः पुलस्त्यः पुलहः क्रतुः।
आत्रेयश्च गवेयश्च मरीचिर्वत्स एव च।।
पारस्करश्चर्ष्यशृङ्गो वैजवापस्तथैव च।
इत्येते स्मृतिकर्तार एकविंशतिरीरिताः।।
160. प्रश्नः— मनुस्मृति-ग्रन्थस्य सर्वप्रथम-मुद्रणं कदा अभूत्?
उत्तरम्— 1813 ईसवीये कोलकातायाम्।
161. प्रश्नः— मनुस्मृतौ कति श्लोकाः सन्ति?
उत्तरम्— 2694 श्लोकाः। (चतुर्नवत्याधिकषड्विंशतिशतम्)
162. प्रश्नः— सम्पूर्ण-याज्ञवल्क्यस्मृतिः कस्मिन् छन्दसि विद्यते?
उत्तरम्— अनुष्टुप् छन्दे।
163. प्रश्नः— पराशरस्मृतौ कति अध्यायाः श्लोकाश्च सन्ति?
उत्तरम्— (12) द्वादश अध्यायाः, 593श्लोकाश्च सन्ति।
164. प्रश्नः— कात्यायनस्मृतौ कति श्लोकाः सन्ति?
उत्तरम्— 900 श्लोकाः।
165. प्रश्नः— अङ्गिरास्मृतौ कति श्लोकाः सन्ति?
उत्तरम्— 72 श्लोकाः सन्ति।
166. प्रश्नः— यमस्मृतौ कति श्लोकाः सन्ति?
उत्तरम्— 78 श्लोकाः सन्ति।
167. प्रश्नः— वंगाले धर्मशास्त्रस्य त्रिदेवाः के?
उत्तरम्— 1. जीमूतवाहन, 2. शूलपाणि, 3. रघुनन्दन।
168. प्रश्नः— वृत्त्यनुसारं ब्राह्मणानां के दश-प्रकाराः सन्ति?
उत्तरम्— 1. देव-ब्राह्मणः, 2. मुनि-ब्राह्मणः, 3. द्विज-ब्राह्मणः, 4. क्षत्र-ब्राह्मणः,

5. वैश्य-ब्राह्मणः, 6. शूद्र-ब्राह्मणः, 7. निषाद-ब्राह्मणः, 8. पशु-ब्राह्मणः, 9. म्लेच्छ-ब्राह्मणः, 10. चाण्डाल-ब्राह्मणः।

169. प्रश्नः— भारते दासप्रथायाः विरुद्ध-नियमः कदा स्वीकृतः?
उत्तरम्— सन् 1843 तमे वर्षे।

170. प्रश्नः— महर्षि-गौतममते संस्काराणां का संख्या निर्धारिता?
उत्तरम्— (40) चत्वारिंशत्।

171. प्रश्नः— मनुमतानुसारं धर्मस्य महत्त्वं किम्?
उत्तरम्— यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात्।
आयुर्विप्रापवादेन दानं च परिकीर्तनात्।।

172. प्रश्नः— के सन्ति पञ्चमहायज्ञाः?
उत्तरम्— 1. ब्रह्मयज्ञः, 2. पितृयज्ञः, 3. देवयज्ञः, 4. नृयज्ञः, 5. भूतयज्ञः।

173. प्रश्नः— कः ब्रह्मयज्ञः?
उत्तरम्— अध्ययनम्-अध्यापनं च ब्रह्मयज्ञः।

174. प्रश्नः— कः पितृयज्ञः?
उत्तरम्— "अन्नाद्येनोदकेन वा" इति तर्पणं वक्ष्यति, सः पितृयज्ञः।

175. प्रश्नः— कः देवयज्ञः?
उत्तरम्— अग्नौ होमो वक्ष्यमाणो देवयज्ञः।

176. प्रश्नः— कः मनुष्ययज्ञः?
उत्तरम्— अतिथिपूजनं मनुष्ययज्ञः।

177. प्रश्नः— कः भूतयज्ञः?
उत्तरम्— भूतबलिः भूतयज्ञः।

178. प्रश्नः— के सन्ति सप्तर्षयः?
उत्तरम्—1. मरीचिः, 2. अंगिरा, 3. अत्रिः, 4. पुलस्त्यः, 5. पुलहः, 6. क्रतुः, 7. वशिष्ठः।

179. प्रश्नः— सप्तसमुद्राः के सन्ति?
उत्तरम्—1. क्षीरसागरः, 2. लवणसागरः, 3. दधिसागरः, 4. घृतसागरः, 5. मद्यसागरः, 6. इक्षुसागरः, 7. स्वादुसागरः।

180. प्रश्नः— कानि सप्तधान्यानि?
उत्तरम्—1. कङ्गु, 2. मुद्गल, 3. तिलः, 4. भव (कोण) 5. धान्यम्, 6. चणक, 7. माषः।

181. प्रश्नः— कानि पञ्चरत्नानि?
उत्तरम्—1. स्वर्ण, 2. हीरकं, 3. मौक्तिकं, 4. पद्मरागः, 5. नीलरागः।

182. प्रश्नः— के पञ्चवायवः?
उत्तरम्— 1. प्राणः, 2. अपानः, 3. व्यानः, 4. उदानः, 5. समानः।

183. प्रश्नः— के पञ्चमहायज्ञाः?
उत्तरम्— 1. ब्रह्मयज्ञः, 2. देवयज्ञः, 3. अतिथियज्ञः, 4. पितृयज्ञः, 5. भूतयज्ञः।

184. प्रश्नः— के पञ्चोपचाराः?

उत्तरम्—1. गंधः, 2. पुष्पम्, 3. धूपम्, 4. दीपम्, 5. नैवेद्यम्।

185. प्रश्नः— के पञ्चवृक्षाः?

उत्तरम्—1. आम्र, 2. जम्बू, 3. कपित्थ, 4. वट, 5. बिल्वः।

186. प्रश्नः— के पञ्चदेवता?

उत्तरम्—1. दुर्गा, 2. गणेशः, 3. सूर्यः, 4. विष्णुः, 5. शिवः।

187. प्रश्नः— के त्रयोऽग्नयः?

उत्तरम्—1. दक्षिणाग्निः, 2. गार्हपत्याग्निः, 3. आहवनीयाग्निः।

188. प्रश्नः— जपस्य भेदत्रयी का?

उत्तरम्— वाचिकजपः 2. उपांशुजपः 3. मानसिकजपः।

189. प्रश्नः— के अष्टगन्धाः?

उत्तरम्— 1. अगर, 2. तगर, 3. चन्दन, 4. कस्तूरी, 5. देवदारू, 6. लालचन्दन, 7. कुडम, 8. केसर।

190. प्रश्नः— के सन्ति षोडशोपचाराः?

उत्तरम्—1. पाद्यम्, 2. अर्घ्यः, 3. आचमनं, 4. स्नानं, 5. वस्त्रम्, 6. आभूषणम्, 7. गन्धः, 8. पुष्पम्, 9. धूपः, 10. दीपः, 11. नैवेद्यम्, 12. आचमनम्, 13. ताम्बूलम्, 14. स्तवपाठः, 15. तर्पणम्, 16. नमस्कारः।

191. प्रश्नः— जम्बूद्वीपस्य कानि नववर्षाणि?

उत्तरम्—1. भारतवर्षः, 2. किम्पुरुषवर्षः, 3. हरिवर्षः, 4. कुरुवर्षः, 5. भद्राश्ववर्षः, 6. हिरण्यवर्षः, 7. रम्यवर्षः, 8. केतुमालवर्षः, 9. इलावृतवर्षः।

192. प्रश्नः— के पञ्चोपचाराः सन्ति?

उत्तरम्—1. गन्धम्, 2. पुष्पम्, 3. धूपम्, 4. दीपम्, 5. नैवेद्यः।

193. प्रश्नः— "नवग्रहेषु" आद्यः ग्रहः कः?

उत्तरम्— रविः।

194. प्रश्नः— भगवतः सूर्यनारायणस्य "रथस्य" कति चक्राणि?

उत्तरम्— 1-एकम्।

195. प्रश्नः— मङ्गलदेवतायाः वाहनं किम्?

उत्तरम्— मेषः।

196. प्रश्नः— बुधग्रहस्य वाहनं किम्?

उत्तरम्— सिंहः।

197. प्रश्नः— बृहस्पतेरायुधं किम्?

उत्तरम्— दण्डः।

198. प्रश्नः— कर्मकाण्डेन सम्बद्धं किं सूत्रम्?

उत्तरम्— श्रौतसूत्रम्।

199. प्रश्नः— कः स्मृति-ग्रन्थः विधि-ग्रन्थो मन्यन्ते?
उत्तरम्— मनुस्मृतिग्रन्थः।

200. प्रश्नः— मनुपुत्रः कः?
उत्तरम्— भृगुः।

201. प्रश्नः— कियन्त आश्रमाः, के च ते?
उत्तरम्— चत्वारः-1. ब्रह्मचर्याश्रमः, 2. गृहस्थाश्रमः, 3. वानप्रस्थाश्रमः, 4. संन्यासाश्रमश्च।

202. प्रश्नः— कियन्तः पुरुषार्थाः, के च ते?
उत्तरम्— चत्वारः-1. धर्मः, 2. अर्थः, 3. कामः, 4. मोक्षः।

203. प्रश्नः— धर्मशब्दस्य का व्युत्पत्तिः?
उत्तरम्— धरति लोकान् यद्वा ध्रियते पुण्यात्मभिः यः स धर्मः।

204. प्रश्नः— भारतीय-संस्कृतेः सिद्धान्तः कः?
उत्तरम्— आत्मदर्शनम्।

205. प्रश्नः— को नाम आत्मा?
उत्तरम्— ज्ञानाधिकरणमात्मा।

206. प्रश्नः— आत्मा कतिविधः?
उत्तरम्— द्विविधः-परमात्मा जीवात्मा च।

207. प्रश्नः— वेदे प्रतिपादिता संस्कृतिः का कथ्यते?
उत्तरम्— भारतीया संस्कृतिः।

208. प्रश्नः— भारतीय-संस्कृतेराधारभूता भाषा का?
उत्तरम्— संस्कृतभाषा।

209. प्रश्नः— संस्कृतेः मुख्यमुद्देश्यं किम्?
उत्तरम्— शारीरिक-मानसिक-आत्मशक्तीनां विकासः।

210. प्रश्नः— धर्मेण हीना मानवाः भवन्ति?
उत्तरम्— पशुभिः समानाः भवन्ति।

211. प्रश्नः— विजयस्य मूलं किम्?
उत्तरम्— यतो धर्मस्ततो जयः।

212. प्रश्नः— महाभारतानुसारेण धर्माऽधर्मयोः के लक्षणे स्तः?
उत्तरम्— परोपकारः पुण्याय पापाय परपीडनम्।

213. प्रश्नः— "अर्थमूलौ हि धर्मकौ" सिद्धान्तोऽयं केन प्रतिपादितः?
उत्तरम्— कौटिल्येन।

214. प्रश्नः—कामः कतिविधः, कश्च सः?
उत्तरम्— त्रिविधः-1. सात्त्विकः, 2. राजसः, 3. तामसश्चेति।

215. प्रश्नः—भारतीय-जीवनस्य अन्तिमं लक्ष्यं किम्?
उत्तरम्— मोक्षप्राप्तिः।

216. प्रश्नः— सर्वविध-कामनायाः परित्यागो "मोक्षः" इति केन सूच्यते?
उत्तरम्— श्रुत्या न मोक्षो नभसः पृष्ठे न पाताले न भूतले।
सर्वाशासंक्षये चेतः क्षयो मोक्ष इति श्रुतिः।।
217. प्रश्नः— के नाम संस्काराः?
उत्तरम्— डॉ. राजवली पाण्डेयऽनुसारेण याभिः धार्मिक-क्रियाभिः व्यक्तेः दैहिको मानसिको बौद्धिकश्च परिष्कारो जायते ताः क्रियाः क्रियासम्पादकान्यनुष्ठानानि च संस्कारा उच्यन्ते।
218. प्रश्नः—संस्कार-शब्दस्यार्था भवन्ति?
उत्तरम्— सामान्यरूपेण समस्त-धार्मिककृत्यानि।
219. प्रश्नः—जन्मकालिकः कः संस्कारः?
उत्तरम्— जन्मकालिकः संस्कारो जातकर्मसंस्कार उच्यते।
220. प्रश्नः—नामकरण-संस्कारः कदा भवति?
उत्तरम्—बृहस्पति-मतानुसारेण शिशोर्नामकरणं जन्मनो दशम-द्वादश-त्रयोदश-षोडशैकोनविंश-द्वात्रिंश-दिवसेषु वा भवति।
221. प्रश्नः—शिशोर्निष्क्रमणकालः कः?
उत्तरम्— द्वादशदिवसात्-चतुर्थमासपर्यन्तम्।
222. प्रश्नः— शिशोः सूर्यदर्शनं कदाऽपेक्षितमस्ति?
उत्तरम्— चतुर्थे मासि।
223. प्रश्नः— अन्नप्राशनं कदा कार्यम्?
उत्तरम्— षष्ठे मासि।
224. प्रश्नः— चूडाकरणसंस्कारः कदा कार्यः?
उत्तरम्— प्रथमे तृतीये वा वर्षे।
225. प्रश्नः— कर्णवेधस्य कालः कः?
उत्तरम्— बृहस्पति-मतानुसारेण जन्मनो दशमे द्वादशे षोडशे वा दिवसे।
226. प्रश्नः— विद्यारम्भः संस्कारः कदाऽपेक्षितः?
उत्तरम्— विद्यारम्भसंस्कारो विश्वामित्रस्याऽनुसारेण पञ्चमे वर्षेऽपेक्षितः।
227. प्रश्नः—किन्नाम समावर्तनम्?
उत्तरम्— वेदाध्ययनानन्तरं गुरुकुलात् स्वगृहाऽगमनं समावर्तनम्।
228. प्रश्नः—स्नातकः कतिविधः, कश्च सः?
उत्तरम्—त्रिविधः-1. विद्यास्नातकः, 2. व्रतस्नातकः, 3. विद्याव्रतस्नातकश्च।
229. प्रश्नः—वात्स्यायनस्य कामसूत्राऽनुसारेण प्रत्येकस्याऽऽश्रमस्य कियन्ति वर्षाणि निर्धारितानि सन्ति?
उत्तरम्— (25) पञ्चविंशतिः वर्षाणि निर्धारितानि सन्ति।
230. प्रश्नः—प्राचीनकाले "वेदः" केन नाम्ना प्रथित आसीत्?
उत्तरम्— "श्रुतिः" इति नाम्ना।

231. प्रश्नः— को नाम आचारः?
उत्तरम्— उत्तमो व्यवहार एवाऽऽचारः।
232. प्रश्नः—कः सदाचारः?
उत्तरम्— उत्तमजनानां सतां वा आचारः सदाचारः।
233. प्रश्नः—को नाम शिष्टः?
उत्तरम्— शास्त्रविहिताऽनुशासनेन योऽनुशासितः स शिष्टः।
234. प्रश्नः—विनयशीलो जनः कथं भवति?
उत्तरम्— विद्यया।
235. प्रश्नः—का नाम क्षमा?
उत्तरम्— परेणापकारे कृते तं प्रत्यपकाराऽनाचरणं क्षमा।
236. प्रश्नः—को नाम परोपकारः?
उत्तरम्— स्वार्थं परित्यज्य अन्येषां जनानां प्राणिनां वा हिताय यत् कर्म क्रियते तत्(कर्म) "परोपकारः" कथ्यते।
237. प्रश्नः—"यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवता" इयं भावना कस्मिन् ग्रन्थे प्रकटिता विद्यते?
उत्तरम्— मनुस्मृतौ।
238. प्रश्नः— वैदिक-संस्कृतेरात्मा कः?
उत्तरम्— "विश्वबन्धुत्वभावना।
239. प्रश्नः— वेदशब्दस्यार्थः कः भवति?
उत्तरम्— ज्ञानम्।
240. प्रश्नः— हिन्दु-धर्मे कानि पञ्चमहाव्रतानि?
उत्तरम्— 1. संवत्सरः, 2. रामनवमी, 3. कृष्ण-जन्माष्टमी, 4. शिवरात्रिः, 5. दशावतारः।
241. प्रश्नः—संवत्सरस्य प्रारम्भः कदा भवति?
उत्तरम्— चैत्र-मासे शुक्लपक्षस्य प्रतिपदातिथितः भवति।
242. प्रश्नः— कृष्ण-जन्माष्टमी कदा भवति?
उत्तरम्— भाद्रपदे कृष्णपक्षस्य अष्टम्यां तिथौ भवति।
243. प्रश्नः— शिवरात्रिः कस्मिन् मासे कस्यां च तिथौ भवति?
उत्तरम्— फाल्गुनमासे कृष्णपक्षस्य चतुर्थ्यां तिथौ भवति।
244. प्रश्नः— दशावतारः कस्मिन् मासे कस्यां च तिथौ भवति?
उत्तरम्— भाद्रमासे शुक्लपक्षस्य दशम्यां तिथौ भवति।
245. प्रश्नः— प्रजापतिदक्षस्य पत्नीनाम किम्?
उत्तरम्— वीरणी।
246. प्रश्नः— दक्षप्रजापतेः कति पुत्राः आसन्?
उत्तरम्— दशसहस्रहर्यस्वनामकाः पुत्राः, एवं एकसहस्रशबलाश्वनामकाः पुत्राः आसन्।
247. प्रश्नः— दक्षप्रजापतेः कति आत्मजाः आसन्?
उत्तरम्— (53) त्रिपञ्चाशत् आत्मजाः आसन्।

248. प्रश्नः—प्रजापति-दक्षः धर्मं कतिभ्यः आत्मजेभ्यः दत्तवान्?
उत्तरम्— (10) दशः आत्मजेभ्यः।
249. प्रश्नः— प्रजापति-दक्षः कश्यपाय कति आत्मजान् दत्तवान्?
उत्तरम्— (13) त्रयोदश आत्मजान्।
250. प्रश्नः— प्रजापति-दक्षः चन्द्रमसे कति आत्मजान् दत्तवान्?
उत्तरम्— (27) सप्तविंशतिः।
251. प्रश्नः— प्रजापति-दक्षः पितृभ्यः अग्नये शंकराय कति आत्मजां दत्तवान्?
उत्तरम्— एकां आत्मजां पितृभ्यः, एका आत्मजां अग्नये, एकाम् अत्मजां सती शंकराय।
252. प्रश्नः— रामचरितमानसस्य रचनाकारः कः?
उत्तरम्— तुलसीदासः।
253. प्रश्नः— तुलसीदासस्य जन्मवर्षं कः?
उत्तरम्— 1532 ईसवीं।
254. प्रश्नः— तुलसीदासस्य पितरौ कौ आस्ताम्?
उत्तरम्— माता-हुलसी, पिता-आत्मारामः आस्ताम्।
255. प्रश्नः— तुलसीदासस्य भार्या नाम किम्?
उत्तरम्— रत्नावली।
256. प्रश्नः— धर्मग्रन्थेषु वर्णित-मुख्य-परलोकाः के सन्ति?
उत्तरम्—(5 पञ्च) 1. स्वर्गलोकः, 2. नरकलोकः, 3. पितृलोकः, 4. प्रेतलोकः, 5. पाताललोकः।
257. प्रश्नः—शनैश्चरस्य मातुर्नाम किम्?
उत्तरम्— छाया।
258. प्रश्नः—त्रेतायुगस्य वानरराजसुग्रीवः एवं द्वापरयुगस्य महारथी कर्णः कस्य पुत्रौ स्तः?
उत्तरम्— भगवतः सूर्यस्य।
259. प्रश्नः— वास्तुशास्त्रस्य का परिभाषा?
उत्तरम्— गृहनिर्माणसम्बन्धिसमस्तविषयाणां पारलौकिक-विवेचनमेव वास्तुशास्त्रम्।
260. प्रश्नः—समस्तवेदेषु विवेच्य त्रयीविषयाः के सन्ति?
उत्तरम्— 1. ज्ञानकाण्डम्, 2. उपासनाकाण्डम्, 3. कर्मकाण्डम्।
261. प्रश्नः—चतुर्वेदानां के सन्ति उपवेदाः?
उत्तरम्— 1. ऋग्वेदस्य-आयुर्वेदः, 2. यजुर्वेदस्य-धनुर्वेदः, 3. सामवेदस्य-गान्धर्ववेदः, 4. अथर्ववेदस्य तन्त्रः।
262. प्रश्नः—आरण्यकं किमस्ति? कानि च तानि?
उत्तरम्—अरण्ये भवमध्ययनं मननमेव आरण्यकम्, तच्च (7 सप्त) 1. ऐतरेयम्, 2. शांखायनम्, 3. तैत्तरीयम्, 4. मैत्रायणी, 5. माध्यन्दिनम्, 6. तवल्कारम्, 7. जैमिनीयम्।
263. प्रश्नः— उपनिषद् शब्दस्य कोऽर्थः?
उत्तरम्— "उप-नि-सद्" (समीपे उपवेशनम्) ब्रह्मविद्याप्राप्त्यर्थं गुरोः समीपे उपवेशनं ज्ञानम्।

264. प्रश्नः—न्यायदर्शनानुसारं ईश्वरः कः?
उत्तरम्— परमात्मा एव ईश्वरः, आत्मानः द्वे रूपे स्तः—1. जीवात्मा, 2. परमात्मा च।

265. प्रश्नः— गीतायां मोक्षप्राप्त्यर्थं कानि त्रीणि साधनानि कथ्यन्ते?
उत्तरम्— 1. कर्मयोगः, 2. ज्ञानयोगः, 3. भक्तियोगः।

266. प्रश्नः— कृष्णभक्त-सुरदासस्य जन्म कदा अभूत्?
उत्तरम्— सन् 1478 ईसवीये।

267. प्रश्नः— श्री शंकराचार्यस्य जन्म कदा कस्मिन् स्थाने/परिवारे च अभूत्?
उत्तरम्— 788 ईसवीये, मालावारस्य ब्राह्मणपरिवारे च।

268. प्रश्नः— निर्गुणशाखायाः प्रमुखभक्तस्य कबीरदासस्य जन्म कदा अभूत्?
उत्तरम्— 1398 ईसवी वर्षे।

269. प्रश्नः— स्वामीविवेकानन्दस्य जन्म निधनश्च कदा अभूत्?
उत्तरम्— सन् 1862-4 जुलाई-1902 ईसवीये।

270. प्रश्नः— मीराबाई कस्य पुत्री आसीत्?
उत्तरम्— राठौरस्य रतनसिंहस्य।

271. प्रश्नः— जयन्त-जयन्ती नामिके कस्य आत्मज-आत्मजे आस्ताम्?
उत्तरम्— पुरन्दर-देवराज-इन्द्रस्य।

272. प्रश्नः— धर्मशास्त्रस्य का परिभाषा?
उत्तरम्— धर्मसूत्राणां स्मृतीनां सम्मिलितं रूपमेव धर्मशास्त्रम्।

273. प्रश्नः— कानि प्रमुखानि धर्मसूत्राणि?
उत्तरम्— आपस्तम्बः, वसिष्ठः, बौधायनः, गौतमः, विष्णुः, हारीतः, गोभिलः, खादिरः, कौशिकः।

274. प्रश्नः— कानि प्रमुखानि श्रौतसूत्राणि?
उत्तरम्— बौधायनश्रौतसूत्रम्, आपस्तम्बश्रौतसूत्रम्, कात्यायनश्रौतसूत्रम्, सत्याषाढश्रौतसूत्रम्।

275. प्रश्नः— कानि प्रमुखानि गृह्यादिसूत्राणि?
उत्तरम्—शांखायनगृह्यसूत्रम्, पारस्करगृह्यसूत्रम्, बार्हस्पत्यसूत्रम्, आश्वलायनगृह्यसूत्रम्, वैखानसस्मार्तसूत्रम्, गौतमपितृमेधसूत्रम्, बोधायनपितृमेधसूत्रम्, मानवगृह्यसूत्रम्, काठका गृह्यसूत्रम्, हिरण्यकेशिगृह्यसूत्रम्, भरद्वाजगृह्यसूत्रम् इत्यादयः।

276. प्रश्नः— "अक्षय-तृतीयायाः" व्रतं कदा भवति?
उत्तरम्— वैशाख-मासस्य शुक्लपक्षस्य तृतीयातिथौ।

277. प्रश्नः— "जानकी-नवमी" कदा मन्यते?
उत्तरम्— फाल्गुनमासस्य कृष्णपक्षे नवमी तिथौ।

278. प्रश्नः— (छठ) प्रतिहास षष्ठी व्रतं कदा मन्यते?
उत्तरम्— कार्तिकमासस्य शुक्लपक्षस्य षष्ठ्यां तिथौ।

279. प्रश्नः— हिन्दूधर्मे भक्तिः कतिप्रकारकाः भवति?
उत्तरम्—"नवधा भक्तिः" 1. श्रवणम्, 2. कीर्तनम्, 3. स्मरणम्, 4. पादसेवनम्, 5. अर्चनम्, 6. वन्दनम्, 7. दास्यम्, 8. सख्यम्, 9. आत्मनिवेदनम्।

280. प्रश्नः—"यत्र नार्यस्तु पूज्यन्ते, रमन्ते तत्र देवताः" इदं प्रसिद्ध वचनं कस्य ग्रन्थस्य वर्तते?
उत्तरम्— मनुस्मृतेः।
281. प्रश्नः— शिवस्य औरसपुत्रस्य किं नामं?
उत्तरम्— कार्तिकेयः।
282. प्रश्नः— विष्णोः अवतारस्य का संख्या?
उत्तरम्— 24 चतुर्विंशतिः।
283. प्रश्नः— ब्रह्मणः शक्तिः का कथ्यते?
उत्तरम्— ब्राह्मी।
284. प्रश्नः— महाविद्या सृष्टिक्रमानुसारं कति भागेषु विभज्यते?
उत्तरम्— 10 दश भागेषु।
285. प्रश्नः— कुमारीपूजायाः सम्बन्धः कया उपासनया वर्तते?
उत्तरम्— शक्त्युपासनया।
286. प्रश्नः— "अथातो भक्तिं व्याख्यास्यामः" कस्येदं वचनम्?
उत्तरम्— नारदस्य।
287. प्रश्नः— नचिकेतः कथा कस्मिन् उपनिषदि विद्यते?
उत्तरम्— कठोपनिषदि।
288. प्रश्नः— "विष्णुस्मृतौ" गुरुवारं कथ्यते?
उत्तरम्— जैवः।
289. प्रश्नः— आजीवन-अविवाहिता विद्याध्ययनरता कन्या का कथ्यते?
उत्तरम्— ब्रह्मवादिनी।
290. प्रश्नः— चक्रपूजायाः सम्बन्धः तन्त्रस्य कया विद्यया अस्ति?
उत्तरम्— वामाचारेण।
291. प्रश्नः— तान्त्रिकस्य आदिदेवः कः?
उत्तरम्— शिवः।
292. प्रश्नः— मारण-वशीकरणदिमन्त्राः कस्याम् कोट्यां मन्यन्ते?
उत्तरम्— शाबर-मन्त्रे।
293. प्रश्नः— एकस्मिन् कल्पे कति मन्वन्तराः भवन्ति?
उत्तरम्— 14 चतुर्दश।
294. प्रश्नः— श्रीरामसंवत् कुतः प्रारभ्यते?
उत्तरम्— रावण-विजयतः।
295. प्रश्नः— कियत्समये व्यतीते सति अधिकमासः भवति?
उत्तरम्— 32 माह 16 दिन 4 घड़ी।
296. प्रश्नः— होरायां चतुर्विंशतिः घटिकायां कति प्रहराः भवन्ति?
उत्तरम्— 8 अष्ट प्रहराः।

297. प्रश्नः— यज्ञोपवीते कति डोरकाः भवन्ति?
उत्तरम्— तिस्रः।

298. प्रश्नः— जम्बूद्वीपस्य कति विभागाः कथ्यन्ते?
उत्तरम्— 9 नव।

300. प्रश्नः— सूर्य-पृथिव्योः मध्ये स्थितो लोकः कथ्यते?
उत्तरम्— सूर्याधोलोकः।

301. प्रश्नः— कोणार्क-मन्दिरस्य त्रिभागेषु के सन्ति?
उत्तरम्— 1. विमानः, 2. जगमोहनः, 3. अलंकृतिः।

302. प्रश्नः— "तुलसी-मानस-मन्दिरम्" कुत्र विद्यते?
उत्तरम्— वाराणस्याम्।

303. प्रश्नः— एकादशीव्रतः कस्यां श्रेण्यां आगच्छति?
उत्तरम्— नित्यव्रतश्रेण्याम्।

304. प्रश्नः— प्राजापत्य-व्रतं कतिदिनानां कृते भवति?
उत्तरम्— 12 द्वादश दिनानाम् कृते।

305. प्रश्नः— गोपाष्टमी कस्मिन् दिवसे भवति?
उत्तरम्— कार्तिक-शुक्लाष्टम्याम्।

306. प्रश्नः— दत्तात्रेय जयंती कदा मन्यते?
उत्तरम्— मार्गशीर्ष-कृष्ण-दशमी तिथौ।

307. प्रश्नः— मित्रावरुणयज्ञात् कस्य महर्षेः उत्पत्तिः अभूत्?
उत्तरम्— वशिष्ठस्य।

308. प्रश्नः— मृकुण्डु-मुनेः पुत्रस्य किं नाम?
उत्तरम्— मार्कण्डेयः।

309. प्रश्नः— उपमन्युः इत्यस्य गुरोर्नाम किमासीत्?
उत्तरम्— महर्षिधौम्यः।

310. प्रश्नः— सती सावित्री इत्यस्याः पितुर्नाम किम्?
उत्तरम्— अनुरागेश्वरः।

311. प्रश्नः— सांख्यदर्शनस्य प्रवर्तक-कपिलस्य भगिनी का?
उत्तरम्— अनुसूया।

312. प्रश्नः— मध्वाचार्यस्य मातुर्नाम किमासीत्?
उत्तरम्— वेदवती।

313. प्रश्नः— रामकृष्णपरमहंसः अद्वैतज्ञानं कस्मात् वेदान्तिनः प्राप्नोति?
उत्तरम्— सुकीर्तिवेदान्तिनः।

314. प्रश्नः— गुरुगोविन्दसिंहस्य जन्म कुत्र अभूत्?
उत्तरम्— पाटलिपुत्रे।

5. प्रश्नः— दूरसञ्चारकेन्द्रस्य किम् आदर्शवाक्यम्?
उत्तरम्— अहर्निशं सेवामहे-इति।
6. प्रश्नः— "योऽनूचानः स नो महान्" इति कस्य आदर्शवाक्यमस्ति?
उत्तरम्— राष्ट्रियसंस्कृतसंस्थानस्य।
7. प्रश्नः— "योगक्षेमं वहाम्यहम्" इति आदर्शवाक्यं कुत्र पश्यामः?
उत्तरम्— L.I.C. संस्थायाम्।
8. प्रश्नः— "ज्ञाने सर्वं प्रतिष्ठितम्" इति कस्य आदर्शवाक्यम्?
उत्तरम्— चौखम्बासंकृतप्रतिष्ठानस्य।
9. प्रश्नः— "स्वाध्यायान्न प्रमदितव्यम्" इति आदर्शवाक्यं कस्य?
उत्तरम्— चौखम्बासुरभारती-प्रकाशनस्य।
10. प्रश्नः— भारतीयजलसेना केन वाक्येन स्वादर्शं सूचयति?
उत्तरम्— शं नो वरुणः।
11. प्रश्नः— अशोकचक्रस्याधः किम् आदर्शवाक्यं लिखितं भवति?
उत्तरम्— सत्यमेव जयते।
12. प्रश्नः— संसदः ध्येयवाक्यं किम्?
उत्तरम्— वसुधैव कुटुम्बकम्।

## (ङ) सम्मानः

1. प्रश्नः— भारतस्य सर्वोच्चसम्मानः कः?
उत्तरम्— भारतरत्नम्।
2. प्रश्नः— भारतीयभाषासु सर्वोत्कृष्टसाहित्यपुरस्कारः कः?
उत्तरम्— ज्ञानपीठपुरस्कारः।
3. प्रश्नः— विभिन्नेषु क्षेत्रेषु अभूतपूर्व-आविष्कारेभ्यः कः पुरस्कारः?
उत्तरम्— नोबेलपुरस्कारः।
4. प्रश्नः— चिकित्साक्षेत्रे विशिष्टः पुरस्कारः कः?
उत्तरम्— धन्वन्तरिपुरस्कारः।
5. प्रश्नः—संस्कृतभाषाक्षेत्रे रामकृष्णदाल्मिया श्रीवाण्यलङ्करणप्रशस्तिपत्रं प्रथमं कस्मै विदुषे प्रदत्तम्?
उत्तरम्— रामानुजताताचार्याः।
6. प्रश्नः— ज्ञानपीठपुरस्कारः केन दीयते?
उत्तरम्— साहित्य-अकादम्या।
7. प्रश्नः— ज्ञानपीठपुरस्कारस्य संस्थापकस्तु-?
उत्तरम्— शान्तिप्रसादजैनः।
8. प्रश्नः— प्रथमं "भारतरत्न" पुरस्कारेणायं पुरस्कृतः?
उत्तरम्— एस. राधाकृष्णन्।

9. प्रश्नः— मरणानन्तरं "भारतरत्नं" इति पुरस्कारेषु प्रथमः कः?
उत्तरम्— लालबहादुरशास्त्री।
10. प्रश्नः— "स्वर्णकमलम्" पुरस्काररूपेण कस्मिन् क्षेत्रे दीयते?
उत्तरम्— चलचित्रेषु।
11. प्रश्नः— प्रथमः नोबेलपुरस्कारगृहीता कः?
उत्तरम्— रविन्द्रनाथटैगोरः।
12. प्रश्नः— वेदाचार्यगुरुगङ्गेश्वरानन्दस्य संस्मरणार्थं का प्रशस्तिः दीयते?
उत्तरम्— वेदरत्नप्रशस्तिः।
13. प्रश्नः— "नोवेल" पुरस्कारप्राप्तेषु प्रथमः भारतीयवैज्ञानिकः?
उत्तरम्— सी. वी. रमण।

## (ढ) क्रीडा

1. प्रश्नः— विम्बलडनप्रतियोगिता कस्यां क्रीडायां भवति?
उत्तरम्— लानटेनिसक्रीडायाम्।
2. प्रश्नः— "रोवर्सकप" इत्यस्य कया क्रीडया सम्बन्धः?
उत्तरम्— फुटबालक्रीडया।
3. प्रश्नः— भारतस्य राष्ट्रीया क्रीडा का?
उत्तरम्— हॉकीक्रीडा।
4. "प्रश्नः— हॉकी" क्रीडायाः खेलनावधिः कः?
उत्तरम्— 70 निमेषाः।
5. प्रश्नः— राजस्थानस्य "राज्यक्रीडा" का?
उत्तरम्— पादकन्दुकक्रीडा।

## (ण) विशिष्टज्ञानम्

1. प्रश्नः— कस्य वृक्षस्य पत्रं सर्वस्मात् बृहत् भवति?
उत्तरम्— कदलीवृक्षस्य।
2. प्रश्नः— जन्तुषु कस्य "आयुः" अधिकतमः?
उत्तरम्— कच्छपस्य।
3. प्रश्नः— पारसीजनाः नूतनवर्षारम्भं कस्मिन् मासे कुर्वन्ति?
उत्तरम्— अगस्तमासे।
4. प्रश्नः— हिमालयस्य सर्वोन्नतं शिखरं किम्?
उत्तरम्— एवरेस्ट।
5. प्रश्नः— आन्ध्रप्रदेशस्य सम्बद्धं नृत्यं सूचय?
उत्तरम्— कुचिपुडी।
6. प्रश्नः— द्वितीयं विश्वयुद्धं कदा समाप्तिमगात्?
उत्तरम्— 9 अगस्त 1945,

7. प्रश्नः— C.P.U. इति पूर्णवाक्यं किम्?
उत्तरम्— सेन्ट्रल-प्रोसेसिंग-यूनिट।
8. प्रश्नः— गौतमबुद्धस्य वास्तविकं नाम किम्?
उत्तरम्— सिद्धार्थः।
9. प्रश्नः— रामस्य परमभक्तः वानरः कः?
उत्तरम्— हनुमान्।
10. प्रश्नः— भूमेः औन्नत्यं केन यन्त्रेण माप्यते?
उत्तरम्— हिप्सोमीटरयन्त्रेण।
11. प्रश्नः— वृश्चिकस्य विषं कुत्र भवति?
उत्तरम्— पुच्छे।
12. प्रश्नः— मक्षिकायाः विषं कस्मिन् अङ्गे भवति?
उत्तरम्— मुखे।
13. प्रश्नः— सर्पस्य विषं क्व भवति?
उत्तरम्— दन्ते।
14. प्रश्नः— केन समः व्याधिः नास्ति?
उत्तरम्— लोभसमः।
15. प्रश्नः— रिपुः केन समः नास्ति?
उत्तरम्— क्रोधसमः।
16. प्रश्नः— दुःखं किं वत् नास्ति?
उत्तरम्— दारिद्र्यवत्।
17. प्रश्नः— कुलं केन भाति?
उत्तरम्— सत्पुत्रेण।
18. प्रश्नः— प्रवासे मित्रं किंस्विद्?
उत्तरम्— विद्या।

TOTAL- 539



# 13
# कवि-परिचयः

'संस्कृतशास्त्रमञ्जूषा' हेतु कवि-परिचयः—

| | | |
|---|---|---|
| 1. महाकविः कालिदासः | 2. महाकविः माघः | 3. भारविः |
| 4. महाकविर्दण्डी | 5. वाल्मीकिः | 6. महाकवि-अश्वघोषः |
| 7. महाकविः भासः | 8. मुरारिः | 9. भवभूतिः |
| 10. पण्डितराजजगन्नाथः | 11. विश्वनाथः | 12. मम्मटः |
| 13. आनन्दवर्धनः | 14. उद्भटः/भट्टोद्भटो वा | 15. कुन्तकः |
| 16. क्षेमेन्द्रः | 17. विशाखदत्तः | 18. शूद्रकः |
| 19. महाकविः श्रीहर्षः | 20. भोजः | 21. भरतमुनिः |
| 22. आचार्यभामहः | 23. सुबन्धुः | 24. बाणभट्टः |
| 25. कल्हणः | 26. भट्टिस्वामि | 27. जयदेवः |
| 28. राजशेखरः | 29. कुमारदासः | 30. बिल्हणः |
| 31. अमरूकः | 32. श्रीकृष्णमिश्रः | 33. व्यासः |
| 34. रत्नाकरः | 35. हर्षवर्द्धनः | |

## (1) महाकविः कालिदासः (प्रथमशतके/चतुर्थशतके वा)

### (समयः, देशः, जीवनवृत्तम्, रचना, कविताशैली)

**कालिदासस्य समयः**—संस्कृत साहित्याकाशे कविकुलगुरुः कालिदासः देदीप्यमाननक्षत्रवत् अस्ति। कविताकामिनीविलासः कालिदासः रससिद्धः कवीश्वरः संस्कृतकाव्यक्षेत्रे सर्वश्रेष्ठः अस्ति।

पुरा कवीनां गणनाप्रसङ्गे कनिष्ठकाधिष्ठितकालिदासः।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव॥

तस्य स्थितिकालविषये विदुषां मध्ये मतवैभिन्न्यम् अस्ति। अस्यां स्थितौ अन्यकृतैरुल्लेखैः अनुमानेन च प्राचां कवीनां समयो व्यवस्थापनीयो भवति। अद्यावधि अन्वेषकाः अस्य कविकुलगुरुकालिदासस्य स्थितिकालविषये, जन्मस्थानविषये च अन्वेषणं कुर्वन्ति। अस्मादेव हेतोः कालिदासस्य समयसम्बन्धेऽपि मतभेदाः वर्त्तन्ते—

1. सर विलियम जोन्स-महोदयः ई॰पू॰ प्रथमशतके विक्रमादित्यस्य सत्तया तत्सभायां स्थितस्य कालिदासस्य स एव समयः संभवति।
2. आचार्यविमलराजपुरी अस्य महाकवेः सम्बन्धे अन्वेषयन् कथयति यत् अभिरूपभूयिष्ठायां परिषदि अस्य अभिज्ञानशाकुन्तलं नाटकमभिनीतमभवत्। तस्य परिषदः स्थितिकालः चतुर्थतः षष्ठ-शताब्दी अनुमीयते।
3. डा॰ वेबर लौसन, याकोबि, मॉनियर विलियम, महानुभागानां सम्मतिषु ई॰ द्वितीयशतकचतुर्थशतकयोर्मध्यकालिकत्वं कालिदासस्य समयः स्वीक्रियते।
4. स्मिथ-मैकडानल-कीथ-भण्डारकर-पाठकप्रभृतयो विद्वान्सः गुप्तयुगे स्वीकुर्वन्ति कालिदासम् इति गैरोला बलदेवोपाध्यायश्च।
5. ए॰ सी॰ चटर्जीमहोदयस्तु कालिदासं मालवनरेशयशोधर्मसमकालिकं मत्वा षष्ठशतकवर्त्तिनमाह।
6. रामचन्द्रविनायकपटवर्धनस्तु 'आषाढस्य प्रथमदिवसे', 'प्रत्यासन्ने नभसि' इत्यादिपद्याधारेण ज्यौतिषानुसारिणीं गणनां कृत्वा 1800 वर्षपूर्ववर्त्तिनं कालिदासमातिष्ठते।
7. म॰ म॰ रामावतारशर्मामहोदयः कालिदासं द्वितीयचन्द्रगुप्तसमकालिकं मत्वा 375तः 450 ई॰ मध्यवर्त्तिनं सप्रमाणं साधयति।

अतः ई॰ पू॰ प्रथमशतके विक्रमादित्यस्य सत्तया तत्सभायां स्थितस्य कालिदासस्य स एव समयः संभवति। किञ्च—निश्चितः समयः अश्वघोषस्य, स हि कुणालनरेश-कनिष्कसमकालिकतया प्रथमशताब्दीस्थितः। तत्काव्ये कालिदासस्य काव्यमनुक्रियमाणं वीक्ष्यते। रघुवंशे कुमारसम्भवे च विद्यमानं पद्यं बुद्धचरितेऽश्वघोषेण किञ्चिदेव विपर्यस्योपन्यस्तम्, अतः अश्वघोषात्पूर्ववर्त्ती सम्भवति कालिदासः।

तदाभ्यां सम्भवप्रमाणाभ्यां कालिदासस्य ई॰ पूर्वप्रथमद्वितीयशतकसम्भवत्वं स्वीकर्त्तुं समर्थयन्ते आचार्य श्रीरामचन्द्रमिश्रः, आचार्य हंसराजः अग्रवालः, पं॰ वेदव्यासशुक्लः इत्यादयः संस्कृतसाहित्येतिहासकाराः ग्रन्थकाराश्च।

## कालिदासस्य देशः—

कालिदासस्य को देश(जन्मस्थानम्) इति विषये महान् मतभेदः। केचिद् विद्वांसः अस्य जन्मस्थानं मिथिला मन्यन्ते। केचित् उज्जयिन्यां मन्यन्ते। केचन काश्मीरान्, अपरे वङ्गान् च तद्देशमाहुः। वयन्तु पश्यामः—मालवगणमुख्यविक्रमादित्यसभास्थस्य कालिदासस्य मालव-मुख्यनगरी उज्जयिनी एव स्थानम्। कालिदासस्य उज्जयिनीवर्णनपक्षपातोऽपि पक्षमिमं समर्थयते। कालिदासेन यया सूक्ष्मेक्षिकयावन्तीनां भौगोलिकी स्थितिर्मेघदूते निबद्धा सा तद्देशवासित्वे एव सम्भवति।

## कालिदासस्य जीवनवृत्तम्—

किंवदन्तीभिर्ज्ञायते यत् कालिदासो बाल्ये मूर्खं आसीत्। पण्डितानां छलेन प्रबुद्धया विद्यावत्या सह अस्य विवाहोऽभूत्। तयाऽपमानितश्च कालिकामाराध्य कविर्बभूव। कालिदेव्याः

दासः कालिदासः इति नाम्ना प्रसिद्धो बभूव। पत्नीं द्रष्टुं गृहमागतश्च द्वारं पिहितं दृष्ट्वा 'अनावृतकपाटं द्वारं देही'ति जगाद। 'अस्ति कश्चिद् वाग्विशेष' इति तया पृष्टश्च काव्यत्रयं रचयति स्म। कलिदासः त्यागसमन्वितमार्गस्य समर्थकोऽस्ति। कालिदासः आदर्शप्रियः भारतीयसंस्कृतेः आराधकः शाश्वत् सौन्दर्यस्य समर्थकः सूक्ष्मतत्त्वानां ज्ञाता, प्रकृतेः पूजकः, श्रेयस्य साधकः, विश्वकविः आसीत्।

**कालिदासस्य रचना—**

कालिदासः सर्वसंस्कृतकवीनामग्रणीः इति सन्ते अभ्युपगम्यन्ते। सत्यमेव च कालिदासः भारतीय शेक्सपियर इत्याख्यायते। महाकाव्य-गीतिकाव्य-रूपकेतित्रिविधकाव्यस्य कर्ता कालिदासः आसीत्। कालिदासस्य सप्त ग्रन्थाः सन्ति। काव्यचतुष्टयं नाटकत्रयं च कालिदासरचितमिति।

**काव्यचतुष्टये**—1.रघुवंशम्-(19)एकोनविंशति-सर्गात्मकं महाकाव्यम्। अत्र रघोर्वंशस्य कथा निबद्धा। वायुपुराणे वर्णितरामवंशावल्या सह रघुवंशवर्णितरामवंशावली भूयसा सामञ्जस्यं धारयति। न केवलं कालिदासस्य काव्येषु अपितु समग्रसंस्कृतसाहित्ये रघुवंशं उत्कृष्टमहाकाव्यं विद्यते। अस्मिन् काव्ये सर्वरसाणां रमणीयपरिपाकं परिलक्ष्यते अग्निवर्णस्य विलासवर्णने शृंङ्गाररसस्य, युद्धवर्णने वीररसस्य, अजविलापे करुणरसस्य प्रधानता दरीदृश्यते।

2. कुमारसंभवम्-(17)सप्तदश-सर्गात्मकं महाकाव्यम्। कुमारसम्भवं कालिदासस्य कलायाः सुन्दरसृष्टिः विद्यते। अत्र शिवपार्वत्याः पाणिग्रहणस्य कुमारकार्तिकेयजन्मवर्णनं तारकासुरवधस्य च कथा वर्तते। मार्मिकभावाभिव्यञ्जनायां उदात्तकोमलकल्पनया प्राञ्जलपदविन्यासेन च एषा कृतिः अद्भुता खलु। बाह्यप्रकृतेः मनोरमचित्रणं कुमारसम्भवस्य महती विशेषता वर्तते।

एष ते राम गङ्गाया विस्तरोऽभिहितो मया।
कुमारसंभवश्चैव धन्यः पुण्यस्तथैव च॥ (बालकाण्डे 37/32)

3. गीतिकाव्येषु-1.ऋतुसंहारम्-(6)षट्सर्गात्मकं 144 श्लोकात्मकं गीतिकाव्यम् अस्ति। ऋतुसंहारस्य षट्सर्गेषु षड्ऋतवः यथाक्रमेण वर्णिताः। अस्य भाषा प्राञ्जला, परिमार्जिता प्रवाहपूर्णा प्रसादगुणयुता च—

मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां।
वामश्चायं नदति मधुरं चातकस्ते सगन्धः॥

4. गीतिकाव्येषु-2.मेघदूतम्-कुवेरकोपभाजनयक्षस्य प्रणयकथा मेघदूतेऽस्ति। मन्दाक्रान्ता छन्दसि प्राकृतिकदृश्यैः सह मानवीया भावाः सूक्ष्मेक्षिकया पूर्वोत्तरनामकभागद्वये वर्णितम् अस्ति।

5. नाटकत्रयेषु-1.मालविकाग्निमित्रम्-पञ्चाङ्कात्मकं रूपकमस्ति। मालविकाग्निमित्रं नाम रूपके शुङ्गवंशीयस्य राज्ञः अग्निमित्रस्य मालविकया सह कृता प्रेमकथा एव निबद्धा।

2. विक्रमोर्वशीयम्-पञ्चाङ्कात्मकं रूपकमस्ति। विक्रमोर्वशीये पुरुरवस उर्वश्या सह कृता प्रेमकथा एव निबद्धा। माङ्गलिकप्रेमस्वीकृतिरेव लक्ष्यं गृहस्थधर्मस्येति कवेरुपदेशोऽत्र।

3. अभिज्ञानशाकुन्तलम्-(7)सप्ताङ्कात्मकं रूपकमस्ति। भारतीयानां मते रूपकेषु तिलकायतेऽभिज्ञानशाकुन्तलम्। 'काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला' इति उक्तम्। अङ्गुलीयकदर्शनेन समाप्तऋषिशापो दुष्यन्तः शकुन्तलां स्वीकृत्य समोदमास्ते इति कथानकं सप्ताङ्केषूपनिबद्धं कविना।

**कालिदासस्य कविताशैली—**

मानवजीवनस्य सर्वाङ्गसम्पूर्णचित्रमुपस्थापयितुमसौ रघुवंशं प्रणीतवान्, प्रेम्णः परं प्रकर्षं प्रकाशयितुञ्च कुमारसम्भवं प्रणीतवान्। उपमा कालिदासस्येति कथनं तु न प्रमाणमपेक्षते। कलिदासस्य कृतिषु जीवनस्य व्यावहारिकज्ञानपूर्णतथ्यानां प्रकाशनमपि भवति। रसाभिव्यक्तौ कालिदासस्य कृतिषु शृङ्गाररसस्य प्रधानता दरीदृश्यते। करुणरसपरिपाकेऽपि कविः कुशलः। अलङ्काराणां प्रयोगोऽपि सुरुचिपूर्णः। उपमाप्रयोगे तु विश्वविख्यातः। कथितमपि—'उपमा कालिदासस्य'। तस्य उपमाः अद्वितीया खलु। चरित्रचित्रणेऽपि कविः कुशलः। कालिदासस्य प्रकृतिचित्रणमपि अद्भुतम्।



## 2. महाकविः माघः (700)

**माघस्य समयः**

संस्कृतमहाकाव्यप्रणेतॄणां मध्ये शास्त्रसम्मतलक्षणयुतमहाकाव्यानां क्षेत्रे महाकविमाघस्य स्थानं विशिष्टं वर्तते। यथा कथितम्—

पुष्पेषु जाती नगरीषु काञ्ची
नारीषु रम्भा पुरुषेषु विष्णुः।
नदीषु गङ्गा क्षितिपेषु रामः
काव्येषु माघः कविकलिदासः॥

सुप्रसिद्धमहाकाव्यस्य शिशुपालवधस्य प्रणेतुर्महाकविर्माघस्य पिता श्रीदत्तकसर्वाश्रयः आसीत् एवं तस्य पितामहः सुप्रभदेवः वर्मलातनाम्नः राज्ञः महामन्त्री आसीत्। माघस्य जीवनकालविषये महान् मतभेदो वर्तते। वसन्तगढनामके स्थाने प्राप्तशिलालेखेन सप्तमशतकप्रारम्भो माघस्य समयो निश्चीयते। माघस्य स्थितिकालः स्पष्टतः 682 मितवैक्रमाब्दमभितः, समालोचकैः तस्य कालः-700-780 मितवैक्रमाब्दानभितोऽनुमितः। आचार्य हंसराजः अग्रवालः 650 मितात् 700 मितं खीष्टाब्दं यावत् मन्यते।

**माघस्य देशः—**

शिशुपालवधप्रणेतुर्माघस्य पितामहः सुप्रभदेवः गुर्जरशासकस्य वर्मलात नाम्नो नृपस्य मन्त्री आसीत्। माघस्य पिता दत्तको विद्वान् दानप्रसिद्धश्चासीत्। माघस्य जन्म विद्यापीठतया राजधानीभावेन च पुरा प्रथिते मीनमल्लाख्यनगरे अभवत्।

**माघस्य जीवनवृत्तम्—**

पितुर्दानशीलतायाः प्रभावो माघस्यमप्युपरि पतितः। असीमदानदोषेणायं निर्धनत्वं गतः। भोजेन माघस्य संख्या तस्मै द्रव्यसाहाय्यं दत्त्वोपकारः कृतः इति श्रूयते। माघकालेऽपि भोजस्य सद्भावः सम्भवति।

**माघस्य रचना—**

शिशुपालवधम्—माघस्य शिशुपालवधे द्वाविंशतिः(22) सर्गाः सन्ति। अत्र युधिष्ठिरस्य राजसूये यागे श्रीकृष्णेन कृतः शिशुपालस्य वधो मुख्यतया वर्णितः। महाभारतोक्तां निष्प्राणमिमां कथां माघो वर्णनमाहात्म्येन चमत्कारिणीं विहितवान्। माघः उच्चकोट्याः कविः विद्यते। तस्य समग्रकाव्यं प्रोढोदात्तशैल्याः उत्कृष्टनिदर्शनं वर्तते। अत्र हृदयेण सह मस्तिष्कस्यापि अपूर्वो सम्मिश्रणो दरीदृश्यते। कविः संस्कृतभाषायाः प्रकाण्डपण्डितः आसीत्। तस्य काव्यं नूतनशब्दानामगारो विद्यते। उक्तं च—'नवसर्गगते माघे नवशब्दो न विद्यते'। शब्दशक्तीनां साहचर्येणैव पदयोजना भावप्रकाशने सफला भवति। महाकविमाघस्य महाकाव्ये शक्तीनां प्रभावो दरीदृश्यते। अस्य काव्यस्य सरसता, अलङ्काराणां नवीनता, श्लेषस्य उपयुक्तता चित्रालङ्काराणां च विचित्रता दर्शनीया विद्यते। उपमार्थगौरवपदलालित्यत्रयाणां गुणानाम् अस्मिन् काव्ये समन्वयोऽवलोक्यते।

**माघस्य काव्यगुणाः कविताशैली च—**

'माघे सन्ति त्रयो गुणाः' इति कथनेन माघस्य कालिदासभारविदण्डिनामेकायतनीभूतं स्वरूपमाख्यायते। 'नवसर्गगते माघे नवशब्दो न विद्यते' 'मेघे माघे गतं वयः' इत्याद्युक्तिभिर्बहु प्रशंसितस्य महाकाव्यस्य प्रणेतृनाम्नैव समाधिकारख्यातिः। माघो हि एकीभूत-कालिदास-अश्वघोष-भारवि-भट्ट इत्येतेषां प्रभावेन प्रभावितः। तस्य काव्ये कालिदासस्य काव्यसौन्दर्यम्, अश्वघोषस्य स्वाभीष्टदर्शनसिद्धिः, भारवेरर्थगौरवम्, भट्टेश्च व्याकरणपाटवञ्च सर्वे एव परस्परं समन्विता सन्ति इति दृश्यते। यथा कथ्यते—

> उपमा कालिदासस्य भारवेरर्थगौरवम् ।
> नैषधे पदलालित्यं माघे सन्ति त्रयो गुणाः॥



## 3. भारविः ( 600 )

**भारवेः समयः—**

संस्कृतमहाकाव्यपरम्परायां कालक्रमदृष्ट्या भारवेस्तृतीयं स्थानं वर्तते। स हि संस्कृतकाव्यजगति अलङ्कृतशैल्याः प्रथम उन्नायकः पण्डितयुगस्य प्रवर्त्तकश्च। तस्य स्थितिकालः कविजीविते 585 मितवैक्रमाब्दमभितोऽनुमितः। तस्य हि हंसराजानुसारेण 607 मितवैक्रमाब्दः स्थितिकालः। आचार्यश्रीरामचन्द्रमिश्रानुसारेण भारवेः समयः षष्ठेशवीयशतकं मन्तुं युज्यते। पुलकेशिनद्वितीयस्य एहोलशिलालेखे भारवेर्नाम मिलति। तदनुसारं अस्य समयः

634 ख्रिस्टाब्द: 556 शकाब्दो वा वर्तते। 600 ख्रिष्टाब्दे भारविरासीदिति बलदेवोपाध्याया:। अवश्यमयं षष्ठशताब्द्या उत्तरार्धे सप्तमशताब्द्या: पूर्वार्धे वेति वाचस्पतिगैरोला। भारविरासीत् षष्ठशताब्द्या: उत्तरार्धे इति वेदव्यासशुक्ल: मन्यन्ते।

**भारवे: देश: ( जन्मस्थानम् )—**

भारविरासीद् दाक्षिणात्य:। कौशिकगोत्रोत्पन्नस्य नारायणस्वामिन: पुत्रो भारवि:। भारवे: पूर्वजा: पूर्वम् उत्तरपश्चिमभारतान्तर्गतम् आनन्दपुरं नाम नगरमध्यवात्सु:, ते नासिकनामकं दक्षिणभारतनगरमायाता:। बाल्येऽस्य नाम आसीद् दामोदर:। विष्णुवर्धनोऽस्य मित्रम्। त्रयोऽस्य पुत्रा:।

**भारवे: जीवनवृत्तम्—**

अस्य महाकवे: जीवनस्य विषये लोकेषु किंवदन्ती एका प्रसिद्धा अस्ति यत् बाल्यकालादेव एष: मेधावी कवि: आसीत्, किन्तु अस्य पिता एनं अधिकाधिकं सुयोग्यं कर्तुं सदैव प्रताडनं तिरस्कारं च करोति स्म। पितु: अनेन व्यवहारेण क्रुद्ध: भारवि: स्वपितु: वधस्य एव निश्चयम् अकरोत्। एकदा स्वपितु: वधार्थे प्रयत्नवान् आसीत्। तदैव तेन पितु: कथिता स्व-उन्नतिपरा हितैषिणी च वाणी श्रुता। पिता तस्य जननीं प्रति कथयति स्म यत् 'यद्यपि भारवि: अयं अतीव बुद्धिमान् कुशल: कवि: च अस्ति, किन्तु अस्य विद्वत्समाजे सुदृढा स्थिति: भवेत्, अनेनैव अहं नित्यं अस्य तर्जनां करोमि।' एतत् वचनं श्रुत्वा भारवि: खिन्नमना: सञ्जात:। अन्ते च तेन अस्य अपराधस्य प्रायश्चित्तं द्वादशवर्षं यावत् श्वसुरगृहं गत्वा गाश्चारयितुं प्रारभत इति बलदेवोपाध्याया:।

अर्थाभावेन त्रस्ता कविताया: 'सहसा विदधीत न क्रियामित्यादिकं 2/30 श्लोकं कस्यैचित् श्रेष्ठिपत्न्यै दत्वा धनमापेति इति डॉ. हरिहरदत्त शास्त्री महोदयेन भणितम्।

**भारवे: रचना—**

किरातार्जुनीयमेव एका प्राप्ता रचना भारवे:। सर्वविधलक्षणोपेतं महाकाव्यं शिवार्जुनयुद्धमवलम्ब्य किरातार्जुनीयाभिधं काव्यं प्राप्यते। अष्टादशसर्गनिबद्धेऽत्र महाकाव्ये महाभारताधारकं सुन्दरमुपाख्यानं चित्रितम्। महाकाव्यस्यास्य कथा इतिहासप्रसिद्धा। द्यूते पराजितो युधिष्ठिर: भ्रातृभि: पत्न्या च सह द्वैतवने वसति स्म। दुर्योधनस्य शासनपद्धतिं ज्ञातुं वनेचरं गुप्तचररूपेण प्रेषितवान्। सर्वं ज्ञात्वा स: युधिष्ठिराय निवेदयामास। पाशुपतास्त्रमासादयितुमर्जुन: शिवेन( किरातेन) युद्धमकरोत्। अर्जुनपराक्रमदर्शनतुष्ट: शिवोऽर्जुनाय पाशुपतास्त्रं ददौ। अस्मिन् काव्ये धीरोदात्त: नायक: अर्जुन:। कथ्यते हि भारवि: भाषा-भाव-सौन्दर्य-रससिद्धिवर्णनाचातुरी-शास्त्रीयपाण्डित्यादिविविधपक्षाणामेकाश्रय इति। अर्थगौरवं तु तस्य वैशिष्ट्येषु प्रकृष्टमेव। भारवि: कर्मणि विश्वसिति न तु भाग्ये। अस्मिन् काव्ये महाकाव्यस्य सर्वाण्यपि काव्यशास्त्रनिर्दिष्टानि लक्षणानि संघटन्ते। समस्तसंस्कृतसाहित्ये किरातार्जुनीयस्य समं अन्यद् एतादृशम् ओजपूर्णं काव्यं न मिलति। भारवि: नीतिशास्त्र-

अलंकारशास्त्र-व्याकरणशास्त्रस्य च पण्डितः आसीत्। तस्य महाकाव्ये नीतिविषयकसूक्तीनां तु भण्डारगारः विद्यते। राजनीतेरपि विशिष्टवर्णनम् अस्मिन् काव्ये उपलभ्यते।

अयं महाकविः स्वकृतिविषये स्वयमेव कथयति यत् अस्मिन् काव्ये भावानां स्पष्टाभिव्यक्तिः वर्तते। अर्थगाम्भीर्यादिगुणाः अत्र अनिवार्यतः स्वीकृताः सन्ति—

स्फुटता न पदैरपाकृता
न च न स्वीकृतमर्थगौरवम्।
रचिता पृथगर्थता गिरां
न च सामर्थ्यमपोहितं क्वचित्॥

**भारवेः काव्यशैली—**

भारवेः अर्थगौरवं प्रसिद्धम्। भावपक्षः कलापक्षः समृद्धिभाजौ। रसप्रयोगे नैपुण्यमस्य प्रशंसनीयमेव। अर्जुनहृदयस्थः स्थायिभावोत्साहो विभावानुभावसञ्चारिसंयोगात् वीररसतामेति। संस्कृतसाहित्ये वीररसप्रधाना इयमेका एव रचना। भारवेः शास्त्रज्ञानं प्रशंसनीयम्। कवेर्नीतिज्ञानं सुविस्तृतम्। नेदमावश्यकं राज्ञामेव। सर्वेषां जीवनेऽस्त्यावश्यकताऽस्य ग्रन्थोऽयं नीतेराकरः। अलङ्काराणां प्रयोगेऽपि कविः कुशलः। नारिकेलफलसम्मितं वचो भारवेरित्याह मल्लिनाथः। नारिकेलफलस्य बाह्यरूपं रूक्षं विषमं च विद्यते परं अन्तरे काव्यस्य मधुरं रसं निहितमेव—

नारिकेलपफलसंमितं वचो भारवेः सपदि तद्विभज्यते।
स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम्॥



## 4. महाकविर्दण्डी ( 700 )

**दण्डिनः समयः—**

संस्कृतसाहित्ये दण्डिनो महती प्रतिष्ठाऽनुमीयते। 'दण्डिनः पदलालित्यम्' इत्युक्तिरपि तस्य प्रसिद्धौ प्रमाणम्। गद्यलेखकेषु दण्डी सर्वं विशिष्टं स्थानं रक्षति। समालोचकाः वदन्ति यत् भारवेः दण्डिनोऽपि पूर्ववर्तित्वम् सिध्यति। दण्डिनः कथनमिदमादाय पण्डिता भारविनं दण्डि-प्रपितामहं मन्यन्ते। दण्डिनोऽपि स्थितिकालः सन्दिग्ध एव सम्प्रत्यपि। अत्र हि समालोचकाः सुबन्धु-बाण-दण्डिनः, बाण-दण्डिसुबन्धवः, सुबन्धु-दण्डि-बाणाश्चेति त्रिविधक्रमसमर्थका दृश्यन्ते। दण्डी हि संस्कृतसाहित्ये मूर्तिमत्काव्यमेव—

जाते जगति बाल्मीकौ कविरित्यभिधाऽभवत्।
कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि॥

आचार्यश्रीरामचन्द्रमिश्रः स्व-संस्कृतसाहित्येतिहासे षट् प्रमाणैर्दण्डिनः समयस्य परिसीमा अष्टमशतकमिति मनुते । दण्डिनः समयस्य पूर्वसीमा षष्ठं शतकमिति मन्यते। सर्वमुपरितनं सन्दर्भं विभाव्य मैक्समूलर-वेबर-मैक्डोनल-याकोबि-प्रभृतयः पाश्चात्त्या विद्वांसो दण्डिनः समयं षष्ठशतकं मन्यन्ते। अन्ये पुनः अवन्तिसुन्दरीकथायां दण्डिनो भारविवंशजत्वमुक्तम्।

भारवेः समयः खी॰ 634 मन्यते, तदनुसारेण दण्डिनः सप्तमशतकान्तभागसम्भूतत्वमायाति। एतेन सर्वे दण्डिनः समयः सप्तमशतकान्तभागः सिद्ध्यति इति चाहुः।

**दण्डिनः देशः—**

दण्डिनो वासदेशस्य निर्णयेऽनुक्रम्यमाणे अवन्तिसुन्दरीकथा प्रमाणम्। तदनुसारेण दण्डिनः पूर्वपुरुषाः गुर्जरप्रान्तस्थिते आनन्दपुरेऽतिष्ठन् ततस्ते दक्षिणदेशावस्थितं सम्प्रति एलिचपुरसंज्ञया प्रथमानमचलपुरं नाम स्थानमायाताः। तदेवं कवेर्दाक्षिणात्यभावः सिद्ध्यति। कौशिकगोत्रोद्भवोऽयं स्वपितामहस्य भारवेराश्रयदातुर्नृपस्याश्रये काञ्चीनगरे वसति स्म। काञ्चीराजे शत्रुभिः आक्रमणेन पराभूतेऽयं काननेषु निलीय स्थितः। सोऽयं विप्लवः 655 तमे खीष्टाब्दे बभूव। तदा दण्डी बाल एवासीत्। एतेन दण्डिनः कालोऽपि प्रकाशमानीयते।

**दण्डिनः जीवनवृत्तम्—**

दण्डिनो वास्तविकं नाम न ज्ञायते। यथा भवभूतेर्माघस्य च नामविषये श्रूयते तथैव 'ब्रह्माण्डच्छत्रदण्डः' इत्यादिदशकुमारमङ्गलाचरणस्थदण्डपदप्रयोगेण दण्डिनाम्नाऽयं ख्यातः। दण्डी हि महेन्द्रवर्मणः सुतस्य नरसिंहवर्मणस्तत्सुतरामवर्मणः सभाध्यक्ष आसीत्। तस्य स्थितिकालः-747-782 मितवैक्रमाब्दानभितः। 'दण्डिनः पदलालित्यम्' इति।

**दण्डिनः रचना—**

त्रयोऽग्नयस्त्रयो देवास्त्रयो वेदास्त्रयो गुणाः।
त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः॥

'त्रयो दण्डिप्रबन्धाश्च' एतदुक्तिमनुसृत्य 1. काव्यादर्शः, 2. दशकुमारचरितम्, 3. अवन्तिसुन्दरीकथा, इति त्रयो ग्रन्था दण्डिनः कथ्यन्ते।

**1. काव्यादर्शः**—अस्य ग्रन्थस्य त्रयः(3) परिच्छेदाः सन्ति, येषु 660 श्लोकाः लिखिताः। प्रौढप्रतिभायाः परिचायको ग्रन्थः।

**2. दशकुमारचरितम्**—इदमाख्यानप्रधानमेकं कथानकम्। अत्र नानाविधा रोमाञ्चकारिण्यौ घटना वर्णिता या विस्मयं जनयन्ति। अत्र द्वे पीठिके पूर्वोत्तरनामिके। भूमिकाभागरूपः पञ्चम उच्छ्वासः पूर्वपीठिकानाम्ना ज्ञायते। शिष्टमुत्तरपीठिकारूपम्। वस्तुतः अष्टावेव कुमारा वर्णिता अत्र। पूर्वापरसमायोजनेन दशत्वसार्थकता। दशकुमारचरितं कवेः साहित्यिकजीवनस्य प्रभातकालस्य रचना अस्ति। दशकुमाराणां पर्यटनशौर्यानुभवानां वैचित्र्यपूर्णमनोरञ्जकवर्णनमेव अस्य ग्रन्थस्य विशेषता विद्यते। चौरशास्त्रराजनीतिशास्त्रस्य ज्ञानं तु पदे पदे उपलभ्यते। दण्डीसुभगमनोरमवैदर्भीरीत्याः उपासकोऽस्ति। अस्य भाषा तु सर्वत्र व्यावहारिकी परिष्कृता परिमार्जिता चास्ति। चरित्रचित्रणेऽपि विविधता सजीवता चास्ति। दण्डिनः पात्राणि प्रायः सर्वेषां वर्गाणां प्रतिनिधित्वं कुर्वन्ति। निम्नवर्गस्य वर्णनेन व्यावहारिकशिक्षया च दशकुमारचरितं संस्कृतगद्यसाहित्ये विशिष्टं स्थानमाश्रयते। अतः उचितमेव कथितं भारतीयालोचकैः—

**कविर्दण्डी कविर्दण्डी कविर्दण्डी न शंसयः।**

**3. अवन्तिसुन्दरीकथा**—अवन्तिसुन्दरीकथाऽपूर्णा। कथासारस्तु कथायाः पद्यानुवादः। दण्डिनः तृतीयकृतिः विद्वद्भिः स्वीकृता परं कीथमहोदयस्य मतमत्र उचितमेव प्रतीयते यत् शैल्याः भिन्नतायाः अप्रामाणिकतायाः च दृष्ट्या नैषा दण्डिनः कृतिः।

**दण्डिनः काव्यशैली—**

दण्डिनः रचनायां प्रवाहः परिदृश्यते। अर्थस्य स्पष्टता रसस्य सुन्दराभिव्यक्तिः सततमवलोक्यते। दैनन्दिनसंस्कृतप्रयोगकारकाणामुपयोगाय दण्डिनः शैली कल्पवृक्षायते। लोकोक्तिप्रयोगे धुरन्धरोऽयम्। अनेन अस्य शैली मनोहारिणी जाता। रसप्रयोगोऽप्यस्य प्रशंसायोग्यः। राजनीतेः, कामशास्त्रस्य, व्याकरणस्य साहित्यस्य च पाण्डित्यं दण्डिनः साहित्येऽवलोक्यते एव। अयं पदलालित्यस्याचार्यः। यादृशी पदललितता वर्ततेऽत्र न तादृशी संस्कृतसाहित्ये निखिले द्रष्टुं शक्यते। अर्थस्य शब्दस्य च मनोहरतां विलोक्यैव सुधीभिरुक्तम्—

उपमा कालिदासस्य भारवेरर्थगौरवम्।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः।



## 5. वाल्मीकिः ( 400-500 )

कवत इति कविः, कवेः कर्म काव्यम्, काव्यं तु दृश्य-श्रव्यभेदाद् द्विविधम्। गद्यपद्यमिश्रभेदादपरं त्रिविधम्। लौकिकसंस्कृतसाहित्यस्य आदिकवेरस्यैतिह्यविषये बहुभिर्बहुधा संसूचितमस्ति। कथ्यते हि पद्मपुराणे यत् कश्चित् क्रूरकर्मा किरातः कस्यचित्तापसस्यानुग्रहेण लब्धसज्ज्ञानस्तपसि निरतः, सुचिरं तपस्यतस्य शरीरं वाल्मीकिरित्यभिधानेन ज्ञातोऽभूदिति। लौकिकसंस्कृते काव्यलेखनस्य क्रमः वाल्मीकितः प्रारब्धः। आदिकविः यदा कामातुरक्रौञ्चपक्षि-मिथुनयोरेकस्य वधम् अपश्यत्। हृदयद्रवीकरणाय, रसानुभूतिकृते च आदिकवेः वाल्मीकेः श्लोकः अवश्यं द्रष्टव्यः। यथा—

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥

तमसा नदीतीरे व्याधः कश्चन क्रौञ्चमिथुनादेकमवधीत्। हृदयविदारिकां तद्घटनां दृष्ट्वा वाल्मीकिः स्वीयामनुभूतिं श्लोकरूपेण व्यक्तीकृतवान्। अर्थात् शोकः श्लोकत्वमागतः एषानुभूतिरेव रसानुभूतिरिति कविना परिभाषायाम् उच्यते।

**वाल्मीकेः समयः/रामायणस्य रचनाकालः—**

संस्कृतसाहित्ये रामायणपदेन वाल्मीकिविरचितं रामायणमेव प्रसिद्ध्यति। रामायणात् प्राचीनः संस्कृतभाषानिबद्धः काव्यलक्षणोपपन्नः कोऽपि ग्रन्थो न श्रूयते, दृश्यत इति कथैव का? यतो रामायणे न केवलं युद्धमेव वर्णितमपि तु रूपकोपमाद्यलङ्कारयुतायां भाषायां प्रकृतेरपि वर्णनं कृतमतो रामायणं काव्यमिति स्वीक्रियते, न वीरगाथामात्रम्, न वा शुष्केतिहासमात्रम्।

1. रामायणे महाभारतवर्णितस्य कस्यापि पात्रस्य नाम नोपलभ्यते, अतः रामायणं महाभारतात् प्राचीनम्। वाल्मीकिमहर्षेर्व्यासादपि पूर्ववर्तीति।

2. याकोबिमहोदयो भाषाविज्ञानद्वारा बौद्धकालपूर्वभयत्वं रामायणस्य आह।

3. जैनकविना विमलसूरिणाप्राकृतभाषानिबद्धे स्वीये 'पउमचरिआ' 62ई॰ समयेऽरच्यतातो रामायणं ततः प्राचीनम्।

4. पाटलिपुत्रस्य प्रतिष्ठापनमजातशत्रुणा 500 ई॰पू॰ समये कृतम्, रामायणे शोणगङ्गासङ्गममतिक्रम्य पुरःसरत्यपि रामे पाटलिपुत्रस्य नामापि न श्रूयते, तेन स्पष्टो भवति यद् रामायणम् 500 ई॰पू॰ समयतः पूर्वकालिकः।

5. रामायणः बुद्धपूर्वकालिकं वर्तते।

एभिः सर्वैरपि प्रमाणैरिदं सिद्धं यद् रामायणं खीष्टपूर्वपञ्चमशतकात्पूर्वमेव प्रणीतम्।

## वाल्मीकेः देशः/जीवनवृत्तम् च—

कथ्यते हि पद्मपुराणे यत् कश्चित् क्रूरकर्मा किरातः कस्यचित्तापसस्यानुग्रहेण लब्धसज्ज्ञानस्तपसि निरतः, सुचिरं तपस्यतस्य शरीरं वाल्मीकिरित्यभिधानेन ज्ञातोऽभूदिति। लौकिकसंस्कृते काव्यलेखनस्य क्रमः वाल्मीकितः प्रारब्धः।

## वाल्मीकेः रचना—

'रामायणम्' आदिकाव्यं तत्प्रणेता च वाल्मीकिः आदिकविः। संस्कृतकाव्यकानने वाल्मीकिः रामायणमेव आदिकाव्यत्वेन आद्रियते। काव्यमिदमत्यधिकं लोकप्रियतां प्राप्तम्। 'रस एव काव्यस्यात्मा' इति काव्यशास्त्रिणां मतम्। अस्मिन् प्रसंगे आचार्यप्रवरः आनन्दवर्धन उवाच—

काव्यस्यात्मा स एवार्थस्तस्मादादिकवेः पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः॥

रामस्यादर्शताविषये आचार्यश्रीरामचन्द्रमिश्रः कथयति—वाल्मीकिना स्वकाव्यकलायाः प्रदर्शनाय यत् पात्रम् आधारीकृतं तस्य रामस्य चरितमेव तादृशं यत्तदाधारीकृत्य कोऽपि कविः साफल्यमासादयेत्, यथोक्तं साकेते—

राम तुम्हारा चरित स्वयं ही काव्य है।
कोई कवि वन जाय सहज संभाव्य है॥

अतो रामाधारकं वाल्मीकिकाव्यं रामायणं नितान्तहृद्यं स अतिशयशिक्षाप्रदं च भूत्वा रसास्वादसुखपिण्डप्रदानद्वारेण विनेयान्विनयति यत्काव्यस्य मुख्यं प्रयोजनमुच्यते। रामचन्द्रः आदर्शभ्राता-आदर्शपतिः-आदर्शपुत्रः-आदर्शशासकः-आदर्शमनुष्यश्चासीदिति समर्थयितुमेव रामायणं निरमीयत, यत्र लक्ष्ये तत्सफलमभूत्। आदर्शचरित्रचित्रणं रामायणस्य अद्वितीयं वैशिष्ट्यम्। अस्य नायकः श्रीरामः मर्यादापुरुषोत्तमः। किमधिकम्—सत्यवादित्वेन, वचनपालकत्वेन, आज्ञाकारिपुत्रत्वेन, विनीतशिष्यत्वेन, भ्रातृवत्सलत्वेन, एकपत्नीव्रतपतित्वेन, शरणागतवत्सलत्वेन, सन्मित्रत्वेन, उदारस्वामित्वेन, दीनबन्धुत्वेन, न्यायकारिभूपतित्वेन,

लोकाराधकत्वेन च रामायणचित्रितो रामः सर्वथा सर्वदा सर्वैः सर्वत्र सततमनुकरणीयः पूजनीयश्च।

**रामायणस्य स्वरूपम्—**

रामायणे चतुर्विंशतिः सहस्राणि श्लोकानामिति तत् चतुर्विंशतिसाहस्रीसंहितापदेनाभिधीयते। रामायणग्रन्थे सप्तकाण्डानि सन्ति।

1. प्रथमे बालकाण्डे—रामस्य यौवनमुखं, विश्वामित्रेण मुनिवरेण सह तदाश्रमपदं प्रति प्रस्थानं, तत्र यागविघातिनां राक्षसाणां हननं जनकजापाणिपीडनं च इति।
2. द्वितीये अयोध्याकाण्डे—रामस्य यौवराज्यपदाभिषेकसमारोहोपक्रमः, तत्र कैकेयीकृतः प्रत्यूहः, रामस्य निर्वासनम्, रामविरहे दशरथस्य प्राणत्यजनम्।
3. तृतीये अरण्यकाण्डे—रामस्य दण्डकागहनाऽवगाहनं विराधाऽऽदिचतुर्दशसहस्रराक्षसाणां उज्जासनं च रावणकृतं जानकीहरणम्।
4. चतुर्थे किष्किन्धाकाण्डे—रामस्य सुग्रीवेण सह मित्रता, बालिनो निषूदनं च सीतायाः अन्वेषणम्।
5. पञ्चमे सुन्दरकाण्डे—समुद्रलङ्घनं लङ्कादहनं हनूमतः सीतायाः अन्वेषणम्।
6. युद्धकाण्डनाम्नि षष्ठे काण्डे—राम-रावणयोर्मध्ये युद्धं, रामस्य रावणमारणं लङ्काजयञ्च।
7. उत्तरकाण्डेतिसंज्ञिते सप्तमे काण्डे—रामराजादिष्टं, सीताप्रव्रजनं, सीताशोकः, वाल्मीकेराश्रमे शरणम्।

**एकश्लोकी-रामायणोपाख्यानानि—**

आदौ रामतपोवनादिगमनं हत्वा मृगं काञ्चनं
वैदेहीहरणं जटायुमरणं सुग्रीवसम्भाषणम्।
बालीनिग्रहणं समुद्रतरणं लङ्कापुरीदाहनं
पश्चाद्रावणकुम्भकर्णहननमेतद्धि रामायणम्॥१॥

**वाल्मीकेः काव्यशैली—**

सर्वप्रथमं रामायणं काव्यं वर्तते तदनन्तरमेव धर्मग्रन्थ इतिहासोऽन्यद्वा किञ्चिदिति वस्तुतत्त्वं कविना कदापि न विस्मृतमत एव चासौ सर्वत्र कवित्वं व्यञ्जयितुमचेष्टत। काव्यानामादर्शभूतं रामायणं कवीनामादर्शभूतश्च वाल्मीकिरिति कथनं सत्यादनपेतम्। रामायणकाव्ये करुणो रस एव प्रधानत्वं भजते। अनुष्टुपूछन्दसा सहसा किल वाल्मीकिः वाचं व्याजहार इति आभाणकाद् 'वाल्मीकेरुपज्ञा नूनमनुष्टुप्छन्दः' इति संसूच्यते। अथारम्भकतिपर्यन्तं सर्वत्र रामायणी भाषा विशुद्धा परिष्कृता च क्वचित् क्वचिच्च अलङ्कार-मण्डिताऽपि च। उपमारूपके चास्य परमरमणीये दर्शनीये च भवतः। शब्दार्थयोः प्रसादगुणमयत्वं काव्यस्यास्य प्रणेतुः कोऽपि महान् अन्यकवि-व्यतिरेकी गुणो भवति। साहित्यगुणैर्वाल्मीकिर्भारतीयकाव्यधाराया हिमवान् मन्यते।

कूजन्तं राम रामेति मधुरं मधुराक्षरम्।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम्॥
यावत्स्थास्यन्ति गिरयः सरितश्च महीतले।
तावद् रामायणकथा लोकेषु प्रचरिष्यति॥

रामायणस्य लोकप्रियतायाः एतत् प्रत्यक्षं प्रमाणं यद् रामायणोत्तरकालिकैः कविभिः रामकथामाश्रित्य बहूनि काव्यानि नाटकानि च विरचितानि। तानि यथा—रघुवंशमहाकाव्यम्, प्रतिमानाटकम्, कुन्दनमाला, भट्टिकाव्यम्, उत्तररामचरितम्, महावीरचरितम्, अनर्घराघवः, रामायणमञ्जरी, रामायणचम्पूः चेत्यादीनि। इत्थं रामायणस्य उपजीव्यत्वमपि सिद्ध्यति।



## 6. महाकवि-अश्वघोषः ( प्रथम ई॰ पू॰ )

**महाकवि-अश्वघोषस्य समयः—**

संस्कृते ये कतिपये महाकवयस्तेषामन्यतमः किल अश्वघोषो गण्यते। स हि खण्डकाव्य-महाकाव्य-रूपकेतिविविधकाव्यकर्ताऽऽसीत्। समुद्रगुप्तप्रणीते कृष्णचरिते राजकविवर्णनप्रसङ्गे अश्वघोषस्य चर्चा विद्यते। अश्वघोषेणाऽपि स्वस्थितिकालादिविषये मौनमेवावलम्बितम्। कनिष्कसमकालिकतयाऽश्वघोषस्य समयः प्रथम ई॰ पू॰ स्थिरः। डॉ॰ चाउ सियांग महोदयः चीनी बौद्धधर्मस्य इतिहासे अश्वघोषस्य समयः प्रथमः खिष्टाब्दः मन्यते। अश्वघोषस्य काव्यं चीनीभाषायाम् 384-417 ई॰ समयेऽनूदितम्। इत्सिङ्गो नाम चीनवासी यात्री अश्वघोषं महोपदेशकः नागार्जुनात् पूर्ववर्त्तिनञ्चाह। सारनाथस्थिते कनिष्कशिलालेखे अश्वघोषराज इति नामनिदेशोऽपि मिलति। तेन हि अस्य स्थितिकालो विक्रमानन्तरतृतीयशतकमभित इत्यनुमितः। 1893 खिष्टाब्दात् पूर्वमयं दार्शनिकरूपेणैव प्रसिद्ध आसीत्। एभिः प्रमाणैः सिद्ध्यति यत् कविरयं कनिष्कसमये जीवित आसीत्। अतः अश्वघोषस्य समयः प्रथमः खिष्टाब्दः इति मन्यन्ते।

**महाकवि-अश्वघोषस्य देशः/जीवनवृत्तम्—**

अश्वघोषः साकेतवासीति प्रसिद्धम्। अश्वघोषस्य मातुर्नाम च सुवर्णाक्षी। जन्मना ब्राह्मणः। कालक्रमेण च बौद्धो बभूव। पार्श्वस्य शिष्यश्च कथ्यते। स हि मगधराजाक्षित आसीत्। उत्तरभारतशासकः कनिष्को मगधाधीशम् आक्रमणेन नमयित्वा राज्यस्य परिवर्ते वस्तुद्वयं दातुमादिष्टवान्—1.बुद्धस्य पात्रम् 2.अश्वघोषञ्च। राजा मगधानां पात्रं दातुमुद्यतोऽपि कविमश्वघोषं दातुं नैच्छत्। अश्वघोषः इतिहाससंगीतस्य महाराजकनिष्कस्य गुरु आसीदिति अनुसन्धातॄणां मतम्। अश्वघोषस्य काव्यानि संस्कृतसाहित्यस्य सुन्दतमेषु काव्येषु गण्यन्ते। अश्वघोषस्य प्रतिभा चतुर्मुखी आसीत्। स तु प्रचारवादिषु कविषु अग्रिमः।

**महाकवि-अश्वघोषस्य रचना—**

अस्य महाकवेः महाकाव्यद्वयं प्रकरणमेकं च विवादरहितम्। तच्च—

1. बुद्धचरितम्—बुद्धचरितं संस्कृतभाषामयं (17) सप्तदशसर्गनिबद्धमेकं महाकाव्यं विद्यते। अत्र बुद्धस्य चरितमुपदेशाँश्च कविः अवर्णयत्। बुद्धचरितस्य 404 खिस्ताब्दे चीनीभाषायां अनुवादो बभूव। 800 खिस्ताब्दे च तिब्बतीभाषायामनुवादो बभूव। बुद्धचरितस्य भाषा सरला शैली च मनोहारिणी वर्तते। प्राकृतिकवर्णनं सजीवम्। मञ्जुलोऽलङ्कारसन्निवेशः।

2. सौन्दरानन्दः—अष्टादश(18)सर्गात्मकेऽत्र महाकाव्ये इक्ष्वाकुवंशयस्य राज्ञो नन्दस्य धर्मपरिवर्त्तनम् सुन्दर्या सह तत्पाणिग्रहणं च वर्णयति कविः। द्वितीयं महाकाव्यं म०म० हरप्रसादशास्त्रिणा कलिकातातः प्रकाशितम्। गौतमस्य लघुभ्रातुः सुन्दानन्दस्य चरित्रं वर्णितमत्र सरलभाषायां वैदर्भीशैल्यामुपमारूपकबहुलायाम्।

3. शारिपुत्रप्रकरणम्—अस्य शारिपुत्रप्रकरणस्य प्रकाशनं एच० लूडर्समहोदयेन बर्लिनस्थानात् बभूव। गद्यं पद्यं प्रकृतप्रयोगं भरतवाक्यादिकं च अत्र मिलति।

### महाकवि-अश्वघोषस्य काव्यशैली—

करुणदक्षोऽयं महाकविः। नन्दस्य भिक्षुरूपग्रहणे, सुन्दर्याः विलापे, नन्दानुतापे, यशोधराविलापे, मायारोदने, शुद्धोदनक्रन्दने च करुणस्यैव मन्दाकिनी प्रवहति। उपमारूपकादीनां प्रयोगेऽश्वघोषो निपुणः। अश्वघोषेण शब्दानां विशिष्टेऽर्थे प्रयोगः कृतो योऽन्यत्र नासाद्यते, यथा 'गन्त्री'शब्दो यानार्थे 'धर्मन्'शब्दश्च व्यवहारार्थे। अश्वघोषः वैदिकपौराणिकविषयाणां महान् भाण्डागार आसीत्। यदि कालिदासस्य रचनासु चातुर्वर्ण्यस्य व्यापिका पृष्ठभूमिर्दृश्यते तदाश्वघोषस्य रचनासु बौद्धधर्मस्य विश्वजनीनगम्भीरनैतिकता विलोक्यते।



## 7. महाकविः भासः ( 100 ई० पू० )

### महाकविः भासस्य समय/देशः/जीवनवृत्तम्—

यस्याश्चौरश्चिकुरनिकरः कर्णपूरो मयूरः।
भासो हासः कविकुलगुरुः कालिदासो विलासः॥

संस्कृतनाट्यसाहित्ये महाकविः भासः अन्यतमं स्थानं धत्ते। भासस्य स्थितिकालविषये पण्डिताः सम्प्रत्यपि नैकमत्यं भजन्ते। कालिदासात्पूर्वं भासस्य नाट्यग्रन्थाः एवाद्य लभ्यन्ते।

1. 'प्रथितयशसा भाससौमिल्लकविपुत्रादीनाम्' इत्यादिके वाक्ये कालिदासद्वारा महाकविः ससम्मानं सस्मार इति कालिदासात् पूर्ववर्ती आसीत् भासः इति निश्चीयते।
2. केचन भासस्य कालं 100 ई० पू० मानयन्ति।
3. प्रोफेसर बर्नटः भासम् ईसवीयस्य सप्तमशताब्द्यां स्थितिं स्वीकरोति।
4. स्टेनकेनो महोदयः विन्टरनित्स भासम् ईसवीयस्य द्वितीयचतुर्थशताब्द्योरन्तराले स्थितिं स्वीकुरुतः।
5. केचित्तमुदयनसमकालिकं मन्यते। परे तु तं विक्रमसमकालीनमन्ये तं श्रीहर्षसमकालीनमपि मन्यन्ते। ते हि राजशेखरस्य—

कारणं तु कवित्वस्य न सम्पन्नकुलीनता।
धावकोऽपि हि यद्भासः कवीनामग्रिमोऽभवत्॥

6. भासं तु श्रीहर्षस्यैव सभाकविर्वाणभट्टः—

सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः ।
सपताकैर्यशो लेभे भासो देवकुलैरिव॥

7. समुद्रगुप्तो हि स्वकीये कृष्णचरिते मुनिकविवर्णनप्रसङ्गे भासं स्मरति। भासस्य अग्निवर्णसभाकवित्वं सिध्यतीति।

वस्तुतस्तु भासो हि उदयनसभाकविरिति कपिलदेवस्य मतमेव युक्तियुक्तं दृश्यते। उदयनो हि बुद्धसमकालिकः। तदा हि मगधेषु अजातशत्रोः पुत्रस्य दर्शकस्य शासनमासीत्। केचिद्दर्शकं विम्बसारज्येष्ठपुत्रमपि मन्यन्ते। कौटिल्यो हि चन्द्रगुप्तस्य विन्दुसारस्य प्रधानामात्यः, तेन हि कौटिल्यस्य समयः-300-215 मितविक्रमपूर्वकालाब्दान्तरालेऽनुमितः। चन्द्रगुप्तस्य समयः-272-241 वि॰पू॰, बिन्दुसारस्य समयः 241-216 वि॰पू॰ मन्यन्ते।

एभिः कारणैर्भासस्य प्राचीनता सिद्धा भवति। सा च प्रचीनता कालिदासादपि प्राचीनमिमं साधयन्ती 100 ई॰ पूर्वमितं कालं भासस्य बोधयति।

**महाकविः भासस्य रचना—**

भासः संस्कृतसाहित्यस्य प्रथमनाटककारः विद्यते। तात्पर्यमिदं यत् सम्प्रति उपलब्धेषु नाटकेषु भासस्य एव नाटकानि प्राचीनतमानि। भासनाटकसंग्रहः नाटकचक्रनाम्ना प्रसिद्धः। त्रयोदशानां नाटकानां संक्षिप्तः परिचयः अधः प्रस्तूयते—

1. **प्रतिज्ञायौगन्धरायणम्**—अस्मिन् नाटके अङ्क-चतुष्टये वत्सराजस्य उदयनस्य उज्जयिन्याः राज्ञः प्रद्योतस्य राजदुहित्र्या वासवदत्तया सह प्रणयव्यवहारः चित्रितः ।गन्धरायणस्य प्रतिज्ञया एव अस्य नामकरणं 'प्रतिज्ञायौगन्धरायणम्' वर्तते।
2. **स्वप्नवासवदत्तम्**—षष्ठाङ्कयुक्ते अस्मिन् नाटके प्रतिज्ञायौगन्धरायणस्य उत्तरवर्तिकथानकं विद्यते।
3. **अविमारकम्**—अस्मिन् नाटके षष्ठाङ्काः विद्यन्ते। अत्र सौवीरराजकुमारस्य कुन्तीभोजस्य पुत्र्या कुरङ्गया सह प्रणयलीलायाः चित्रणं वर्तते।
4. **प्रतिमानाटकम्**—सप्ताङ्के नाटकेऽस्मिन् रामजन्मनः वनगमनपर्यन्तं रामायणस्य कथानकं वर्णितम्।
5. **अभिषेकनाटकम्**—अस्मिन् नाटके षडङ्काः विद्यन्ते। अत्र किष्किन्धाकाण्डात् युद्धकाण्डपर्यन्तं रामायणस्य कथा वर्णिता वर्तते।
6. **मध्यमव्यायोगः**—एकाङ्कं नाटकमिदम्। भीमेन घटोत्कचात् ब्राह्मणपुत्रस्य रक्षणं वर्णितमस्ति। पुनश्च भीमस्य हिडिम्बया सह मिलनं भवति।
7. **पञ्चरात्रम्**—अङ्कत्रयात्मके नाटकेऽस्मिन् द्रोणाचार्यस्याग्रहेण दुर्योधनः पाण्डवेभ्यः राज्यं दातुं स्वीकरोति परञ्च यदि पञ्चरात्र्यन्तरे एव तेषां दर्शनं भविष्यति।

8. दूतवाक्यम्—एकाङ्कं नाटकमिदम्। अस्मिन् श्रीकृष्णस्य दौत्यकर्मणः वर्णनं विद्यते।
9. दूतघटोत्कचम्—एकाङ्कं नाटकमिदम्। अभिमन्योः मरणोपरान्तघटोत्कचस्य दौत्यकर्मणः वर्णनं विद्यते।
10. कर्णभारम्—एकाङ्कं नाटकमिदम्। अस्मिन् इन्द्राय कर्णेन कवचकुण्डलयोः प्रदान वर्णनं विद्यते।
11. ऊरुभङ्गम्—एकाङ्कं नाटकमिदम्। अस्मिन् द्रौपद्याः अपमानस्य प्रतीकारार्थं दुर्योधनस्य उरुभङ्गस्य वर्णनं वर्तते। सम्पूर्णसंस्कृतसाहित्ये एतदेव दुःखान्तं नाटकं विद्यते।
12. बालचरितम्—पञ्चाङ्केऽस्मिन् नाटके श्रीकृष्णस्य बालचरितस्य वर्णनमस्ति।
13. दरिद्रचारुदत्तम्—अस्मिन् नाटके अङ्कचतुष्टयमस्ति। अत्र दरिद्रब्राह्मणचारुदत्तस्य वेश्यया वसन्तसेनया सह प्रणयव्यापारः चित्रितो वर्तते।

भासस्य नाटकानाम् अनेकता विविधता च तस्य मौलिकतायाः नाट्यकुशलतायाः च परिचयं साधु ददाति। भासस्य सर्वाणि नाटकानि रंगमंचाय एव रचितानि विद्यन्ते। संस्कृतभाषायां एकांकीनाटकानां सर्वप्रथमं रचयिता भास एव। चरित्रचित्रणेऽपि कवि कुशलः। भासस्य प्रकृतिचित्रणमपि सुन्दरं स्वाभाविकं चास्ति। अलङ्काराणां चयने नवरसानां चित्रणे च भासः सिद्धहस्तः। रसाभिव्यक्तौ भासस्य नाटकेषु शृङ्गारवीरकरुणत्रयाणां रसानां सुन्दरपरिपाको दरीदृश्यते। भासस्य कविता मनोवैज्ञानिकाकर्षणेन सहृदयानां मनांसि मोहयति।

**महाकविभासस्य काव्यशैली—**

भासस्य भाषितभाषाप्रयोगः भाषासौष्ठवं, सरला किन्तु सरसा शैली, रसपरिपाकश्च शब्दाडम्बरशून्यता, कथाप्रवाहश्च सर्वे सम्भूय तं हि पण्डितयुगान्नितान्तान्तपूर्ववर्तिनं सूचयन्ति। भासस्य नाटकेषु कथानकस्य संघटनं चरित्रचित्रणं कथोपकथनं रससंयोजनं भाषा शैली च हृदयग्राहिणी, आकर्षका उपयुक्ता समीचीना विद्यते।



## 8. मुरारिः ( 900 )

**मुरारेः समयः—**

संस्कृतकविषु मुरारेर्महती प्रतिष्ठा विद्यते। अस्य रचनायामतिशयोक्तेः प्राचुर्यं दृश्यते।

1. मुरारिः भवभूतेः परवर्तीति सिध्यति। एवं च रत्नाकर(855-884)पूर्ववर्तित्वं सिध्यति।
2. 1135 खीष्टाब्दे वर्त्तमानोऽथ श्रीकण्ठचरितरचयिता मङ्खः मुरारिं राजशेखरात् प्राचीनं मन्यते।
3. 800-960 वा 800-880 मितवैक्रमाब्दकाल एवास्य स्थितिकालत्वेनानुमितः।
4. डॉ. कीथस्य मतानुसारं मुरारि माहिष्मती(नर्मदातटे स्थित मान्धाता)इत्यस्य नृपस्य सभापण्डितः आसीत्।

इदं सर्वं विचार्य आचार्यश्रीरामचन्द्रमिश्रः कथितः—खीष्टनवमशतकपूर्वार्द्धे मुरारिरजायतेति प्रतीयते।

**मुरारेः देशः—**

कविवरो मुरारिः मौद्गल्यगोत्रस्य माहिष्मतीपुर/मङ्गलपुर वास्तव्यस्य वर्धमानाख्यस्यात्मजः। माताऽस्य तन्तुमती। असौ हि कलचुरिवंश्यस्य कस्यचिद्राज्ञः सभाकविरप्यासीत्। स तु कश्चिन्मैथिलो वा गौडीय आसीदिति विदुषां मतम्।

**मुरारेः रचना—**

श्रमसाध्ये मुरारिकृते सप्ताङ्कमये 'अनर्घराघवे' रामायणी कथावस्तुत्वेन उपाता। कथया एतद् नाटकं महावीरचरितेन साम्यं बिभर्ति। अस्य कविता प्रौढा साऽलङ्कारा झङ्कारशालिनी च कथ्यताम्। विश्वामित्रस्य आगमनतः रावणवधानन्तरं, पुष्पकविमानेन अयोध्यापरावर्तनम्, रामराज्याभिषेकपर्यन्तं समस्तकथाः स्वनाटके 'अनर्घराघवे' चित्रिताः।

**मुरारेः काव्यशैली—**

असत्यामपि उपमाचमत्कृतौ सत्यामपि क्लिष्टतायां बन्धदार्ढ्येन सङ्गीतकृतमाधुर्येण चास्य कवित्वं रमणीयशैलीसम्पन्नं मन्यते। वस्तुवर्णने निपुणस्य मुरारिकवेर्भाषावैदुष्यं व्याकरणपाटवं चात्यन्तं चमत्करोति। मुरारिर्मूलतः अलङ्कारवादी कविः आसीत्।



## 9. महाकविः भवभूति ( 700 )

**महाकविभवभूतेः समयः—**

संस्कृतभाषायां नाटकानां प्रणेतृषु प्रधानान्यतमस्य भवभूतेर्वास्तविकं नामधेयं श्रीकण्ठ इत्यासीत्। असारे खलु अस्मिन् संसारे नैव कोऽपि ईदृशः साहित्यानुरागी जनः येन नाटककारस्य महाकवेः भवभूतेः नाम न श्रुतम्। 'गिरिजायाः स्तनौ वन्दे भवभूतिसिताननौ' इति पद्यप्रणयन-मूलकमस्य भवभूतिनाम्ना प्रथनं श्रूयते। हर्षचरिते बाणभट्टः भवभूतेर्नाम कीर्त्तयति, अष्टमशतकोत्पन्नो वामनश्च तदीयग्रन्थतः स्वग्रन्थे उदाहरणं ददाति। राजशेखरोऽपि भवभूतिं स्वपूर्वभवं प्रख्यापयति। भवभूति-वाण-वामन-मध्यवर्ती अर्थात् 750-800 मितवैक्रमाब्दान्तरालवर्ती काल एव स्थितिकालः इति पर्यवस्यति। अथवा बाणवाक्पतिराजयोरन्तराले तस्य स्थितिकालः। राजतरङ्गिण्याम्—

कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः।
जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम्॥

इति निर्दिशन् कल्हणो भवभूतेर्यशोवर्मकालिकतां प्रत्येति, यशोवर्मा च 736 मिते खीष्टाब्दे म्रियते स्म। एभिः साक्ष्यैर्भवभूतेः समयः (700) सप्तमशतकासन्नः प्रतिपन्नः।

**महाकविभवभूतेः देशः—**

एषः महाकविः दक्षिणभारते विदर्भस्थपद्मपुराभिजनः तैत्तिरीयशाखाध्यायी उदुम्बरवंश्यस्य श्रोत्रियविप्रवंश्यस्य काश्यपगोत्रीयस्य भट्टगोपालख्यस्य पौत्रः, नीलकण्ठाख्यस्य पुत्रः जातुकर्ण्याख्यायां जातः। सौभाग्यवशाद्भवभूतिर्हि मालतीमाधवमहावीरचरितप्रस्तावनायां स्वपरिचयं प्रस्तौति। तस्य हि प्रारम्भिकं नाम श्रीकण्ठः पश्चाच्च भवभूतिः इत्याख्यया प्रसिद्धिः।

**महाकविभवभूतेः जीवनवृत्तम्—**

संस्कृतनाट्यपरम्परायां . भवभूतेः प्रवेशः सौभाग्याय समपद्यत। यद्यपि समालोचकाः 'उत्तररामचरिते भवभूतिर्विशिष्यते' इति समामनन्ति तथापि अस्य सर्वा अपि कृतयो विशिष्टा एव। भवभूतिः हि कान्यकुब्जेश्वरस्य यशोवर्मणः सभापण्डितः आसीदिति।

**महाकविभवभूतेः रचना—**

1. उत्तररामचरितम्, 2. महावीरचरितम, 3. मालतीमाधवम् इति त्रिषुशृङ्गार-वीर-करुणरसाः प्राधान्येनावलम्बिताः।

1. **उत्तररामचरितम्**—करुणरसमुख्यं नाट्यमिदं सप्ताङ्कम्। अत्र हि रामायणस्योत्तरकाण्ड-सम्बद्धा कथा कविकल्पनया समुन्नीय प्रस्तुताऽस्ति। सीतापरित्यागः, रामविलापः, लवकुशप्राप्तिः, सीतास्वीकारश्चास्येति वृत्तस्य मुख्यांशाः।
2. **महावीरचरितम्**—महावीरचरितं हि रामायणसम्बद्धं वीररसमुख्यं नाटकमत्र सप्ताङ्काः सन्ति। अत्र हि रामायणस्यैव कथा स्वल्पपरिवर्तितरूपा चित्रिता।
3. **मालतीमाधवम्**—ग्रन्थोऽयं दशाङ्केषु विभक्तः प्रकरणसंज्ञको वृत्तस्यास्य कविकल्पितत्वात्। अत्र हि पद्मावतीनरेशस्य मन्त्रिणो भूरिवसोः पुत्र्या मालत्याः विदर्भराजमन्त्रिणो देवरातस्य सुतस्य माधवस्य च प्रेमकला वर्णिताऽस्ति। प्रकरणेऽस्मिन् मुख्यो रसः शृङ्गारः, वीरो वीभत्सश्चाङ्गो।

**महाकविभवभूतेः काव्यशैली—**

भवभूतिरतिभावुकः कविः। यदि भवभूतेः कृतिषु कालिदासकृतिसुलभं सौन्दर्यं माधुर्यं च दुरावापं तर्हि परिमितैः पदैर्वस्तुस्वरूपस्य वर्णने भवभूतिः कालिदासमप्यतिशेते। रसवर्णने कविः अद्भुतः। अत्रापि नाटके करुणरस एव मुख्यः रसः स्वीकृतः। शृंगारवीरादयोऽपि करुणरसस्यैव अंगरसाः सन्ति। अलंकारप्रयोगेऽपि महाकविः भवभूतिः कालिदासादीनां कोटौ समागच्छति। भवभूतेः भाषा सरला-तरला, स्वभाविकी चास्ति।



## 10. पण्डितराजजगन्नाथः ( 1700 )

**पण्डितराजजगन्नाथस्य समयः—**

पण्डितराजजगन्नाथस्य अभ्युदयः काव्यशास्त्रे नव्यपरम्परोद्योतकः। पण्डितराजस्य-

स्थितिकालस्तु शाहजहानस्य सभापण्डितरूपेण स्वीक्रियते। शाहजहानश्च 1685 मितवैक्रमाब्दे इति पण्डितराजस्य वैक्रमसप्तदशशतकोद्भवत्वं प्रतीयते, 1698 मितवैक्रमाब्दे आसफअली महाशयस्य निधनानन्तरं पण्डितराजो देहलीं तत्याजेति जनश्रुतिः। तस्य जन्म 1655 मितवैक्रमाब्दमभितोऽनुमातुं शक्यते। 1700 मितवैक्रमाब्दमभितोऽप्पयदीक्षितः तनुं तत्याज तयोरपि समकालिकत्वं सिध्यति। पण्डितराजो हि 1720 मितवैक्रमाब्दपर्यन्तं जीवित एवाऽऽसीदिति तस्य आसफविलासतो ज्ञायते। आचार्यश्रीरामचन्द्रो स्व-संस्कृतसाहित्येतिहासे वर्णयति यत्— शाहजहां 1628 तः 1638 ई॰ पर्यन्तं राज्यमकरोत्। अतो जगन्नाथस्य समयविषये कोऽपि संशयो नोदयते। शाहजहांनृपतेः पुत्रो दारासिकोहो जगन्नाथस्य पोषक आसीत्। पण्डितराज अप्पयदीक्षितस्य समकालीनः आसीत्।

**पण्डितराजजगन्नाथस्य देशः—**

पण्डितराजो हि तैलङ्गो ब्राह्मणः, पिताऽस्य पेरुभट्टो माता च लक्ष्मीदेवी। तैलङ्गदेशावयवमुनगुण्डाभिध ग्रामवासी वेजनतीजातीयो जगन्नाथो गोदावरीनामकमण्डलस्य भूषणमासीत्। तस्याभिजनं नाम 'उपद्रष्टा' इत्यासीत्। यथा—

तैलङ्गान्वय-मङ्गलालय-महालक्ष्मीदयालालितः,
श्रीमद् पैरमभट्टसूनुरनिशं विद्वल्ललाटं तपः।
संतुष्टः कमताधिपस्य कवितामाकर्ण्य तद्वर्णनम्,
श्रीमत्पण्डितराजपण्डितजगन्नाथो व्यधासीदिदम्।।

**पण्डितराजजगन्नाथस्य जीवनवृत्तम्—**

पण्डितराजजगन्नाथः सप्तदशखीष्टाब्दस्य मध्यभागे तैलङ्गदेशे (आधुनिक कर्णाटक प्रदेशे) समुत्पत्तिं लेभे। अयमान्ध्रवेगिनाड़िपरिवारस्य तैलङ्गो ब्राह्मणः आसीत्। जगन्नाथः वेदान्त-न्याय-वैशेषिक-पूर्वमीमांसा-व्याकरणादि विषयाणामध्ययनं स्वपितुः सविधे स्वपितुर्गुरोः वीरेश्वरस्य च सविधे अकार्षीत्। आचार्यश्रीरामचन्द्रमिश्रः स्व-संस्कृतसाहित्येतिहासे वर्णितवान् यत् जगन्नाथः स्वाध्ययनविषयं स्वयं लिखति—

श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः
काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत्।
देवादेवाध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयं
शेषाङ्कप्राप्तशेषामलभणितिरभूत् सर्वविद्याधरो यः।।
पाषाणादपि पीयूषं स्यन्दते यस्य लीलया।
तं वन्दे पेरुभट्टाख्यं लक्ष्मीकान्तं महागुरुम्।।

जगन्नाथः कस्यांचन यवनयुवत्यामासक्तो जातिच्युतो भूत्वा तामुपयेमे इति प्रवादो जगन्नाथस्य नाम्ना प्रचारिताभिः कविताभिरपि पुष्टिं नीयते। तस्यां मृतायां जगन्नाथो राजाश्रयं परित्यज्य मथुरामायातो यत्र तस्य 1674 ई॰ वर्षे मृत्युरभवत्। मृत्योः पूर्वं स प्रायश्चित्तं कर्त्तुमपि सन्नद्ध आसीत् परं तत्कालप्रसिद्धौ पण्डितौ भट्टोजिदीक्षिताप्पय्यदीक्षितौ नानुमेनाते। तत्र कारणं

तयोर्जगन्नाथेन सह शास्त्रीयमतभेद एवोच्यते। अयं परमो वैष्णव आसीत्। अयं स्वग्रन्थे दिल्लीश्वरस्य वदान्यतायाः वर्णनं कुर्वन् प्राह—

दिल्लीश्वरो वा जगदीश्वरो वा मनोरथान् पूरयितुं समर्थः।
अन्येन केनाऽपि नृपेण दत्तं शाकाय वा स्यात् लवणाय वा स्यात्॥

**पण्डितराजजगन्नाथस्य रचना—**

पण्डितराजजगन्नाथस्य अनेके ग्रन्थाज्ञाताः सन्ति। आचार्य श्रीरामचन्द्रमिश्रः स्व-संस्कृतसाहित्येतिहासे पण्डितराजस्य ग्रन्थसूचिः प्रदत्तः—

**पण्डितराजस्य ग्रन्थाः—**

| क्र.सं. ग्रन्थः | श्लोकसंख्या | विषयः |
|---|---|---|
| 1. गङ्गालहरी | 52 द्विपञ्चाशत् | गङ्गास्तुतिः |
| 2. सुधालहरी | 32 द्वात्रिंशत् | सूर्यस्तुतिः |
| 3. अमृतलहरी | 11 एकादश | यमुनाप्रशस्तिः |
| 4. करुणालहरी | 64 चतुष्षष्टिः | विष्णुस्तुतिः |
| 5. लक्ष्मीलहरी | 41 एकचत्वारिंशत् | लक्ष्मीस्तुतिः |
| 6. यमुनावर्णनचम्पू | | नामव्याख्यातविषया |
| 7. आसफविलासः | | आसफखाँमहोदयस्य प्रशस्तिः |
| 8. प्राणाभरणम् | | कामरूपाधीशस्य प्राणनारायणस्य प्रशस्तिः |
| 9. जगदाभरणम् | | उदयपुराधीशराणाकर्णसिंहसूनोर्जगत्सिंहस्य प्रशस्तिः |
| 10. चित्रमीमांसाखण्डनम् | | अप्पय्यदीक्षितकृतचित्रमीमांसानामक-ग्रन्थालोचना |
| 11. मनोरमाकुचमर्दनम् | | सिद्धान्तकौमुदीटीकाया मनोरमायाः खण्डनम् |
| 12. रसगङ्गाधरः | | अपूर्णोऽतिप्रौढोऽलङ्कारशास्त्रग्रन्थः |
| 13. भामिनीविलासः | | कवितासङ्ग्रहः |

अत्र रसगङ्गाधरः काव्यशास्त्रसम्बद्धो ग्रन्थः। ग्रन्थेऽस्मिन् द्वे एव आनने दृश्यते। ग्रन्थश्चायमपूर्ण एव। अत्र हि काव्यस्वरूपं, काव्यभेदाः, रसविवेकः, शब्दगुणानां लक्षणं, अर्थगुणानां लक्षणं, भावलक्षणं, ध्वनिविवेकः, शक्तिविवेकः, अलङ्कारनिरूपणं च प्रतिपादितविषयाः।

**पण्डितराजजगन्नाथस्य कविताशैली—**

अस्य पण्डितराजस्य संस्कृतभाषायामुपरि प्रतिभापूर्णमाधिपत्यमासीत्। सः स्वकीयश्लोकेषु शब्दध्वन्या एव भावाभिव्यक्तं कर्तुमशक्नोत्। पण्डितराजस्य कविताया अद्भुतं चमत्कारित्वं विद्यते यदन्वयः सातिशयः स्फुटो भवति, कुत्रापि अन्वयस्यावश्यकता न भवति, रसपरिपाकश्च स्फीतो भवति। रसनिरूपणेऽनेन महती स्पष्टता सूक्ष्मता च प्रकटीकृता, माधुर्यादिनिरूपणमपि नितान्तनूतनं कृतम्। अलङ्काराणां लक्षणं सूत्रशैल्या निबध्य तद्भाष्यमपि नितान्तप्रौढं कृतम्। भामिनीविलासस्यान्ते तेनैवोक्तम्—

धुर्यैरपि माधुर्यैः द्राक्षाक्षीरेक्षुमाक्षिकसुधानाम्।
वन्द्यैव माधुरीयं पण्डितराजस्य कवितायाः॥



## 11. विश्वनाथः ( 1400 )

**महाकविविश्वनाथस्य समयः—**

कविराजविश्वनाथस्य समयादिनिरूपणोपयोगि किमपि स्फुटतरं प्रमाणं नोपलभामहे, तथापि समुपलब्धानि कानिचन प्रमाणानि आधारीकृत्य तन्निरूपणे प्रवर्तामहे। तथा च साहित्यदर्पणस्य चतुर्थे परिच्छेदे कविरयं यवनाधिपति अल्लाबुद्दीनखिलजीनामकसन्धौ सर्वस्वहरणं विग्रहे प्राणनिग्रहः। यथा—

सन्धौ सर्वस्वहरणं विग्रहे प्राणनिग्रहः।
अल्लाबदीननृपतौ न सन्धिर्न च विग्रहः॥

इति पद्येऽनेन अल्लाउदीनखिलजीं स्मृतो यो 1316 ई॰ मृतः। एतेन श्लोकस्य माध्यमेन स्मरति यत् अल्लाबुद्दीनखिलजीनामकस्य यवनाधिपतेः शासनकालः 1296 ईस्वीतः 1316 ईसवीं यावद् अभूत्। विश्वनाथः अल्लाबुद्दीनस्य शासनकालस्य पश्चादेवाभूत्। साहित्यदर्पणस्य एका 1384 ईस्व्यां लिखिता हस्तलिखिता प्रतिरपि समुपलब्धा वर्तते। अनया विश्वनाथस्य समयः 1384 ईसवीतो अर्वागेव निश्चीयते। अस्य महाकवेः त्रयोदशशताब्द्याः उत्तरार्धमारभ्य चतुर्दशशताब्द्याः पूर्वार्द्धो भवितुमर्हति कालः।

**महाकविविश्वनाथस्य देशः—**

विश्वनाथः उत्कलवासी समृद्धकुलसम्भवश्चासीत्। अस्य कुलं पाण्डित्ये प्रसिद्धम्। एतत्पित्रा चन्द्रशेखरेण प्रणीतम्—पुष्पमाला, भाषार्णवश्चेति ग्रन्थद्वयं प्रथते। एतत्पितामहभ्राता-चण्डीदासः काव्यप्रकाशस्य दीपिका नाम्नीं टीकां निरमात्। अलङ्कारजगति सर्वाधिको लोकप्रिय आलङ्कारिको वर्तते। अयं हि विद्वान् नारायणदासस्य पौत्रः श्रीचन्द्रशेखरपण्डितस्य तनूजन्माऽभवत्। सोऽयं विश्वनाथकविराजः प्रसिद्धं 'साहित्यदर्पणः' नाम ग्रन्थं निर्ममे इति तेन स्वयमेवाभ्यधायि—

श्रीचन्द्रशेखरमहाकविचन्द्रसूनु-
श्रीविश्वनाथकविराजकृतं प्रबन्धम्।
साहित्यदर्पणममुं सुधियो विलोक्य
साहित्यतत्त्वमखिलं सुखमेव वित्त॥ (सा॰द॰श्लो॰ 99)

**महाकविविश्वनाथस्य जीवनवृत्तम्—**

विश्वनाथस्य 'अष्टादशभाषावारविलासिनीभुजङ्ग' इत्युपाधिर्नानाभाषाभिज्ञत्वं समर्थयति। अयमुत्कलीयः आसीत्। विश्वनाथः स्वपित्रा सह सम्भवतः कलिङ्गदेशस्य कस्याऽपि राज्ञः महत्त्वपूर्ण पदाधिकारिणावास्ताम्। उभावपि तत्र 'सन्धिविग्रहिक महापात्र' पदव्या विभूषितावास्ताम्।

विश्वनाथः वैष्णवधर्मावलम्बी आसीत्। नाम्नोऽन्ते 'कविराज' इत्युपाधिना विभूपितोऽयं महापात्र-विश्वनाथः। अत्र विचार्यते—'कवीनां राजा' कविराजः इति व्युत्पत्त्याऽऽस्य कविष्वपि प्रमुखप्रतिपादनपरत्वमेवाभिव्यनक्ति। विश्वनाथकविराजः अष्टादशभाषाज्ञातवान् यथा तासु तास्वपि भाषासु रमणीयान् गुणालङ्कारयुतान् भाषा पाठावबोधकप्रबन्धान् रचयितुं समर्थो बभूव। अतएव 'अष्टादशभाषावारविलासिनीभुजङ्ग' इति विशेषणेन संस्तूयते विद्वद्भिः।

**महाकविविश्वनाथस्य रचना—**

विश्वनाथस्य कृतिषु प्रसिद्धो ग्रन्थः साहित्यदर्पणः। अत्र काव्यस्य नाटकस्य च सर्वाङ्गीणं विवेचनं प्रस्तुतम्। विश्वनाथप्रणीताः नवसंख्याकाः ग्रन्थाः सन्ति। नवनवोन्मेषशालिन्या प्रज्ञायाः परिचयं ददाति। ते च सन्ति निम्नांकिता ग्रन्थाः—

| | | |
|---|---|---|
| 1. राघवविलासमहाकाव्यम्। | 2. चन्द्रकला(नाटिका) | 3. प्रभावतीपरिणयम् (नाटकम्) |
| 4. कुवलयाश्चरितम् (प्रकृतं काव्यम्) | 5. प्रशस्तिरत्नावलिः | 6. नरसिंहविजयः (खण्डकाव्यम्) |
| 7. कंसवधम्(काव्यम्) | 8. साहित्यदर्पणः | 9. काव्यप्रकाशदर्पणः (काव्यप्रकाशस्य व्याख्या) |

**महाकविविश्वनाथस्य (8) साहित्यदर्पणः**—अस्मिन् ग्रन्थे दशसंख्याकाः परिच्छेदाः सन्ति। अत्र काव्यस्य नाट्यस्य च सर्वाङ्गीणं विवेचनं प्रस्तुतम्। अस्य लेखकस्य प्रमुखकाव्यशास्त्रीयग्रन्थः साहित्यदर्पणोऽस्ति। अस्य ग्रन्थस्य प्रमुखवैशिष्ट्यमिदमस्ति यद् अस्मिन् ग्रन्थे श्रव्यदृश्ययोरुभयोरपि काव्ययोः वर्णनमास्ते। अतएव सम्पूर्णस्य काव्यशास्त्रस्य प्रतिनिधिभूतोऽयं ग्रन्थो वर्तते।

**महाकविविश्वनाथस्य कविताशैली**—अस्य विलक्षणकाव्यप्रतिभां परिलक्ष्यैव त्रिकलिङ्गेश्वरेण सुप्रीतमनसोपाधिरयं प्रादायीति—

> धम्मिले नवमल्लिकासमुदयो हस्ते सिताम्भोरुहे-
> हारः कण्ठतटे पयोधरयुगे श्रीखण्डलेपो घनः।
> एकोऽपि त्रिकलिङ्गभूमितिलक त्वत्कीर्तिराशिर्ययौ-
> नानामण्डनतां पुरन्दरपुरीवामभ्रुवां विग्रहे॥

अतिगहनव्याकरणदर्शनादितत्तच्छास्त्राणां प्रकर्षपाण्डित्यस्य परिचायकः शास्त्रीयप्रबन्धः साहित्यदर्पण एव दर्शनीयोऽस्ति।



## 12. मम्मटः ( 1100 )

**मम्मटस्य समयः—**

काव्यप्रकाशकर्त्ता मम्मटः वाग्देवतावतारः ध्वनिप्रस्थापनपरमाचार्यश्चोच्यते। अस्य समयः (1100) एकादशशतकस्य चरमभागः। अस्य स्थितिकालस्य पूर्वसीमा तु भोजसमय एव अर्थात् 1020-1110 मितवैक्रमाब्दमित-कालः। तेन हि सामान्यतः 1050-1130 मितवैक्रमाब्द भितो मम्मटस्य स्थितिकालः सिध्यति। स हि प्रायो भोजसमकालिको वा किञ्चिन्मात्रोत्तरकालवर्ती। मम्मटस्य विद्वत्तां प्रमाणयितुं तत्काव्यप्रकाश एवालम्।

**मम्मटस्य देशः—**

मम्मटः काश्मीरवासी भोजराजात् परवर्त्ती च। अस्यानुजौ कैयटोव्वटौ इति प्रसिद्धिः। भोजराजस्य दानशौण्डत्वं प्रशंसितम्, मम्मटस्य पिता जैयटाख्यः आसीदिति सुधासागरकारेण भीमसेनेनोक्तम्, किन्तु उव्वटस्तु आत्मानं वज्रटाख्यस्य पुत्रं मन्यते तेन स हि तस्य पितृव्यपुत्रः सम्भवति। जैयटवज्रटौ हि भ्रातरौ ययोः प्रथमस्य मम्मटकैयटावपरस्य उव्वटः पुत्रः। मम्मटस्य पुत्रो हि अल्लटः इति केषाञ्चिन्मतम्।

**मम्मटस्य जीवनवृत्तम्—**

काव्यप्रकाशो हि काव्यालङ्कारग्रन्थः। सर्वाङ्गपूर्णालङ्कारशास्त्रप्रणयणे हि मम्मटाचार्यः प्रथम आचार्यः। मम्मटाचार्यस्य प्रमुखरचना काव्यप्रकाशः काव्यशास्त्रजगति तरुणभास्कर एव। स हि काव्यशास्त्रस्य सहस्राब्दार्जितानुभवं संगृह्णाति। तत्र हि क्रमेणाकाव्यहेतुकाव्यलक्षण-काव्यफल-काव्यभेद-शब्दशक्ति- ध्वनिविवेकगुणीभूतव्यङ्ग्य-काव्यदोष-काव्यगुण-शब्दार्थालङ्कारा निरूपिता दशसूल्लासेषु। मम्मटात्पूर्वं काव्यशास्त्रस्य क्षेत्रे ये सिद्धान्ताः निर्धारिता अभूवन् तेषां सर्वेषां सिद्धान्तानां विवेचनं कुर्वन् काव्यस्वरूपस्य तस्याङ्गानां च विशदं विवेचनमकरोत् काव्यप्रकाशे मम्मटाचार्यः। राजानकमम्मटभट्टस्य पाण्डित्येन प्रायः सर्वे एव टीकाकाराः मुग्धाः सन्ति।

**मम्मटस्य रचना**—राजानकमम्मटभट्टस्य सुप्रसिद्धः पाण्डित्यपूर्णो ग्रन्थः 'काव्यप्रकाशः' वर्तते। अन्योऽप्येकः 'शब्दव्यापारविचारः' इत्याख्यो ग्रन्थः पुण्यपत्तन(पूना)स्थदक्षिणकाजेल-संज्ञकसंस्थातः प्रकाशितः समुपलभ्यते। काव्यप्रकाशग्रन्थो मम्मटेन परिकरालङ्कारपर्यन्त एव रचितः। अवशिष्टस्तु अल्लटसूरिणा पूरित इति टीकाकृतां प्रवादः। तथाहि ते समुदीरयन्ति—

> कृतः श्रीमम्मटाचार्यवर्यैः परिकरावधिः।
> प्रबन्धः पूरितः शेषो विधायाल्लटसूरिणा॥

काव्यप्रकाशे दश उल्लासाः सन्ति। अत्र ध्वनिविरोधिनां मतं खण्डयित्वाऽयमाचार्यः सुचारुरूपेण ध्वनिनिरूपणं तथाकृतवान् यथा तत्परवर्त्तिनः कस्याप्याचार्यस्य ध्वनिविरोधे साहसो नाभूत्। अत एव हि एष मम्मटः 'ध्वनिप्रस्थापनपरमाचार्य' इत्युपाधिनाऽलङ्कृतोऽवान्तरविद्वद्भिः। अस्य ग्रन्थस्य त्रयोऽशाः कारिकावृत्तिरुदाहरणञ्चेति। अस्य ग्रन्थस्य कारिकैव सूत्रनाम्ना व्यपदिश्यते। अनेन कारिकाः काश्चित् भरतस्यापि गृहीताः शेषाः स्वयं

रचिताः, वृत्तिस्तु स्वीया एव, उदाहरणानि परेषामदीयन्त। मम्मटाचार्येण केवलं नाट्यशास्त्रं विहाय काव्यशास्त्रस्य सर्वेषां विषयाणां केन प्रकारेण विवेचनं कृतमास्ते। अस्य विवेचनस्य क्षेत्रमपि व्यापकमस्ति। अन्येभ्यो लेखकेभ्यः प्रायः 620 श्लोकान् गृहीत्वा स्वमतस्यायं स्पष्टीकरणमकरोत्। प्राचीनाचार्याणां मतस्याप्यनेन खण्डनं कृतम्। काव्यप्रकाशस्य टीकानां संख्या भूयसी वर्तते। प्राचीनकाले काव्यप्रकाशस्य टीकाकरणं वैदुष्यस्य मानदण्डः अवर्त्तत।

**मम्मटस्य कविताशैली—**

यावन्मम्मटस्योदयो नाजायत तावत्काले ध्वनिविरोधिनां शिरांस्युदनमन्, ध्वनिविरोधिनो ग्रन्था अरचिषत, परं मम्मटेन ध्वनिविरोधिनस्तथाऽधिक्षिप्ता यथा पुनस्ते ध्वनिं विरोद्धुं साहसं नाकुर्वन्। परिमितशब्दावल्या सुविस्तृतविषयप्रतिपादनमेव मम्मटस्य वैशिष्ट्यम्।



## 13. आनन्दवर्धनः ( 900 )

**आनन्दवर्धनस्य समयः—**

आनन्दवर्धनो हि काव्यशास्त्राकाशे सर्वसमुज्ज्वलं नक्षत्रम्। अयमानन्दवर्धनाचार्यो ध्वनिसम्प्रदायस्य संस्थापक आचार्यो वर्तते। काव्यजगति तस्य ध्वन्यालोकस्य प्रवेशः सुमहत् सौभाग्यमाधत्ते। आनन्दवर्धनः काश्मीरक्षितिपालस्य अवन्तिवर्मणः सभापण्डित आसीत्। तस्य स्थितिकालो राजतरङ्गिणाम्—

मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।
प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः॥ (5/4)

काश्मीराधिपतेः अवन्तिवर्मणः समयः 855 ईसवीतः 883 ईसवीयं यावत् स्वीक्रियते। आनन्दवर्धनोऽपि तत्कालिकः। केचित्तु आवन्तिवर्मा हि 910-941 मितवैक्रमाब्दानभितः सिंहासनासीन आसीत्। तेन आनन्दवर्धनोऽपि 880-950 मितवैक्रमाब्दनभितः स्थितिकालः अनुमीयते। अत एवानन्दवर्धनाचार्यस्य कालो नवमः शताब्दः स्वीक्रियते। आनन्दवर्धनाचार्यस्य पञ्च ग्रन्थाः प्रख्याताः सन्ति। तेषु पञ्चसु ख्यातग्रन्थेषु ध्वन्यालोकेनैवानन्दवर्धनस्य प्रख्यातिरास्ते। अस्मिन् ध्वन्यालोकग्रन्थे आनन्दवर्धनाचार्यः प्रत्यपीपदत् यत् ध्वनिरेव काव्यस्यात्मा वर्तते।

**आनन्दवर्धनस्य देशश्च—**अस्याचार्यस्य पितुर्नाम 'नोणः' इत्यासीत्। इति एतत् प्रणीतात् 'देवीशतक'पुस्तकात् ज्ञायते। अयं काश्मीरेषु खीष्टाब्दीयनवमशतकोत्तरार्द्धे 'अवन्तिवर्म' नाम्नो महीपते राज्यसमये प्रसिद्ध आसीदिति 'राजतरङ्गिणी' ग्रन्थाज्ज्ञायते।

**आनन्दवर्धनस्य जीवनवृत्तम्—**

रसो न वाच्य इति साधयितुं प्रवर्त्तमान आचार्य आनन्दवर्धनो ध्वनेरावश्यकतामनुभूय ध्वनिसम्प्रदायं प्रवर्त्तितवान्। आनन्दवर्धनात्पूर्वं ध्वनेरभाववादः, लक्षणास्वरूपतावादः, अनिर्वाच्यतावादश्च प्रथते स्म। अयं ध्वनिवादः सर्वाधिकव्यवस्थितरूपेण प्रचरितः।

**आनन्दवर्धनस्य रचना—**

ध्वन्यालोके त्रयोंऽशाः—कारिका, वृत्तयः, उदाहरणानि च। अत्र ग्रन्थे 129 कारिकाः। तत्रहि चत्वार उद्द्योताः, प्रथमे हि उद्द्योते ध्वनिप्रतिष्ठापना, द्वितीये व्यङ्ग्यमुखेन ध्वनिस्वरूपविवेकः, तृतीये तु व्यञ्जनकमुखेन तत्स्वरूपविवेकः, चतुर्थे तु ध्वनिव्युत्पादनप्रयोजनं चेति निरूपितविषयाः। उत्तरवर्तिसाहित्येषु ध्वनिकाररूपेणानन्दवर्धन एव गृहीतो दृश्यते। इदं विश्वस्यते यत्कारिकाभागोऽस्य काव्यालोकसंज्ञितोऽनिर्णीतकर्तृको वृत्तिभागस्तु ध्वन्यालोकसंज्ञित आनन्दवर्धनप्रणीत इति। ग्रन्थोऽयं कारिकारूपो ध्वनिनामा, परिकरश्लोक-संग्रहश्लोकसंक्षेप-श्लोकघटितवृत्तिरूपश्चालोकनामेति भागद्वयभाक्, ध्वन्यालोकः सहृदयालोकः काव्यालोकश्चेति संज्ञात्रयभाक् चेति। ध्वन्यालोकोऽयं यथा जीर्णेऽपि वृक्षे मधुमासे समागते वासन्ती श्रीरभिव्याप्ता भवति तथैव ध्वनेः रसस्य च सम्बन्धेन पूर्वकविभिः वर्णितेष्वपि प्राचीनकविकाव्येष्वेव सौन्दर्यमभिव्याप्यते। ध्वन्यालोकातिरिक्ताः विषमबाणलीला, अर्जुनचरितम्, देवीशतकम् इति त्रयोऽस्य कविताग्रन्थाः प्रथन्ते।

**आनन्दवर्धनस्य काव्यशैली**—अयमाचार्यस्य कवित्वशक्तिरपि विलक्षणा वर्तते। एतस्य महाकवेर्नाम काव्यशास्त्रेतिहासे सुवर्णाक्षरेणाङ्कितुं योग्यं रसगङ्गाधरकृतास्तु सत्यमेवेदं कथ्यते यदयमानन्दवर्धनः साहित्यशास्त्रस्य मार्गं परिष्कृतवानिति। तथाहि—'ध्वनिकृतामालङ्कारिक-सरणि व्यवस्थापकत्वादिति'।



## 14. उद्भटः/भट्टोद्भटो वा (900)

**उद्भटः/भट्टोद्भटो वा इत्यस्य समयः—**

काव्यालङ्कारशास्त्रपरम्परायां भट्टोद्भटस्य काव्यालङ्कारसारसंग्रहः सगौरवं स्थानं गृह्णाति। स हि कश्मीरकस्य जयापीडाख्यस्य राज्ञः सभापतिरासीदिति। तेन हि भट्टोद्भटोऽपि वामनसमकालिको वा तस्मात्किञ्चिज्ज्येष्ठः। तस्य समयः 810-880 मितवैक्रमाब्दानभितः स्थितिकालः।

**उद्भटः/भट्टोद्भटो वा इत्यस्य देशः**—'उद्भट'नाम श्रवणेन ज्ञायते यत् अयं महानुभावः काश्मीरवासी आसीत्। कैयटय, जैलट, मम्मट, अल्लट, झल्लट, कल्लट एतादृशनाम कश्मीरदेशे एव भविष्यन्ति। राजतरंगिणीग्रन्थे कल्हणः लिखति यत् उद्भटः जयापीड़स्य सभापति आसीत्। तस्य दैनिकवेतनः एकलक्ष-दीनारः आसीत्। यथा—

विद्वान् दीनारलक्षेण प्रत्यहं कृतवेतनः।
भट्टोऽभूदुद्भटस्तस्य भूमिभर्तुः सभापतिः॥

**उद्भटः/भट्टोद्भटो वा इत्यस्य जीवनवृत्तम्**—अस्य महानुभावस्य जीवनवृत्तसम्बन्धे ध्वन्यालोकस्य रचयिता आनन्दवर्द्धनाचार्यः स्वग्रन्थे (108 पृ०) लिखति—"अन्यत्र वाच्यत्वेन प्रसिद्धो यो रूपकादिरलंकारः सोन्यत्र प्रतीयमानतया बाहुल्येन प्रदर्शितस्तत्रभवद्भिर्भट्टोद्भटादिभिः" तथा च रुय्यकः व्यक्तिविवेकस्य टीका(पृ०3) लेखनक्रमे लिखति—'इह हि

चिरन्तनैरलंकारतन्त्रप्रजापतिः भट्टोद्भटप्रभृतिभिः शब्दधर्मा एवालंकाराः प्रतिपादिता नाभिधाधर्मा" एवं च पण्डितराजजगन्नाथः स्वकथनस्य समर्थने उल्लेखयति—"अत्राहुरुद्भटाचार्याः। येन नाप्राप्ते य आरभ्यते स तस्य बाधक इति न्यायेनालंकारान्तरविषय एवायमाभाष्यमाणोऽलंकारान्तरं बाधते" इत्यादयः।

**उद्भटः/भट्टोद्भटो वा इत्यस्य रचना—**

तस्य हि त्रयो ग्रन्थाः प्रसिद्धाः 1. भामहविवरणम्, 2. कुमारसम्भवकाव्यम्, 3. काव्यालङ्कारसारसग्रहश्च। सम्प्रति भट्टोद्भटस्य एक एव ग्रन्थो लभ्यते काव्यालङ्कारसारसग्रहो नाम। अयं ग्रन्थः षट्सु भागेष्वलङ्कारान् विभज्य पठति। तत्र 79 कारिकाः सन्ति।

**उद्भटः/भट्टोद्भटो वा इत्यस्य काव्यशैली—**उद्भटः अलंकारसम्प्रदायस्य प्रमुखः आचार्यः आसीत्। "अर्थभेदेन तावच्छब्दा भिद्यन्ते इति भट्टोद्भटस्य सिद्धान्तः।" उद्भटः शब्दश्लेष-अर्थश्लेषौ अर्थालंकार एव मन्यते। भट्ट उद्भटः महान-विद्वान् एवं च धुरन्धर-आलंकारिकः आसीत्।



## 15. कुन्तकः ( 1100 )

**कुन्तकस्य समयः—**

कुन्तकः काश्मीरवासी आसीत्। तस्य स्थितिकालः (1100) एकादशशतक-प्रारम्भसमुद्भवश्च। राजशेखरमहिमभट्टयोरन्तरालवर्त्ती कुन्तक इति पूर्वोक्तसमये साक्षीभूतम्। स हि आनन्दवर्धनमतमुल्लिखतीति इयमेव तस्य स्थितिकालस्य पूर्वसीमा। महिमभट्टो हि तं नामत एव गृह्णाति इति तस्यावरसीमा। तेन कुन्तको हि काश्मीरो वैक्रमदशमशतकोत्तरार्द्धभवः। राजशेखरस्तं नैव स्मरतीति कुन्तकस्य तत्परवर्तित्वं स्पष्टमेव। व्यक्तिविवेककारो महिमभट्टः स्वकीये ग्रन्थे कुन्तकस्योल्लेखमकार्षीत्। यथा—

**काव्यकाञ्चनकषाश्ममानिना कुन्तकेन निजकाव्यलक्ष्मणि।**
**यस्य सर्वनिरवद्यतोदिता श्लोक एष स निदर्शितो यथा॥**

**कुन्तकस्य देशः—**कुन्तकः काश्मीरको विद्वान् आसीत्।

**कुन्तकस्य जीवनवृत्तम्—**'वक्रोक्तिः काव्यजीवितम्' इति वदन्नसौ वक्रोक्तिजीवितन्नाम ग्रन्थं न्यबध्नादित्यसौ वक्रोक्तिजीवितकारः इति नाम्नैव सर्वत्र विख्यातोऽभूत्। अत एव कुन्तकेन वक्रता वैचित्र्यरूपेण तथा वैदग्ध्यभङ्गी भणितिरूपेण वर्णिता। वक्रोक्तेर्व्यापकतानयनाय कविना षड्विधा वक्रोक्तिरङ्गीकृता। कुन्तकानुसारेण वक्रोक्तिरेव काव्यस्यात्मा भवति।

**कुन्तकस्य रचना—**

ध्वनिप्रस्थानस्य ध्वन्यालोकतल्लोचनाभ्यां परिष्कृतत्वेऽपि तद्विरोधाय कुन्तकः 'वक्रोक्तिजीवितम्' नाम वक्रोक्तिसम्प्रदायस्य मुख्यं ग्रन्थं निबबन्ध। वक्रोक्तिजीवितमपूर्णमेव लभ्यते। अत्र चत्वार उन्मेषा येषु वक्रोक्तेः प्रभेदानां साङ्गोपाङ्गवर्णनं कृतम्। वक्रोक्तिष्वेव

ध्वनेरपि समावेश इत्यस्य मार्गस्य प्रधानं वक्तव्यम्। कुन्तको हि वक्रोक्तिमेव काव्यसर्वस्वं मन्यते। "वैदग्ध्यभङ्गिभणितिरेव वक्रोक्तिः।" सा च षड्विधा—1. वर्णविन्यासवक्रता, 2. पदपूर्वार्धवक्रता, 3. प्रत्ययाश्रयवक्रता, 4. वाक्यवक्रता, 5. प्रकरणवक्रता, 6. प्रबन्धवक्रतेति।

वक्रोक्तिजीवितस्य त्रयो भागाः सन्ति—1. कारिकाभागः, 2. वृत्तिभागः, 3. उदाहरणभागश्चेति। कारिकावृत्ती उभे कुन्तकलिखिते वर्तेते। उदाहरणानि च प्रसिद्धेभ्यः काव्यग्रन्थेभ्यः सङ्गृहीतानि सन्ति।

**कुन्तकस्य काव्यशैली**—ग्रन्थकृता हि सर्वेषामलङ्काराणां वाक्यवक्रतायामेवान्तर्भावो दर्शितः; तथा चोक्तम्—

> **वाक्यस्य वक्रभावोऽन्यो विद्यते यः सहस्रधा।**
> **यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति॥** (1.21)

रसस्यान्तन्तर्भावस्तु प्रेय-ऊर्जस्विनोरलङ्कारयोर्मध्ये कृतोऽस्ति। समस्तसाहित्यिकतत्त्वानि सम्मिलितानि कृत्वा कुन्तकेनैतादृशविदग्धतायाः परिचयो दत्तः, येन मर्मज्ञा साहित्यिका सर्वदानुरक्ता एव स्थास्यन्तीति। आचार्यकुन्तकस्यैक एव वक्रोक्तिजीविताऽभिधानो ग्रन्थो वर्तते। किन्त्वनेनैव ग्रन्थेन कुन्तकः प्रख्यातेः परां काष्ठामचुम्बत्। साहित्यसौदामिन्यभिधाने गोपालभट्टः कुन्तकस्य प्रशंसायां लिखति—

> **वक्रानुरञ्जिनीमुक्तिं शुक इव मुखे वहन्।**
> **कुन्तकः क्रीडति सुखं कीर्त्तिस्फटिकपञ्जरे॥**



## 16. क्षेमेन्द्रः ( 1100 )

**क्षेमेन्द्रस्य समयः—**

काश्मीरराजस्य अनन्तस्य सभापण्डितः क्षेमेन्द्रः, अनन्तस्य शासनकालः 1027 ईशवीतः 1064 ई0 पर्यन्तम्, अतः क्षेमेन्द्रस्य समयः 1100 एकादशशतकमिति निश्चित्य वक्तुं शक्यते। विभिन्नविषयाणां राशिलेखको महाकविः क्षेमेन्द्रः काश्मीरदेशे जनिं लेभे। अयं हि अलङ्कारजगति औचित्यसम्प्रदायस्य संस्थापकरूपेण प्रख्यातो वर्तते।

**क्षेमेन्द्रस्य देशः—**

क्षेमेन्द्रः काश्मीरदेशवासी आसीत्। व्यासदासापरनामा क्षेमेन्द्रः प्रकाशेन्द्रस्य पुत्रः सिन्धोः पौत्रः चासीत्। क्षेमेन्द्रस्य पिता प्रकाशेन्द्रः ब्राह्मणानां संरक्षकः आसीत्। क्षेमेन्द्रो लिखति—

> **आसीत् प्रकाशेन्द्र इति प्रकाशः काश्मीरदेशे त्रिदिशेश्वरश्रीः**
> **अभूद्गृहे यस्य पवित्रसत्रमच्छिन्नमग्रासनमग्रजानाम्।**
> **यः श्री स्वयंभूभवने विचित्रे लेप्यप्रतिष्ठापितमातृचक्रः**
> **गोभूमिकृष्णाजिनवेशमदाता तत्रैव काले तनुमुत्ससर्ज॥**

**क्षेमेन्द्रस्य जीवनवृत्तम्—**

क्षेमेन्द्रः प्रथमं शैवः आसीत्परन्तु पश्चात् सोमाचार्यप्रभावात् वैष्णवः समजायत। तस्य शास्त्रगुरुः अभिनवगुप्तः आसीत्। क्षेमेन्द्रस्य चापरं नाम व्यासदासः आसीत्। क्षेमेन्द्रः काश्मीरराजस्य अनन्तस्य सभापण्डित आसीत्। अनन्तस्य शासनकाले असन्तोष-षड्यन्त्र-नैराश्य-रक्तपातानां बाहुल्यमासीदतः कोमलकवितायाः कृते तद्युगमयुक्तमासीत, तथापि क्षेमेन्द्रः स्वदेशवासिनः सत्पथमानेतुं प्रयस्यन्निव बहूनुपदेशप्रचुरान् ग्रन्थान्निर्बबन्ध। अस्य परिवारः अति सम्पन्नश्चासीत्। पिता च दानी तथोदारश्चासीत्। अस्मिन् विषये दशावतारचरितस्यान्ते द्वितीयः श्लोकः दर्शनीयः—

काश्मीरेषु बभूव सिन्धुरधिकः सिन्धोश्च निम्नाशयः,
प्राप्तस्तस्य गुणप्रकर्षयशसः पुत्रः प्रकाशेन्द्रताम्।
विप्रेन्द्रप्रतिपादितान्नदानधनभूगोसङ्घकृष्णाजिनैः,
प्रख्यातातिशयास्य तस्य तनयः क्षेमेन्द्रनामाऽभवत्॥

**क्षेमेन्द्रस्य रचना—**

क्षेमेन्द्रस्य प्रवेशेन औचित्यविचारसम्प्रदायः काव्यशास्त्रं समारब्धः। क्षेमेन्द्रप्रणीतत्वेन बहवो ग्रन्थाः निर्दिष्टाः सन्ति। आचार्यश्रीरामचन्द्रमिश्रः स्व-संस्कृतसाहित्येतिहासे 57 पृष्ठोपरि क्षेमेन्द्रस्य कृतयः प्रदत्तः, येषु कति नाममात्रशेषाः कति श्रूयन्ते प्राप्यन्ते च। परञ्च संस्कृतकाव्यशास्त्रेतिहासस्य रचयिता आचार्यजगदीशचन्द्रमिश्रः उल्लेखयति यत् क्षेमेन्द्रः प्रायः(40)चत्वारिंशत्संख्याकानां ग्रन्थाणां प्रणयनमकरोत्। तेन निम्नलिखिताः ग्रन्थाः प्रणीताः—

| | | |
|---|---|---|
| 1. शशिवंशमहाकाव्यम्, | 2. अमृतरङ्गकाव्यम्, | 3. अवसरसारः, |
| 4. मुक्तावली, | 5. लावण्यवती, | 6. देशोपदेशः, |
| 7. पवनपञ्चाशिका, | 8. पद्मकादम्बरी | 9. अवदानकल्पलता, |
| 10. नीतिकल्पतरुः, | 11. लोकप्रकाशकोशः, | 12. सेव्यसेवकोपदेशः, |
| 13. विनयवल्ली, | 14. दर्पदलनम्, | 15. कविकण्ठाभरणम्, |
| 16. रामायणमञ्जरी, | 17. भारतमञ्जरी, | 18. बृहत्कथामञ्जरी, |
| 19. समयमातृका, | 20. दशावतारचरितम् | 21. चित्रभारतनाटकम् |
| 22. कविकर्णिका | 23. नृपवती(राजवती) | 24. कर्ममाला |
| 25. वात्स्यायनसूत्रसारः | 26. विनयवती | 27. बौद्धावदानकल्पलता |
| 28. नीतिकल्पलता | 29. क्षेमेन्द्रप्रकाशः | 30. कनकजानकी |
| 31. व्यासाष्टकम् | 32. चतुर्वर्गसंग्रह | 33. कलाविलासः |
| 34. औचित्यविचारचर्चा | 35. सुवृत्ततिलकम् | 36. चारूचर्या |
| 37. मुनिमतमीमांसा | 38. नीतिमाला | |

राजतरङ्गिण्याम्(1/13) क्षेमेन्द्ररचितनृपावल्यारुल्लेखः समायाति—

केनाऽप्यनवधानेन कविकर्मणि सत्यपि।
अंशोऽपि नास्ति निर्दोषः क्षेमेन्द्रस्य नृपावलौ॥

**क्षेमेन्द्रस्य कविताशैली—**

क्षेमेन्द्रस्य अवदानकल्पलता सार्धशतवर्षाभ्यन्तर एव तिब्बतभाषाऽनुवादावसरं लेभे इति क्षेमेन्द्रस्य धार्मिकोदारतायाः सुन्दरकाव्यशैल्याश्च प्रबलं प्रमाणम्। क्षेमेन्द्रस्य भाषा मधुरा, सरसा सुबोधा चासीत्। उदाहरणमेकं यथा—

दयितजनवियोगोद्वेगरोगातुराणां विभवविरहदैन्यम्लायमानाननानाम्।
शमयति शितशल्यं हन्त नैराश्यनश्यद्भवपरिभवतान्तिः शान्तिरन्ते वनान्ते॥



## 17. विशाखदत्तः ( 500 )

**विशाखदत्तस्य समयः—**

राजनीतिगर्भितरूपकप्रणेतृष्वस्य द्वितीयं स्थानम्, अस्य 'मुद्राराक्षसं' नाम रूपकं प्रसिद्धमस्ति। कवेरस्य स्थितिकालविषयेऽपि पण्डितेषु नैकमत्यं दृश्यते। केचिदमुं प्रथमचन्द्रगुप्तसमकालिकं मत्वा (377-392)वैक्रमचतुर्थशतकोत्तरार्द्धभवं मन्यन्ते, अपरे तु द्वितीयचन्द्रगुप्तसमकालिकं मत्वा तं वैक्रमपञ्चमशतक(432-471)मध्यवर्तिनं मन्यन्ते। जायसवालस्तु- 375-413 खीष्टाब्दकाले आसीदिति तत्रैव काले विशाखदत्तस्य समयः इति मन्यते। 'आवन्तिवर्मा' एकः काश्मीरकः, अपरञ्च कान्यकुब्जशासिता मौखरिवंश्यः। अस्यैव पुत्रो ग्रहवर्मा महाराजहर्षवर्धनस्य भगिनीं राज्यश्रियं नाम परिणीतवान्। अस्यैव समये विशाखदत्तो मुद्राराक्षसं विरचितवानिति मतमेव इतिहाससमर्थितम्। यतोऽत्रैव काले हूणानामुपद्रवः पश्चिमोत्तरभारतेऽजायत। इयं घटना 582 खीष्टाब्दसमीपे जाता, अतो मुद्राराक्षसस्य प्रणयनकालः षष्ठशताब्दी सिद्ध्यति।

**विशाखदत्तस्य देशः—**

विशाखदत्तः स्वं सामन्तवटेश्वरदत्तपौत्रं महाराजनदभाजः पृथोः सुतं कथयति।

**विशाखदत्तस्य जीवनवृत्तम्—**

स्वग्रन्थप्रस्तावनायां दत्तेन परिचयेन कवेरस्य राजवंशोद्भवत्वं प्रकाश्यते, अत एव चास्य राजनीतिनिपुणत्वं स्वाभाविकम्। विशाखदत्तो राजनीतौ निपुणो दर्शने ज्यौतिषे च कृताधिकारः प्रतीयते।

**विशाखदत्तस्य रचना—**

विशाखदत्तस्यैकमेव 'मुद्राराक्षसं' नाम नाटकमस्य स्थानं नाटककारेषु प्रधानं प्रमापयति। मुद्राराक्षसस्य विशिष्टताविषये स्वग्रन्थे आचार्यप्रवरः श्रीरामचन्द्रमिश्रः स्व-संस्कृतसाहित्येतिहासे कथयति—असत्यामपि शृङ्गारकथायामसत्यपि च प्रणयव्यापारकलापे नाटकमिदमलौकिकेन 'सरलत्वेनामूलमाचूलं चाप्यायित्वे वर्त्तते। ओजोगुण एवात्र तथा समृद्धो यथा समाजिकमनोरञ्जनाय

वस्त्वन्तरं नापेक्षते। स्त्रीपात्रभावे विदूषकस्य चाभावे सत्यपि यदिदं नाटकमेतावत्सरसं जातं तदस्य रचयितुः काव्यकलाप्रवीणतायाः परमं प्रमाणम्।

विशाखदत्तस्य चत्वारि रूपकाणि प्रमितानि सन्ति। 1.मुद्राराक्षसम्, 2.देनीचन्द्रगुप्तम्, 3. अभिसारिकचञ्चितकम्, 4.राघवनन्दम् इति।

**विशाखदत्तस्य काव्यशैली-**

मुद्राराक्षसस्य शैली विलक्षणतमा, अलङ्काराणां प्रयोगेऽपि हृद्यतमः। मुद्राराक्षसस्य नायकश्चन्द्रगुप्तश्चाणक्यो वेति विचारविषयः। प्रधानफलाश्रयतया चन्द्रगुप्तं कथातन्तुसञ्चालनप्रधानतया चाणक्यमेव नायकं स्वीकुर्वन्ति। सुघटितकथावस्तुयोजनायां व्यक्तित्वपूर्णपात्रचरित्रचित्रणे, ओजस्विवातावरणोपन्यासे च नाटकमिदमद्वितीयमिति सर्वसम्मतम्।



## 18. शूद्रकः ( खृष्टपूर्वं 400.500 )

**शूद्रकस्य समयः—**

संस्कृतसाहित्ये शूद्रकस्य महती प्रसिद्धिः। वेतालपंचविंशतिकायां, कादम्बर्यां, कथासरित्सागरे, दशकुमारचरिते च ते ते कवयः शूद्रकस्य राज्ञो नाम सस्मरुः। महाकवेः शूद्रकस्य कालविषये अनेके विचाराः सन्ति—

1. स्कन्दपुराणमतेन विक्रमादित्यात् पूर्ववर्त्ती नृपोऽयम्।
2. केचन विद्वांसः आन्ध्रभृत्यकुलोत्पन्नः शिमुक एवायं शूद्रको वर्तते, अत एव अस्य कालः विक्रमस्य प्रथमशताब्दी वर्तते इति प्राहुः।
3. दण्डी काव्यादर्शे शूद्रकस्य 'लिम्पन्तीव तमोऽङ्गानि' इति पद्यमुद्धृतवान्, अत एव अयं सप्तमशताब्द्याः पूर्ववर्ती सिद्ध्यति।
4. शूद्रकः वराहमिहिरात् पूर्ववर्ती प्रतीयते। वराहमिहिरस्य कालः 500-600 ख्रिष्टाब्दः। अतः शूद्रकस्य कालः 500 ख्रिष्टाब्दात् पूर्वमेव स्वीकरणीयः।
5. मनुस्मृतेः प्रणयनादनन्तरमेव बभूव मृच्छकटिकम् इति निश्चप्रचम्।
6. चन्द्रबलीपाण्डेयोऽमून्यैवैतिहासिकतत्त्वान्याहृत्य शूद्रकं वासिष्ठीपुत्रं श्रीपुलमाविनाऽभिन्नं प्रतीत्य 130-155 खीष्टाब्दकालिकं प्रमापयति।
7. मृच्छकटिकस्य रचना भासरूपकानुहारिणीति बलदेवोपाध्यायाः। अतः शूद्रकस्य कालः भासोत्तरमेव स्वीकरणीयः।
8. डॉ. स्मिथः आन्ध्रवंशसम्भवं सिमुकमेव शूद्रकं निर्धारयति।
9. प्रो.स्टेनकोनो कवते यत् 248 तमे खैस्ताब्दे सम्भूतः शिवदत्ताख्यः क्षितीश एव शूद्रक आसीत्।

एतत्सर्वमालोचयन्तो विद्वांसो शूद्रकस्य समयं 81मिते खृष्टाब्दे पुराणप्रसिद्धनाराशंसीतिहासादिषु विश्वसतामन्येषां च (मतेन)खृष्टपूर्वं चतुर्थे वा पञ्चमे वा शतके किल शिवस्वाविर्बभूव।

**शूद्रकस्य देशः—**

मृच्छकटिकस्य अध्ययनेन प्रतीयते यत् शूद्रकस्य समये उज्जियिनी भारतवर्षस्य समृद्धतमा नगर्यासीत्। तदात्वे चौर्यधूर्तयोः प्रचुरः प्रसारः आसीत् तस्मिन् काले दासप्रथा अपि व्यवहारे आसीत्।

**शूद्रकस्य जीवनवृत्तम्—**

संस्कृतसाहित्ये शूद्रकस्य यशः सर्वत्र प्रसृतं प्राप्यते। शूद्रकस्यैकैवेयं मृच्छकटिकं नाम कृतिस्तात्कालिकसमाजदशायाः प्रस्फुटितं चित्रं प्रकटीकरोति। राज्ञां प्रभुत्वमधिकं परं ते मन्त्रिणां सहयोगमपेक्ष्यैव कार्यं चालयन्ति स्म।

**शूद्रकस्य रचना—**

शूद्रकप्रणीतमृच्छकटिकस्य कथाभागे चारुदत्तवसन्तसेनयोः प्रणयकथायाः सरसं चित्रणं कृतं, परं तेनैव सह तात्कालिकसमाजस्य चित्रमप्यङ्कितम्। अस्य मृच्छकटिकस्य कथाया अंशद्वयमास्ते, प्रथमांशे चारुदत्तवसन्तसेनयोः प्रणयः प्राधान्यमेधते। द्वितीयेंऽशे आर्यकस्य राज्यप्राप्तिः प्रवर्धते। दशाङ्कनिबद्धेऽत्र रूपके कविनारायप्राप्तिश्चारुदत्तवसन्तसेनयोर्विवाहश्चेत्यादयोऽर्था निपुणं वर्णिताः। यन्मृच्छकटिकमुत्तमां कोटिं नयति तदस्ति तस्य कथावस्तु। तदीया कथातितरामेव प्रस्फुटता घटनाचक्रेण पूर्यमाणास्ति। अत एव प्रकरणमिदं नितरां लोकप्रियतामुपेतमस्ति। संस्कृतसाहित्ये चरित्र-चित्रणप्रधानेषु रूपकेष्वन्यतमं रूपकमिदम्। तत्र सर्वविधानामपि पात्राणां सन्निवेशः कृतो रूपककारेण तस्मात् तत्र समाजस्य यथार्थं सजीवं च चित्रं दृग्गतं सञ्जायते। मृच्छकटिके नवनवा भावाः, रमणीया उपमाः, सरसाश्च कल्पनाः प्रतिपदमवाप्यन्ते। भाषा तत्र सरला प्रवाहमयी च विद्यते। अस्ति सा पूर्णतया कथावस्त्वनुगुणा।

**शूद्रकस्य काव्यशैली—**

महाकवेः शूद्रकस्य काव्यशैली सरलतमा मनोहरा दीर्घः समासे गाढो बन्धः च वर्तते। वैश्यकुले संजाताया वसन्तसेनाया ब्राह्मणेन चारुदत्तेन साकं विवाहः समाजे नवस्य विचारस्य उदय एव। नवानां भावानामुद्भावने जागरूकमतेरस्य काव्ये शृङ्गारस्य पुष्टं रूपं दृश्यम्। शूद्रकेण राजन्यायभवनस्य यद् वर्णनं कृतं तदतिहृद्यम्। हास्यप्रयोगेऽपि कवेरस्य साफल्यम्। सर्वांशतो विचारेण नाटकमिदमतिसफलम्। आधुनिकयुगेऽप्यस्य चमत्कारित्वमक्षुण्णमत एव पाश्चात्त्या आलोचका नाटकमिदं प्रशंसन्ति।



## 19. महाकविः श्रीहर्षः ( 1200 )

### महाकविः श्रीहर्षस्य समयः—

ऐतिहासिकानामनुसारेण कान्यकुब्जेश्वरः जयचन्द्रः गढवालवंश्यो राजाऽऽसीत्। एकादशे द्वादशे च ईशवीयशतके अस्य वंशस्य उत्तरभारते प्रचुरः प्रभाव आसीत्। विजयचन्द्रजयचन्द्रौ मिलित्वा 1156 ईशवीतः 1193 ई पर्यन्तं राज्यं चक्रतुः। अतः श्रीहर्षस्य स्थितिकालो द्वादशशतकोत्तरार्धभागो मन्यते। आचार्य हंसराजः अग्रवालः स्व-संस्कृतसाहित्येकतिहासे अपि श्रीहर्षस्य समयः 1150 मितात् 1200 मितं ख्रीष्टसंवत्सरं यावत् मन्यते।

### महाकविश्रीहर्षस्य देशः—

महाकविः श्रीहर्षः संस्कृतसाहित्यजगति सम्माननीयं स्थानम् अधिकरोति। अस्य कवेः 'नैषधीयचरितम्' इति महाकाव्यम् अस्ति। अयं स्वकीयविषये स्वकृतिषु काञ्चन परिचयं दत्तवान् अस्ति। श्रीहर्षस्य पिता श्रीहीरः माता च मामल्लदेवी आस्ताम्। श्रीहीरः काशीवासिनो गढवालवंशोद्भवस्य विजयचन्द्रस्य सभापण्डित आसीत्।

### महाकविश्रीहर्षस्य जीवनवृत्तम्—

श्रीहर्षः विभिन्नेषु शास्त्रेषु प्रवीणः आसीत्। दर्शनशास्त्रे विशिष्टा ख्यातिः आसीत्, इतोऽपि अद्वैतवेदान्ते अस्य गतिः आसीत्। अयं कान्यकुब्जेश्वरस्य जयचन्द्रस्य सभायाम् अतीव सम्मानितरूपेण तिष्ठति स्म। कान्यकुब्जेश्वरः जयचन्द्रः तस्मै ताम्बूलद्वयम् आसनं च दत्त्वा तं सम्मानयति स्म।

### महाकविश्रीहर्षस्य रचना—

संस्कृतसाहित्येतिहासे नैषधीयचरितं नाम अन्तिमं महाकाव्यं कन्नौजाधिपतेः महाराजजयचन्द्रस्य परिगृहीतेन श्रीहर्षेण द्वादशशतकोत्तरार्द्धे लिखितम्। अत्र (22)द्वाविंशतिः सर्गाः 2830 श्लोकाश्च सन्ति। निषधशासकस्य नलस्य चरित्रं प्रस्तूयते अस्मिन् ग्रन्थे दमयतीपरिणय-पर्यन्ता च नलकथा वर्ण्यते। दमयन्त्याः पिता विदर्भः स्वयंवरमारचयति। दमयन्तीकामुका देवा अपि तत्रायान्ति, धृतनलस्वरूपाश्चत्वार इन्द्रयमवायुकुवेराः पञ्चमो नल श्चेति सर्वेषां समरूपतया दमयन्ती विचित्रां दशां प्रपद्यन्ते। सभावर्णनाय समागता सरस्वत्यपि श्लेषवर्णनया दमयन्तीं व्यामोहयति। अवसाने दमयन्त्याः पातिव्रत्येन दृढानुरागेण च प्रीता देवाः स्वानि विशिष्टचिह्नानि प्रकटीकुर्वन्ति यैर्नलः परिचितो वृतश्च भवति। जाते पाणिग्रहे कलिप्रवेशो मुखमुद्रणं च तस्य भवति नलदमयन्त्योः सुखसङ्गमेन च ग्रन्थः समाप्यते। आचार्य-श्रीरामचन्द्रमिश्रमहोदयः स्व-संस्कृतसाहित्येतिहासे 'श्रीहर्षकृतिपरिचयः' 59 पृष्ठोपरि ददाति। तदनुसारम्—

| क्र.सं. ग्रन्थनाम | विषयवस्तुः |
|---|---|
| 1. स्थैर्यविचारणप्रकरणम् | नामतो दार्शनिकग्रन्थोऽयं प्रायः क्षणभङ्गवादखण्डनपरः |
| 2. विजयप्रशस्तिः | जयचन्द्रपितुर्विजयचन्द्रस्य प्रशंसापरकं काव्यम्। |

| | |
|---|---|
| 3. खण्डनखण्डखाद्यम् | स्वनामख्यातोऽनिर्वचनीयतासर्वस्वभूतो वेदान्तग्रन्थः। |
| 4. गौडोर्वीशकुलप्रशस्तिः | वङ्गीयस्य कस्यचिद्राज्ञः स्तुतिपरं काव्यम्। |
| 5. अर्णववर्णनम् | स्वनामख्यातम्। |
| 6. छिन्दप्रशस्तिः | अज्ञातपरिचयस्य कस्यापि राज्ञो वर्णनपरोऽयं ग्रन्थः स्यात्। |
| 7. शिवशक्तिसिद्धिः | शिवशक्त्योरुपासनाग्रन्थोऽयं सम्भाव्यते। |
| 8. नवसाहसाङ्कचरितचम्पूः | नाम्नैव विषयः स्वरूपञ्च आख्यायेते। |
| 9. नैषधीयचरितम् | निषधशासकस्य नलस्य चरित्रं प्रस्तूयते। ग्रन्थे-22सर्गाः, 2830 श्लोकाः सन्ति। |

**महाकविश्रीहर्षस्य काव्यशैली—**

श्लेषरचनायां महानिपुणः श्रीहर्षः सुश्लिष्टां भाषां प्रयुङ्क्ते चतुरमधुरया च भङ्ग्या मनोगतं वाचि निवेशयति। पद-पदान्तगता अनुप्रासा अस्मै भृशं रोचन्ते। श्रीहर्षस्य महाकाव्ये कलापक्षस्य प्राधान्यं विद्यते। शैलीम् आश्रयस्तु कलाप्राधान्यवादिषु भारविमाघश्रीहर्षेषु कलात्मकप्रदर्शनस्य दृष्ट्यां श्रीहर्षः-

तावद् भा भारवेर्भाति यावन् माघस्य नोदयः।
उदिते नैषधे काव्ये क्व माघः क्व च भारविः॥

कलात्मकं प्रदर्शनमेव श्रीहर्षस्य कवित्वस्य परमम् उद्देश्यं प्रतीयते। महाकविः श्रीहर्षः अलंकाराणां विन्यासे अतीव निपुणः अस्ति। अद्भुतानां कल्पनानाम् उद्भावनात् हेतोः श्रीहर्षेण प्रयुक्तेषु अर्थालंकारेषु अपूर्वं सौन्दर्यं समागतम् अस्ति। 'नैषधे पदलालित्यम्' बहुशः प्रशंसितं वर्तते।



## 20. भोजराजः ( 1100 )

**भोजराजस्य समयः—**

भोजराजः प्रसिद्धः समाजसेवी, संस्कृतकवीनामाश्रयदाता, प्रगाढ़पण्डितः, प्रतिभाशाली आलोचकः अपि आसीत्। साहित्यशास्त्रस्य इतिहासे भोजराजः समन्वयवादी-अलङ्कारिकः मन्यन्ते। काव्यस्य विविधेषु अङ्गेषु भोजराजस्य नवीनमतमस्ति। अस्य विशिष्टमतमिदं यत् शृङ्गाररस एव प्रमुखम्।

शृङ्गारवीरकरुणाद्भुतरौद्रहास्य-
वीभत्सवत्सलभयानकशान्तनाम्नः।
आम्नासिषुर्दश रसान् सुधियो वयं तु,
शृङ्गारमेव रसनाद्रसमामनामः॥

1. भोजराजस्य दानपत्रस्य समयः संवत् 1078(1021ई०) वर्तते।

2. भोजराजस्य उत्तराधिकारी जयसिंहस्य शिलालेखे संवत् 1112 (1055 ई०) वर्तते।
3. अयं भोजराजः (1100) एकादशशतकोद्भवः इति मन्यते आचार्यः श्रीरामचन्द्रमिश्रः।

### भोजराजस्य देशः—

मुञ्जराजस्य अनन्तरराज्यकर्ता 'नवसाहसांक' उपाधिधारकः सिन्धुराजः सिन्धुलः वा भोजराजस्य पिता आसीत्।

### भोजराजस्य जीवनवृत्तम्—

धारानरेशः भोजराजः संस्कृतकवीनामाश्रयदाता, प्रगाढ़पण्डितः, प्रतिभाशाली आलोचकः अपि आसीत्।

### भोजराजस्य रचना—

1. भोजराजेन धाराधीशेन कृता 'रामायणचम्पूः' किष्किन्धाकाण्डावसाना एव, तस्या युद्धं लक्ष्मणभट्टेन कृतम्।
2. 'सरस्वतीकण्ठाभरणम्' यः ग्रन्थः रत्नेश्वरस्य टीका सह काव्यमालायां प्रकाशितः।
3. 'शृङ्गारप्रकाशः' ग्रन्थोऽयं हस्तलिखितरूपे सम्पूर्णतया प्राप्तोऽस्ति।

### भोजराजस्य काव्यशैली—

चम्पूरामायणस्य साहित्यिकं गौरवमतिमहत्त्वपूर्णम्। भोजस्य शब्दगुम्फः स्वभावसरलः अर्थराशिश्च चमत्कारातिशयशाली। अस्य वाल्मीकिकाव्यप्रशंसायां लिखितं पद्यं नितान्तहृद्यम्—

वाल्मीकिगीतरघुपुङ्गवकीर्त्तिलेशै-
स्तृप्तिं करोमि कथमप्यधुना बुधानाम्।
गङ्गाजलैर्भुवि भगीरथयत्नलब्धैः
किं तर्पणं न विदधाति नरः पितृणाम्॥

सीतया अशोकवाटिकायां तिष्ठन्त्या दशां वर्णयति कविः—

उपध्यवृक्षस्य परोक्षभावादाश्रित्य भूमिं सुचिरं लुठन्त्याः।
नक्तञ्चरस्त्रीमुखकर्शितायाः सीतालतायास्त्रिजटा जटाभूत्॥

तदिदमतिचमत्कारकारि चम्पूकाव्यम्।



## 21. महाकविः भरतमुनिः (प्रथमशताब्दी)

### महाकविभरतमुनेः समयः/देशः—

भरतमुनेः कालस्य निर्णयः सर्वथा दुरूहो विषयो वर्तते। समयस्य विषये विद्वत्सु ऐकमत्यं नास्ति।

1. अभिनवगुप्तः 'अभिनवभारती' नाम्नीं नाट्यशास्त्रस्य व्याख्यां ईस्व्याः एकादशशताब्द्यां चकार। कालिदासः विक्रमोर्वशीयनाटकस्य 2/98 श्लोके भरतमुनिना शब्देन भरतस्य नामग्रहमुल्लेखं चकार। तथाहि—

मुनिना भरतेन यः प्रयोगो भवतीष्वदृष्टरसाश्रयः प्रयुक्तः।
ललिताभिनयं तमद्य भर्त्तामरुतां द्रष्टुमनाः सलोकपालः॥ इति।

महाकविना कालिदासेन निर्दिष्टा इमाः सर्वाः विशेषता नूनं वर्त्तमाने नाट्यशास्त्रे समुपलभ्यन्ते। एभिः प्रमाणैरयमर्थो भवति यन्महाकविः कालिदासो भरतस्य नाट्यशास्त्रेण पूर्णतया परिचितः आसीत्। अतः भरतमुनिः कालिदासात् पूववर्ती सिद्ध्यति।

2. संस्कृतसाहित्यस्य इतिहासे सूत्रसूत्रकाररूपेण ईस्वीपूर्वस्य चतुर्थशताब्दी स्वीक्रियते।

3. अन्यबहवो विद्वांसः भरतस्य समयं विक्रमपूर्वस्य 500 वत्सरेभ्य आरभ्य प्रथमशताब्दीं यावत् स्वीकुर्वन्ति।

### महाकविभरतमुनेः जीवनवृत्तम्—

संस्कृतसाहित्ये जगति आचार्यभरतमुनेः विशिष्टं स्थानं वर्तते। भरतमुनिः नाट्यशास्त्रस्य प्रणेता विद्यते। नाट्यशास्त्रस्य आंग्लानुवादको मनमोहनघोषः कथयति यत्—'भरतमुनिः एकः काल्पनिकपुरुषो वर्तते।' मत्स्यपुराणानुसारेण भरतमुनिः देवलोके लक्ष्मीस्वयंवरनामकस्य नाटकस्य अभिनयं कारयामास। तत्र उर्वशी नाम्न्यप्सरा लक्ष्म्या अभिनयं चकारः।

### महाकविभरतमुनेः रचना—

भरतमुनेः 'नाट्यशास्त्रम्' एक एव ग्रन्थो समुपलभ्यते। सम्पूर्णोऽयं ग्रन्थः (36) षट्त्रिंशत् अध्यायेषु समुपलभ्यते। अस्मिन् ग्रन्थे (6000)षट्सहस्रसंख्याकाः श्लोकाः सन्ति। अत्र बहवस्तु अनुष्टुप् कुत्रचित् आर्याछन्दांसि प्रयुक्ता श्लोकाः सन्ति। रसनिरूपणस्य प्रसङ्गे क्वचन सूत्राणि क्वचन गद्यव्याख्यानानि समुपलभ्यन्ते। सम्पूर्णो ग्रन्थ सूत्र–भाष्य–कारिकासु च निबद्धो वर्तते। नाट्यशास्त्रे सप्तत्रिंशत् अध्यायाः सन्ति। नाट्यशास्त्रे छन्दः- शास्त्र-अलंकारशास्त्र-संगीतशास्त्रप्रभृतीनां विषयाणां प्राथमिकं विवरणं समुपलभ्यते। अत एवेदं प्राचीनललितकलाया विश्वकोश इव आभाति। भरतप्रणीतं नाट्यशास्त्रस्य प्रकाशनं त्रिप्रकारकं समुपलभ्यते। तद्यथा—1. दाक्षिणात्यप्रकाशनम्, 2.औत्तराहप्रकाशनम्, 3. प्राचीनतमप्रकाशनञ्चेति।

### महाकविभरतमुनेः काव्यशैली—

भरतः नाट्यशास्त्रे अलंकारशास्त्रीयाणि तत्त्वानि गौणरूपेण व्याकार्षीत्। भरतानुसारेण अभिनयाः चतुर्धा विभज्यन्ते, तत्र वाचिकाभिनये अलंकारशास्त्रं सन्निविशते। आचार्यभरतः काव्यालंकारनाम्नि ग्रन्थे अलंकारशास्त्रस्य तत्त्वानां स्वतन्त्ररूपेण व्याख्यां चकार।



## 22. आचार्य भामहः ( 500 )

### आचार्यभामहस्य समयः—

भामहः दण्डिनः पूर्ववर्ती वर्तते। बौद्धाचार्यः श्वन्तरक्षितः(अष्टमशतकस्य) स्वकीये तत्त्वसंग्रहे ग्रन्थे भामहस्य मतस्य उल्लेखं कृत्वा भामहस्य काश्चन श्लोकानुद्धृतवान्। अतः भामहः अटमशत्याः ईस्व्याः पूर्वकालिकोऽस्तीति निश्प्रचमास्ते। भामहः बाणभट्टादपि पूर्ववर्ती सिद्ध्यति। भामहः 501 ईस्व्याः दिङ्नागस्य प्रत्यक्षं कल्पनापोढमिति प्रत्ययलक्षणं काव्यालङ्कारे उद्धृतवान्। प्रत्ययलक्षणे 'अभ्रान्तम्' पदप्रयोगविषये धर्मकीर्तिः भामहस्य समयः 620 ईस्व्या मन्यते। एतेन ज्ञायते यत् भामहः 500 ईस्व्याः आरभ्य 620 ईस्व्याः अन्तराले एव प्रादुर्बभूव। इत्थं भामहस्य कालः षष्ठशताब्द्याः पूर्वकाल एव सिद्ध्यति।

### आचार्यभामहस्य देशः/जीवनवृत्तम्—

अनेके विद्वांसः भामहं काश्मीरवासिनं स्वीकुर्वन्ति। भामहालंकारानुसारेण भामहस्य पितुर्नाम रक्रिलगोम्यासीत्। भामहस्य पिता रक्रिलगोमी बौद्धः आसीदिति सिद्ध्यति। भामहः काव्यालंकारे रामायणस्य महाभारतस्य बृहत्कथायाश्च पात्राणि असकृत् सस्मार, तस्मात् कारणात् ज्ञायते यदयं बौद्धो नासीत्। प्रत्युत स वैदिकधर्मावलम्बी ब्राह्मण आसीत्।

### आचार्यभामहस्य रचना/काव्यशैली—

भामहः सर्वप्रथममलंकारशास्त्रीयं ग्रन्थं रचयामास। तस्य 'काव्यालङ्कार' एव एकः प्रसिद्धोऽस्ति। काव्यालंकारे षट् परिच्छेदाः सन्ति। काव्यस्य अलंकारव्यतिरिक्तोऽपि कश्चन ग्रन्थो भामहेन प्रणीतोऽस्ति। केषाञ्चन विदुषां मतानुसारेण भामहः प्राकृतप्रकाशस्य 'प्राकृतमनोरमाख्यां' टीकां प्रणीतवान्। एतेन भाति यत् भामहः काव्यालंकारव्यतिरिक्तानपि ग्रन्थान् व्यरिरचत् ये साम्प्रतं नोपलभ्यन्ते



## 23. सुबन्धुः ( 600 )

### सुबन्धोः समयः—

संस्कृतवाङ्मये गद्यकाव्यस्य महत्त्वपूर्णं स्थानं विद्यते। गद्यकारेषु सुबन्धोः स्थानं सर्वप्रथमं वर्तते। 'गद्यं कवीनां निकषं वदन्ति' इति प्राहुः केचन आलोचकाः। गद्ये काव्ये समर्थः कविः स्वशब्दार्थयोः देशकालपात्रानुसारिण्या शक्तेः प्रकाशने सर्वथा समर्थां विधीमाश्रयते। शब्दालंकाराणामर्थालंकाराणाञ्च कृते स्थाने प्रयोगेण कविः सहृदयानां परमप्रेमास्पदतां भजते। सुबन्धः कालस्य विषये किञ्चिदपि बाह्यं प्रमाणं नोपलब्धं भवति। अथापि कतिपयैरन्तरङ्गसाधनैः सुबन्धोः समयस्य निर्णयः क्रियते। 1. तथाहि सुबन्धुः स्वयमेव स्वग्रन्थे भणितम्—

सारस्वता विहता नवका विलसन्ति चरतिनीकङ्कः।
सरसीवकीर्तिशेषं गतवति भुवि विक्रमादित्यः॥

1. अनेन श्लोकेन सिध्यति यत् सुबन्धुः विक्रमादित्य-यशोधर्मासमकालिकः आसीत्। एतेन सुबन्धोः समयः षष्ठशतकस्य पूर्वभाग इति वक्तुं शक्यते।
2. बाणभट्टः सुबन्धोः कथां 'धिया निबद्धेयमतिद्वयी कथा' इत्येवं स्मरति। बाणः सप्तमशतकोत्पन्न इति सुबन्धोस्ततः पूर्ववर्त्तित्वेन तस्य षष्ठशतकपूर्वभागभवत्वं युज्यत एव।
3. सुबन्धुः स्ववासवदत्तायां श्लेषद्वारा उद्योतकरं स्मरति, उद्योतकरस्य चास्य समयः षष्ठसप्तमशताब्द्योरन्तराले मन्यते। एभिर्निदर्शनैः सुबन्धोः कालः षष्ठशतकं मन्यते।

**सुबन्धोः देशः**—अनेके विद्वांसः सुबन्धुं काश्मीरी मन्यन्ते। एवं च डॉ0 भोला शंकर व्यासः तं मध्यदेशीयः मन्यते।

**सुबन्धोः जीवनवृत्तम्**—विद्वज्जनहृदयहारिश्लेषादिविविधालङ्कारसर्गतः सुबन्धुः पण्डितपाठकानां हृदयान्याक्रष्टुमलमिति। प्रणयकथायाः कथांशे गद्यकविषु सुबन्धोः स्थानं अग्रगण्यः वर्तते। वासवदत्तायाः विरह-वर्णने सुबन्धुः आनुप्रासिक-चमत्कारस्य एव प्रदर्शनं करोति स्म। सुबन्धुः चमत्कारी कविः आसीत्। तस्य अलंकारस्य प्रयोगः केवल अलंकाराय भवति। यथा—

खिन्नोऽसि मुञ्च शैलं बिभृमो वयमिति वदत्सु शिथिलभुजः।
भरभुग्नविततबाहुषु गोपेषु हसन् हरिर्जयति॥

**सुबन्धोः रचना—**

सुबन्धोः एक एव ग्रन्थः 'वासवदत्ता' नामकः समुपलभ्यते। केचन अस्या वासवदत्तया आख्यायिकात्वमपि स्वीकुर्वन्ति। उदयनकथाया प्रधाननायिकाया वासवदत्तायाः नामानुध्यानमेव। अस्या एव वासवदत्तायाः प्रशंसायां बाणभट्टो लिखति हर्षचरिते—

कवीनामगलद्दर्पो नूनं वासवदत्तया।
शक्त्येन पाण्डुपुत्राणां नूनं वासवदत्तया॥

शब्दार्थालङ्काररससौष्ठवैर्वासवदत्तायास्तुलनायां कोऽप्यन्यो गद्यग्रन्थो नास्तीति तदध्ययनेन प्रतिभासते। यमकानुप्रासोपमाविरोधाभाससंख्यादिका अलंकाराः यत्र-तत्र स्थाने लब्धप्रवेशाः सन्ति। वासवदत्तया आख्यायिकाग्रन्थतया कतिचन श्लोका अपि यत्र तत्रात्र निवेशिता विद्यन्ते, यैः अस्य सुबन्धोः पद्यप्रणयनपाटवं प्रकटं प्रतीयते।

**सुबन्धोः काव्यशैली—**

सुबन्धुः पण्डितपाठकानां हृदयान् आकर्षयितुमलमिति कथयितुं शक्यते। कल्पनाप्रौढिचयनालङ्कारसज्जाभिरयं कविः सकलहृदयजनस्तुत्य इति निर्बाधं कथयितुं शक्यते। सुबन्धुः श्लेष-योजनायाः सभङ्ग-अभङ्गश्लेषे एव विशेषज्ञः वर्तते। सभङ्गश्लेषस्य एकमुदाहरणम्—

सा रसवता विहिता नबका विलसन्ति चरति नो कङ्कः।
सरसीव कीर्तिशेषं गतवति भुवि विक्रमादित्ये॥



## 24. महाकविः बाणभट्टः ( 700 )

**महाकविबाणभट्टस्य समयः—**

महाकविः बाणभट्टः गद्यकारेषु मूर्धन्यः सरस्वत्याश्च वरदपुत्रः आसीत्। प्राचीनः चीनदेशोद्भवो यात्री ह्वेनत्सांगनामा 629 तः 645 खीष्टीयवर्षपर्यन्तं भारतं बभ्राम। स हि स्वयात्रवर्णनप्रसङ्गे उत्तरभारतसम्राजो हर्षदेवस्य सविस्तरं वर्णनं कृतवान्। महाराजहर्षदेवः 606 ईशवीयसमयादारभ्य 648 पर्यन्तं थानेश्वरनामनि स्थाने राज्यं कृतवान्। स च अयं हर्षः बाणभट्टेन स्वीये हर्षचरिते सविशेषं वर्णितः। एतेन बाणभट्टस्य समयः सप्तमशतकं सिद्ध्यति।

**महाकविबाणभट्टस्य देशः—**

बाणभट्टः वात्स्यायनवंशे जन्म गृहीतवान्। अयं महाकविः हर्षचरिते स्वजीवनस्य वृत्तान्तं विस्तरेण वर्णितवान्। तत्र शोणनदस्य तटे शाहबादमण्डले बिहारप्रदेशे प्रीतिकूटनामकनगरे प्रतिवसति स्म इत्यस्ति उल्लेखः। हर्षचरितस्यानुसारम् अस्य वंशस्य परिचयः ब्रह्मणः आरभते। तत्र कुवेरस्य पुत्रः पाशुपतः, पाशुपतस्य पुत्रः अर्थपतिः, अर्थपतेः पुत्रः चित्रभानुः, चित्रभानोः पुत्रः बाणभट्टः इति उपलभ्यते। अस्य माता राजदेवी बाल्यैव दिवंगता।

**महाकविबाणभट्टस्य जीवनवृत्तम्—**

पित्रा लालितः पालितः पोषितश्चापि अयं सुयोग्यस्य अभिभावकस्य अभावात् मित्रैः सह ग्रामात् ग्रामं पर्यटन् देशान्तरस्य अवलोकनाय आकृष्टमना बहुकालम् अन्यत्र उषित्वा पुनः स्वग्रामं प्रति आजगाम। स्वगृहेऽवस्थाय शास्त्राणामध्ययने प्रावर्त्तत। स्वपाण्डित्यप्रकर्षेण थानेश्वरस्य राजधान्या महाराजहर्षवर्धनस्य पण्डितसभायाः सर्वोत्कृष्टं पदम् अलंकृतवान् बाणभट्टः।

**बाणेन हर्षचरिते यः स्ववंशपरिचयः प्रदत्तः स निम्नलिखितवंशवृक्षतः सुखावगम्यः।**




**महाकविबाणभट्टस्य रचना—**

बाणभट्टेन ग्रन्थद्वयमेव गद्यमयं प्रणीतम्—1. हर्षचरितम्, 2. कादम्बरी चेति। 1. हर्षचरितग्रन्थेऽष्टौ उच्छ्वासास्तत्राद्ये उच्छ्वासत्रये बाणेन स्वीया कथा लिखिता। चतुर्थादुच्छ्वासादारभ्य समाप्तिपर्यन्तं हर्षस्य चरितं वर्णितम्। 'ओजःसमासभूयस्त्वमेतद् गद्यस्य

जीवितम्' इति गद्यं विशेषयतामालङ्कारिकाणां मते गद्यलेखकानां मूर्धन्यो बाणः गद्यकाव्यानां प्रथमं च हर्षचरितम्। व्यञ्जनाप्रयोगे वक्रोक्तिरचनायां च बाणः सकलकविमूर्धन्यः। हर्षचरिते तात्कालिकोत्तरभारतस्य स्थितिः प्रकटं प्रकाश्यते।

2. कादम्बरी-बाणस्य कादम्बरी कथाग्रन्थः अस्ति। स्वयमेत्र कविना उक्तम्—'धिया निबद्धेयमतिद्वयीकथा' इति कादम्बर्याः कथाग्रन्थत्वमुक्तम्। कादम्बर्याः कथा जन्मत्रयवृत्तान्तमङ्गीकरोतीति जटिला। कादम्बर्याः पात्रचित्रणम् अत्युत्तमम्। कादम्बरी पूर्वार्धे उत्तरार्धे च विभक्तम्। तत्र भाषाभावयोः शब्दार्थयोः च समुचितः समावेशः अवलोक्यते, वर्णनं सौन्दर्यं तु अनिर्वचनीयं विद्यते।

बाणस्तु पञ्चाननः अस्य महाकवेः काव्ये वाल्मीकेः माधुर्यं, व्यासस्य प्रासादिकता, कालिदासस्य कोमलत्वं, दण्डिनः पदलालित्यं, सुबन्धोश्च ओजत्वं परिलक्ष्यते।

**महाकविबाणभट्टस्य काव्यशैली—**

कवेः गद्यानि पाञ्चालीरीतिम् अनुसरन्ति। प्रायः श्लेषयुक्तानि ओजःगुणपूरितानि, विशालानि विशालानि वाक्यानि सन्ति। सरलः अर्थः सुकुमारवर्णविन्यासः रचनाशैली रमणीया चास्ति। तत्र रसोपादकानि सर्वाणि काव्यतत्त्वानि पूरितानि सन्ति। अतः धर्मदासेन उक्तम्—

रुचिरस्वरवर्णपदा रसभाववती जगन्मनोहरति।
सा किं तरुणी न हि न हि वाणी वाणस्य मधुरशीलस्य॥

अनेन केनचित् उक्तं यत्—श्रीहर्षो विततार गद्यकवये बाणाय वाणी फलम्।

अथ सर्वविधबाणस्य वैशिष्ट्यं गद्यकाव्ये विलोक्य आलोचकैः उक्तं यत्—

बाणोच्छिष्टं जगत्सर्वम् इति अर्थात् काव्यसम्बन्धिनि सर्वविधानि वर्णनानि बाणैः एव कृतानि। अन्यकवयस्तु बाणम् एव अनुकुर्वाणाः सन्ति।

एतत्सकलमपि वैशिष्ट्यं मनसि निधायैव गोवर्द्धनः प्रोक्तवान्—

जाता शिखण्डिनी प्राग्यथा शिखण्डी तथाऽवगच्छामि।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति॥ इति।



## 25. कल्हणः ( 1149-150 )

**कल्हणस्य समयः—**

संस्कृते इतिहासलेखकेषु प्रमुखः खलु कल्हण एव। कल्हणः स्वीयां राजतरङ्गिणीं राज्ञः सुस्सलस्य पुत्रे राजनि जयसिंहे (1127-1159) शासति निर्मितवान्। कल्हणेन 1148 तमेशवीयवर्षे प्रारब्धा राजतरङ्गिणी 1150तमेशवीयवर्षे समापितेति वर्षत्रयं तत्र कार्ये लग्नम्।

**कल्हणस्य देशः—**

कल्हणोऽयं कश्मीरदेशवास्तव्यः आढ्यब्राह्मणवंशीयः राजसभास्थः। अस्य पिता चणपकः कश्मीरनृपतेः हर्षदेवस्य (1048-1101) प्रधानामात्यः आसीत्। पितुः स्थानं प्राप्तुं सक्षमोऽप्ययं राजसेवनं परित्यज्य लेखनं प्रारभत। कल्हणः परमशैवः सन्नपि धार्मिकदृष्टौ सहनशीलो बौद्धानामहिंसासिद्धान्ते धृतादरस्तन्त्रमार्गविमुखश्चासीत्।

**कल्हणस्य जीवनवृत्तम्—**

कल्हणो रामायणमहाभारतयोरन्यान्यसंस्कृतकाव्यानाञ्च निपुणं ज्ञाता ज्यौतिषशास्त्रनिष्णातश्चासीत्। हर्षे हते सति स काश्मीरान् विहाय वाराणसीं अध्यवसत्। कल्हणस्य संस्कृतं नाम कल्याण इत्यासीत्। स हि अलकदत्तनाम्नः कस्यचित्सत्पुरुषस्य च्छत्रच्छायामाश्रितवान्।

**कल्हणस्य रचना—**

'राजतरङ्गिणी' कश्मीरदेशस्य राजनैतिकं भौगोलिकं सामाजिकं साहित्यिकमैतिहासिकं च विवरणमत्र दत्तम्। अष्टौ तरङ्गाश्चात्र सन्ति। 813 ख्रिष्टाब्दात् 1150 ख्रिष्टाब्दं यावद् वैज्ञानिकमितिहासोऽत्र मिलति। अस्मात् प्राग् यत्कथितं तत् कल्पनाप्रसूतमेव। नीलमतपुराणस्य नृपावलेः, पार्थिवालेः, शिलालेखानां, दानपत्राणां, प्रशस्तिपत्राणां चोपयोगोऽत्र विहितः। बौद्धशैवयोः शैववैष्णवयोः वर्णनमत्र निर्मत्सरे प्रशंसापूर्वं करोति कविः। सः कश्मीरजानां दोषानपि वदति परदेशजानां गुणानपि वर्णयति—

श्लाघ्यः स एव गुणवान् रागद्वेषबहिष्कृता।
भूतार्थकथने यस्य स्थेयस्येव सरस्वती॥

राजतरङ्गिणी स्वीयगुणैः परां प्रसिद्धिं गता। 1421तः 1472पर्यन्तं काश्मीरान् शासितवता जैनउलआवीदीनं नामकेन राजतरङ्गिण्याः प्रथमः फारसीकभाषानुवादः कारितः। अकबरः अपि प्रचलितभाषायां राजतरङ्गिण्याः द्वितीयमनुवादं 'अलवदाऊंनी' द्वारा कारितवान्। जहांगीरस्य राजत्वकाले काश्मीरवासी हैदरमलिक नामक उच्चकुलोत्पन्नो विद्वान् राजतरङ्गिण्याः सङ्क्षिप्तमनुवादं विहितवान्।

**कल्हणस्य काव्यशैली—**

इतिहासविवरणभूतेऽप्यस्मिन् ग्रन्थे काव्यशोभा दर्शनीया, भाषा सरला सरसा सुप्रबोधा। शैली च मनोहारिणी अलङ्काराणि यत्र तत्र विराजन्ते। यथा—

योऽयं जनापकरणाय श्रयत्युपायं
तेनैव तस्य नियमेन भवेद् विनाशः।
धूम्रं प्रसौति नयनान्ध्यकरं यमग्नि-
र्भूत्वाम्बुदः स शमयेत् सलिलैस्तमेव॥



## 26. भट्टिस्वामि ( 610 ई० )

### भट्टिस्वामि-महोदस्य समयः—

शास्त्रकाव्येषु भट्टिकाव्यं प्रसिद्धतरम्। अत्र कानि शास्त्रकाव्यानि? व्याकरणसम्बन्धि-पदप्रयोगनियमानां ज्ञानायान्यशास्त्रीयज्ञानसौलभ्याय च यानि काव्यानि प्रणीतानि तानि शास्त्रकाव्यानि इत्युच्यन्ते। श्रीधरसेननामकाश्चत्वारो राजानः 500 ई० तः 650 ई० पर्यन्तमजायन्त। यदि अयं भट्टिर्भट्टिकाव्यस्यैव प्रणेता तदा तस्य समयः 610 ई० मन्तुं शक्यते। यतः शिलालेखोऽयं तदैव लिखितः। केषाञ्चिन्मते प्रथमस्यैव सभासदोऽयम्।

### भट्टिस्वामि-महोदयस्य देशः—

बलभीनरेशस्य श्रीधरसेनस्य सभासदोऽयम्। तत्र चत्वारो नृपा श्रीधरसेनसंज्ञकाः। प्रथमस्य कालः 500 ख्रिष्टाब्दः। अन्तिमस्य 650 ख्रिष्टाब्दः। तेषु कतमस्य श्रीधरस्य समये भट्टिरजायतेति निश्चेतव्यम्। द्वितीयेन भट्टिनामकाय विदुषे किञ्चिद् भूमिर्दत्तेति शिलालेखैर्ज्ञायते। स एव भट्टिकाव्यविधाता चेत् कालोऽस्य 610 ख्रिष्टाब्दः।

### भट्टिस्वामि-महोदयस्य जीवनवृत्तम्—

स्वजीवनवृत्तप्रसङ्गे ग्रन्थनिर्माणप्रसङ्गे वा भट्टिस्वामिना स्वग्रन्थे लिखितम्—"काव्यमिदं लिखितं मया बलभ्यां श्रीधरसेननरेन्द्रपालितायाम्" काव्यरचनायाः उद्देश्यं मनोविनोदेन सह संस्कृतव्याकरणस्य ज्ञानम्। तदिदमुद्देश्यं पूर्णमपि भवति।

### भट्टिस्वामि-महोदस्य रचना—

भट्टिस्वामिनो 'भट्टिकाव्यम्' शास्त्रकाव्येषु प्रसिद्धतरम्। काव्यमिदं भट्टिस्वामिना प्रणीतम्। तन्नाम्नैव च अस्य प्रसिद्धिरपि जाता। इदं काव्यं रावणवधनाम्नापि प्रथते। अस्य एका एव रचना मिलति। अत्र 20 विंशतिसर्गाः 3624 श्लोकाः। राघवचरितमाध्यमेनात्र सरलरूपेण व्याकरणशिक्षा प्रदत्ता। साहित्यविषया अपि सन्निविष्टाः। शब्दालङ्कारयम-कालङ्कारमाधुर्यगुणभाषाविमर्शादयोऽपि विवेचिताः। विभीषणवाक्येषु राजनीतिः शूर्पणखावाक्येषु कौटिल्यमृतुवर्णनं प्रभातवर्णनञ्च दर्शनीयमेव।

### भट्टिस्वामि-महोदस्य काव्यशैली—

भट्टिः काव्यमिदं किमपि प्राचीनमीदृशं काव्यमालोक्यैव प्रणीतवान्। पातञ्जलमहाभाष्ये कतिपयानि व्याकरणप्रयोगपराणि पद्यान्युद्धृतानि सन्ति तेन ज्ञायते यत् पतञ्जलेरपि समये किमपि तादृशं काव्यमासीत्, तदेव किमपि काव्यमाधारीकृत्य भट्टिना स्वं काव्यं विरचितं स्यात्। कविना काव्यगुणा अपि समावेशिताः। अस्य काव्यस्य दशमे सर्गे शब्दार्थालङ्काराणां निवेशेन एकादशे सर्गे माधुर्यगुणस्य समावेशेन चास्य गौरवमेधते। छन्दांसि लघून्येत्राधिकानि, अलङ्कारा उपमारूपकोत्प्रेक्षादयः। श्लोकोऽयमेकावलेरुदाहरणरूपेणावलोक्यते ग्रन्थान्तरेषु—

न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद् यदलीनषट्पदम्।
न षट्पदोऽसौ न जुगुञ्ज यः कलं न गुञ्जितं तन्न जहार यन्मनः॥

## 27. जयदेवः ( 1200 )

### जयदेवस्य समयः—

श्रीकृष्णस्य परमभक्तः जयदेवः मधुरकोमलकान्तपदावलीनिर्माणरसिकः लक्ष्मणसेननामकस्य वङ्गीयस्य राज्ञः सभायामासीत्। लक्ष्मणसेनस्य संवत् वङ्गदेशे बिहारप्रान्ते च सर्वत्र प्रचलति। लक्ष्मणसंवत्-ख्रीष्टाब्दयोरन्तरं 1109 मितं वर्तते। अतो लक्ष्मणसेननृपतेर्द्वादशशतकप्रारम्भ एव कालः। स एव कालो जयदेवस्यापि मन्यते।

### जयदेवस्य देशः—

अयं कविः लक्ष्मणसेनसभास्थः केन्दुबिल्वनिवासी च आसीत्। स्नेहस्योदात्तताचित्रणे एव जयदेवस्य साफल्यम्।

### जयदेवस्य जीवनवृत्तम्—

भक्तकविजयदेवस्य गीतगोविन्दस्य प्रभावोनकेवलमुत्तरभारतीयसाहित्येऽपितु गुर्जरकन्नडादिदक्षिणप्रान्तसाहित्येऽपि प्रकटमुपलक्ष्यते। चण्डीदासविद्यापतिप्रभृतयस्तु कवयो गीतगोविन्दमुपजीव्यैव विश्ववन्द्यं पदमवापुः। कतिचन विद्वांसोऽत्र ग्रन्थे 'गोपीपीनपयोधरमर्दनचञ्चलकरयुगशाली' इत्यादि शृङ्गारप्रधानपद्यानि दृष्ट्वा अश्लीलतां वदन्ति। वस्तुतस्तु अत्र ग्रन्थे श्रीकृष्णो नाम परमात्मतत्त्वं गोपिकाश्च जीवतत्त्वानि, तयोर्मिलनमत्र वर्णितमिति परे। अत्र श्रीकृष्णस्य गोपीभिः सह लौकिक्यः क्रीडा एव यदि वर्णितास्तदात्र काश्लीलता? कुमारसम्भवे, शिशुपाले, नैषधे च महाकाव्ये तत्र तत्र कामसूत्रमनुसृत्य वर्णिता सम्भोगप्रकाराः यदि क्षम्यन्ते तदाऽत्रत्यः शृङ्गारः कथं न क्षम्येत।

### जयदेवस्य रचना—

गीतगोविन्दं ग्रन्थं (12) द्वादशसर्गात्मकं खण्डकाव्यम्। यद्यपि सर्वथैव काव्यकोटौ नायाति यतोऽत्र चरितं न वर्ण्यतेऽथापि वर्णनपरकखण्डकाव्यत्वमस्य स्वीकर्त्तव्यमेव। केचिदाधुनिकास्तु गीतगोविन्दं गीतिनाट्यं मन्यन्ते। अर्थात् गीतगोविन्दं शुद्धगीतिकाव्यशुद्धनाट्ययोरन्तरे वर्त्तते। अस्य ग्रन्थस्य निर्माणं द्वादशशताब्द्यां अभवत्। इदं गीतगोविन्दं शुद्धनाट्यस्यानुगामि मन्तुं शक्यते। अत्र संवादः नास्ति। गीतगोविन्दस्य सम्पूर्णसर्गाः गीतमयाः विद्यते। सर्गाणां कथां परस्परं योजयितुं कतिचन श्लोकाः अपि सन्ति। अत्र सरसमधुरकवितायाः पराकाष्ठा निदर्शिता। भक्तेः सरसकवितायाश्चैकत्र समावेशो यथा गीतगोविन्दे न तथा क्वापि परत्रेति कथनं नानुपयुक्तम्। स्वयमुक्तं जयदेवेन—

> यदि हरिस्मरणे सरसं मनो यदि विलासकलासु कुतूहलम्।
> मधुरकोमलकान्तपदावलिं शृणु तदा जयदेवसरस्वतीम्॥

### जयदेवस्य काव्यशैली—

उपमोत्प्रेक्षादयोऽलङ्काराश्चात्र बाहुल्येन दृश्यन्ते। स्नेहस्योदात्तताचित्रणे एव जयदेवस्य साफल्यम्। यथा—

दृशौ तव मदालसे वदनमिन्दुसन्दीपकं
गतिर्जनमनोरमा विजितरम्भमूरुद्वयम्।
रतिस्तव कलावती रुचिरचित्रलेखे भ्रुवा
वहो विवुधयौवतं वहसि तन्वि पृथ्वीगता।।

श्लेषेण देवाङ्गनानिर्देशः मुद्रालङ्कारेण वृत्तनिर्देशः सहृदयानन्दाय एव। यथा—

वहति च वलितविलोचनजलभरमाननकमलमुदारम्।
विधुमिव विकटविधुन्तुददन्तदलनगलितामृतधारम्।।

विरहिण्याः राधिकायाश्चित्रणे कवि कियान् सफल इति सुधीभिरूह्यमेव। अत्रत्यानि गीतानि रागतालशुद्धानि परिष्कृतपदानि नितान्तमधुराणि च सन्ति।



## 28. राजशेखरः ( 993 )

**राजशेखरस्य समयः—**

राजशेखरः स्वनाटकप्रस्तावनासु स्वजीवनसम्बन्धे यदुक्तवांस्तदाधारेण यायावरवंशेऽस्य जन्माऽसीत्, यो वंशोऽकालजलदसुरानन्दतरलकविराजादीनां जन्मग्रहणेन गौरवान्वितः कथ्यते। महेन्द्रपालस्य आश्रये विद्धशालभञ्जिकाया अभिनयो जातः। महेन्द्रपालानन्तरमयं पुनस्तत्तनयस्य महीपालस्य सभ्यभावेन स्थितो यदादेशेन बालभारतस्य अभिनयः प्रथमं पदमधत्त। एत्रां राज्ञां समयस्य पर्यालोचनया राजशेखरस्य कालः ख्रीष्टनवमशतकस्यावसानभागो दशमशतकस्य पूर्वभागश्च सिद्ध्यति। यं अयं महेन्द्रपालं स्मरति तेन कारितौ शिलालेखौ 903,907 ख्रीष्टाब्दयोरुत्कीर्णौ, नवमशतकोत्पन्नम् आनन्दवर्धनमयमुद्धरति। मुञ्च (975–993) कृपाश्रयेण धनञ्जयेन चायं स्मर्यते, सर्वमपीदम् उक्तम् अनुमोदयति।

**राजशेखरस्य देशः**—राजशेखरः महाराष्ट्रदेशीयः आसीत्। सः अकालजलदस्य पौत्रः दर्दुकस्य शीलवत्याश्च पुत्र आसीत्। अयं क्षत्रियचौहानवंशोद्भवाम् अवन्तिसुन्दरीं नाम ललनामुपयेमे। अयं कान्यकुब्जराजस्य उपाध्यायपदमलङ्कृतः। एतदाश्रयदातुर्नाम महेन्द्रपाल इत्यासीद्यः प्रतीहारवंश्यनृपेषु गौरवशाली समाख्यातः। एतदादेशेनैव बालरामायणं प्रथममभिनीयते स्म।

**राजशेखरस्य जीवनवृत्तम्—**

राजशेखरः यदि नाटकस्थाने महाकाव्यं निरमास्यत्तदा साफल्यमधिकमध्यगमिष्यदिति कथनं सत्यपि कटुत्वे सत्यसमीपगतम्। यथा स्वविषये राजशेखरेण—

बभूव वल्मीकभवः पुरा कविस्ततः प्रपेदे भुवि भर्तृमेण्ठताम्।
स्थितः पुनर्यो भवभूतिरेखया स राजते सम्प्रति राजशेखरः।।

राजशेखरः संस्कृतप्राकृतपैशाच्यपभ्रंशाभिधासु चतसृष्वपि भाषासु निपुणो विद्वानत एव तस्मिन् कविराज इति संज्ञाऽन्वर्था। तन्मतानुसारेणैकाधिकभाषायां सफलकविरेव कविराज इति

कथ्यते। राजशेखरस्य शब्दगुम्फनव्यग्रता तस्य शब्दकवित्वं प्रकाशयति। वर्णननैपुण्यं पुनस्तस्य तत्राप्यव्याहतमेव।

**राजशेखरस्य रचना—**

बालरामायणगतं 'विद्धि नः षट् प्रबन्धान्' इति वचनमाधारीकृत्य राजशेखरेण षड् ग्रन्था रचिता इति वक्तुं शक्यते। यथा—विवेचितः आचार्यश्रीरामचन्द्रमिश्रमहोदयाः स्वसंस्कृतसाहित्येतिहासे—

1. **काव्यमीमांसा**—कविकर्त्तव्यतत्स्वरूपादिप्रतिपादनाय रचितः साहित्यविद्याविषयको हृद्यो ग्रन्थः। अत्र कविताविषयकं बहु ज्ञातव्यं निर्दिष्टम्।
2. **बालरामायणम्**—बालरामायणे रामायणस्य कथा नाटकीयरूपमापादिता। एतत्प्रणयने कविः सर्वमपि स्वं पाण्डित्यं प्रदर्शितवान्। भवभूतेः कवित्वमनुध्याय प्रवृत्तोऽप्ययं वर्णनबाहुल्येन तमतिशेतुमयतिष्ट। अत्रत्या कथा तदङ्कनामभिरप्याख्यातेति तानि निर्दिश्यन्ते— 1. प्रतिज्ञापौलस्त्यः, 2. रामरावणीयः, 3. विलक्षलङ्केश्वरः, 4. भार्गवभङ्गः, 5. उन्मत्तदशाननः, 6. निर्दोषदशरथः, 7.असमपराक्रम, 8.वीरविलासः, 9.रावणविद्रावणः, 10. सानन्दरघुनन्दनः।
3. **बालभारतम्**—बालभारतस्य द्वावेवाङ्कौ लभ्येते, मन्ये तत्रापि महाभारतस्य कथोपनिबद्धा स्यात्।
4. **कर्पूरमञ्जरी**—कर्पूरमञ्जरीसट्टके कर्पूरमञ्जर्या सह राज्ञः चण्डपालस्य प्रेमकथाङ्किता। सेयं कथोदयनकथासम्बद्धरत्नावल्यादिसुप्रसिद्धनाटकादीनि स्मारयति।
5. **विद्धशालभञ्जिका**—विद्धशालभञ्जिकाऽपि प्रेमकथावर्णनपरैव चतुरङ्का नाटिका।
6. **हरविलासः**—हरविलासस्योद्धरणं हेमचन्द्रेण काव्यानुशासनविवेके दत्तम्। तावतैव तस्य सत्त्वमनुमीयते।

**राजशेखरस्य काव्यशैली—**

राजशेखरकृतेषु रूपकेषु गतिशीलताया अभावेऽपि पात्राणां सजीवता न हीयते। रसपरिपाकः, हृदयभावाविष्कारपाटवं, प्रकृतमनुष्ययोः स्वरसवाही परिचयश्चात्र नास्तीति अस्य कवित्वशक्तावक्षतायामपि रूपकाणि समधिककाव्यलक्षणयोगीनीव प्रतीयन्ते। डॉ कीथमतानुसारेण यद्यनुप्रासः कवितायाः प्रमाणं मन्यते तदा राजशेखरस्य महाकवित्वं सिद्धं भवति। संस्कृतप्राकृतच्छन्दसां नानाविधानां सत्यसम्यकप्रयोगे कवेरस्य महान् संरम्भो दृश्यते। अयं लोकभाषाशब्दान् संस्कृते प्रयुङ्क्ते। अन्त्यानुप्रासस्यापि कविनाऽनेन प्रयोगः प्राचुर्येण कृतः। यथा सीतारूपवर्णने कविचमत्कारो दृश्यताम्—

इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमलता श्यामेव देहद्युतिः।

पारुष्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव॥



## 29. कुमारदासः ( 600 )

### कुमारदासस्य समयः—

डॉ0 वासुदेवशरण-अग्रवाल-मतेऽस्य कुमारदासस्य समयः 700 खिृष्टाब्दः। जनाश्रयी छन्दोविचितिनामके ग्रन्थे जानकीहरणस्य श्लोकाः समुद्धृताः। उक्तग्रन्थस्य समयः पं0 बलदेवोपाध्यायमते 600 खिृष्टाब्दस्य पूर्वार्ध एव। अतः कुमारदासस्य कालः तस्मात् प्रागेव। कुमारदासप्रेम्णा कालिदासः लङ्कामगमत्। तत्र कथञ्चित् तत्याज जीवनम्। कुमारदासोऽपि तमनुजगामेति किंवदन्ती सिंघलग्रन्थेषु चलति। कालभेदाद् विश्वासानर्हा।

### कुमारदासस्य देशः—

कुमारदासः लङ्कायामुत्पन्नो बभूव। तस्य पितुर्नाम मानितः लङ्काधिपतेः कुमारमणेरयं सेनानी आसीत्। कुमारदासस्य बाल्ये एव स पञ्चत्वमाप(20/60)। मातुलपालितोऽयं जानकीहरणं नाम काव्यं जग्रन्थ इति जानकीहरणादेव(20/61-62) ज्ञायते।

### कुमारदासस्य जीवनवृत्तम्—

शाङ्र्गधरपद्धतौ, सुभाषितावल्यां, सदुक्तिकर्णामृते, पदचन्द्रिकायां, सर्वस्वकामधेनौ, गणरत्नमहोदधौ, उणादिसूत्रवृत्तौ, काव्यानुशासने, शृङ्गारप्रकाशे, काव्यमीमांसायां च उद्धृतः कुमारदासः लङ्कायामुत्पन्नो बभूव।

### कुमारदासस्य रचना—

जानकीहरणम् इयमेका एव प्राप्ता रचना कवेः। अत्र 20 विंशतिसर्गाः। रामायणीया एवात्र कथा। कालिदासापेक्षया भारविप्रभावोऽत्राधिकः । एकाक्षर-द्व्यक्षर-सर्वतोभद्रमुरजबन्ध-निरोष्ठ्यादिवर्णने कविः यत्नवान्। सन्ध्या-सूर्यास्त-चन्द्रोदयादिवर्णने प्रकृतिप्रेम लक्ष्यते कवेः। यथा—

विरामः शर्वर्या हिमरुचिरवाप्तोऽस्तशिखरं
किमद्यापि स्वापस्तव मुकुलिताम्भोरुहदृशः।
इतीवायं भानुः प्रमदवनपर्यन्तसरसीं
करेणाताम्रेण प्रहरति विबोधाय तरुणः॥

### कुमारदासस्य काव्यशैली—

पितृसमयोः सीतारामयोः स्वच्छन्दां रतिलीलां चित्रयन् कविः विस्मरति श्रीमदभिनवगुप्त-पादाचार्यसिद्धान्तान् रसनियामकानिति महदाश्चर्यम्।



## 30. बिल्हणः ( 1100 )

**बिल्हणस्य समयः—**

बिल्हणः स्वकृते विक्रमाङ्कदेवचरिते नाम महाकाव्ये अन्तिमेऽष्टादशसर्गे स्वीयं चरितं विस्तरेणोपनिबद्धवान्, ततोऽवगम्यते यद् अस्य समयः एकादशख्रिष्टाब्दस्योत्तरार्धः इति श्री पं0 बलदेवोपाध्यायाः। विक्रमादित्यषष्ठस्य कालः 1076 तः 1127 ई0 पर्यन्तं मन्यतेऽतोऽस्य कवेः समयः एकादशशतकोत्तरभागो द्वादशशतकस्यादिभागश्च निश्चीयते इति आचार्य-श्रीरामचन्द्रमिश्रमहोदयाः।

**बिल्हणस्य देशः—**

अस्य कवेः प्रपितामहः मुक्तिकलशः आसीत्। सः राजकमलस्य पौत्रः ज्येष्ठकलशस्य पुत्रः मध्यमो बिल्हणः। माता च अस्य नागदेवी। अस्य भ्रातरौ इष्टरायः आनन्दश्चेति द्वौ आस्ताम्। अयं कश्मीरे एव शिक्षितः। केसरस्य कवितायाश्चोत्पत्तिस्थानं कश्मीरदेश एवेति बिल्हणः। आश्रयदातारं कमपि गुणिनं राजानमन्विष्यन्नयं मथुरा-कान्यकुब्ज-प्रयाग-काशी-धारादीनि स्थानानि गत्वा दक्षिणभारतस्थितं कल्याणनगरं प्राप्तवान्, यत्र तदा चालुक्यवंश्यः प्रसिद्धो राजा विक्रमादित्यः षष्ठः शासनं करोति स्म। भोजो धारानरेशो नानेन दृष्टो यदाऽयं धारामायातो यतोऽस्य धारागमनात् पूर्वमेव स दिवंगतवानासीत्।

**बिल्हणस्य जीवनवृत्तम्—**

नाटिकायां शृङ्गारस्य पञ्चाशिकायां वियोगस्य प्राधान्यं निखिले भारते भ्रमन् कविः वृन्दावनं, मथुरां, प्रयागं, काशीं, सोमनाथादिकं चाजगाम। समयतस्तत् स्थानानि वर्णयति—

**यत्र स्त्रीणां मसृणघुसृणालेपनोष्णा कुचश्री-**
**स्ताः कस्तूरीपरिमलमुचः पट्टिका राङ्कवाणाम्।**
**नौपृष्ठस्थाः शिशिरसमये ते वितस्ताजलान्तः**
**स्नानावासाः प्रचुरमपि च स्वर्गसौख्यं दिशन्ति॥**

**बिल्हणस्य रचना—**

अस्य रचनात्रयमक्षिपथमायाति—1. विक्रमाङ्कदेवचरितम्, 2. कर्णसुन्दरीनाटिका, 3. चौरपञ्चाशिका च। बिल्हणकृते विक्रमाङ्कदेवचरितनामके काव्येऽष्टादशसर्गाः सन्ति। अत्र चालुक्यवंशयस्य विक्रमादित्यषष्ठस्य जीवनचरितं प्रसङ्गतस्तत्पूर्वजानां च चरितं निबद्धं विद्यते। ऐतिहासिकघटनानां निर्देशे विल्हणस्तथा सावधानोऽवर्त्तत यथा चालुक्यवंशस्येतिहासोऽत्र स्फुटावभासतां गतः। अत्र काव्ये कविना वैदर्भमार्गस्यानुसरणं कुर्वता माधुर्यस्य प्रसादस्य च प्रयोगे प्रचुरं प्रयतितम्। वीररसस्य प्राधान्येऽपि शृङ्गारादिरसस्तदङ्गतया निपुणं निबद्धः। आहवमल्लस्य पुत्रत्रये मध्यम एव काव्यनायकः चोलवंशजा चन्दनदेवी च नायिका।

**बिल्हणस्य काव्यशैली—**

कालिदासेन यथा रघुवंशे इन्दुमतीस्वयंवरवर्णनं कृतं तथैव बिल्हणेनापि स्वयंवरस्य

वर्णनं कृतम्। समतानां दर्शनेन सुखमवगन्तुं शक्यते, यद् विल्हणेन कालिदासकाव्यानि निपुणमनुशील्यैव स्वीयं काव्यं निर्मितम्। वसन्त-पुष्पावचय-सहस्नान-मधुपान-वर्षा-मृगयादीनां सुन्दरं चित्रं विल्हणस्य काव्ये वर्तते। भाषायाः प्राञ्जलता, सरलता स्पष्टता चात्रावलोकनीया। वैदर्भी अत्र विराजते।



## 31. अमरूकः ( 800 )

**अमरुकस्य समयः—**

विराजते तत्रभवान् शृङ्गारमन्दराचलोऽमरुकः। अस्य श्लोका एव प्रबन्धायमाना इति समीक्षकप्रवराः। परं कुत्र कदा वाऽसौ जन्म लेभे? कं जनकत्वेन भूषयति स्म? का शारदाऽस्य मातेत्यादिकं सर्वं तिमिराच्छन्नमेव। धन्येयं वाणी या रसिकरसनासु नर्तकीवाद्याऽपि नृत्यति। प्रबन्धकाव्यमलिखच्चेत् परिभाषाप्रकरणं लक्षणग्रन्थानां किञ्चिदन्यदिवाभविष्यत्। अमरुकः नवमशतकतः पूर्वमवर्त्ततेति कथयितुं शक्यते, अतो 850 खीष्टीयकालिको ध्वनिकारः— 'मुक्तकेषु हि प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते। यथाऽमरुकस्य कवेर्मुक्तकाः शृङ्गारस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव' इत्युक्तवान्।

वामनेनापि 800 ई0 समुद्भूतेनास्य पद्यमुदाहृतम्, अतोऽस्य समयः अष्टमं शतकं मन्यते, ततः पूर्वमपि किञ्चित् कथयितुं शक्यते।

**अमरुकस्य जीवनवृत्तम्/देशः—**

अनेन शृङ्गाररसानुकूलाः प्रणयव्यवहाराः कामिजनमनोभावाश्चैव केवलं वर्णिताः, परं तत्रैव तावत्याकर्षकतोत्पादिता यदयं सुधीसमाजे गौरवमभजत।

**अमरुकस्य रचना—**

अस्य महाकवेः काव्यं तन्नाम्नैव 'अमरुकशतकम्' इति ख्यातम्। अत्र प्रतिश्लोकं शृङ्गारभागीरथी प्रवहति। यथा च आनन्दवर्धनः—

मुक्तेषु हि प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते। यथा अमरुकस्य कवेः मुक्तकाःशृङ्गाररसस्यन्दिनः प्रबन्धायमाणा प्रसिद्धा एव। शार्दूलविक्रीडितमत्र वृत्तम्। भाषा समासरहिता स्वल्पसमासा वा। अलङ्काराः शृङ्गारपोषकाः। बहुभिरनुकृता अस्य श्लोकाः संस्कृतसाहित्ये प्रभाविशिष्टा एतादृशाः श्लोकाः सामान्येन न मिलन्ति—

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने मानमधुना।।

अर्जुनवर्मदेवस्य रसिकसञ्जीवनी वेमभूपालस्य शृङ्गारदीपिका चास्य टीकाः शोभनाः।

**अमरुकस्य काव्यशैली—**

शृङ्गाररसानुकूला:, प्रणयव्यवहार:, ब्रह्मज्ञानानुकूला, व्यञ्जनाशक्तिरतिप्रौढा सन्ति।



## 32. श्रीकृष्णमिश्रः ( 1100 )

**श्रीकृष्णमिश्रस्य समयः—**

प्रबोधचन्द्रोदय-ग्रन्थस्य लेखकः श्रीकृष्णमिश्रः स्व-ग्रन्थस्य प्रस्तावनायां कीर्त्तिवर्मण उल्लेखो दृश्यते। कीर्त्तिवर्मणः समयश्च 1049 तमखीष्टाब्दतः 1100 तमखीष्टाब्दपर्यन्तमिति पुरातत्त्वविदो वदन्ति। अनेनैव कीर्त्तिवर्मणा 1065 खीष्टाब्दसमीपे कर्णवर्मा जितः। अस्य कर्णवर्मविजयस्योल्लेखोऽपि प्रबोधचन्द्रोदयप्रस्तावनायां विद्यते। अतः प्रबोधचन्द्रोदयप्रणेतुः श्रीकृष्णमिश्रस्य जीवनकाल 1100 एकादशशतकस्यात्तरार्धभागोऽवधारयितुं शक्यते।

**श्रीकृष्णमिश्रस्य देशः—**

अयं श्रीकृष्णमिश्रः वङ्गदेशोद्भव इति वस्तुवृत्तविदः।

**श्रीकृष्णमिश्रस्य जीवनवृत्तम्—**

एतत्प्रस्तावनायां प्रसङ्गाद् 'नृपकीर्त्तिवर्मणा नृपकर्णदेवो जितः' इत्येवंविध उल्लेखोऽवाप्यते।

**श्रीकृष्णमिश्रस्य रचना—**

कृष्णमिश्रकृतं प्रबोधचन्द्रोदयाभिधानं नाटकं रूपकाख्यानतया संस्कृते महत्त्वस्य पदमर्हति। स्वशिष्याणामन्यतमस्य मूढमतेरद्वैतदर्शनशिक्षायै किल कृष्णमिश्र एतत् प्रणीतवान्। श्रीकृष्णमिश्रस्यैकमेव प्रबोधचन्द्रोदयाभिधानं रूपकं प्राप्यते। इदं रूपकं प्रतीकेषु प्रथमत्वेन सरसरचनाशालित्वेन च प्रसिद्धम्। अमूर्त्ता भावा धर्मादयोऽत्र मूर्त्तप्राणिरूपतया कल्पिताः। इदमेव चास्य प्रतीकरूपकत्वम्। अस्यैव सरसस्य सरलस्य च ग्रन्थरत्नस्यानुकरणे तैस्तैः कविपण्डितैः चैतन्यचन्द्रोदयविद्यापरिणयामृतोदयादीनि प्रतीकरूपकाणि विरचितानीति संस्कृते प्रतीकरूपकप्रणयनपथि प्रदर्शकोऽयं मन्यते।

**प्रबोधचन्द्रोदयकथावस्तु—**

कामक्रोधलोभादिसहितो महामोहो नाम नृपः काश्यां राज्यमकरोत्। तस्य मत्यादिसमन्वितेन विवेकेन सह महान् विरोध आसीत्। महामोहो विवेकं स्वदेशाद् बहिष्कृतवान्। तस्मिन्नेव काले आकाशवाण्यभूद्यत् कालेनास्य विवेकस्योपनिषदा सह संसर्गे प्रबोधस्य जन्मनि जाते तेन महामोहस्य उन्मूलनं शक्यक्रियं भविष्यति। अन्ततोगत्वा सत्पक्षस्य विजयोऽसत् पक्षस्य च पराजयो भवति। एवं च मङ्गलमयी नाटकसमाप्तिर्भवति।

**श्रीकृष्णमिश्रस्य काव्यशैली—**

प्रबोधचन्द्रोदये स्वशिष्यान्यतमस्य कस्यचन मन्दमतेः शिक्षायै श्रीकृष्णमिश्रोऽमूर्त्तान्

धर्मादिभावान् मूर्त्तमानवभावेन परिकल्प्य सरसया शैल्या अद्वैतमतप्राधान्यं प्रदर्शितवान्। अस्य नाटकस्य कविता नितान्तरसपेशला सरलपदा च। यथा—

अपि यदि विशिखाः शरासनं वा
कुसुममयं ससुरासुरं तथापि।
मम जगदखिलं वरोरु नाज्ञा
मिदमतिलङ्घ्य धृतिं मुहूर्त्तमेति॥



## 33. वेदव्यासः ( 400 ई॰ पू॰ )

**वेदव्यासस्य समयः—**

साम्प्रतिकस्य महाभारतस्य रचनाकालात् नैकशताब्दीभ्यः पूर्वमासीदिति निर्विकल्पं सिद्ध्यति। मूलमहाभारतस्य जयाभिधानस्य वर्त्तमानमहाभारतात् पूर्वकालिकत्वं निि श्चतम्। अत्र वर्त्तमानमहाभारतस्य रचनाकालसम्बन्धे विचारणीयमस्ति, तत्र—

1. खीष्टैकादशशतके क्षेमेन्द्रप्रसवा 'भारतमञ्जरी' ग्रन्थकथाया वर्त्तमानमहाभारतस्य एकादशशतकस्य पूर्वकालिकत्वं सर्वथा सिद्धम्।
2. अष्टमशतकोत्तरार्धे जाता आद्यशंकराचार्या वेदादावनधिकृतानां (स्त्रीशूद्राणां) धर्मज्ञानाय महाभारतं स्मृतित्वेन प्रादिशन्ति। तेन महाभारतस्य ततः पूर्वकालिकत्वं सिद्धम्।
3. अष्टमशतकोत्पन्नाः कुमारिलभट्टाः, सप्तमशतकोत्पन्नाः बाणसुबन्धुप्रभृतयः कवयः महाभारतस्य बहूनि पर्वाणि स्मरन्ति।
4. पञ्चमशतकीये आश्वलायनगृह्यसूत्रे, चतुःशतकीये बौधायनधर्मसूत्रे च महाभारतोल्लेखः वीक्ष्यन्ते।

अतः सर्वसमीक्षया महाभारतम् 400 ई॰ पू॰ समयतः पूर्वमेव निर्मितमिति प्रतीयते। अपि च, प्रकृतमहाभारतस्य कर्ता वेदान्तकृत् (ब्रह्मसूत्र रचयिता)वेदविद् महामुनिर्व्यासः श्रीमद्भगवद् गीतायाः उपदेष्ट्रा श्रीकृष्णेनं समकालभवः आसीद् इति स्पष्टमेव।

**वेदव्यासस्य देशः—**

वेदव्यास एव कर्ता महाभारतस्य इति परम्परा सुभाषितग्रन्थाश्च। पराशरोऽस्य पिता माता च सत्यवती। द्वीपे जन्मसत्वात् द्वैपायन, शरीररङ्गात् कृष्णमुनिः कृष्णद्वैपायनो वा, वेदानां विभागाद् वेदव्यासश्च। ग्रन्थस्यास्य निर्माणे भगवतो गणेशस्यापि महद्योगदानमस्ति। पुराणेषु अयमपि अवताररूपेण स्वीकृतः। प्राचीनभारतस्य इमां प्रतिभां नमन्त्याधुनिकाः पुरातनाश्च समानरूपेण।

**वेदव्यासस्य जीवनवृत्तम्—**

वेदव्यासः नास्त्ययमितिहासकार एव। भूगोलवेत्ता, बहुभाषाज्ञाता, शस्त्रशास्त्रमर्मज्ञः,

सेनापरिचितः, कलानिष्णातः, समाजशास्त्री, लोकाचारज्ञः, अर्थशास्त्री, कामशास्त्रपटुः धर्मशास्त्री च आसीत्।

**वेदव्यासस्य रचना—**

महाभारतं भारतीयसभ्यतायाः संस्कृतेश्च भव्यस्वरूपबोधाय ग्रन्थरत्नमिदमावश्यकम्। भगवद्गीता-विष्णुसहस्रनाम-अनुगीता-भीष्मस्तवराज-गजेन्द्रमोक्ष-संज्ञकं च रत्नप्रदानादेवास्य पञ्चमवेदता। धर्मार्थकाममोक्षविषयकसम्यक् प्रबोधोऽत्रैव द्रष्टुं शक्यते। महाभारते लक्षैकश्लोकाः सन्ति। अस्य ग्रन्थस्य मौलिकं रूपं जयनाम्ना प्रसिद्धम्। पर्वणि विभक्तमिदं ग्रन्थम्। यथा—

आदि-सभा-वन-विराट्-उद्योग-भीष्म-द्रोण-कर्ण-शल्य-सौप्तिक-स्त्री-शान्ति-अनुशासन-अश्वमेध-आश्रमवासी-मौसल-महाप्रस्थानिक-स्वर्गारोहणाभिधपर्वाणि तानि च अष्टादशसंख्यकानि।

**वेदव्यासस्य काव्यशैली—**

महाभारते कविना भौतिकजीवनस्य निःसारता एवोट्टङ्किता। मोक्ष एव ज्यायान्। न केवलमिदं काव्यमपि तु अर्थशास्त्रं कामशास्त्रं च। यथा स्वयं भगवान् वेदव्यासः—

अर्थशास्त्रमिदं प्रोक्तं धर्मशास्त्रमिदं महत्।
कामशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना॥



## 34. रत्नाकरः ( 900 )

**रत्नाकरस्य समयः—**

पञ्चाशत् सर्गनिबद्धं बृहत्कायं खलु हरविजयं नाम महाकाव्यं 850 मितख्रीष्टसंवत्सरस्य समीपवर्तिनि काले किल 'रत्नाकरः' चकार।

**रत्नाकरस्य देशः/जीवनवृत्तम्—**

हरविजयप्रणेता महाकवि रत्नाकरः कश्मीरानलङ्कृतवान्। अस्य पितुर्नाम अमृतभानुरित्यासीत्। रत्नाकरस्य आश्रयभूतो राजा चिप्पटजयादित्य आसीत्। रत्नाकरोक्त्या स राजा बालबृहस्पत्युपाधिक आसीत्, यतोऽसौ—'बालबृहस्पत्यनुजीविनः' इति स्वविषये लिखति। चिरजीविना रत्नाकरेण जयादित्यानन्तरं सम्राडवन्तिवर्माऽऽश्रितो यथोक्तम्—

मुक्ताकणः शिवस्वामी कविरानदवर्धनः।
प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः॥

अवन्तिवर्मा च 855 तः 884 पर्यन्तं राज्यं कृतवान्; अतो रत्नाकरस्य समयः नवमशतकवर्तित्वं सुप्रतीतम्।

**रत्नाकरस्य रचना—**

रत्नाकरस्य रचना हरविजयकाव्यं संस्कृतकाव्येषु परिमाणतो गुणतश्च श्रेष्ठं मन्यते। अत्र

पञ्चाशत् सर्गाः सन्ति 4321 संख्यकानि च पद्यानि विद्यन्ते। रत्नाकरस्य समये माघस्य महती ख्यातिरासीत्, माघस्य प्रसिद्धिमालोक्य तत्प्रतिस्पर्धयेव रत्नाकरेण हरविजयं प्रणीतम्।

**रत्नाकरस्य काव्यशैली—**

कल्हणेनास्य काव्यस्योल्लेखः कृतः, अलकेनात्र व्याख्या लिखिता, क्षेमेन्द्रेणात्र प्रयुक्ताया वसन्ततिलकायाः प्रशंसा कृता। कविना शास्त्रीयपाण्डित्यस्य पराकाष्ठा प्रदर्शिता।



## 35. हर्षवर्द्धनः ( 700 )

**हर्षवर्द्धनस्य समयः—**

शास्त्रीयपद्धतिमाश्रित्य विरचितेषु दृश्यकाव्येषु सम्राजो हर्षवर्द्धनस्य 'रत्नावली' नाम दृश्यकाव्यमेकं श्रेष्ठं दृश्यकाव्यमस्ति। तच्छ्रेष्ठतायाः कारणमिदमस्ति यत् अत्र तेषामुदाहरणानां संख्याधिकतमा वर्तते, अर्थात् नाट्यशास्त्रं कस्यचन रूपकस्य विशिष्टतायाः प्रदर्शनाय अपेक्षते। महाराजहर्षवर्द्धनः प्रभाकरवर्धनाद् यशोमत्यामजनि। अस्य भ्राता राज्यवर्धनः कनिष्ठा भगिनी च राज्यश्रीः आस्ताम्। दुर्दैववशाद्राज्यवर्धनः शशाङ्कनामकेन वङ्गीयनृपतिना छलेन निहतः। तदनन्तरं हर्षवर्धनो राजा बभूव। अस्य राजधानी स्थाण्वीश्वरनामकं स्थानमासीत्। अस्य राज्यकालः 606-647 खीष्टाब्दमासीदिति प्रतीतम्।

**हर्षवर्द्धनस्य देशः—**

अस्य राजधानी 'स्थाण्वीश्वर'नामकं स्थानमासीत्। हर्षवर्द्धनः प्रभाकरवर्धनस्य कनिष्ठपुत्रः आसीत्। तस्य अग्रजः राज्यवर्धनः आसीत्। हर्षवर्धनस्य भगिनी राज्यश्री आसीत्।

**हर्षवर्द्धनस्य जीवनवृत्तम्—**

पञ्चनदप्रदेशे बहूपद्रवतो हूणान् पराजेतुं प्रेषिते भ्रातरि तमनुगच्छन्नयं मध्येमार्गं पितुरस्वास्थ्यं श्रुत्वा राजधानीं परावृत्तः सन् पितुर्मरणे जाते तदौर्ध्वदैहिकं कृत्वा यावद् भ्रातुरागमनं राज्यं शशास, आगते च तस्मिंस्तद्राज्यं भरतो रामायेव तस्मै प्रतिपादयामास। दुर्दैववशाद्राज्यवर्धनः शशाङ्कनामकेन वङ्गीयनृपतिना छलेन निहतः। तदनन्तरं हर्षवर्धनो राजा बभूव। अस्य राजधानी स्थाण्वीश्वरनामकं स्थानमासीत्। अस्य राज्यकालः 606-647 खीष्टाब्दमासीदिति प्रतीतम्। तस्य शैल्या विशिष्टतेयं यत् तत्र चित्रात्मकानां ध्वन्यात्मकानाञ्च पदानां प्रयोगोऽभ्युपगतः। मधुरभावनाभिव्यक्त्यर्थं वैदर्भी ह्यपेक्ष्यते।

**हर्षवर्द्धनस्य रचना—**

हर्षवर्द्धनस्य रूपकत्रयं प्रथते—1. रत्नावली, 2. प्रियदर्शिका, 3. नागानन्दञ्च। त्रिष्वपि रूपकेषु प्रस्तावनायां हर्षस्य नाम स्मर्यते, एतेनैषामेककर्तृकत्वं सिद्धम्। पद्यमेकं रत्नावलीप्रियदर्शिकयोः समानम्, पद्यद्वयं च प्रियदर्शिकानागानन्दयोः समानमिति समाना शैली, कथावस्तुसादृश्यं चेति सर्वं मिलित्वा त्रयाणामपि रूपकाणामेककर्तृकत्वं व्यवस्थापयति।

1. **रत्नावली**—रत्नावल्याः कथावस्तु उदयनसागरिकयोः प्रणयमाधारीकरोति। पोतभङ्गेन दुरवस्थतां गमिता रत्नावलीनाम्ना स्वमप्रख्याप्य सागरिकानाम्ना उदयनराजभवने प्रविश्य तन्महिष्या वासवदत्तया दासी बभूव। उदयनसागरिकयोरनुरागे विदिते पतिसुखकामनया स्वसुखं विहाय वासवदत्ता तयोर्विवाहमनुमेने। नाटिकाया नायकः उदयनो धीरललितनायकः अस्ति। तस्य चरित्रे विलासिता, प्रेमपरता, कलाप्रियता, प्रणयपरायणता च दृश्यन्ते। रत्नावली स्वीयेन गुणगणेन प्राचीनकालादेव प्रसिद्धा। शास्त्रीयपद्धतिमाश्रित्य प्रणीतमिदं रूपकमिति हेतुना दशरूपकेऽतीवादरोऽस्या जातः। श्रीहर्षः आदर्शभूतं कथानकमाश्रित्य भव्यं रूपकमिदं कृतवान् यदुदाहरन्ति यथाप्रसङ्गं रीतिकृतः।
2. **प्रियदर्शिका**—प्रियदर्शिकायामुदयनारण्यिकयोः प्रणयकथा वर्णिता विद्यते। कथानक-मिदं रत्नावलीकथानकच्छायानुहार्येव।
3. **नागानन्द**—नागानन्दे जीमूतवाहनस्य यशो गीतम्। नाटकेऽस्मिन् बौद्धहिन्दुधर्मयोरतिमधुरा संसृष्टिरस्ति।

**हर्षवर्द्धनस्य काव्यशैली**—

श्रीहर्षवर्धनस्य काव्यशैली सरला सुबोधा वैदर्भीपरिष्कृता वर्तते। वर्णनस्य स्वाभाविकता विशदता च हृदयमाकर्षयतः। रोमाञ्चकदृश्यकाव्यस्य यावन्ति कमनीयान्युपकरणानि सम्भवन्ति तेषां सर्वेषां प्रयोगेऽयं सदा जागरूकः। वर्णनचातुरी चास्य सर्वमनोहरा। श्रीहर्षनृपतिरयं रूपकरचनायां कालिदासमनुकुर्वन्निव प्रतीयते। भवभूतिरस्य गर्भाङ्कयोजनामनुहरतीति गौरवमप्यस्य महत्त्वं गमयति। अस्य संस्कृतभाषाऽप्रश्लथा, श्लिष्टा शिष्टैकप्रयुक्ता च, अलङ्कारैस्तदलङ्करणं च यथोचितं लोचनासेचनकं च चकास्ति। सत्यपि च उपज्ञायाः स्वल्पे वर्णनशक्तिस्त्वस्मिन् महती विद्यते, शैली चैतत्सर्वकृतीनामेकरसमसृणा पाठकमनो रमयतितराम्। शब्दालङ्कारेषु श्लेषोऽपि कवये रोचते।



# प्रश्न पत्र

## संस्कृतम् (Code : 25)

## दिसम्बर-2013

## प्रश्नपत्रम्-II

सूचना : अस्मिन् प्रश्नपत्रे पञ्चाशत् परिमिताः (50) बहु-वैकल्पिकाः प्रश्नाः सन्ति। प्रत्येकम् प्रश्नस्य अङ्कद्वयं वर्तते। सर्वे प्रश्नाः समाधेयाः।

1. "स नः पितेव सूनवेऽग्ने सूपायनो भव" अस्य मन्त्रस्य ऋषिर्वर्तते–
   A. वसिष्ठः B. मधुच्छन्दाः
   C. कण्वः D. अङ्गिरा
2. "वज्रहस्तः" इति विशेषणं कस्य देवस्य?
   A. उषसः B. विष्णोः
   C. अग्नेः D. इन्द्रस्य
3. "माध्यन्दिनशाखा" कस्य वेदस्य?
   A. यजुर्वेदस्य B. ऋग्वेदस्य
   C. अथर्ववेदस्य D. कस्यापि न
4. "आ वा वृणे सुमति यज्ञियानाम्" मन्त्रांशोऽयं कस्य सूक्तस्य वर्तते?
   A. पुरूरव-उर्वशीसूक्तस्य B. यम-यमीसूक्तस्य
   C. सरमा-पणिसूक्तस्य D. विश्वामित्र-नदीसूक्तस्य
5. "कदा-सूनुः पितरं जात इच्छात्" मन्त्रांशोऽयं वर्तते–
   A. विश्वामित्र-नदी-सूक्ते B. यम-यमी-सूक्ते
   C. पुरूरवा-उर्वशी-सूक्ते D. सरमा-पणि-सूक्ते
6. नक्षत्रसम्पातादिना वेदकालं कः प्रतिपादयति?
   A. बालगङ्गाधरतिलकः B. महर्षि दयानन्दः
   C. सायणः D. मैक्समूलरः
7. गोपथब्राह्मणं केन वेदेन सम्बद्धमस्ति?
   A. ऋग्वेदेन B. सामवेदेन
   C. अथर्ववेदेन D. यजुर्वेदेन
8. ईशापनिषद् केन वेदेन सम्बद्धा?
   A. ऋग्वेदेन B. सामवेदेन
   C. कृष्णयजुर्वेदेन D. शुक्लयजुर्वेदेन

9. माण्डूकीय शिक्षा कस्य वेदस्य?

A. अथर्ववेदस्य — B. सामवेदस्य

C. यजुर्वेदस्य — D. ऋग्वेदस्य

10. वेदाङ्गेषु श्रोत्रत्वेन उपमीयते?

A. ज्योतिषम् — B. छन्दःशास्त्रम्

C. निरुक्तम् — D. शिक्षा

11. अधोऽङ्कितानां समीचीनम् उत्तरं चिनुत–

A. प्रश्नोपनिषद् — 1. निरुक्तम्

B. पंचविंशब्राह्मणम् — 2. अथर्ववेदः

C. अथेदं भस्मान्तं शरीरम् — 3. सामवेदः

D. व्याप्तिमत्त्वात्तु शब्दस्य — 4. ईशोपनिषद्

| | (a) | (b) | (c) | (d) |
|---|---|---|---|---|
| (A) | 4 | 1 | 2 | 3 |
| (B) | 1 | 3 | 4 | 2 |
| (C) | 2 | 3 | 4 | 1 |
| (D) | 3 | 4 | 1 | 2 |

12. कल्पग्रन्थेषु गण्यते–

A. कात्यायन श्रौतसूत्रम् — B. उणादिसूत्रम्

C. जैमिनीयसूत्रम् — D. सांख्यसूत्रम्

13. विकृतिपाठाः कियन्तः?

A. 9 — B. 10

C. 6 — D. 8

14. अनिर्वचनीयवाहिनः के?

A. वैशेषिकाः — B. पूर्वमीमांसकाः

C. बौद्धाः — D. अद्वैतवेदान्तिनः

15. केवलविकृतिरूपात्मकानि तत्त्वानि कति?

A. षोडश — B. नव

C. पञ्च — D. पञ्चविंशतिः

16. अव्यक्तं तत्त्वं कीदृशं निरूपितम्?

A. चेतनम् — B. उदासीनम्

C. जडम् — D. अभावरूपम्

17. प्रत्ययसर्गः कतिविधः?

A. पञ्चाशद्विधः — B. नवविधः

C. शतविधः — D. सप्तविधः

18. शाण्डिल्यविद्याविषय: कुत्र निर्दिष्ट:?

A. माण्डूक्योपनिषदि
B. छान्दोग्योपनिषदि
C. बृहदारण्यके
D. कठोपनिषदि

19. काम्यकर्माणि एवं विधानि निरूपितानि–

A. अकरणे पापसाधनानि
B. निमित्तवशात् कृतानि
C. पापविनाशसाधनानि
D. फलोद्देश्येन विधीयमानानि

20. वेदान्तसारानुसारेण अज्ञानं किं रूपं भवति?

A. भावरूपम्
B. अभावरूपम्
C. शून्यरूपम्
D. निष्क्रियरूपम्

21. निर्वातदीपवदचलं भवति–

A. सविकल्पकसमाधि:
B. सगुणब्रह्मस्वरूपम्
C. समष्टिजीवस्वरूपम्
D. निर्विकल्पकसमाधि:

22. गन्धं प्रति पृथिवी भवति–

A. समवायिकारणम्
B. असमवायिकारणम्
C. निमित्तकारणम्
D. उपादानकारणम्

23. सपक्षस्योदाहरणं विद्यते–

A. महाह्रद:
B. पर्वत:
C. महानस:
D. आकाशम्

24. प्रागभावस्य लक्षणं भवति–

A. सादिरनन्त:
B. त्रैकालिकसंसर्गाभाव:
C. तादात्म्यसम्बन्धावच्छिनप्रतियोगिताकाभाव:
D. अनादि सान्त:

25. अधोनिर्दिष्टानां समीचीनां तालिकां विचिनुत–

A. आप्तवाक्यम्
B. अर्थाबाध:
C. पदानाम विलम्बेनोच्चारणम्
D. यथार्थवक्ता

1. आप्त:
2. सन्निधि:
3. शब्द:
4. योग्यता

| | (a) | (b) | (c) | (d) |
|---|---|---|---|---|
| (A) | 4 | 3 | 2 | 1 |
| (B) | 3 | 4 | 1 | 2 |
| (C) | 3 | 4 | 2 | 1 |
| (D) | 1 | 2 | 3 | 4 |

26. 'ग्रामणी + सु > स्' इत्यत्र अपृक्तसंज्ञा कस्य भवति?
A. 'सु' इत्यस्य। B. 'स्' इत्यस्य।
C. 'ग्रामणी' इत्यस्य। D. 'ग्रामणी + सु' इत्यस्य

27. अस्य शब्दस्य नदीसंज्ञा नास्ति–
A. नदी B. साध्वी
C. स्त्री D. ग्रामणी

28. कारकप्रयोगदृष्ट्या वाक्यमिदम् शुद्धम् अस्ति–
A. भक्तः रोचते भक्तिः। B. देवदत्तम् श्लाघते।
C. वैकुण्ठम् अध्यास्ते हरिः। D. वैकुण्ठे अध्यास्ते हरिः।

29. 'पुष्पाणि स्पृह्यति' इत्यत्र 'पुष्पाणि' इति पदम् अस्ति–
A. ईप्सिततमम्। B. ईप्सितम्।
C. अनीप्सितम्। D. अनीप्सिततमम्।

30. 'परिक्रयणे सम्प्रदानमन्यतरस्याम्' इति सूत्रेण अन्यतरस्याम् इत्यनेन का संज्ञा भवति?
A. अपादानसंज्ञा। B. करणसंज्ञा।
C. कर्मसंज्ञा। D. अधिकारणसंज्ञा।

31. 'उपपदविभक्तेः कारकविभक्तिः बलीयसी' इत्यस्य उदाहरणम् अस्ति–
A. रामम् नमामि। B. नमस्करोति देवान्।
C. गुरुणा सह शिष्यः गच्छति। D. यागाय याति।

32. 'सुमद्रम्' इत्यत्र 'सु' अव्ययस्यार्थः–
A. समीपम्। B. शोभनम्।
C. समृद्धिः। D. युगपत्।

33. तत्पुरुषसमासे कस्य पदार्थस्य प्रधानता भवति?
A. पूर्वपदार्थस्य। B. उत्तरपदार्थस्य।
C. अन्यपदार्थस्य। D. उभयपदार्थस्य।

34. 'राजदन्ताः' अस्य लौकिकम् विग्रहवाक्यम् भवति–
A. राज्ञाम् दन्ताः। B. दन्तानाम् राजानः।
C. दन्तानाम् राजानम्। D. दन्त + आम् राजन् + जस्।

35. कर्मधारयसंज्ञा भवति–
A. अव्ययीभावस्य B. समानाधिकरणस्य तत्पुरुषस्य।
C. असमानाधिकरणस्य तत्पुरुषस्य। D. समानाधिकरणस्य बहुव्रीहेः।

36. भाषाविज्ञानदृशा अर्धस्वरो भवति–

A. अ
B. य्
C. इ
D. अः

37. आर्यभाषापरिवारस्य भाषा न मन्यते–

A. प्राकृतम्
B. पालि
C. संस्कृतम्
D. तमिलः

38. एकाङ्किरूपकमस्ति–

A. प्रतिज्ञायौगन्धरायणम्
B. चारुदत्तम्
C. कर्णभारम्
D. अविमारकम्

39. 'श्रुतेरिवार्थं स्मृतिरन्वगच्छत् इत्यस्ति–

A. रामायणे
B. महाभारते
C. रघुवंशे
D. वेणीसंहारे

40. शाल्मलीवृक्षवर्णनं कस्मिन् काव्ये दृश्यते?

A. 'नलचम्पूः' इत्यस्मिन्
B. 'कादम्बरी' इत्यस्मिन्
C. 'हर्षचरितम्' इत्यस्मिन्
D. 'वासवदत्ता' इत्यस्मिन्

41. संस्कृतवाङ्मये करुणरसस्य वर्णने कः विशिष्यते?

A. कालिदासः
B. बाणभट्टः
C. अश्वघोषः
D. भवभूतिः

42. बृहत्त्रय्यामस्य ग्रन्थस्य गणना न भवति–

A. किरातार्जुनीयस्य
B. शिशुपालवधस्य
C. कुमारसम्भवस्य
D. नैषधीयचरितस्य

43. अकारणाविष्कृतवैरदारुणादसज्जनात् कस्य भयं न जायते– इति केन कविनोक्तम्?

A. कालिदासेन
B. भारविणा
C. श्रीहर्षेण
D. बाणभट्टेन

44. अधारि पद्मेषु तदङ्घ्रिणा घृणा क्वतच्छयच्छायलवोऽपि पल्लवे 'इति सौन्दर्यवर्णनम्–

A. दमयन्त्याः
B. नलस्य
C. रामस्य
D. सीतायाः

45. अधस्तनयुग्मानां समीचीनां तालिकां चिनुत–

A. हर्षः
B. भवभूतिः
C. विशाखादत्तः
D. भासः

1. मुद्राराक्षसः
2. स्वप्नवासवदत्तम्
3. उत्तररामचरितम्
4. रत्नावली

| | (a) | (b) | (c) | (d) |
|---|---|---|---|---|
| (A) | 4 | 3 | 2 | 1 |
| (B) | 4 | 3 | 1 | 2 |
| (C) | 3 | 4 | 2 | 1 |
| (D) | 1 | 2 | 3 | 4 |

46. मम्मटस्य व्यङ्ग्यमूलाव्यञ्जनायाः उदाहरणं वर्तते–

A. निःशेषच्युतचन्दनम्
B. पश्य निश्चलनिष्पन्दा
C. ग्रामतरुणम् तरुण्या
D. माता गृहोपकरणम् नास्ति

47. रसः इति कः पदार्थः?

A. आस्वाद्यमानः
B. श्रवणपेयः
C. भोज्यमानः
D. दृश्यमानः

48. नाट्यशास्त्रानुसारेण स्थायिभावाः कति?

A. नव
B. अष्टौ
C. दश
D. सप्त

49. सङ्ग्रहकारिका-निरुक्तानां वर्णनं नाट्यशास्त्रस्य कस्मिनध्याये वर्तते?

A. द्वितीये
B. तृतीये
C. चतुर्थे
D. षष्ठे

50. 'प्रकृतं प्रतिषिध्यान्यस्थापनं' चेत् तदा कोऽलङ्कारः?

A. उपमा
B. भ्रान्तिमान्
C. श्लेषः
D. अपह्नुतिः

## उत्तराणि

| | | | | | | |
|---|---|---|---|---|---|---|
| 01. B | 02. D | 03. A | 04. D | 05. C | 06. A | 07. C |
| 08. D | 09. A | 10. C | 11. C | 12. A | 13. D | 14. D |
| 15. A | 16. C | 17. A | 18. B | 19. D | 20. A | 21. D |
| 22. A | 23. C | 24. C | 25. C | 26. B | 27. D | 28. C |
| 29. A | 30. B | 31. B | 32. C | 33. B | 34. B | 35. B |
| 36. B | 37. D | 38. C | 39. C | 40. B | 41. D | 42. C |
| 43. D | 44. B | 45. B | 46. B | 47. A | 48. B | 49. D |
| 50. D | | | | | | |



## संस्कृतम् (Code : 25) दिसम्बर-2013

## प्रश्नपत्रम्-III

**सूचना :** अस्मिन् प्रश्नपत्रे पञ्चसप्ततिः परिमिताः (75) बहु-वैकल्पिकाः प्रश्नाः सन्ति। प्रत्येकम् प्रश्नस्य अङ्कद्वयं वर्तते। सर्वे प्रश्नाः समाधेयाः।

1. सृष्ट्युत्पत्तिविषयकं विवेचनं वर्तते–
   A. अग्निसूक्ते
   B. इन्द्रसूक्ते
   C. नासदीयसूक्ते
   D. पृथिवीसूक्ते
2. "सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृता ......" अस्य मन्त्रस्य ऋषिरस्ति–
   A. नारायणः
   B. कण्वः
   C. मेधातिथिः
   D. अंगिराः
3. हिरण्यगर्भसूक्तस्य छन्दः किं?
   A. आर्षी निचृद्
   B. आसुरी गायत्री
   C. त्रिष्टुप्
   D. पंक्तिः
4. अग्निमीळे इत्यत्र 'अग्निम्' पदस्य स्वरो भवति–
   A. अग्नि॒म्
   B. अ॒ग्निम्
   C. अ॒ग्नि॒म्
   D. अग्निम्
5. 'संविदाना दिवा कवे श्रियां मा धेहि भूत्याम्' मन्त्रांशोऽयं वर्तते–
   A. वाक्सूक्ते
   B. दर्विः
   C. पृथिवीसूक्ते
   D. पुरुषसूक्ते
6. दर्शपूर्णमासयज्ञं 'दर्श' शब्दस्य अर्थोऽस्ति–
   A. पयस्या
   B. दर्विः
   C. शूर्पम्
   D. अमावस्या
7. वेदमन्त्राणां त्रिविधा प्राचीनतमा व्याख्या भवति–
   A. याज्ञिक-वैज्ञानिक-आधिदैविकरूपेण
   B. याज्ञिक-ऐतिहासिक-आधिदैविकरूपेण
   C. आध्यात्मिक-याज्ञिक-भाषावैज्ञानिकरूपेण
   D. आध्यात्मिक-आधिभौतिक-आधिदैविकरूपेण

8. अधोऽङ्कितानां समीचीनमुत्तरं चिनुत–

A. ये के च भ्रातरः स्थ नास्मै ज्येष्ठाय कल्पध्वमिति। — 1. शतपथब्राह्मणम्

B. श्रेयसो वै पापीयान् कृतानुकरः वर्त्मा भवति। — 2. ऋग्वेदः

C. यो वा दिवं सत्यधर्मा जजान — 3. अथर्ववेदः

D. यं संग्रामाः समितयस्तेषु चारुवदेम् — 4. ऐतरेयब्राह्मणम्

| | (a) | (b) | (c) | (d) |
|---|---|---|---|---|
| (A) | 4 | 2 | 1 | 3 |
| (B) | 3 | 4 | 2 | 1 |
| (C) | 3 | 2 | 1 | 4 |
| (D) | 4 | 1 | 2 | 3 |

9. 'योऽसावसौ पुरुषः सोऽहमस्मि' इत्यस्य कुत्रोपदेशः?

A. ईशोपनिषदि B. तैत्तिरीयोपनिपदि

C. केनोपनिषदि D. श्रीमद्भागवते

10. 'अतिमुच्यधीराः प्रेत्यास्मांल्लोकादमृता भवन्ति' कुत्रेयमुक्तिः?

A. ईशोपनिषदि B. केनोपनिषदि

C. भगवद्गीतायाम् D. कठोपनिषदि

11. 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' कुत्रेयमुक्तिः?

A. कठोपनिषदि B. केनोपनिषदि

C. तैत्तिरीयोपनिषदि D. बृहदारण्यकोपनिषदि

12. 'अजो नित्यः शाश्वतोऽयं पुराणः' इयमुक्तिः कुत्रास्ति?

A. बृहदारण्यकोपनिषदि B. ईशोपनिषदि

C. तैत्तिरीयोपनिषदि D. कठोपनिषदि

13. 'येनाहं नामृता स्याम किमहं तेन कुर्याम्' कयेदमुच्यते?

A. मैत्रेय्या B. कात्यायन्या

C. गायत्र्या D. उमया

14. 'आत्मैवेदमग्र आसीत् पुरुषविधः' इति कुत्रोक्तम्?

A. कठोपनिषदि B. तैत्तिरीयोपनिषदि

C. बृहदाण्यकोपनिषदि D. केनोपनिषदि

15 अधस्तनानां समीचीनमुत्तरं चिनुत–

A. काण्वसंहिता — 1. बृहदारण्यकोपनिषद्

B. शतपथब्राह्मणम् — 2. मैत्रेयी

C. ईशोपनिषद् 3. ईशोपनिषद्

D. बृहदारण्यकोपनिषद् 4. नचिकेता

| | (a) | (b) | (c) | (d) |
|---|---|---|---|---|
| (A) | 1 | 4 | 2 | 3 |
| (B) | 3 | 4 | 2 | 1 |
| (C) | 3 | 1 | 4 | 2 |
| (D) | 2 | 1 | 3 | 4 |

16. उष्णिक्छन्दसि कियन्तो वर्णा भवन्ति?

A. 27 B. 28

C. 32 D. 29

17. चातुर्मास्ययागे वर्तते–

A. शुनासीरीयम् B. अग्निहोत्रम्

C. आग्रयणम् D. सौत्रामणी

18. याज्ञवल्क्यशिक्षा सम्बद्धा वर्तते–

A. ऋग्वेदेन B. सामवेदेन

C. अथर्ववेदेन D. शुक्लयजुर्वेदेन

19. ऋग्वेदीयप्रातिशाख्यानुसारेण रक्तसंज्ञः कः?

A. स्पर्शः B. अनुनासिकः

C. संयोगः D. विसर्गः

20. ऋग्वेदीयप्रातिशाख्यस्य रचनाकारः कः?

A. शौनकः B. कात्यायनः

C. लोमशः D. गौतमः

21. समुचितसम्बन्धं प्रस्थापयत–

A. सत्त्वप्रधानानि 1. निघण्टवः।

B. निगमा इमे भवन्ति 2. तद्यथा–पाचकः, पक्तिः।

C. संविज्ञातानि तानि 3. नामानि।

D. तद्यत्र उभे 4. भावप्रधाने भवतः।

कूट :

| | (a) | (b) | (c) | (d) |
|---|---|---|---|---|
| (A) | 1 | 2 | 4 | 3 |
| (B) | 2 | 1 | 4 | 3 |
| (C) | 3 | 1 | 2 | 4 |
| (D) | 4 | 3 | 2 | 1 |

22. 'आचार्यसश्चिद् इदम् ब्रूयात्' इत्यत्र चित् निपातस्य अर्थः कः?–

A. पदपूरणः।
B. उपमा।
C. पूजा।
D. धनम्।

23. 'हस्तः' इत्यत्र कः धातुः स्वीकृतः यास्केन?

A. हन्
B. हा।
C. हस्।
D. अस्।

24. 'स्थूला चासौ पृषती च = स्थूलपृषती' इति विग्रहे कीदृशी स्वरव्यवस्था प्रवर्तते?

A. पूर्वपदप्रकृतिस्वरत्वम्।
B. उत्तरपदप्रवृतिस्वरत्वम्।
C. समासान्तानुदात्तत्त्वम्।
D. समासान्तोदात्तत्वम्।

25. अथ गौरित्यत्र कः शब्दः?

A. सास्ना–लाङ्गूल–ककुद–खुर–विषाण्यर्थरूपम् स शब्दः।
B. इङ्गितम् चेष्टितम् निमीलितम् स शब्दः।
C. भिन्नेष्वभिन्नं छिन्नेष्वछिन्नं सामान्यभूतं स शब्दः।
D. येनोच्चारितेन सास्ना–लाङ्गूल–ककुद–खुर–विषाणिनां सम्प्रत्ययो भवति स शब्दः।

26. 'भू + लिट् > ल् > तिप् > णल् > अ = भू + अ' इति स्थिते किं कार्यं भवति?

A. 'इको यणचि' इति यणादेशः।
B. 'लिटि धातोरनभ्यासस्य' इति द्वित्वम्।
C. 'भुवो वुग्लुङ्लिटोः' इति वुगागमः।
D. 'सार्वधातुकार्धधातुकयोः' इति गुणः।

27. 'स्नात्यनेन स्नानीयम् चूर्णम्' इत्यत्र स्नाधातोः विधीयमानः अनीय–प्रत्ययः कस्मिन् अर्थे वर्तते?

A. कर्तरि।
B. कर्मणि।
C. भावे
D. करणे।

28. चतुरश्छयतावाद्यक्षरलोपश्च। (वा.–3158) इत्यस्य किमुदाहरणम्?

A. चतुर्थः।
B. चतुरः।
C. तुरीयः।
D. तृतीयः।

29. पच् + शप् > अ + शतृ > अत् = पचत्' इत्यत्र स्त्रियां केन सूत्रेण कः प्रत्ययः भवति?

A. 'उगितश्च' इति ङीप्।
B. 'उगितश्च' इति ङीष्।
C. 'अजाद्यतष्टाप्' इति टाप्।
D. 'ऋन्नेभ्यो' ङीप् इति ङीप्।

30. पाणिनीयशिक्षानुसारेण वर्णानाम् उच्चारणस्थानानि कति सन्ति?
A. एकादश। B. दश।
C. अष्टौ। D. द्वादश।
31. 'सतम्' वर्गस्य कति शाखाः सन्ति?
A. तिस्रः। B. चतस्रः।
C. पञ्च। D. सप्त।
32. सुदर्शनतडाकस्य कः निर्माता?
A. चक्रपालितः। B. सुविशाखः।
C. तुषास्कः। D. पुष्यगुप्तः।
33. सांख्यानुसारेण कैवल्यं भवति–
A. ज्ञानैकस्वरूपत्वम् B. उपकारापकारशक्तिराहित्यम्
C. इच्छाद्वेषप्रयत्नादिशून्यत्वम् D. आत्यन्तिकदुःखशून्यत्वम्
34. आधिभौतिकदुःखं सांख्यमतेनोदाह्रियते–
A. ज्वारातिसारादुत्पन्नं दुःखम् B. सर्पादिसमुद्भवं दुःखम्
C. स्वजनवियोगाप्रियजनसंयोग्यजन्यं दुःखम् D. सर्पादिसमुद्भवं दुःखम्
35. भौतिकः सर्गः कतिविधो भवति?
A. चतुर्दशविधः B. पञ्चविधः
C. अष्टविधः D. एकविधः
36. स्थूलप्रपञ्चोत्पत्तिः केभ्यः सम्भवति?
A. अपञ्चीकृतपञ्चभूतेभ्यः B. ईश्वरादिभ्यः
C. मानवशरीरेभ्यः D. पञ्चीकृतपञ्चभूते[illegible]ः
37. वेदान्तसारे प्रयोजनं निरूपितम्–
A. दुःखनिवृत्तिः B. अभ्युदयलाभः
C. अज्ञाननिवृत्तिः स्वस्वरूपानन्दावाप्तिश्च D. पाण्डित्यसम्पादनम्
38. शाब्दीभावना निरूपिता भवति–
A. आख्यातत्त्वांशेन B. लिङ्त्वांशेन
C. ज्ञापकांशेन D. सामान्यांशेन
39. अर्थसङ्ग्रहमनुसृत्य योगो नाम–
A. देवतोद्देशेन द्रव्यत्यागः B. देवतोद्देशेन द्रव्यस्य प्रक्षेपः
C. स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनम् D. मन्त्रपठनम्
40. परिसंख्याविधेः दोषाः के?
A. श्रुतहानिः अश्रुतप्रकल्पनम्, प्राप्तबाधः।
B. श्रुतहानिः प्राप्तबाधः, वाक्यभेदः।

C. अप्रामाण्यस्वीकारः, प्रामाण्यपरित्यागः।

D. वचनबलाद् विकल्पः, एकार्थत्वाद् विकल्पः।

41. यस्य कथा रामायणाश्रिता नास्ति–

A. महावीरचरितम्।
B. अभिषेकनाटकम्।
C. मृच्छकटिकम्।
D. उत्तररामचरितम्।

42. 'स्वधर्मे निधनं श्रेयः' इत्युक्तिः गीतायाः कतमेऽध्याये वर्तते?

A. द्वितीये
B. तृतीये
C. पञ्चमे।
D. चतुर्थे।

43. रामायणे शबरीवृत्तान्तः कस्मिन् काण्डेऽस्ति?

A. अयोध्याकाण्डे
B. अरण्यकाण्डे
C. किष्किन्धाकाण्डे
D. सुन्दरकाण्डे

44. महाभारते नलोपाख्यानं कस्मिन् पर्वणि?

A. आदिपर्वणि।
B. वनपर्वणि।
C. कर्णपर्वणि।
D. अनुशासनपर्वणि।

45. तीर्थानां सविस्तरं वर्णनमुपलभ्यते–

A. मत्स्यपुराणे।
B. वायुपुराणे।
C. स्कन्दपुराणे।
D. शिवपुराणे।

46. रासपञ्चाध्यायी वर्तते–

A. विष्णुपुराणे।
B. ब्रह्मपुराणे।
C. श्रीमद्भागवतपुराणे।
D. ब्रह्मवैवर्तपुराणे

47. महाभारते शिशुपालवधवृत्तान्तः कस्मिन् पर्वणि वर्तते?

A. सभापर्वणि।
B. भीष्मपर्वणि।
C. वनपर्वणि।
D. विराटपर्वणि।

48. कौटिल्येन यो गूढपुरुषेषु न निर्दिष्टः–

A. कार्मिकः।
B. कापटिकः।
C. तापसः।
D. रसदः।

49. शुल्कमादाय यो विवाहः क्रियते–

A. प्राजापत्यः।
B. आसुरः।
C. दैवः।
D. ब्राह्मः।

50. पितृणां रात्रिर्भवति–

A. कृष्णपक्षः
B. शुक्लपक्षः
C. शरदृतुः
D. सवत्सरः

51. मनुना चूडाकर्मणः कालः उक्तः–

A. पञ्चमे वर्षे
B. चतुर्थे वर्षे
C. द्वितीये वर्षे
D. प्रथमे वर्षे

52. मनुना क्रोधजानि व्यसनानि कियन्ति अभिहितानि?

A. पञ्च
B. षट्
C. सप्त
D. अष्टौ

53. स्मृत्यपेतकारिणः सभ्याः कतिगुणेन दमेन दण्ड्याः?

A. पञ्चगुणेन
B. चतुर्गुणेन
C. त्रिगुणेन
D. द्विगुणेन

54. मिथ्याभियोगी कतिगुणं धनं राज्ञो दद्यात्?

A. द्विगुणम्
B. त्रिगुणम्
C. चतुर्गुणम्
D. पञ्चगुणम्

55. 'प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार' कुत्रेयमुक्तिः?

A. मेघदूते
B. कुमारसम्भवे
C. ऋतुसंहारे
D. रघुवंशे

56. 'कथाप्रसङ्गेषु मिथः सखीमुखात्तृणेऽपि तन्व्या नलनामनि श्रुते।' अत्र 'नल' इत्यस्य पदस्य कोऽर्थः?

A. नलः
B. कामः
C. तृणम्
D. स्तुतिपाठकः

57. 'सतीव योषित्प्रकृतिः सुनिश्चला पुमांसमभ्येति भवान्तरेष्वपि।।'.... इति पद्यांशानुसारेण भवान्तरेषु पुमांसं किम् अभ्येति?

A. जातिः
B. सती
C. योषित्
D. स्वभावः

58. एकदा प्रत्युषसि हर्षः स्वप्ने अग्निना दह्यमानं कमपश्यत्?

A. गजम्
B. अश्वम्
C. केसरिणम्
D. सर्वम्

59. 'शोकस्थायितया भिन्नो विप्रलम्भादयं रसः' कः सः रसः?

A. शृङ्गारः
B. वीरः
C. हास्यः
D. करुणः

60. रङ्गमञ्चस्य देवपूजनं केन तुल्यं भवति?

A. यज्ञेन तुल्यम्
B. तपसा तुल्यम्
C. दानेन तुल्यम्
D. धर्मेण तुल्यम्

61. 'माधुर्यौजः प्रसादाख्यास्त्रयस्ते न पुनर्दश' के ते?

A. काव्यदोषाः | B. काव्यभेदाः
C. काव्यगुणाः | D. काव्यलक्षणम्

62. 'आर्त्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि' अभिज्ञानशाकुन्तले कस्य वचनमिदम्?

A. वैखानसस्य | B. दुष्यन्तस्य
C. कण्वस्य | D. अनसूयायाः

63. 'गुरुपदिष्टेन रिपौ सुतेऽपि वा निहन्ति दण्डेन स धर्मविप्लवम्।' अत्र राजनीतौ कोऽयमंशः परामर्शितः?

A. दण्डनीतिः | B. युद्धनीतिः
C. समाजनीतिः | D. धार्मिकनीतिः

64. 'इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः।' –इति कः कं प्रति आह?

A. वसिष्ठः दिलीपं प्रति | B. दिलीपः वसिष्ठं प्रति
C. वसिष्ठः सुदक्षिणां प्रति | D. सुदक्षिणा दिलीपं प्रति

65. यस्यां लक्षणायां मुख्यार्थस्यापि ग्रहणं भवति, सा लक्षणा भवति?

A. उपादान-लक्षणा | B. लक्षण-लक्षणा
C. जहत्स्वार्था | D. रूढिमूला लक्षण-लक्षणा

66. समवकारे पात्राणि के भवन्ति?

A. मानवाः | B. दैत्याः
C. देवाः | D. अप्सरसः

67. 'वज्रादपि कठोराणि मृदूनि कुसुमादपि....' पद्यांशोऽयं कस्मिन् नाटके आयाति?

A. मालतीमाधवे | B. महावीरचरिते
C. उत्तरामचरिते | D. अभिज्ञानशाकुन्तले

68. वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः संक्षिप्तार्थस्तु....आदावङ्कस्य दर्शितः... कः?

A. प्रवेशकः | B. विष्कम्भकः
C. सूत्रधारः | D. अङ्कावतारः

69. गुरुजनपरतन्त्रतया दूरतरं देशमुद्यतो गन्तुम्।
अलिकुलकोकिलललिते नैष्यति सखि सुरभिसमयेऽसौ।....अत्र को नामालङ्कारः।

A. उपमा | B. रूपकः
C. श्लेषवक्रोक्तिः | D. काकुवक्रोक्तिः

70. इन्द्रियार्थसन्निकर्षः कतिविधः?

A. पञ्चविधः | B. षड्विधः
C. नवविधः | D. त्रिविधः

71. गुणगुणिनो कः सम्बन्धः?

A. समवायः

B. आधाराधेयः

C. व्याप्यत्वसम्बन्धः

D. स्वस्वामिसम्बन्धः

72. रजते इदं रजतमिति ज्ञानं वर्तते–

A. तर्कः

B. भ्रमः

C. सन्देहः

D. प्रमा

73. तन्तूनां पटं प्रति किं कारणं भवति?

A. समवायिकारणम्

B. निमित्तकारणम्

C. असमवायिकारणम्

D. मिथ्याकारणम्

74. अनुमानं नाम–

A. व्याप्तिः

B. पक्षः

C. हेतुः

D. लिङ्गपरामर्शः

75. लक्षितस्यैतत् लक्षणमुपपद्यते न वेति विचार उच्यते–

A. परीक्षा

B. लक्षणम्

C. उद्देशः

D. विमर्शः

## उत्तराणि

| | | | | | | |
|---|---|---|---|---|---|---|
| 01. C | 02. A | 03. C | 04. B | 05. C | 06. D | 07. B |
| 08. D | 09. A | 10. B | 11. C | 12. D | 13. A | 14. C |
| 15. C | 16. B | 17. A | 18. D | 19. B | 20. C | 21. D |
| 22. C | 23. A | 24. D | 25. D | 26. C | 27. D | 28. C |
| 29. A | 30. C | 31. B | 32. D | 33. D | 34. C | 35. A |
| 36. D | 37. C | 38. B | 39. A | 40. A | 41. C | 42. A |
| 43. B | 44. B | 45. C | 46. C | 47. A | 48. A | 49. B |
| 50. B | 51. D | 52. D | 53. A | 54. A | 55. A | 56. C |
| 57. D | 58. C | 59. D | 60. A | 61. C | 62. A | 63. A |
| 64. B | 65. A | 66. C | 67. C | 68. B | 69. D | 70. B |
| 71. A | 72. D | 73. A | 74. D | 75. A | | |



## संस्कृतम् (Code : 73) दिसम्बर-2013

### प्रश्नपत्रम्-II

**सूचना :** अस्मिन् प्रश्नपत्रे पञ्चाशत् (50) बहुविकल्पीय प्रश्नाः सन्ति। तेषु प्रतिप्रश्नमङ्कद्वयम्। सर्वे प्रश्नाः उत्तरणीयाः।

1. सूर्यस्य मूलत्रिकोणराशिरस्ति–

A. सिंहः B. कन्या
C. तुला D. वृश्चिकः

2. मेषराशौ सूर्यः स्यात्, तर्हि ऋतुः भवति–

A. शिशिरः B. वसन्तः
C. ग्रीष्मः D. वर्षा

3. षष्ठीतिथेरधिपतिरस्ति–

A. सूर्यः B. कार्त्तिकेयः
C. शिवः D. विष्णुः

4. दिगंशाः भवन्ति–

A. क्षितिजे B. छग्वृत्ते
C. अभयवृत्ते D. क्रान्तिवृत्ते

5. विषुवांशाः भवन्ति–

A. क्रान्तिवृत्ते B. विषुवद्वृत्ते
C. कदम्बवृत्ते D. कोणवृत्ते

6. सूर्यग्रहणस्य स्पर्शो भवति–

A. पूर्वतः B. पश्चिमतः
C. सौम्यतः D. याम्यतः

7. ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः ..... स्यात्।

A. संहितासंज्ञः B. संयोगसंज्ञः
C. अवसानसंज्ञः D. सवर्णसंज्ञः

8. पररूपमेकादेशविधायकं सूत्रमस्ति–

A. एङ्ह्रस्वात्संबुद्धेः
B. एङः पदान्तादति
C. एङि पररूपम्
D. अवङ् स्फोटायनस्य

9. अव्ययीभावसमासो भवति–
A. पूर्वपदार्थप्रधानः
B. उत्तरपदार्थप्रधानः
C. अन्यपदार्थप्रधानः
D. उभयपदार्थप्रधानः

10. "कर्मणा यमभिप्रैति सः"....–
A. अपादानम्
B. सम्प्रदानम्
C. अधिकरणम्
D. करणम्

11. शब्दनित्यताधिकरणमस्ति–
A. प्रथमम्
B. द्वितीयम्
C. चतुर्थम्
D. पञ्चमम्

12. श्रुतिर्भवति–
A. द्विविधा
B. त्रिविधा
C. चतुर्विधा
D. पञ्चविधा

13. आर्थीभावनायाः साध्यमस्ति–
A. स्वर्गादिफलम्
B. विधिज्ञानम्
C. करणज्ञानम्
D. आकांक्षाज्ञानम्

14. न्यायसिद्धान्तमुक्तावलीकारः–
A. उदयनाचार्यः
B. दिनकरभट्टः
C. विश्वनाथपञ्चाननभट्टाचार्यः
D. गदाधरभट्टाचार्यः

15. अलोकनिरपेक्षं चक्षुः कारणमस्ति–
A. घटप्रत्यक्षे
B. तमः प्रत्यक्षे
C. रसप्रत्यक्षे
D. अभावप्रत्यक्षे

16. बाधनालक्षणं भवति–
A. सुखम्
B. दुःखम्
C. फलम्
D. प्रयोजनम्

17. भोक्तृभावात् अस्ति–
A. प्रधानम्
B. पुरुषः
C. बुद्धिः
D. धर्मः

18. वैशारदीव्याख्याकारः–
A. वाचस्पतिमिश्रः
B. जगदीशभट्टाचार्यः
C. ईश्वरकृष्णः
D. व्यासाचार्यः

19. प्रवृत्तिदोषजनितोऽर्थः–

A. फलम्
B. वादः
C. प्रतिज्ञा
D. उदाहरणम्

20. 'सांख्ययोगौ पृथक् बालाः प्रवदन्ति न पण्डिताः' इत्युक्तिः वर्तते–

A. मीमांसापरिभाषायाम्
B. सांख्यकारिकायाम्
C. योगदर्शने
D. श्रीमद्भगवद्गीतायाम्

21. प्रत्यक्षमेव केवलमेकं प्रमाणं मन्यन्ते–

A. चार्वाकाः
B. जैनाः
C. याज्ञिकाः
D. वैज्ञानिकाः

22. वैभाषिकाः कथ्यन्ते–

A. बौद्धाः
B. सांख्याः
C. मीमांसकाः
D. जैनाः

23. हविर्यागानां प्रकाराः सन्ति–

A. षट्
B. दश
C. नव
D. सप्त

24. वाजपेयम् अनुष्ठाय भवति–

A. राजा
B. महाराजा
C. सम्राट्
D. सेनापतिः

25. अश्वमेधे अश्वेन सह शेते–

A. वावाता
B. अनुचरी
C. महिषी
D. पालागली

26. आवसथ्याग्न्याधानं कर्त्तव्यं भवति–

A. अक्षरारम्भसमये
B. वधूप्रवेशसमये
C. वाग्दानकाले
D. दायाद्यकाले

27. माध्वमतरीत्या श्रुतिस्मृतीनां महातात्पर्यमस्ति–

A. ज्ञानोपदेशे
B. विष्णोः गुणोत्कर्षे
C. जगत्सत्यत्वे
D. भेदनिरूपणे

28. न चोच्चारणकाले उत्पत्तिः–

A. वर्षाणां
B. वेदानां
C. धर्माणां
D. कर्मणां

29. 'प्रपञ्चो यदि विद्येत' इति श्रुतिवाक्यं निरूपयति–

A. प्रपञ्चमिथ्यात्वम्
B. प्रपञ्चस्य अनादिनित्यत्वम्
C. प्रपञ्चस्य प्रातिभासिकात्वम्
D. प्रपञ्चस्य परमात्मभिन्नत्वम्

30. माधवमतरीत्या 'वाचा विरूपनित्यया' इति श्रुत्या प्रतिपादितम्–
A. वेदनित्यत्वम्
B. स्मृतिनित्यत्वम्
C. विष्णुवेदगम्यत्वम्
D. भेदस्य धर्मिस्वरूपत्वम्

31. माध्वमतरीत्या जीवा: भवन्ति–
A. ईश्वरसमाना:
B. ब्रह्मोपाधिभूता:
C. नीचोच्चभावंगता:
D. ईश्वराभिन्ना:

32. फलदानां वृक्षाणां छेदने प्रायश्चितं भवति–
A. ऋक्शतं जप्यम्
B. द्वादसवार्षिकं व्रतम्
C. नववार्षिकं व्रतम्
D. काष्ठादानम्

33. मातापितृभ्यामुत्सृष्टः पुत्रो भवति–
A. कानीन:
B. अपविद्ध:
C. कृत्रिम:
D. पौनर्भव:

34. अष्टकाश्राद्धमस्ति–
A. काम्यम्
B. नैमित्तिकम्
C. प्रत्यहम्
D. नित्यम्

35. त्रयोदशसंस्कारा: वर्णिता: सन्ति–
A. व्यासस्मृतौ
B. विष्णुस्मृतौ
C. मनुस्मृतौ
D. याज्ञवल्क्यस्मृतौ

36. 'य: पुरुषं नि:श्रेयसेन संयुनक्ति स:' उच्यते।
A. धर्म:
B. अर्थ:
C. काम:
D. इन्द्रियविशेष:

37. स्कन्दस्वामिना भाष्यं प्रणीतम्–
A. काण्वसंहिताया:
B. सामवेदस्य
C. मैत्रायणीसंहिताया:
D. शाकलसंहिताया:

38. नाट्यशास्त्रस्य षष्ठोऽध्याय: वर्तते–
A. नाट्योत्पत्तिरध्याय:
B. प्रेक्षागृहोऽध्याय:
C. रसाध्याय:
D. अभिनयाध्याय:

39. कुन्तकोक्तमार्गनिरूपणस्याधारोऽस्ति–
A. देशविशेष:
B. कविस्वभाव:
C. वर्ण्यविषय:
D. शब्दचमत्कार:

40. मम्मटोक्तदिशा रसदोसा: भवन्ति–
A. एकादश
B. द्वादश
C. त्रयोदश
D. चतुर्दश

41. आर्थीव्यञ्जनायाम् अर्थस्य व्यञ्जकत्वे.... सहकारिता भवति–

A. वर्णस्य
B. उपसर्गस्य
C. प्रत्ययस्य
D. शब्दस्य

42. शान्तिपर्वणि दुर्गसंख्या भवति–

A. षड्
B. नव
C. पञ्च
D. दश

43. शकद्वीपेश्वरोऽस्ति–

A. मेधातिथिः
B. द्युतिमान्
C. हव्यः
D. वपुष्मान्

44. तामसपुराणमस्ति–

A. ब्रह्मपुराणम्
B. नारदीयपुराणम्
C. वामनपुराणम्
D. मत्स्यपुराणम्

45. शिवपूजाविधाने रंगवल्यादिकथनं प्रयुक्तम्–

A. पाशुपतागमे
B. कारणागमे
C. सूक्ष्मागमे
D. चन्द्रज्ञानागमे

46. कारणागमे पटलसंख्या भवति–

A. सप्त
B. दश
C. नव
D. पञ्च

47. पति–पशु–पाशानां तत्त्वत्रयाणां विचारः विशदीकृत–

A. चन्द्रज्ञानागमे प्रथमे पटले
B. कामिकागमे प्रथमे पटले
C. मकुटागमे प्रथमे पटले
D. कारणागमे प्रथमे पटले

48. रामानन्दविरचितव्याख्या–

A. रत्नप्रभा
B. ब्रह्मविद्याभरणम्
C. भाष्यभावप्रकाशिका
D. न्यायनिर्णयः

49. तद्विवेकेन च वस्तुस्वरूपावधारणम्......आहुः–

A. विद्याम्
B. अज्ञानम्
C. प्रकृतिम्
D. मुक्तिम्

50. अथशब्दो न मङ्गलार्थकः वाक्यार्थे–

A. समन्वयाभावात्
B. अन्यार्थकत्वात्
C. व्यर्थत्वात्
D. सिद्धसाधनवत्त्वात्

## उत्तराणि

| | | | | | | |
|---|---|---|---|---|---|---|
| 01. A | 02. B | 03. B | 04. A | 05. B | 06. B | 07. D |
| 08. C | 09. A | 10. B | 11. A | 12. B | 13. A | 14. C |
| 15. B | 16. B | 17. B | 18. A | 19. A | 20. D | 21. A |
| 22. A | 23. D | 24. C | 25. C | 26. B | 27. B | 28. A |
| 29. B | 30. A | 31. C | 32. A | 33. B | 34. D | 35. C |
| 36. A | 37. D | 38. C | 39. B | 40. C | 41. D | 42. A |
| 43. C | 44. D | 45. B | 46. B | 47. A | 48. A | 49. A |
| 50. A | | | | | | |



# संस्कृतम्-परम्परागत विषयः (Code : 73)
## दिसम्बर-2013

## प्रश्नपत्रम्-III

सूचना : अस्मिन् प्रश्नपत्रे पञ्चसप्ततिः (75) बहुविकल्पीय प्रश्नाः सन्ति। तेषु प्रतिप्रश्नम् अङ्कद्वयम्। सर्वे प्रश्नाः उत्तरणीयाः।

1. "कविज्यचन्द्रलग्नवा" व्रतेऽधमा भवन्ति–

   A. तनौ　　B. रिपौ

   C. धने　　D. व्यये

2. त्रिज्येष्ठमुपयुक्तं न भवति–

   A. व्रतबन्धे　　B. विवाहे

   C. द्विरागमने　　D. चौले

3. नक्षत्रमानं भवति–

   A. 13°20'　　B. 13°10'

   C. 13°00'　　D. 30°00'

4. कीटराशिरस्ति–

   A. धनुः　　B. कर्कः

   C. मकरः　　D. मीनः

5. आयुर्दायार्थ यो ग्रहः स्वोच्चे स्यात्तदा कर्त्तव्यम्–
   (आयुर्दाय हेतु जो ग्रह अपने स्वोच्च में हो तो करना चाहिए)–

   A. द्विगुणम्　　B. त्रिगुणम्

   C. चतुर्गुणम्　　D. षड्घ्नम्

6. जन्मनि चरराशिषु सर्वैर्ग्रहैर्भवति–

   A. रज्जुयोगः　　B. मुसलयोगः

   C. नलयोगः　　D. चापयोगः

7. सूर्येन्दु-भगणयोरन्तरम्भवति–

   A. चान्द्रमासः　　B. सौरमासः

   C. अधिमासः　　D. क्षयमासः

8. गुरुवासरे तृतीयहोरेशो भवति–

A. सूर्यः B. शुक्रः

C. चन्द्रः D. बुधः

9. सूर्यग्रहणे छादको भवति–

A. राहुः B. केतुः

C. चन्द्रः D. बुधः

10. तिथ्यन्तसूर्योदयोर्मध्ये सदैव तिष्ठति–

A. अवमशेषम् B. तिथिशेषम्

C. क्षयशेषम् D. अधिशेषम्

11. सर्वप्रथमं भूभ्रमणं कथितम्–

A. भास्करेण B. आर्यभटेन

C. वराहमिहिरेण D. कात्यायनेन

12. एकस्मिन् वर्षे चन्द्रार्कग्रहणानामधिकतमा संख्या भवति–

A. 3 B. 5

C. 9 D. 7

13. 'आदेः परस्य' इति सूत्रस्य अपवादकं भवति–

A. अलोऽन्त्यस्य B. स्वरितेनाधिकारः

C. अनेकाल् शित् सर्वस्य D. ङिच्च

14. 'अचोञ्णिति' सूत्रात् वृद्धिर्भवति–

A. सखायौ B. उपैति

C. प्रौढः D. रामौ

15. 'हे बहुश्रेयसि' इत्यत्र ह्रस्वं विद्धाति–

A. अम्बार्थनद्योर्ह्रस्वः B. आण् नद्याः

C. आटश्च D. यूस्त्राख्यौ नदी

16. 'अनेकव्यक्तिभिः व्यङ्ग्यम्' स्फोटः स्मृतः–

A. वर्णः B. जातिः

C. पदम् D. वाक्यम्

17. 'प्रणवस्य स्फोटत्वं स्फुटमेवोक्तम्' इत्युक्तिः ग्रन्थे उद्धृता अस्ति–

A. महाभाष्ये B. सिद्धान्तकौमुद्याम्

C. वाक्यपदीये D. परमलुमञ्जूषायाम्

18. शब्दाभिव्यक्तिविषये वादाः भवन्ति–

A. त्रयोदश B. त्रयः

C. चत्वारः D. षड्

19. 'सोमेन यजेत' इत्यत्र भावनार्थकपदं भवति–

A. आख्यातपदम्
B. धातुपदम्
C. स्वर्गपदम्
D. काम्यपदम्

20. "पूजितविचारो मीमांसाशब्द:" इति वचनं भवति–

A. वाचस्पतिमिश्रस्य
B. सायणाचार्यस्य
C. नीलकण्ठभट्टस्य
D. माधवाचार्यस्य

21. "एकाश्रम्यन्त्वाचार्या:" इत्युक्तिरस्ति–

A. मनो:
B. गौतमस्य
C. विष्णो:
D. आपोदेवस्य

22. जननमरणाशौचमध्ये गुरुरस्ति–

A. जननम्
B. मरणम्
C. शवानुगम्
D. गर्भस्रवम्

23. "दध्ना जुहुयात्" इति अस्ति–

A. उत्पत्तिविधि:
B. अपूर्वविधि:
C. विनियोगविधि:
D. अधिकारविधि:

24. विहितस्य कर्मण: फलविशेषसम्बन्धविधायकम्–

A. विशिष्टविधि:
B. अधिकारविधि:
C. नियमविधि:
D. प्रकरणम्

25. 'सोमेन यजेत' इत्यत्र वाक्यभेदभयेन भवति–

A. व्यञ्जना
B. लक्षणा
C. अपूर्वकल्पना
D. विधिकल्पना

26. गौतमधर्मसूत्रे संस्कारा: भवन्ति–

A. अष्टाचत्वारिंशत्
B. षोडश
C. चत्वारिंशत्
D. त्रयोदश

27. मातापितृभ्यामुत्सृष्ट: पुत्रो भवति–

A. अपविद्ध:
B. पौनर्भव:
C. गूढज:
D. कृत्रिम:

28. दायादानं न तत् भवेत्–

A. पितामहधानम्
B. पितृधनम्
C. पितृद्रव्यविनिमयेन विद्यया लब्धं धनम्
D. मित्रसकाशाल्लब्धम्

29. प्रामाण्यं स्वतो ग्राह्यं नास्ति–
A. संशयानुपपत्तित:
B. सम्प्रवर्तकत्वात्
C. विसंवादिप्रवर्तकत्वात्
D. ज्ञानवृत्तित्वात्

30. कर्तृत्वेन कार्यत्वेन कार्यकारणभाव एव–
A. अनुकूलस्तर्क:
B. उपाधि:
C. गौरवम्
D. व्यतिरेकव्यभिचार:

31. पचतीत्यत्राख्यातार्थस्य कृतेरन्वय: कर्तरि–
A. समवायेन
B. आश्रयतासम्बन्धेन
C. विषयतासम्बन्धेन
D. संयोगेन

32. त्रिगुणात्मिका प्रकृतिरस्ति–
A. हेतुमती
B. अहेतुमती
C. निर्लिप्ता
D. विकृति:

33. "प्रत्यक्षानुमानोपमानशब्दा:" प्रमाणानीति मन्यन्ते–
A. वैशेषिका:
B. नैयायिका:
C. लौकिका:
D. सांख्या:

34. सूक्ष्मपञ्चभूतानि परिणामभूतानि भवन्ति–
A. बुद्धे:
B. अहङ्कारस्य
C. मनस:
D. प्रधानस्य

35. "अन्योऽन्यजननमिथुनवृत्तयश्च"
A. गुणा:
B. धर्मादय:
C. व्यक्तादय:
D. भावा:

36. "देशबन्धश्चित्तस्य धारणा" इति सूत्रमस्ति–
A. चतुर्थपादे
B. प्रथमपादे
C. तृतीयपादे
D. द्वितीयपादे

37. पादविभागो नास्ति–
A. ब्रह्मसूत्रग्रन्थे
B. सांख्यकारिकायाम्
C. न्यायसूत्रग्रन्थे
D. मीमांसायाम्

38. फलदीपेश्वर: भवति–
A. वपुष्मान
B. मेधातिथि:
C. ज्योतिष्मान्
D. द्युतिमान्

39. योनिमुद्रा: भवन्ति–
A. अष्टौ
B. नव
C. पञ्च
D. तिस्र:

40. सात्त्विकं पुराणमस्ति–

A. भविष्यपुराणम्
B. शिवपुराणम्
C. श्रीमद्भागवतपुराणम्
D. लिङ्पुराणम्

41. "पञ्चविंशतिसहस्राणि .......... तदुच्यते"–

A. वायवीयम्
B. नारदीयम्
C. मार्कण्डेयम्
D. गारुडीयम्

42. साङ्कर्यसंज्ञिताः दोषाः भवन्ति–

A. द्वादश
B. एकादश
C. त्रयोदश
D. पञ्चदश

43. विद्यार्थी ................ त्यजेत्–

A. निद्राम्
B. सुखम्
C. भोजनम्
D. भिक्षायाचनम्

44. ऊष्माभेदाः सन्ति–

A. दश
B. सप्त
C. त्रयः
D. द्वौ

45. धूर्तस्वामी भाष्यकारः अस्ति–

A. बोधायनश्रौतसूत्रस्य
B. भारद्वाजश्रौतसूत्रस्य
C. आपस्तम्बश्रौतसूत्रस्य
D. सत्याषाढश्रौतसूत्रस्य

46. दारिलवृत्तिः विद्यते–

A. आश्वलायनगृह्यसूत्रे
B. कौशिकगृह्यसूत्रे
C. कात्यायनगृह्यसूत्रे
D. जैमिनीयश्रौतसूत्रे

47. देवताः सन्ति–

A. एकादश
B. त्रयस्त्रिंशत्
C. अष्टाचत्वारिंशत्
D. त्रयत्रिंशकोट्यः

48. श्रीमन्थविद्योपदेशः वर्तते–

A. कठोपनिषदि
B. बृहदारण्यकोपनिषदि
C. छान्दोग्योपनिषदि
D. प्रश्नोपनिषदि

49. निरुक्त–श्लोकवार्त्तिकस्य कर्त्ता अस्ति–

A. यास्कः
B. दुर्गाचार्यः
C. नीलकण्ठः
D. स्कन्दस्वामी

50. मम्मटाचार्येण काव्यभेदाः निरुपिताः–

A. 02
B. 03
C. 04
D. 05

51. भरतेन नाट्ये रसाः स्मृताः–

A. षड्
B. सप्त
C. अष्टौ
D. नव

52. यत्र एकस्मिन् वाक्यं अनेकार्थता भवेत्, तत्र ..... अलङ्कारो भवति।

A. उपमा
B. श्लेषः
C. समासोक्तिः
D. उत्प्रेक्षा

53. मम्मटेन काव्यप्रयोजनानि प्रतिपादितानि–

A. त्रीणि
B. चत्वारि
C. पञ्च
D. षट्

54. "यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।"
व्यङ्क्तः काव्यविशेषः स ..... सूरिभिः। कथितः।।"

A. ध्वनिरिति
B. भक्तिरिति
C. व्यक्तिरिति
D. शक्तिरिति

55. "रीतिरात्मा काव्यस्य" इति मतमस्ति–

A. दण्डिनः
B. वामनस्य
C. रुद्रटस्य
D. मम्मटस्य

56. चतुर्भ्यः भूतेभ्यो जायते चैतन्यमिति–

A. चार्वाकाः
B. सांख्याः
C. पूर्वमीमांसकाः
D. दिगम्बराः

57. 'अनुमानप्रमाणगम्य ईश्वर' इति मन्यन्ते–

A. न्यायनयज्ञाः
B. प्रत्यक्षप्रमाणवादिनः
C. कर्मकाण्डिनः
D. तान्त्रिकाः

58. शून्यवादिनः इन्द्रियप्रत्यक्षं जगत् मन्यन्ते–

A. सत्यमिति
B. नासत्यमिति
C. सत्यासत्योभयमिति
D. अनिर्वचनीयमिति

59. मल्लिशेषेण विरचितः सुप्रसिद्धो ग्रन्थः–

A. स्याद्वादमञ्जरी
B. गोमट्टसारः
C. त्रिलोकसारः
D. त्रिषष्टिशलाकापुरुषचरितम्

60. उत्पादव्यय-ध्रौव्यात्मकं भवति–

A. वस्तुतत्त्वम्
B. द्रव्यम्
C. जीवः
D. धर्मः

61. महासन्धिकादि बौद्धपरिषदः शाखाः सन्ति–

A. नव
B. द्वादश
C. तिस्रः
D. चत्वारि

62. सेश्वरदर्शनमस्ति–

A. योगः
B. सांख्य
C. चार्वाकः
D. बौद्धः

63. ईश्वरसिद्धिः निरूपिता नास्ति–

A. सांख्ये
B. वेदान्ते
C. न्याये
D. मीमांसायाम्

64. "विवेकिनो विरक्तस्य शमादिगुणशालिनः। मुमुक्षोरेव हि ब्रह्मजिज्ञासा योग्यता मता।।"

इति अधिकारी प्रकाशश्लोकः–

A. आत्मबोधे
B. विवेकचूडामणौ
C. शांकरभाष्ये
D. शतश्लोक्याम्

65. यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पना अध्यास इति मतम्–

A. अख्यातिवादिनाम्
B. शून्यवादिनाम्
C. आत्मख्यातिवादिनाम्
D. अन्यथाख्यातिवादिनाम्

66. "अध्यासो नाम अतस्मिंस्तद्बुद्धिरित्यवोचाम" इति वचनम्–

A. भामतीकारस्य
B. पद्मपादाचार्यस्य
C. प्रकाशानन्दयतेः
D. शंकराचार्यस्य

67. प्रातिभासिकसत्ता वर्तते–

A. शुक्तिरजते
B. ब्रह्मणि
C. मायायाम्
D. व्यवहारे

68. निरूपाधिकः-सोपाधिकभेदात् द्विविधः–

A. विधिः
B. ज्ञानम्
C. जीवः
D. अध्यासः

69. प्रमातृत्वादीनामाविद्यकत्वं सिद्धम्–

A. बौद्धदर्शने
B. वैशेषिकदर्शने
C. अद्वैतवेदान्ते
D. द्वैतवेदान्ते

70. प्रपञ्चो ब्रह्मविवर्त इति नाङ्गीकरोति–

A. वादीन्द्रतीर्थः
B. प्रकाशानन्दयतिः
C. मधुसूदनसरस्वती
D. सदानन्दः

71. ब्रह्ममीमांसाविवरणव्याजेन प्रस्थानान्तरमास्थिषत–

A. वाचस्पतिमिश्रः
B. आनन्दतीर्थः
C. शबरस्वामी
D. प्रशस्तपादः

72. वस्तुस्वरूपस्य भेदत्वे न घटते–

A. प्रतियोगिसापेक्षत्वम्

B. इन्द्रियसापेक्षत्वम्

C. शास्त्रसापेक्षत्वम्

D. स्वतन्त्रनिरपेक्षत्वम्

73. तारं मेषं विषं सर्गि इति षडक्षरः–

A. विष्णवे

B. वायवे

C. ब्रह्मणे

D. शिवाय

74. स्त्रीशूद्राद्येस्तथा वेद्यो मन्त्रः–

A. षडक्षरः

B. त्र्यक्षरः

C. पञ्चाक्षरः

D. द्वादशाक्षरः

75. जगदिदं गणसंज्ञितमस्य यत् गणपतिः पतिरेव स्वयम्–

A. दुर्गा

B. विनायकः

C. शिवः

D. विष्णुः

## उत्तराणि

| | | | | | | |
|---|---|---|---|---|---|---|
| 01. B | 02. B | 03. A | 04. B | 05. B | 06. A | 07. A |
| 08. A | 09. C | 10. A | 11. B | 12. D | 13. A | 14. A |
| 15. A | 16. B | 17. C | 18. B | 19. A | 20. A | 21. B |
| 22. B | 23. C | 24. D | 25. B | 26. C | 27. A | 28. C |
| 29. A | 30. A | 31. A | 32. B | 33. B | 34. B | 35. A |
| 36. A | 37. B | 38. B | 39. A | 40. C | 41. B | 42. B |
| 43. B | 44. C | 45. C | 46. B | 47. B | 48. B | 49. C |
| 50. A | 51. C | 52. B | 53. D | 54. A | 55. B | 56. A |
| 57. A | 58. A | 59. A | 60. A | 61. A | 62. A | 63. A |
| 64. B | 65. B | 66. D | 67. A | 68. D | 69. C | 70. A |
| 71. B | 72. A | 73. D | 74. C | 75. C | | |



## संस्कृतम् (Code : 25) जून-2013

### प्रश्नपत्रिका-III

**सूचना :** अत्र प्रश्नपत्रे पञ्चसप्ततिः (75) बहुविकल्पीय प्रश्नाः सन्ति। प्रत्येकम् प्रश्नस्य अङ्कद्वयम् वर्तते। सर्वे प्रश्नाः समाधेयाः।

1. सृष्ट्युत्पत्तिविषयकं विवेचनं वर्तते–

A. पुरुषसूक्ते — B. अग्निसूक्ते
C. इन्द्रसूक्ते — D. पृथिवीसूक्ते

2. 'ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः' ..... मन्त्रस्यास्य ऋषिः–

A. मधुच्छन्दाः — B. अजीगर्तः
C. कण्वः — D. नारायणः

3. वाक् सूक्तस्य (ऋग्वेदे 10.125) का देवता?

A. वाक् — B. आत्मा
C. वेनो भार्गवः — D. वागाम्भृणी

4. 'यज्ञस्य देवम्' इत्यत्र 'देवम्' पदस्य स्वरोऽस्ति–

A. देवम् — B. देव॒म्
C. दे॒व॒म् — D. दे॒वम्

5. "अहमस्ति सहमान उत्तरो नाम भूम्याम्" मन्त्रांशोऽयं वर्तते–

A. पृथिवीसूक्ते — B. वाक्सूक्ते
C. पुरुषसूक्ते — D. हिरण्यगर्भसूक्ते

6. शुनःशेप-आख्याने उल्लेखो नास्ति–

A. वरुणस्य — B. वसिष्ठस्य
C. बादरायणस्य — D. अजीगर्तस्य

7. आध्यात्मिकव्याख्यापद्धतौ वेदे प्रयुक्तस्य अग्निशब्दस्य अयमर्थः–

A. श्रोताग्निः — B. विद्युत्
C. परमात्मा — D. स्मार्ताग्नि

8. अधोऽङ्कितानां समीचीनमुत्तरं चिनुत–

A. अग्निः सूर्य आपो विश्वे देवाश्च सं ददुः 1. शतपथब्राह्मणम्

B. सो अङ्ग वेद यदि वा न वेद 2. अथर्ववेदः

C. सा यन्मम त्वं कृतानुकाराऽनुवर्त्मासि 3. ऐतरेयब्राह्मणम्

D. भीम एव सौयवसिः शासेन विशिशासिषुः 4. ऋग्वेदे

| | (a) | (b) | (c) | (d) |
|---|---|---|---|---|
| (A) | 2 | 4 | 3 | 1 |
| (B) | 2 | 4 | 1 | 3 |
| (C) | 3 | 1 | 4 | 2 |
| (D) | 3 | 1 | 2 | 4 |

9. 'तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः' इत्यस्य कुत्रोपदेशः?

A. ईशोपनिषदि B. तैत्तिरीयोपनिषदि

C. श्रीमद्भागवते D. बृहदारण्यकोपनिषदि

10. 'यन्मनसा न मनुते येनाहुर्मनो मतम्' कुत्रेयमुक्तिः?

A. ईशोपनिषदि B. केनोपनिषदि

C. कठोपनिषदि D. भगवद्गीतायाम्

11. 'अन्नाद् भूतानि जायन्ते जातान्यन्नेन वर्धन्ते' इयमुक्तिः कुत्रास्ति?

A. कठोपनिषदि B. बृहदारण्यकोपनिषदि

C. केनोपनिषदि D. तैत्तिरीयोपनिषदि

12. 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा' इयमुक्तिः कुत्रास्ति?

A. ईशोपनिषदि B. तैत्तिरीयोपनिषदि

C. कठोपनिषदि D. केनोपनिषदि

13. 'न वा अरे जायायै कामाय जाया प्रिया भवति, आत्मनस्तु कामाय जाया प्रिया भवति' कस्येयमुक्तिः?

A. कात्यायन्याः B. मैत्रेय्याः

C. याज्ञवल्क्यस्य D. गार्गस्य

14. 'वाचं धेनुमुपासीत' इति कुत्र उपदिश्यते?

A. श्रीमद्भागवते B. बृहदारण्यकोपनिषदि

C. तैत्तिरीयोपनिषदि D. ईशोपनिषदि

15. अधस्तनानां समीचीनमुत्तरं चिनुत–

A. सामवेदः 1. कठोपनिषद्

B. कृष्णयजुर्वेदः 2. बृहदारण्यकोपनिषद्

C. शुक्लयजुर्वेदः 3. तैत्तिरीयोपनिषद्

D. एष आदेशः, एष उपदेशः, एषा वेदोपनिषद् 4. केनोपनिषद्

| | (a) | (b) | (c) | (d) |
|---|---|---|---|---|
| (A) | 4 | 1 | 2 | 3 |
| (B) | 4 | 2 | 1 | 3 |
| (C) | 1 | 2 | 3 | 4 |
| (D) | 3 | 2 | 1 | 4 |

16. बृहती-छन्दसि कियन्तो वर्णा भवन्ति?

A. 44 B. 40

C. 36 D. 38

17. चातुर्मास्ययागे वर्तते

A. अग्निहोत्रम् B. आग्रयणम्

C. सौत्रामणी D. साकमेधीयम्

18. नारदीयशिक्षा सम्बद्धा वर्तते

A. सामवेदेन B. ऋग्वेदेन

C. कृष्णयजुर्वेदेन D. शुक्लयजुर्वेदेन

19. समानाक्षराणि कति?

A. 9 B. 12

C. 8 D. 10

20. अन्तरिक्षस्थानां देवता अस्ति-

A. अश्विनौ B. सोमः

C. सूर्यः D. वायुः

21. यास्कीयनिरुक्तानुसारेण अस्य पदत्वेन स्वीकारः नास्ति-

A. नाम्नः B. उपसर्गस्य

C. आख्यातस्य D. प्रत्ययस्य

22. आचिनोत्यर्थान् इति आचार्यपदनिर्वचने कः धातुः?

A. चिञ् B. आ + चिन्

C. चिन् D. आ + चि

23. कस्य किं मतम्?

A. अनर्थकाः हि मन्त्राः 1. नैरुक्तसमयः।

B. सर्वाणि नामानि आख्यातजानि 2. वार्ष्यायणिः।

C. षड्भावविकाराः 3. कौत्सः

D. सर्वाणि नामानि आख्यातजानि न 4. गार्ग्यः

| | (a) | (b) | (c) | (d) |
|---|---|---|---|---|
| (A) | 3 | 1 | 2 | 4 |
| (B) | 1 | 2 | 3 | 4 |
| (C) | 3 | 2 | 1 | 4 |
| (D) | 4 | 1 | 2 | 3 |

24. लोपागमवर्णविकारज्ञो हि सम्यग्वेदान् परिपालयिष्यतीत्यत्र–लोपागमस्य उदाहरणम्–

A. देवा अदुह्

B. उद्ग्रामम्

C. देवा अदुहत्

D. देवैः दुह्यते।

25. महाभाष्यानुसारेण सिद्धान्ततः व्याकरणशब्दस्य कोऽर्थः?

A. सूत्रम्

B. शब्दः

C. लक्ष्यम्

D. लक्ष्य–लक्षणे

26. 'भू + शप् > अ + अन्ति' इति स्थिते द्वयोः अकारयोः केन सूत्रेण किम् भवति?

A. अतो गुणे – इत्यनेन पूर्वरूपत्वम्

B. अतो गुणे इत्यनेन पररूपत्वम्

C. अतो गुणे – इत्यनेन गुणादेशत्वम्

D. आद् गुणः इत्यनेन गुणादेशत्वम्।

27. धातोः विधीयमानः तव्यत्प्रत्ययः कस्मिन्नर्थे भवति?

A. कर्तरि।

B. भावे।

C. भावे कर्मणि च।

D. कर्मणि।

28. द्वेस्तीयः (पा.सू. 5.2.54) इत्यनेन कः प्रत्ययः विधीयते? कश्च तस्य अर्थः?

A. तीय–प्रत्ययः, पूरणेऽर्थे।

B. तीय–प्रत्ययः, संख्यायाम् अर्थे।

C. स्तीय–प्रत्ययः, पूरणेऽर्थे।

D. द्वेस्तीय–प्रत्ययः, मत्वर्थे।

29. 'गोपस्य स्त्री गोपी' इत्यत्र स्त्रिणां केन सूत्रेण कः प्रत्ययो भवति?

A. ऋन्नेभ्यो ङीप् – इति ङीप्।

B. पुंयोगादाख्यायाम् – इति ङीष्।

C. उगितश्च – इति ङीष्।

D. पत्युर्नो यज्ञसंयोगो – इति ङीप्।

30. 'वर्गस्य प्रथमवर्णस्य परिवर्तनं केवलम् असंयुक्तध्वनिषु एव भवति, न तु संयुक्तध्वनिषु' इति अपवादनियमः केन प्रदत्तः?

A. ग्रिममहोदयेन।

B. ग्रासमानमहोदयेन।

C. बर्नरमहोदयेन।

D. आचार्येण भोलाशङ्करेण।

31. 'उत्तपते, वितपते' इत्यनयोः क्रियापदयोः कोऽर्थः?

A. विलापयतीत्यर्थः।

B. संतापयतीत्यर्थः।

C. 'दीप्यते' इत्यर्थः।

D. उष्णम् करोतीत्यर्थः।

32. समुद्रगुप्तस्य प्रयागप्रशस्तेः कः रचयिता?

A. वासुलः।

B. वत्सभट्टिः।

C. हरिषेणः

D. वीरसेनः।

33. ब्रह्मसूत्राणां भगवत्पादशङ्कराचार्यस्य व्याख्याया: केन नाम्ना व्यवहार:?

A. श्रीभाष्यम् B. जय:

C. शारीरकमीमांसाभाष्यम् D. द्वादशलक्षणी

34. 'तत्त्वमसि' इति वाक्यसमन्वये वेदान्ताभिमतलक्षणा वर्तते–

A. जहल्लक्षणा B. जहदजहल्लक्षणा

C. अजहल्लक्षणा D. उपादानलक्षणा

35. षड्विधलिङ्गै: समुपेतं किम्?

A. श्रवणम् B. मननम्

C. निदिध्यासनम् D. अभ्यास:

36. सांख्ये अन्त:करणं कतिविधं भवति?

A. त्रिविधम् B. चतुर्विधम्

C. षड्विधम् D. दशविधम्

37. सांख्याभिमतख्याति: का?

A. अनिर्वचनीयख्याति: B. अन्यथाख्याति:

C. विवेकख्याति: D. असत्ख्याति:

38. सांख्यानुसारं पुरुषबहुत्वप्रस्थापने कारणं भवति–

A. जननमरणकरणानां प्रतिनियमात् B. शरीराकारभेदात्

C. इन्द्रियसंख्याभेदात् D. प्रतिपुरुषं ज्ञानभेदात्

39. अङ्गानां क्रमबोधको विधिर्वर्तते–

A. विनियोगविधि: B. नियमविधि:

C. परिसंख्याविधि: D. प्रयोगविधि:

40. अधोनिर्दिष्टेषु कुत्र गुणवादो दृश्यते?

A. अग्निर्हिमस्य भेषजम् B. आदित्यो यूप:

C. इन्द्रो वृत्राय वज्रमुदयच्छत् D. बर्हिषि रजतं न देयम्

41. रामायणमाश्रित्य यस्य कथास्मि–

A. कुन्दमाला B. रत्नावली

C. मालविकाग्निमित्रम् D. पञ्चरात्रम्

42. यं ग्रन्थमधिकृत्य शङ्कराचार्येण भाष्यं न रचितम्–

A. ब्रह्मसूत्रम् B. श्रीमद्भागवतम्

C. ईशावास्योपनिषद् D. श्रीमद्भगवद्गीता

43. जटायुरावणयुद्धं रामायणस्य कस्मिन् काण्डे?

A. अरण्यकाण्डे B. सुन्दरकाण्डे

C. किष्किन्धाकाण्डे D. बालकाण्डे

44. रामायणे हनुमतः अङ्गुलीकप्रदानवृत्तान्तः कस्मिन् काण्डे वर्तते?

A. सुन्दरकाण्डे
B. युद्धकाण्डे
C. किष्किन्धाकाण्डे
D. उत्तरकाण्डे

45. पुराणपञ्चलक्षणे नास्ति–

A. वंशः
B. सर्गः
C. उत्सर्गः
D. प्रतिसर्गः

46. कस्मिन् पुराणे विविधशास्त्रसम्बन्धिनो विषयाः वर्तन्ते?

A. मत्स्यपुराणे
B. शिवपुराणे
C. विष्णुधर्मोत्तरपुराणे
D. अग्निपुराणे

47. बालिवधस्य वर्णनमस्ति रामायणस्य–

A. सुन्दरकाण्डे
B. किष्किन्धाकाण्डे
C. अरण्यकाण्डे
D. बालकाण्डे

48. अमात्यानां शौचशौचज्ञानार्थं कौटिल्येन उपधासु या न निर्दिष्टा–

A. कामोपधा
B. अर्थोपधा
C. मोक्षोपधा
D. धर्मोपधा

49. 'मन्त्रिपरिषदं द्वादशामात्यान्कुर्वीत' इति कस्य मान्यता?

A. बार्हस्पत्यानाम्
B. कौटिल्यस्य
C. औशनसाम्
D. मानवानाम्

50. देवानां दिनं भवति–

A. कृष्णपक्षः
B. शुक्लपक्षः
C. उत्तरायणम्
D. दक्षिणायनम्

51. अङ्गुलिमूले किं तीर्थं भवति?

A. ब्राह्मम्
B. कायम्
C. दैवम्
D. पित्र्यम्

52. मनुना राजा स्वराष्ट्रे कीदृशोऽभिप्रेतः?

A. भृशदण्डः
B. अजिह्मः
C. क्षमान्वितः
D. न्यायवृत्तः

53. श्रुतार्थस्योत्तरं कुत्र लेख्यम्?

A. नृपसन्निधौ
B. पूर्वावेदकसन्निधौ
C. सभासदसन्निधौ
D. ब्राह्मणसन्निधौ

54. अभियोगस्यापह्नवे कियद् धनं राज्ञे दद्यात्?

A. द्विगुणम्
B. त्रिगुणम्
C. चतुर्गुणम्
D. अभियोगसमम्

55. 'तवाभिधानाद्व्यथते नताननः स दुःसहान्मन्त्रपदादिवोरगः' इत्यत्र नताननः कः?

A. सुयोधनः
B. धर्मराजः
C. वनेचरः
D. भीमसेनः

56. रुग्णः प्रभाकरवर्धनः उपचारहेतोः कुत्र गतः?

A. उद्याने
B. वने
C. धवलगृहे
D. स्नानगृहे

57. रत्नावलीनाटिकायाः प्रथमाङ्कस्य नाम किम्?

A. संकेतः
B. मदन-महोत्सवः
C. कदलीगृहः
D. ऐन्द्रजालिकः

58. अधोऽङ्कितानां युग्मानां समीचीनां तालिकां चिनुत

A. प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः — 1. किरातार्जुनीयम्
B. अनङ्गोऽयमनङ्गत्वमद्य निन्दिष्यति ध्रुवम् — 2. अभिज्ञानशाकुन्तलम्
C. अहो दुरन्ता बलवद्विरोधिता — 3. शिशुपालवधम्
D. किमिव हि मधुराणां मण्डनं नाकृतीनाम् — 4. रत्नावली

| | (a) | (b) | (c) | (d) |
|---|---|---|---|---|
| (A) | 2 | 3 | 4 | 1 |
| (B) | 4 | 2 | 1 | 3 |
| (C) | 3 | 4 | 1 | 2 |
| (D) | 1 | 3 | 2 | 4 |

59. 'अल्पमात्र' समुद्दिष्टं बहुधा यद्विसर्पति' इति कस्य लक्षणम्?

A. मुखस्य
B. निर्वहणस्य
C. बीजस्य
D. पताकायाः

60. 'आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां सद्यः पाति प्रणयि हृदयं विप्रयोगे रुणद्धि।' कोऽत्रालङ्कारः?

A. उपमा
B. दृष्टान्तः
C. निदर्शना
D. अर्थान्तरन्यासः

61. फलार्थिभिः प्रारब्धस्य कार्यावस्थाः कतिः सन्ति?

A. षट्
B. पञ्च
C. सप्त
D. दश

62. 'न हि खलु सर्वः सर्वं जानाति' इति कुत्र वर्तते?

A. वेणीसंहारे
B. रत्नावल्याम्
C. मध्यमव्यायोगे
D. मुद्राराक्षसे

63. वासवदत्तया कुसुमायुधस्य पूजा कुत्र सम्पादिता?

A. बकुलपादपतले
B. रक्ताशोकपादपतले
C. सहकारवृक्षतले
D. दाडिमवृक्षतले

64. वचो भारवे:–

A. कदलीफलसम्मितम्
B. द्राक्षाफलसम्मितम्
C. दाडिमफलसम्मितम्
D. नारिकेलफलसम्मितम्

65. 'कारणान्यथ कार्याणि सहकारीणि गानि च' कस्य विषये आयाति?

A. रसस्वरूपविषये
B. वस्तुस्वरूपविषये
C. ध्वनिविषये
D. अलङ्कारविषये

66. अश्वघोष: कस्य धर्मस्य प्रचारार्थ काव्यानि अलिखत्?

A. जैनधर्मस्य
B. बौद्धधर्मस्य
C. सिखधर्मस्य
D. ख्रिष्टधर्मस्य

67. विश्वनाथानुसारेण शाब्दीव्यञ्जना कतिधा?

A. चतुर्धा
B. द्विधा
C. त्रिधा
D. पञ्चधा

68. 'वत्से! सुशिष्यपरिदत्ता विद्येवाशोचनीया संवृत्ता' कस्येयमुक्ति:?

A. दुष्यन्तस्य
B. गौतम्या:
C. कण्वस्य
D. शकुन्तलाया:

69. 'रसो मुख्यतया अनुकार्ये रामादावेव भवति' इति कस्य मतम्?

A. भट्टलोल्लटस्य
B. शङ्कुकस्य
C. भट्टनायकस्य
D. अभिनवगुप्तस्य

70. 'प्रमाकरणं प्रमाणम्'–इति कस्य लक्षणम्?

A. प्रमाया:
B. प्रत्यक्षस्य
C. प्रमाणस्य
D. लक्षणस्य

71. 'गौरश्व: पुरुषो हस्तीति' कस्माद् हेतोर्न प्रमाणम्?

A. पदत्वात्
B. सन्निधेरभावात्
C. परस्पराकाङ्क्षाविरहात्
D. योग्यताविरहात्

72. 'पर्वतो वह्निमान् प्रमेयत्वात्' इत्यत्र दोषो वर्तते–

A. साध्याभाववद्वृत्ति:
B. दृष्टान्तरहितत्वम्
C. साध्याभावव्याप्ति:
D. आश्रयासिद्धत्वम्

73. तर्कसङ्ग्रहदिशा परिमाणं कतिविधम्?

A. द्विविधम्
B. पञ्चविधम्
C. चतुर्विधम्
D. षड्विधम्

74. पटं प्रति तुरीवेमादिकं कीदृशं कारणं भवति?

A. समवायिकारणम् B. असमवायिकारणम्

C. स्वरूपकारणम् D. निमित्तकारणम्

75. 'पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात्' अत्र साध्यः कः?

A. पृथिवी B. गन्धवत्त्वम्

C. इतरभेदः D. गन्धत्वम्

## उत्तराणि

| | | | | | | |
|---|---|---|---|---|---|---|
| 01. A | 02. D | 03. B | 04. D | 05. A | 06. C | 07. C |
| 08. B | 09. A | 10. B | 11. D | 12. C | 13. C | 14. B |
| 15. A | 16. C | 17. D | 18. A | 19. C | 20. D | 21. D |
| 22. D | 23. A | 24. A | 25. D | 26. B | 27. C | 28. A |
| 29. B | 30. A | 31. C | 32. C | 33. C | 34. B | 35. A |
| 36. A | 37. C | 38. A | 39. D | 40. B | 41. A | 42. B |
| 43. A | 44. A | 45. C | 46. D | 47. B | 48. C | 49. D |
| 50. C | 51. B | 52. D | 53. B | 54. D | 55. A | 56. C |
| 57. B | 58. C | 59. C | 60. D | 61. B | 62. D | 63. B |
| 64. D | 65. A | 66. B | 67. B | 68. C | 69. A | 70. C |
| 71. C | 72. A | 73. C | 74. D | 75. C | | |



# संस्कृतम्–परम्परागत विषयः (Code : 73)
## जून–2013

## प्रश्नपत्रिका-II

**सूचना :** अत्र प्रश्नपत्रे पञ्चसप्ततिः (50) बहुवैकल्पिकाः प्रश्नाः सन्ति। प्रत्येकम् प्रश्नस्य अङ्कद्वयम् वर्तते। सर्वे प्रश्नाः समाधेयाः।

1. त्रिक्भावोऽस्ति–
   A. द्वितीयः
   B. षष्ठः
   C. सप्तमः
   D. एकादशः
2. प्रतिपत्तिथेः स्वामी–
   A. ब्रह्मा
   B. वह्निः
   C. गौरी
   D. गणेशः
3. अभुक्तमूलं भवति–
   A. रेवत्याश्विनीयोगे
   B. श्लेषामघायोगे
   C. ज्येष्ठामूलयोगे
   D. वैधृतिसंयोगे
4. सूर्योदयान्तराले भवति–
   A. चान्द्रदिनम्
   B. सौरदिनम्
   C. सावनदिनम्
   D. नाक्षत्रदिनम्
5. सूर्यग्रहणं भवति–
   A. अमादौ
   B. पूर्णिमादौ
   C. प्रतिपदादौ
   D. प्रतिपदान्ते
6. 'लीलावती' कारोऽस्ति–
   A. भास्करः
   B. आर्यभट्टः
   C. वराहः
   D. गणेशः
7. मुग्धबोधव्याकरणस्य रचयितुर्नाम–
   A. हेमचन्द्रः
   B. कात्यायनः
   C. बोपदेवः
   D. भर्तृहरिः

